इत्थं च वायुक्षेपिष्ठादिवाक्यस्य कथमपि विधायकत्वासंभवात् अनुवादत्वेऽवश्यवक्तव्ये तस्य दृष्टान्ततौचित्यमिति विषयव्याप्त्यर्थमेव विद्वद्वाक्यदृष्टान्तोपादानम् इति स्थितम् ।

यदि तु पूर्वमीमांसोक्तवाक्यैकदेशस्य दृष्टान्तत्वेनोपादानं समग्रवाक्योदाहरण-संभवेऽयुक्तमिति चिन्त्यते तदा इममेवास्वरसं पुरस्कृत्य विद्वद्वाक्यवत् इत्युदाहरणान्तरम् -इति वक्तुं शक्यम् । पश्यन्तु ग्रन्थकर्तुः व्याख्यानकौशलम् । अत्र च ग्रन्थकृदुक्तो विषयः विशदीकृत्य अस्माभिः स्वशब्दैः उपन्यस्तः ग्रन्थगौरवप्रदर्शनाय । व्याख्यानं विनोक्तचन्द्रिकाभिप्रायः इत्थं ज्ञातुं दुःशकः ।

श्रीराघवेन्द्रतीर्थविरचितायां तात्पर्यचन्द्रिकाप्रकाशिकायामुपलभ्यमानं पूर्वमीमांसाविषयविवरणमेतद्ग्रन्थमूलकमिति उभयोः ग्रन्थयोः दर्शने स्पष्टं प्रतीयते।

तस्यास्य ग्रन्थतल्लजस्य वह्वीः मातृकाः परिशील्य, पाठान्तराणि संगृह्य महता श्रमेण संपादनं मद्रपुरीसंस्कृतमहाविद्यालये न्यायशास्त्राध्यापक-पदमलंकुर्वद्भिः श्रीमद्भिः श्रीधरोपाध्यायैः विहितम् । पाण्डुलिपिसंपादनस्य नियमानुरोधेन एकां मातृकां मूलत्वेन स्थापयित्वा मातृकान्तरगताः पाठाः पादटिप्पण्यामिह निवेशिताः । अत एव वहुषु स्थलेषु पादटिप्पण्यामुल्लिखिताः पाठाः समीचीनाः प्रतीयन्ते ।

आशासे ग्रन्थोऽयं विदुषां जिज्ञासूनां च प्रमोदावहो भवेत् - इति

- श्रीमणिद्राविडः

मीमांसाध्यापकः

मद्रपुरीसंस्कृतमहाविद्यालयः

12-06-2014

मद्रपुरी

।। श्रीः ।।

# आमुखम्

पदवाक्यप्रमाणज्ञो दुर्मतध्वान्तभास्करः ।
व्यासतीर्थमुनीन्द्रो मे भूयात् ज्ञानसमृद्धये ।।

भक्तानां मानसांभोजभानवे कामधेनवे ।
नमतां कल्पतरवे जयीन्द्रगुरवे नमः ।।

महदानन्दास्पदमिदमद्य यत् मन्त्रालयराघवेन्द्रमठसंस्थानद्वारा श्रीमद्विजयीन्द्रयतिविरचितं "चन्द्रिकोदाहृतन्यायमाला" इति ग्रन्थं अध्ययनाध्यापनार्थं मुद्रयित्वा प्रकाश्यते इति ।

तत्त्वशास्त्रप्रपञ्चे विभूतिपुरुषाः परैरजय्याः न केवलं चतुरधिकशतसंख्याकशास्त्रग्रन्थरत्नकर्तारः । परन्तु चतुःषष्ठिकलाविद्यापारङ्गताः श्रीविजयीन्द्रतीर्थगुरुवरेण्याः स्वजीवतसमये कुम्भघोणक्षेत्रे प्रतिवादिदिग्गजगणस्य मृगराजायमाना व्यराजन्त । शकपुरुषाणां कुम्भघोणक्षेत्रे भव्यवृन्दावने विराजमानानामेतेषां पवित्रं नामधेयं दक्षिणभारतनिवासिनां आस्तिकवरेण्यानां रसनारङ्गे इदानीमपि नरीनृत्यते । तन्त्रचतुष्टये श्रीविजयीन्द्रविरचिताः शास्त्रीयवाक्यार्थनिरूपणपराः ग्रन्थाः बहवो वर्तन्ते । तत्रापि व्यासत्रयग्रन्थमध्ये तात्पर्यचन्द्रिका ग्रन्थे सिद्धान्तप्रमेयसमर्थनार्थं ये मीमांसान्यायाः प्रतिपादिताः, तेषां न्यायानां संग्रहः अध्येतॄणां सुखेन प्रतिपत्त्यर्थं श्रीविजयीन्द्रार्यैः सरलतया प्रतिपादितः ।

ये न्यायाः पूर्वतन्त्रीयाः चन्द्रिकायामुदाहृताः ।
गुरुपादैः क्रमात् तेषां विषयाद्यङ्गपूर्वकम् ।।

शरीरं विजयीन्द्राख्यभिक्षुणेह प्रदर्श्यते ।
सुखेन प्रतिपत्त्यर्थमतत्तन्त्रविदामपि ।। इति ।

शुद्धचैतन्यमात्रवोधने श्रुतेः अनुवादकत्वप्रतिपादनावसरे ग्रन्थकारैः कारणानि नैकविधानि प्रदर्शितानि उत्पश्यामः । उक्तं च तैः

सिद्धचैतन्यमात्रवोधने, श्रुतेरनुवादकत्वं च 'वायुर्वै क्षेपिष्ठा'दि वाक्यवत् विद्वद्वाक्यवच्च न्यायप्राप्तत्वाच्च सह्यमिति ।

अत्र ग्रन्थकाराभिप्रेतनिगूढाभिप्रायोऽन्यव्याख्यानदर्शितविवरणापेक्षया चन्द्रिकान्यायमालासमर्थित एवातिसमीचीन इति निश्चप्रचमावेदयामः । तद्विषये चन्द्रिकान्यायमालाग्रन्थकर्तारस्तु मूलग्रन्थाभिप्रायमेवं प्रकाशयामासुः ।

तथाहि - अत्र "वायुर्वै क्षेपिष्ठा"दिवाक्यस्य लक्षणया प्राशस्त्यपरत्वेऽपि तद्वारभूतं वायोः क्षेपिष्ठत्वं लौकिकप्रमाणावगतमित्यनुवादकत्वमुक्तम् । तस्य च "अग्नये पवमानायाष्टाकपालं निर्वपेदि"त्यत्राग्नेः पवमानत्वरूपगुणवदत्र वायोः क्षेपिष्ठत्वरूपगुणविधानं किं न स्यात् इत्याशंका व्यावर्तनाय, विध्युद्देशवहिर्भावप्रदर्शनरूपस्य न्यायस्य तद्बहिर्भावेऽपि, "एतमेव सन्तं वायवे नियुत्वत आलभेते"ति तद्वाक्यान्तरेण देवतागुणविधानं किं न स्यात् इत्याशङ्का व्यावर्तनाय विधायकाख्याताश्रवणप्रदर्शनरूपस्य न्यायस्य अपेक्षणात् न्यायप्राप्तत्वादित्युक्तम् । यद्यपि चात्र क्षेपिष्ठादिवाक्यस्य विद्वद्वाक्यद्वयस्य वा अनुवादत्वेऽपि विध्यपेक्षितप्राशस्त्यसमर्पणेन फलवाक्यगतदर्शपूर्णमासपदप्रसिद्धार्थत्वसम्पादनेन च फलवत्वात् न वैय्यर्थ्यम् । वेदान्तानां तु सिद्धचैतन्यमात्रवोधनेन अनुवादत्वेन किञ्चित्फलं लक्ष्यते । वेदाध्ययनं तु जपार्थमस्त्वित्युक्तं इति अनुसन्धेयम् ।। छ ।।

तथा विवेकादीनां प्रत्येकं मिलितानां वा साक्षात् विचाराङ्गत्वनिराकरणावसरे, अत्र लैङ्गिकविनियोगस्य सामान्यसम्वन्धघटक-

प्रमाणान्तरसापेक्षतया श्रुतिप्रकरणादिना सिद्धे तस्मिन् लिङ्गेनानुष्ठेयविशेषप्रकाशनद्वारा यथा मन्त्राणां कर्मशेषत्वं, यथा वा आरुण्यादेः क्रयसाधनीभूतैकहायनीद्रव्यावच्छेदद्वारेण तच्छेषत्वं, तथा विवेकादेरपि वैराग्यादिद्वारैव विचारान्वयो न्याय्यः इति ।

तात्पर्यचन्द्रिकाग्रन्थरहस्यार्थप्रकाशकं श्रीमद्विजयीन्द्रतीर्थविरचितं चन्द्रिकान्यायमालाग्रन्थं सयुक्तिकं सप्रमाणं च विशिष्टतया राराजते । तत्रापि सिद्धान्तप्रमेयानां मीमांसान्यायानुसारेण समर्थने श्रीविजयीन्द्रगुरवः एव अतिसमर्थाः प्रतिपादिताश्च विशिष्टेण रूपेण । तस्मात् ग्रन्थं लोकार्पणं भवत्वित्याशया मुद्रणपुरस्सरं प्रकाशनमत्यावश्यकमिति मन्यमानाः श्रीमद्राघवेन्द्रगुरुसार्वभौमपीठालङ्कृताः **श्री श्री सुबुधेन्द्रतीर्थगुरुवरेण्याः** तन्मुद्रणोपयुक्तहस्तलिखितप्रतिकृतिनिर्माणादिकार्येषु मन्त्रपवित्रमूलमन्त्राक्षत-प्रदानपुरस्सरं अस्मान् नियोज्यान्वगृह्णन् । तदनुग्रहविशेषं वारं वारं स्मारं स्मारं तच्चरणनलिनयोः भक्तिपूर्वकमनन्तप्रणामान् समर्पयामः ।

मुद्रणोपयुक्तप्रतिकृतिनिर्माणार्थं हस्तलिखितानि सप्तमातृकाणि (seven manuscripts) दत्तवद्भ्यः महान्तमुपकारं कृतवद्भ्यः सर्वदा शास्त्रार्थविचार-शीलतत्परेभ्यः विशेषतः मम मार्गदर्शकेभ्यश्च श्रीमद्भ्यः **राजा गिरि आचार्यवर्येभ्यः** अनन्तप्रणामान् समर्पयामः ।

शोधनकार्ये महदुपकारं कृतवद्भ्यः श्रीमद्भ्यः प्रधानकार्यदर्शिमहाभागेभ्यः श्रीराजगोपालाचार्येभ्यः उपकार्यदर्शिमहाभागेभ्यः श्रीसुयमीन्द्राचार्येभ्यश्च श्रीराघवेन्द्रगुर्वनुग्रहो भूयादित्याशासे ।

प्रास्ताविकलेखनेन ग्रन्थमिमं अलङ्कृवद्भ्यः मीमांसावर्येभ्यः न्यायवेदान्त-निष्णातेभ्यः श्रीमद्भ्यः **डा.मणिद्राविड** महाभागेभ्यः परां कृतज्ञतां निवेदयामि ।

मुद्रणविषये सहायं कृतवद्भ्यः श्री सुधीन्द्रवर्येभ्यः एन् कृष्णाचार्येभ्यश्च कृतज्ञतां निवेद्य श्रीविजयीन्द्रगुरूणां अनुग्रहो भवत्विति प्रार्थये । सीसाक्षरमेलनेन ग्रन्थप्रकाशनं कर्तुं सहायं कृतवद्भ्यः सुधामुद्रणालय निदेशकेभ्यः श्री धनञ्जयवर्येभ्यश्च कृतज्ञतां निवेदयामि ।

दिनाङ्कः २५-०६-२०१४

ज्येष्ठ वहुळ त्रयोदशी डा. पि.पि. श्रीधरोपाध्यायः

## ABBREVIATION

तञ्जावूर सरस्वतिग्रन्थालयमातृकामाधारीकृत्य मूलग्रन्थं लिखितम् । अन्यग्रन्थालयमातृकां (8 Mss) पाठभेदानुसारेण स्वीकृतम् । तत्रापि च, छ, ज संज्ञकाणि मातृकाणि असम्पूर्णाणि आनन्दमयाधिकरणपर्यन्तानीत्येव दरीदृश्यन्ते । तावतापि पाठभेदप्रतिपत्यर्थं अतीव उपयुक्तानि ।

मातृका विवरणमप्येवमस्ति ।

| | | |
|---|---|---|
| 1) GOML (Chennai-5) | Mss. No. R15197 | क. संज्ञा |
| 2) S.G.V.S. (Mantralaya) | Mss. No. 38 | ख संज्ञा |
| | Mss. No. 10 | ग संज्ञा |
| | Mss. No. 610 | घ संज्ञा |
| | Mss. No. 624 | ङ संज्ञा |
| | Mss. No. 185 | च संज्ञा |
| | Mss. No. 187 | छ संज्ञा |
| | Mss. No. 619 | ज संज्ञा |

******

# विषयानुक्रमणिका

।। श्रीः ।।

श्रीमत्परमहंसपरिव्राजकाचार्य
पदवाक्यप्रमाणपारावारपारङ्गत सर्वतन्त्रस्वतन्त्र
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य
श्रीमन्मूलरामवेदव्यासदेवदिव्यपादपद्माराधक
जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानाधीश्वरणां
श्रीमद्राघवेन्द्रमठीयवेदान्तदिग्विजयविद्यासिंहासनाधीश्वराणां
श्री श्रीमत्सुशमीन्द्रतीर्थकरकमलसञ्जात श्री श्रीमत्सुयतीन्द्रतीर्थवरकुमारकाणां

**श्री १००८ श्रीमत्सुबुधेन्द्रतीर्थश्रीपादानां**

# अनुग्रहवचनम्

गुरुवराः श्रीमद्विजयीन्द्रतीर्थमहानुभावाः न केवलं महिमाप्रकटनेन प्रथिताः । किन्तु अनितरसाधारणग्रन्थरचनेनापि प्रसिद्धाः । तदीयासाधारणप्रभावातिशय-वर्णनपराणि वचनानि प्राचीनाचार्यकृतान्येवमुपलभ्यन्ते, "जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशो जुषे" इति । महानुभावानामनुग्रहविशेषः तैरुपदिष्टमार्गेण सदाचारवृत्त्या, तद्ग्रन्थाध्ययनेन च सम्पादनीयः।

अमुमेव विषयं मनसि निधायास्मत्पूर्वजाः गुरवः प्रातः स्मरणीयाः श्रीमत्सुजयीन्द्रश्रीमत्सुशमीन्द्रश्रीमत्सुयतीन्द्रतीर्थाः बहून् ग्रन्थान् मुद्रापयित्वा प्राकाशयन् । तेषु ग्रन्तेषु अतिप्राचीनं बह्वर्थगर्भितं श्रीमद्विजयीन्द्रार्येण रचितं **"चन्द्रिकोदाहृतजैमिनीयन्यायमाला"** नामकग्रन्थमिदानीं प्रकाश्यते । अस्य ग्रन्थस्य मुद्रणोपयुक्तपरिशोधनादिकार्येषु समाज्ञप्ताः विद्वान् पि.पि.श्रीधरोपाध्यायाः नियोजितमेतत्कार्यं सर्वाङ्गसुन्दरमकार्षुः । अतः तेभ्योऽस्मदुपास्यः श्रीमन्मूलरामचन्द्रः सुप्रीतो भूयांसि श्रेयांसि इतोऽप्यधिकं ज्ञानभक्तिवैराग्यादिकं च प्रदद्यादित्याशास्महे ।।

**इत्यनेकनारायणस्मरणानि**

।। श्रीः ।।

।। श्रीमन्मूलरामो विजयते ।।

।। श्रीगुरुभ्यो नमः ।।

श्रीमद्विजयीन्द्रभिक्षुविरचिता

# चन्द्रिकोदाहृतन्यायमाला

श्रीवेदव्यासाय नमः

विनताशेषहृदयजनितानन्दवैभवः ।
प्रह्लादवरदो भूयात् प्रह्लादाय सदा मम ।।

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालिशोभिते ।।

ये न्यायाः पूर्वतन्त्रीयाः चन्द्रिकायामुदाहृताः ।
गुरुपादैः क्रमात् तेषां विषयाद्यङ्गपूर्वकम् ।।

शरीरं विजयीन्द्राख्यभिक्षुणेह प्रदर्श्यते ।
सुखेन प्रतिपत्त्यर्थमतत्तन्त्रविदामपि ।।

**सिद्ध[1]चैतन्यमात्रबोधने, श्रुतेरनुवादकत्वं च "वायुर्वै क्षेपिष्ठा"दि वाक्यवत् विद्वद्वाक्यवच्च न्यायप्राप्तत्वाच्च सह्यमिति** । विधिभावना तदंशत्रयातिरिक्तार्थानां "वायुर्वै क्षेपिष्ठा देवते"त्यादीनामर्थवादपदानां किं "वायव्यं श्वेतमालभेत भूतिकाम" इत्यादि विध्युद्देशेन एकवाक्यतया धर्मे प्रामाण्यं उत नेति चिन्तायां, आम्नायस्य क्रियार्थत्वावधारणात् भूतान्वाख्यानमात्रपर्यवसितानामर्थवादानां विशिष्टभावनाविधान-

---

[1] शुद्ध (क, च, छ)

मात्रचरितार्थेन विध्युद्देशेन सह परस्परनैराकाङ्क्ष्यात् एकवाक्यत्वासम्भवेनाक्रियार्थत्वाद-प्रामाण्यमिति पूर्वपक्षं प्रापय्य, अध्ययनविधिवशात् वेदस्य कृत्स्नस्य प्रयोजनवदर्थपर्यवसानावश्यं भावेनार्थवादानां प्रयोजनाकाङ्क्षायां विधेरपि चेतनप्रवर्तनारूपस्य प्रवृत्तिप्रतिबन्धकालस्यादि[1] व्यावर्तनेन प्रवर्तनाशक्त्युत्तंभनाय प्राशस्त्यापेक्षायाश्च सत्वात् लक्षणया [2]प्राशस्त्यसमर्पणेन विध्येकवाक्यतया प्रामाण्यमिति सिद्धान्तितं प्रमाणलक्षणे, आद्याध्याये द्वितीयपादे "आम्नायस्य क्रियार्थत्वात् आनर्थक्यं अतदर्थानाम् तस्मादनित्यमुच्यते" इत्यधिकरणे ।। छ ।।

तथा दर्शपूर्णमासप्रकरणे श्रुतं, "य एवं विद्वान् पौर्णमासीं यजते", "य एवं विद्वान् अमावास्यां यजत" इति वाक्यद्वयं, किमपूर्वकर्मद्वयविधायकं, किं वा प्रकृतस्य आग्नेयादि त्रिकद्वयस्यानुवादकमिति संशये, अभ्यासाधिकरणन्यायेन विधि पुनः श्रुत्या कर्मान्तरविधायकत्वं युक्तम् । न च रूपालाभः शङ्कनीयः । "सर्वस्मै वा एतत् यज्ञाय गृह्यते यद्ध्रुवायामाज्य"मिति वचनविहितस्य ध्रौवाज्यस्य द्रव्यस्य, "वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्याया"मिति वाक्याभ्यां पौर्णमास्यमावास्या-[3]संज्ञिकयोः [4]अनयोः कर्मणोः मन्त्रविधानात् [5]मान्त्रवर्णिक्याः देवतायाश्च लाभात् । न च मन्त्राणां लिङ्गक्रमाभ्यां आज्यभागयोः विनियोगात् नात्र विनियोगः सम्भवतीति वाच्यम्। वाचनिकविनियोगसम्भवे लिङ्गक्रमाभ्यां आज्यभागयोः विनियोगायोगात् । त्रिकद्वयानुवादकत्वपक्षे तु वाक्यद्वयमपि अनर्थकं स्यात् । तस्मादपूर्वकर्मद्वयविधायकमिति पूर्वपक्षं प्रापय्य, कथञ्चित् द्रव्यलाभेऽपि देवतायाः

---

[1] कालाख्यादि (क)

[2] प्रदेशस्य- (क)

[3] संज्ञकयोः (ख, ग, घ, च) संज्ञयोः (छ, ज)

[4] एतयोः (क, छ, ज)

[5] मान्त्रवर्णिकया (क, ख)

अलाभात् नास्यापूर्वकर्मद्वयविधायकत्वम् । न च मन्त्रवर्णात् तल्लाभः । वार्त्रघ्नीत्यादि वाक्यद्वयस्य आज्यभागयोः लिङ्गक्रमाभ्यां पर्वद्वयेऽपि अव्यवस्थया प्राप्तमन्त्र-व्यवस्थार्थत्वेन[1] लाघवात् । लिङ्गक्रमयोः अबाधेनैव उपपत्तौ तद्बाधायोगाच्च । न चानुवादत्वे वैय्यर्थ्यं । फलवाक्यगतयोः दर्शपूर्णमासपदयोः प्रसिद्धार्थत्वसम्पादनेन सफलत्वात् । तत्सम्पादनस्य च फलमाग्नेयादीनां षण्णां प्राधान्यम् । समिदादीनां च तदङ्गत्वम् । तस्मात् विद्वद्वाक्यद्वयं समुदायद्वयानुवाद इति स्थितं, भेदलक्षणे द्वितीयचरणे "प्रकरणं तु पौर्णमास्यां रूपवचनाद्" इत्यधिकरणे ।। छ ।।

अत्र "वायुर्वै क्षेपिष्ठा"दिवाक्यस्य लक्षणया प्राशस्त्यपरत्वेऽपि तद्वारभूतं वायोः क्षेपिष्ठत्वं लौकिकप्रमाणावगतमित्यनुवादकत्वमुक्तम् । तस्य च "अग्नये पवमानायाष्टाकपालं निर्वपेदि"त्यत्राग्नेः पवमानत्वरूपगुणवदत्र वायोः क्षेपिष्ठत्वरूपगुणविधानं किं न स्यात् इत्याशंकाव्यावर्तनाय, विध्युद्देशबहिर्भावप्रदर्शन-रूपस्य न्यायस्य, तद्बहिर्भावेऽपि, "एतमेव सन्तं वायवे नियुत्वत आलभेते"ति[2] तद्वाक्यान्तरेण देवतागुणविधानं किं न स्यात् इत्याशङ्का व्यावर्तनाय विधायकाख्याता-श्रवणप्रदर्शनरूपस्य न्यायस्यापेक्षणात् न्यायप्राप्तत्वादित्युक्तम् । यद्यपि चात्र क्षेपिष्ठादिवाक्यस्य विद्वद्वाक्यद्वयस्य वा [3]अनुवादत्वेऽपि विध्यपेक्षितप्राशस्त्यसमर्पणेन फलवाक्यगतदर्शपूर्णमासपदप्रसिद्धार्थत्वसम्पादनेन च फलवत्वात् न वैय्यर्थ्यम् । वेदान्तानां तु [4]सिद्धचैतन्यमात्रबोधनेनानुवादत्वेन[1] वेदाध्ययनं तु जपार्थमस्त्वित्युक्तं इति अनुसन्धेयम् ।। छ ।।

---

1 मन्त्रव्यवस्थार्थत्वे (क, ख, ग, घ, ङ, च, छ, ज)

2 आलभेतेतिवत् वाक्य- (क, ख, ग, घ, ङ, छ, ज)

3 वाच्यत्वेऽपि (ख, ग) अनुवाद्यत्वेऽपि (घ) अनुवादकत्वेऽपि (क, च, छ, ज)

4 शुद्ध- (क, ङ)

**यथा अर्थवादाधिकरणे अपौरुषेयत्वेऽपि अर्थवादानामक्रियार्थत्वेन विध्येकवाक्यत्वाभावात् आनर्थक्यमिति भाट्टमते पूर्वपक्षः । प्राभाकरमते तु अर्थवादानां विध्येकवाक्यत्वेऽपि हेतुसमर्पकत्वात् हेतुसापेक्षचोदनानामप्रामाण्यमिति पूर्वपक्षः इति ।** अत्र अपौरुषेयत्वेऽपीति प्रथमपादान्त्याधिकरणोक्तन्यायेनेति शेषः, आचार्यमते पूर्वपक्षः प्रदर्शितः । गुरुमते तु वेदप्रामाण्यनिरूपणस्य लक्षणार्थतया सर्वेषु अधिकरणेषु तदप्रामाण्यपर्यन्ताः पूर्वपक्षाः इति एकवाक्यतां उपेत्य यस्मात् वायुः क्षेपिष्ठा देवता तस्मात् वायव्यः श्वेतालम्भः कार्यः इति हेतुसमर्पकतया अन्वयादप्रामाण्यमुक्तमिति विशेषोऽनुसन्धेयः ।।

**मन्तव्यः सोऽन्वेष्टव्यः इत्यादेश्च ब्रह्मपरतया अभिप्रेतवाक्यमध्यस्थतया विष्णुरुपांशु यष्टव्य इत्यादिवाक्यवत् कृत्यप्रत्ययस्यार्हार्थत्वेनापि उपपत्तेः अविधायकत्वादिति ।** दर्शपूर्णमासयोः श्रुतं "जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशावुपांशु याजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाये"ति । अत्र किं "उपांशुयाजमन्तरा यजती"त्ययं "विष्णुरुपांशु यष्टव्य" इत्यादिवाक्यविहितयाग-समुदायानुवादः उत स्वतन्त्रयागविधिरिति संशये, रूपालाभेन यागविधित्वायोगात् समुदायानुवादः । न च आग्नेयाग्नीषोमीयपुरोडाशयाज्यानुवाक्यायुगलयोः मध्ये वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां शाखाभेदेन आम्नानात् क्रमविनियुक्त-मन्त्रवशात् देवता लभ्यत इति वाच्यम् । तेषां युगलानां विष्ण्वादिवाक्यविहितेषु यागेषु लिङ्गक्रमाभ्यां विनियोगात् । न च विष्ण्वादिवाक्यत्रयं अर्थवाद इति युक्तम् । तव्यप्रत्ययश्रवणेन विधित्वावश्यं भावात् । अन्तरावाक्ये तु वर्त्तमानापदेशात् न

---

[1] अनुवादत्वेन किञ्चित्फलं लक्ष्यते । तथाऽपि तदध्ययनस्यादृष्टार्थत्वाभ्युपगमात्तत्प्रतिपादनेन फलाभावो न दोषाय । अत एवानन्तरं वेदा- (क, ज)

विधित्वाध्यवसानसम्भवः । [1]न च जामित्वाजामित्वोपक्रमोपसंहाराभ्यां प्रतीतैक-वाक्यताभङ्गो दोषः । यच्छब्दाद्यनुपहितविस्पष्टविधिश्रवणात् । अजामित्वायेति, तेष्वेव [2]प्रत्येकमुपक्रमोपन्यस्त जामितादोषपरिहारप्रशंसावगमाच्च वाक्यभेदस्यैव न्यायत्वात् । [3]वैश्वानरवाक्ये तु एतद्वैलक्षण्यात् एकवाक्यतानिर्वाहः । जामि वा एतदिति चोपक्रमः, तेषां त्रयाणामनुषङ्गेण वाक्यशेषो भवति । सति च तेषां विधित्वे रूपालाभादन्तरावाक्यं समुदायानुवाद इति पूर्वपक्षं प्रापय्य, उपक्रमे पुरोडाशनैरन्तर्येण जामिता दोषकीर्तनादन्तराले किञ्चित् विधास्यत इत्यवगमात् [4]अन्तरालशब्दघटितमेव वाक्यं विधायकं, अजामित्वप्रशंसा च तत्रैवावकल्प्यते । एवं सिद्धे विधित्वे याज्यानुवाक्यानां तत्रैवान्वयात् मान्त्रवर्णिकदेवता प्राप्तेः तदनुवादेन विष्ण्वादि श्रवणमर्थवादः, तव्यप्रत्ययस्तु अर्हार्थः । एवं चागतिकयोः प्रतीतैकवाक्यता भंगानुषङ्गकल्पनयोः नावकाशः । तस्मादन्तरावाक्यं विधिरिति सिद्धान्तितं, भेदलक्षणे द्वितीयचरणे - पौर्णमासीवदुपांशु याजः स्यादिति चतुर्थाधिकरणे, अत्र अर्हे कृत्य तृचश्चेति अनुशासनात्, यष्टव्य इति तव्यप्रत्ययस्यान्यथापि उपपन्नतया यथा न विधायकत्वं तथा मन्तव्य इत्यादेरपीत्यर्थः । असति बाधके उपक्रमोपसंहारैकरूप्यावगतैकवाक्यता निर्वाहावश्यंभावरूप न्यायसाम्यप्रदर्शनाय ब्रह्मपरतया अभिप्रेतवाक्यमध्यस्थतया इत्युक्तम् ।। छ ।।

**अनयोरपि ब्रह्मपरतया "यदभिघारयेद्रुद्राय[5] पशुभिः दध्यादि"तिवल्लिङो विधिशक्तिप्रतिबन्धाच्चेति** । चातुर्मास्येषु श्रुतम् । "अभिघार्यास्त्र्यंबका नाभिघार्या" इति

---

[1] न च जामितादोषोपक्रमाजामित्वोपसंहाराभ्यां (क, छ, ज)

[2] "प्रत्येकमुपक्रमोपन्यस्त ......... अनुषङ्गेण" एतत् पर्यन्तभागः लुप्तः (ख, ग)

[3] (a) एकवाक्यत्वे तद्वैलक्षण्यात् एकवाक्यतानिर्वाहाय (क), (b) एकवाक्यत्वे तद्वैय्यर्थ्याच्च । एकवाक्यता निर्वाहाय (च, छ, ज), (c) एतत् वाक्यं नास्ति (घ)

[4] अन्तराशब्द- (ख, ग, घ, च, छ, ज)

[5] रुद्रायान्ये पशून्निदध्यात् (ख, ग), रुद्रायास्ये पशून्निदध्यात् (घ)

मीमांसन्ते । "यदभिघारयेत् रुद्राय[1] अस्य पशून्निदध्यात्, यन्नाभिघारयेत् न रुद्रायास्य[2] पशून्निदध्यात्, अथो खलु आहुरभिघार्या" एवेति । अत्र किमभिघारणानभिघारणायोः विकल्पः, उत अभिघारणमेवेति विशये, अभिघारणस्य विधेयत्वे विवादानुभावात्[3] जर्त्तिलश्रवणात्[4] विध्यन्तरशेषत्वाभावाच्च उपक्रमे अभिघार्या इति विधिः । अन्ते तु अनुवादः । एवं च एककोट्यवलम्बनमीमांसा [5]सम्भवेन तच्छेषत्वाभावात् । यदभिघारयेदिति विध्यन्वयानर्हनिन्दा श्रवणाच्च नाभिघार्या इति प्रतिषेधः । अतः उभयोः विकल्पः । सति चैवं प्रयोगदशायामन्यतरपरिग्रहाय[6] मीमांसन्त इति अनूद्यत इति पूर्वपक्षं प्रापय्य, सत्यभिघारणस्य विधेयत्वे उपक्रमेण तच्छ्रवणं विध्यर्थमभिघारणानभिघारणयोः मीमांसासंबन्धावगमात् । अन्ते तु अनन्यपरत्वात् विधिः । उपक्रमस्तु तच्छेषत्वादर्थवादः । न च निन्दा श्रवणानुपपत्तिः । एवमिदं अभिघारणं प्रशस्तं, यत्सन्तमपि दोषमविगणय्य कर्तव्यमित्येवं निन्दायाः अपि प्रशस्ततरत्वज्ञापनार्थत्वात् । तस्मात् न विकल्प इति सिद्धान्तितं बाधलक्षणे, पूर्वैश्च तुल्यकालत्वादिति अष्टमपादीय पञ्चमाधिकरणे । अत्राभिघारयेदिति लिङो विधिशक्तिमीमांसापरत्वेन यथा प्रतिबध्यते, तथा पश्येदिति लिङोऽपि विधिशक्ति-ब्रह्मपरत्वेन प्रतिबध्यत इत्यर्थः । तद्विजिज्ञासस्वेत्यत्र तु अग्नीदग्नीन्विहरेदित्यादिवत् मध्यमपुरुषेणापि विधिशक्तिप्रतिबन्धो द्रष्टव्यः ।। छ ।।

---

1 रुद्रायास्मे (क), रुद्रायान्ये (ख, ग) रुद्रायास्ये (घ)

2 रुद्रायान्ये (ख, ग), रुद्रायास्मे (क), रुद्रायास्ये (घ, ङ, च, छ, ज)

3 विवादाभावात् (ज, छ, क, ख, ग, घ, ङ)

4 श्रवणवत् (क, घ, ङ, च, छ, ज)

5 असम्भवेन (छ, ज)

6 -हाय आपतन्ती मीमांसां मीमांसन्ते (क, घ, च, छ, ज, ङ, ख, ग)

**एतेनान्यपरतया प्रतीतस्यापि "उपरि हि देवेभ्यो धारयती"त्यादेः इव तद्विजिज्ञासस्वेत्यादेरपि विधित्वमस्त्विति निरस्तमिति** । मृताग्निहोत्रे श्रुतं, "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" `इति । अत्र उपरि हीति किं जीवदग्निहोत्रे उपरिधारणविधिः उत अनुवाद इति चिन्तायां, प्राचीनावीति दोहयति यज्ञोपवीति हि देवेभ्यो दोहयतीत्यत्र यथा हिशव्दोपबन्धात्[1], प्राचीनावीति विधिशेषत्वाच्च, यज्ञोपवीतीत्यादेः दर्शपूर्णमासयोः प्राप्तस्य यज्ञोपवीतस्य स्तुत्यर्थेनानुवादः । एवमत्राप्युपरि हीत्यत्र उपरिधारणस्याधस्तात् धारणस्तुत्यर्थेनानुवादः । देशान्तरनीयमानस्याभ्यर्हितस्य द्रव्यस्य प्रच्छादनमाचरतः प्राप्तं समिच्च विधीयमान[2] अदृष्टार्थतालाभात् प्रच्छादनार्था विज्ञायते[3] । तया च उपरिधार्यमाणया प्रच्छादनं नान्यथा, इत्यर्थप्राप्तं उपरिधारणमनूद्यत इति पूर्वपक्षं प्रापप्य, स्रुक्दण्डेन समिधं उपसंगृह्येति श्रवणात् दण्डप्रदेशे धार्यमाणया समिधा प्रच्छादनासम्भवात्[4] तद्धारणस्य [5]दृष्टार्थत्वेनार्थवशादप्राप्तं उपरिधारणमत्र विधीयत इति सिद्धान्तितं शेषलक्षणे शेषलक्षणे "विधिस्तु धारणेऽपूर्वत्वादि"ति पञ्चमाधिकरणे । अत्राधो धारणस्तुतिपरतया प्रतीयमानस्यापि उपरि हीत्यादेः यथा विधिपरत्वं तथा तद्विजिज्ञासस्वेत्यादेः ब्रह्मपरतया प्रतीयमानस्यापि अस्त्विति शङ्कार्थः । विचारस्य ज्ञानहेतुतया अन्वयव्यतिरेकप्राप्तत्वेनाप्राप्तोपरिधारणवैलक्षण्यात् न विधित्वावसरः इति परिहारार्थः ।। छ ।।

**यद्वा स्वर्गकामाधिकरणपूर्वपक्षे विश्वजिदधिकरणपूर्वपक्षे च फलाभावेन च नियोज्याभावेन च "स्वर्गकामो यजेत, विश्वजिता यजेत" इत्यादि वाक्यमिव उक्तरीत्या**

---

1 शब्दोपसंबन्धात् (घ)

2 पिधीयमानादृष्टार्थत्वला- (क, च, ज, छ), पिधीयमान दृष्टार्थ- (ख, ग, घ)

3 प्रच्छादनार्थो विज्ञायते (छ)

4 प्रच्छादेनासम्भवात् (क)

5 अदृष्टार्थत्वात् (क, च, छ, ज)

**विषयाद्यभावेन उपपत्तिविरोधात् तद्विजिज्ञासस्वेत्यादिकमप्रमाणमिति** । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, चित्रया यजेत पशुकाम" इत्यादिषु फलभोक्तृत्वरूपोऽधिकारोऽस्ति उत नेति चिन्तायां, प्रत्ययोपात्तायाः भावनायाः भाव्याकाङ्क्षायां [1]समानपदश्रुत्या धात्वर्थस्य भाव्यत्वेन [2]अन्वयलाभे पदान्तरोपात्तस्य स्वर्गस्य वाक्येन[3] अन्वयायोगात् लोकप्रयोगवशात् स्वर्गशब्दितस्य चन्दनादेः भूतभव्यन्यायेन कर्मसाधनत्वोपपत्तेः । साधने चार्जनप्राप्तकामनानुवादसम्भवाच्च । याग एव भाव्यो नान्यत् फलं इत्यधिकाराभावः ।

नन्वेवमफलस्य कर्मणो धर्मत्वासिध्या "चोदनालक्षणो धर्म" इति असम्भवात् तदधीनं शास्त्रं नारभ्येत । पुरुषप्रवृत्त्यसम्भवेन विध्यानर्थक्यात् वेदस्याप्रामाण्यं च स्यादिति चेत् - ओमित्येवं पूर्वपक्षं कृत्वा पदश्रुतेरपि प्रबलया प्रत्ययश्रुत्या भावनायाः [4]विध्युपरोधात्, तस्य च चेतनप्रवर्तनारूपस्य पुरुषार्थभाव्यतां विना अनुपपत्तेः । फलकामनास्वारः स्यात् । स्वर्गशब्दस्य प्रीतिवचनत्वेन चन्दनादिषु गौणत्वात्, अत्र तद्ग्रहणे प्रमाणाभावाच्च स्वर्ग एव भाव्यो न यागः इति अस्त्यधिकार इति सिद्धान्तितमधिकारलक्षणे, "द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्ध" इति आद्यपादीय आद्याधिकरणे । तथा "विश्वजिता यजेत" इत्येवमादिषु फलमस्ति न वेति चिन्तायां फलस्याश्रवणात् यागभाव्यता प्रतिपादनेन वाक्यस्य परिपूर्णतया, अध्याहारानपेक्षणाच्च नास्ति फलम् । न च यागभाव्यतायां उच्यमानायां पुरुषप्रवृत्त्यसम्भवेन विध्यानर्थक्यात् वेदस्याप्रामाण्यं स्यादिति वाच्यम् । इष्टापत्तेरिति पूर्वपक्षं प्रापय्य, चेतनप्रवर्तनात्मक-

---

[1] समानपदे श्रुत्यर्थस्य (ख, ग, घ)

[2] अन्वयासंभवे (क), अन्वयसंभवेन (ज), अन्वयसंभवे (च)

[3] वाक्येन रूपेण (ख, ग, घ), वाक्यत्वेन (ज)

[4] विध्यवरोधात् (घ), शाब्दीसंबन्धात् (छ, ज)

विध्यवरुद्धायां भावनायामपुरुषार्थस्य यागस्य भाव्यत्वेनान्वयासम्भवात् तदंशे वाक्यस्य साकाङ्क्षत्वात्, तत्पूरणाय फलपदाध्याहारावश्यं भावात् विश्वजिदादीनामस्ति फलमिति सिद्धान्तितं प्रयुक्तिलक्षणे, "चोदनायां फलश्रुतेः कर्ममात्रं प्रतीयेत । नह्यशब्दः प्रतीयत" इति तृतीयपादीय पञ्चमाधिकरणे । अत्रोभयत्रापि यथा अप्रामाण्यपर्यवसायी पूर्वपक्षः, तथा तद्विजिज्ञासस्वेत्यादावपि इत्यर्थः । स्वर्गकामशब्दस्य आचार्यमते फलसमर्पकता । गुरुमते नियोज्यसमर्पकता इति उभयाभिप्रायेण फलाभावेन नियोज्याभावेन चेत्युक्तम् ।। छ ।।

**न च मन्तव्य इत्यादेः** इति । उपांशुयाजाधिकरणं प्रागनुक्रान्तम् । विष्ण्वादि वाक्यानां मन्तव्यवाक्यस्य चाविधित्वविधित्वयोः एकवाक्यता[1]भंगरूप उपबाधकसद्भावाभ्यां वैषम्यं उन्नेयम् ।। छ ।।

**प्रयाजादिवाक्यस्य स्वयं अवान्तरवाक्यतया विधायकस्यापि पुनः दर्शपूर्णमासादिवाक्येन वाक्यैकवाक्यतावत् प्रकृतेऽपि पृथग्विधायकस्यापि ब्रह्मपरवाक्येन वाक्यैकवाक्यतोपपत्तेश्चेति** । दर्शपूर्णमासयोः समिदादीनां पस्पराकाङ्क्षालक्षणेन प्रकरणेन विनियोगोऽस्त्युत नेति सन्देहे, स्वर्गकामस्य दर्शपूर्णमासौ कर्तव्यौ इत्यर्थपर्यवसानात् निरपेक्षं प्रधानवाक्यं, "समिधो यजती"त्यादेः फलाकाङ्क्षायामपि स्वर्गं स्यादिति न्यायेन तल्लाभात् नैराकाङ्क्ष्यम् । अतो न प्रकरणेन विनियोग इति पूर्वपक्षं प्रापय्य, यदि दर्शपूर्णमासौ कर्तव्यौ इति प्रधानवाक्यार्थः स्यात् तदा यागक्रियायाः निर्ज्ञातप्रकारत्वात् स्यान्नैराकाङ्क्ष्यम् । दर्शपूर्णमासाभ्यां स्वर्गः कर्तव्यः इति तु वाक्यार्थः । तत्र न ज्ञायते केन प्रकारेण ताभ्यां स्वर्गः कर्तव्यः इति । तेनास्तीतिकर्तव्यताकाङ्क्षा । प्रयाजादेस्तु प्रयोजनाकाङ्क्षा स्पष्टैव । तथा च साकाङ्क्षयोः सन्निहितयोः अनयोः अप्रत्यक्षैक-वाक्यत्वमात्रकल्पनं फलान्तरकल्पनात् लघीयः । अतः प्रकरणेन समिदादीनां विनियोग

[1] भंगदोषरूपबाधकसद्भावासद्भावाभ्यां (क, घ, छ)

इति सिद्धान्तितं शेषलक्षणे, "असंयुक्तं प्रकरणात् इतिकर्तव्यतार्थत्वादि"ति तृतीयाध्यायस्य तृतीयपादीय चतुर्थाधिकरणे । अत्र यथा प्रधानवाक्यैक-- वाक्यताङ्गवाक्यानां विधायकत्वाविरोधिनी, तथा ब्रह्मपरवाक्यैकवाक्यतापि इत्यर्थः।।छ।।

**यदभिघारयेदित्यादौ "अभिघार्यास्त्र्यम्बका नाभिघार्या इति मीमांसन्त" इति मीमांसासमभिव्यहारेणेव "यस्योभयं हविरार्त्तिमार्छती"त्यादौ निमित्तत्वाभिधायक यच्छब्दादिनेव तद्विजिज्ञासस्वेत्यादौ केनचित् विधिशक्तिप्रतिबन्धाभावाच्चेति ।** अभिघारणाधिकरणं प्रागनुक्रान्तम् । तथा "देवांश्च याभिः यजते ददाति च, अग्निदग्नीन्विहर बर्हिर्देवसदनं दामी"त्यादिषु मन्त्रगतेष्वाख्यातेषु यस्योभयं हविरार्त्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यादिषु निमित्तप्रतिपादनेन आख्यायैक[1]वाक्यतामुपगतेषु चाख्यातेषु विधायकत्वमस्ति न वेति चिन्तायां, प्रसिद्धविधायकाख्यातैकरूप्यात् विधायकत्वमिति पुर्वपक्षं कृत्वा, देवांश्चेत्यादौ प्रसिद्धपरेण यच्छब्देन बर्हिर्देवसदनं दामीत्यादौ विध्ययोग्य आत्ममात्रविषयेणोत्तम-पुरुषेणाग्नीदग्नीन्विहरेत्यादौ अभिमुखानभिमुखसाधारणविधिविरुद्धस्वभावेन आभिमुख-मात्रविषयेण आमन्त्रणेन, "यस्योभयं हवि"रित्यादौ कर्तृपरतया निमित्तत्वावगमकेन यच्छब्देन च विधिशक्तिप्रतिबन्धात् न विधायकत्वमिति सिद्धान्तितं भेदलक्षणे, "विधिमन्त्रयोः ऐकार्थ्यं एकशब्दादि"ति आद्यपादीय सप्तमाधिकरणे ।

अत्र उभयत्र यथा मीमांसन्ते, यस्येति च विधिशक्तिप्रतिबन्धकपरशब्द-श्रवणं दृश्यते, न तथा तद्विजिज्ञासस्वेत्यादौ पश्यामः इत्यर्थः । यद्यपि आमन्त्रणविभक्त्या विधिशक्तिप्रतिषेधोऽवगम्यते । तथापि क्रतुप्रयोगमध्यपातिषु प्रैषेष्वेव प्रतिबन्धकत्वम् । प्रकृते तु पुरा[2]कल्परूपार्थवादेन विध्युन्नयनात् न तस्य कस्यचित्

---

[1] आख्यातान्तरैक- (क, ङ, ज, च, छ)

[2] कल्पस्वरूपा- (क, ख, ग, च, छ), कल्पसरूपा (घ, ङ)

प्रतिबन्धः । "इति ह स्माह [1]वष्कुर्वार्ष्णो यो माषानेव मह्यं पचते"त्यस्य तु [2]आरणस्याग्नेयादिति [3]आरण्याशनविधिशेषतया न माषपाकविध्युन्नायकत्वम् । [4]षाष्टस्तु तस्य वृष्णिगोत्रासाधारण्यसर्वपुरुषसाधरण्यविचारः कृत्वा चिन्तारूप इति विशेषोऽवधेयः ।। छ ।।

**तत्कथं, सूर्यायेत्यूहं प्रति अग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावात्। यथोक्तम् -**

**"प्राकृतस्थानपतितः पदार्थान्तरकार्यतः ।**
**ऊहः प्रयोगो विकृतः ऊह्यमानतयोदितः ।।" इति ।**

दर्शपूर्णमासयोः श्रुतौ "अग्नये जुष्टं निर्वपामि । व्रीहीणां मेधः सुमनस्यमान" इति मन्त्रौ "सौर्यं चरुं निर्वपेत्, वार्हस्पत्यो नैवारश्चरु"रित्यत्र चोदकप्राप्तौ किं [5]सूर्यपदं नीवारपदप्रक्षेपेण ऊहितव्यौ उत नेति संशये, यथावस्थितस्वरूपयोरेव मन्त्रयोः चोदकेन प्रापितत्वादग्निव्रीहिपदाभ्यां ऐन्द्रीवत् गुणवृत्त्या सूर्यनीवारप्रकाशन-सम्भवात् नोह इति पूर्वपक्षं प्रापय्य, प्रकृतावग्निव्रीहिशब्दौ न स्वरूपविवक्षया आम्नातौ, अदृष्टार्थत्वापत्तेः । किन्तु देवता हविः प्रकृतिद्रव्यपदविवक्षया । दृष्टार्थतालाभात् । अतः तेनैवरूपेण विकृतौ चोदकेन प्रापणात्, अग्निव्रीहिशब्दयोः वैकृतदेवताद्रव्यपरत्वाभावात् तदुद्धारेण सूर्यनीवारपदप्रक्षेपेण च मन्त्रौ ऊहितव्यौ ।

---

[1] वष्कुर्वार्ष्णो (घ, ङ), बद्धुर्वार्ष्णो (क, च, छ, ज)

[2] आरण्यस्याश्नीयादिति (क, घ, च, ज, छ, )

[3] आरण्यादानविधिशेषतया (ख, ग, घ), आरण्यात्मनविधिशेषतया (क)

[4] माषस्तु (ङ)

[5] सूर्यनीवार- (क, ङ, च, छ, ज)

ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुक्तेति वैषम्यमिति सिद्धान्तितम्, ऊहलक्षणे, "प्रकृतौ यथोत्पत्तिवचनमर्थाना"मिति तृतीयपादीयाद्याधिकरणे । अत्र सौर्ययागे चोदकप्राप्ते देवस्यत्वेत्यादि निर्वापमन्त्रे, सूर्यायेति पदस्थाने यथा अग्नय इति पदं स्थानि विद्यते, न तथा प्रतिसूत्रं ओङ्कारोहस्य स्थान्यस्तीत्यर्थः । [1]ऊहलक्षणप्रपञ्चितैः पञ्चभिः प्रमाणैः वैकृतस्य पदार्थान्तरस्य प्राकृतपदार्थस्थान-पतितत्वावधारणपूर्वकं चोदकप्राप्तस्य प्राकृतपदार्थस्य कार्यानुसारि अन्यथाप्रयोगः ऊहविषयत्वात् ऊह इति श्लोकार्थः ।।

**न चोहशब्देनाध्याहारो लक्ष्यत इति वाच्यम् । "सं यज्ञप्रतिराशिषा इषे त्वे"त्यादाविव साकाङ्क्षत्वाभावादिति ।** "सं ते प्राणो वायुना गच्छताँ सं यजत्रैरङ्गानि सं यज्ञपतिराशिषे" इति मन्त्रेषु [2]गच्छतामित्यस्य सं यजत्रैरङ्गानि इत्यत्र वचनभेदात् नानुषंग इत्यविवादम् । सं यज्ञपतिराशिषेत्यत्रापि किं तस्यैवानुषंगः उत अध्याहार इति संशये, [3]विपरिवृत्तेरनुषंग इति पूर्वपक्षे, सं यजत्रैरङ्गानि इत्यत्र असंबन्धेन बुद्धिविपरिवृत्तिभङ्गादनुषंगासम्भवे सति साकाङ्क्षत्वादध्याहारेण तत्पूरणमिति सिद्धान्तितं भेदलक्षणे, "व्यवायान्नानुषज्यते" इत्याद्यपादीयान्तिमाधिकरणे । तथा इषे त्वोर्जेत्वेत्यादिषु किमेकमन्त्रत्वं उत मन्त्रभेद इति संशये, अनुष्ठेयार्थाप्रकाशनाददृष्टार्थत्वे सत्यनेकादृष्टकल्पनायाः अन्याय्यत्वात् मन्त्रैक्यमिति पूर्वपक्षं कृत्वा, अदृष्टार्थत्वेऽपि स्वरूपतः परस्परं नैराकाङ्क्षावधारणात् । अन्योऽन्यानादरेणैव प्रयोजनापेक्षत्वात् समिदादिवदनेकाद्यदृष्टकल्पनस्य न्याय्यत्वात् नैकमन्त्रत्वसिद्धिः ।

वस्तुतस्तु "इषे त्वेति छिनत्ति । ऊर्जेत्वेत्यनुमार्ष्टि" इत्यादिना शाखाछेदनादिषु करणत्वेन विनियोगादर्थप्रकाशनरूपक्रियानिर्वर्तनेनैव करणत्वस्य

---

[1] ऊहलक्षणे प्रपञ्चितं चैतत् (ज, छ), ऊहलक्षणे प्रपञ्चितैः (ख,ग, घ, च, ङ)

[2] गच्छतामिति क्रियापदस्य (क, च)

[3] वुद्धि विपरि- (ख, ग, घ), वुद्धि विपरिवृत्तेनानु- (क, च)

[1]निर्वाह्यत्वेन छेदनादिकं प्रति साकाङ्क्षत्वात् छिनत्तीति अध्याहारेण वाक्यं पूरणीयमिति मन्त्रभेद एव युक्तः इति सिद्धान्तितं भेदलक्षणे, "समेषु वाक्यभेदः स्यादि"ति आद्यपादीय षोडशाधिकरणे ।

अत्रोभयत्र क्रियापदाश्रवणात् तदाकाङ्क्षायामध्याहारः स्वीकृतः । नैवं सूत्रेषु आकाङ्क्षेति अध्याहारो न युक्त इत्यर्थः ।। छ ।।

**मन्त्रेषु उह्यमानस्य तदनवयवत्वं इष्टमेव । ऊहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तितत्वात् इति ।** ऊहप्रवरनामधेयानां मन्त्रत्वमस्त्युत नेति सन्देहे, मन्त्रैकवाक्यत्वेन तन्मध्यनिवेशात् [2]मन्त्रकार्यकरणत्वाच्च मन्त्रत्वमिति पूर्वपक्षे, रथघोषेण माहेन्द्रस्य [3]स्तोत्रमुपाकरोतीत्यादौ रथघोषादेः अमन्त्रत्वेऽपि मन्त्रकार्यकरत्वेनानैकान्त्यात्, मन्त्रत्वस्याध्येतृप्रसिध्यधीनत्वात्, तस्याश्च अध्ययनकाले समाम्नातशब्दमात्रविषयत्वेन मन्त्रैकवाक्यतायाः अप्रयोजकत्वादमन्त्रत्वमिति सिद्धान्तितं भेदलक्षणे, [4]"आम्नातेषु मन्त्रत्वमनाम्नातेषु विभागः स्यात्" इति प्रथमपादीय नवमाधिकरणे ।

यद्यपि अत्र उह्यमानस्य मन्त्रैकवाक्यतया तदवयवत्वमभ्युपेत्यैव तदपराधस्य "यदृक्तो यज्ञभ्रेष आगच्छेत् यजुष्टो यज्ञभ्रेष आगच्छेत्" इत्यादि मन्त्रवैकल्य[5]प्रायश्चित्तापवादकत्वसिध्यर्थं [6]मन्त्रत्वं व्यवस्थापितम्, सुधायां तु

---

[1] निर्बाधत्वेन (क)

[2] मन्त्रकार्यकरत्वाच्च (क, ख, ग, घ, च)

[3] स्तवन- (क, च)

[4] अनाम्नातेषु मन्त्रत्वं आम्नातेषु विभागः (घ, ख, ग)

[5] प्रायश्चित्तानापवादकत्वसिध्यर्थं (ख, ग, घ, ङ), प्रायश्चित्तापादकत्वस्यासिध्यर्थं (क)

[6] अमन्त्रत्वं (क, ख, ग, घ, च)

तदनवयवत्वमेव आपादितम् । न तु अमन्त्रत्वमपीति नेष्टापादनं युक्तम् । तथापि [1]मन्त्रत्वेन तदनवयवत्वं सुधावाक्याभिप्रेतमिति शङ्कितुः हृदयमिति ध्येयम् ।। छ ।।

**ओंकारस्य उत्तरत्रानुषंगे अनुषक्तस्य** "ङ्याप्प्रातिपदिकादि"त्यादेः, **अच्छिद्रेण पवित्रेणेत्यादेः, तनूर्वर्षिष्टेत्यादेश्च तत्रार्थे अन्वयदर्शनात् प्रकृतेऽपि ओंकारार्थस्य जन्मादिसूत्रेषु अन्वयो वाच्य इति ।** "चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वासविता पुनातु" इति [2]मन्त्रत्रयानन्तरं आम्नातोऽ"छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभि"रित्ययं शेषः, किं पूर्वयोः अनुषज्यते, किं वा परस्यैव शेषः इति संशये, शेषस्यानन्तरसम्बन्धमात्रेण नैराकाङ्क्ष्यात्, पूर्वयोश्च स्वत एव आकाङ्क्षाविरहात् नानुषङ्गः इति पूर्वपक्षं प्रापय्य, पुनातुशब्दैकवाक्यतापन्नस्याच्छिद्रादेः तत्करणद्वारेण पवनक्रिया प्रकाशनार्थत्वात्, तस्याः एव पूर्वाभ्यामपि मन्त्राभ्यां प्रकाश्यत्वात्, प्रधानवशेनानु-कर्षणस्य न्यायत्वात्, अनुषङ्ग इति सिद्धान्तितं भेदलक्षणे, "सर्वशेषते"ति आद्यपादीय उपान्त्याधिकरणे ।। छ ।।

तथा "या ते अग्ने अयाशया तनूर्वर्षिष्टा गह्वरेऽष्टोग्रं वचो अपावधी त्वेषं वचो अपावधीँ स्वाहा, या ते अग्ने रजाशया हराशया" इति ज्योतिष्टोमे मन्त्रत्रयमाम्नातम् । तत्रोत्तरयोः साकाङ्क्षयोः किं लौकिकः शेषोऽध्याहार्यः किं वा पूर्वमन्त्रसमनन्तरपठित तनूर्वर्षिष्टेत्यादिः अनुषङ्गेण शेष इति संशये, समाम्नातेन पूर्वत्रैव निबन्धस्य शेषस्यान्यत्र नयनायोगात्, सकृदाम्नातस्य सर्वार्थत्वानुपपत्तेः, आनन्तर्य[3]देशविशेषाभ्यां विशेषग्रहणेन पूर्वार्थत्वावसायाच्च अनुषङ्गासम्भवः । लौकिकस्य तु क्वाप्यनुबद्धत्वेन सर्वार्थत्वादध्याहारः इति पूर्वपक्षं प्रापय्य, सर्वानन्तरं सकृत्पठितुं अशक्यः बुद्धिविपरिवृत्तिमात्रेण साकाङ्क्षैः

---

[1] अमन्त्रत्वेन (ख, ग, घ)

[2] मन्त्रमाम्नायानन्तरं (क, च)

[3] दशा विशे- (क)

सर्वैः सम्बन्धसिद्धेः पुनरनाम्नातोऽयं शेषः सर्वार्थेनैव आम्नात इति अवगमादनुषंग एव युक्तः । एवं वेदसमर्पितेन शेषेण सर्वेषां नैराकाङ्क्षात् न लौकिकाध्याहारः कल्पनावसरः इति सिद्धान्तितं भेदलक्षणे, "अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वा"दित्याद्य-पादीय सप्तदशाधिकरणे ।। छ ।।

अत्र यथा "अच्छिद्रेण पवित्रेणे"त्यादेः पूर्वत्रानुषक्तस्य "चित्पतिस्त्वा पुनातु" इति पवनक्रियाकरणसमर्पकतया, तनूर्वर्षिष्ठेत्यादेश्च पश्चादनुषक्तस्य रजाशया हराशया [1]शेषितरजतमयत्वहिरण्मयत्वविशेषणयोः [2]विशेष्यसमर्पकतयान्वयो दृष्टः । तथा जन्मादि सूत्रेषु ओङ्कारस्यान्वयो वाच्यः इत्यर्थः ।। छ ।।

**नात्रोहशब्दो मन्त्रसामसंस्कारोह इत्यादाविव कर्मव्युत्पत्त्या विकारपर इति।** "अग्नये जुष्टं निर्वपामी"त्यादौ सूर्याय जुष्टमित्यादि मन्त्रोहः । "यद्योन्यां तदुत्तरयोः गायति कवतीषु रथन्तरं गायति" इत्यादिषु प्रकृतग्रन्थे यो ना वाम्नातानां साम्नां उत्तरादिषु तत्तदानुगुण्येनान्यथा गानं सामोहः । व्रीहिषु श्रुतानामवहननादीनां वैकृतेषु नीवारादिषु औचित्येनानुष्ठानं संस्कारोहः इत्येतेषां निर्देशके मन्त्रसामसंस्कारोहः इत्यादौ मीमांसकव्यवहारे ऊह्यत इति व्युत्पत्त्या यथा प्रयोगविकारपर ऊहशब्दः न तथा प्रकृत इत्यर्थः ।

**अत एव टुप्-टीकायां नवमे "ऊहो नाम तर्केण साचैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणे"त्यादिनेति** ऊह वितर्के इत्यस्मात् भावे घञि लघूपधात्वाभावेन गुणाभावे चोह इति सिद्धेः ऊहशब्दो अध्याहार परः । **यद्यपि अत्र श्रवणविशरणपरिहाररूपादृष्टफलार्थत्वं श्रुतं, तथापि दृष्टस्यापेक्षितस्यार्थप्रत्ययस्यापि फलत्वसम्भवात् न तत्त्यागः । एवं च स्विष्टकृदादिवत् ओङ्कारोच्चारणमुभयार्थमिति** । स्विष्टकृदुत्तमप्रयाजपशुपुरोडाशादीनां

---

[1] शब्दितयोः रजत – (क, ख, ग, घ, च, ङ)

[2] विशेष्यभूततनूसम—(क, च)

दृष्टार्थत्वमेव उत अदृष्टार्थत्वमपीति संशये, प्रकृतदेवतास्मरणेन द्रव्यप्रतिपत्त्या च दृष्टार्थतालाभात् एकेन प्रयोजनेन नैराकाङ्क्ष्यात् नादृष्टार्थत्वकल्पनावकाश इति पूर्वपक्षं प्रापय्य, मन्त्रप्रक्षेपांशयोः दृष्टार्थत्वेऽपि त्यागांशस्य दृष्टप्रयोजनाभावाददृष्टार्थत्वमावश्यकमित्यंशभेदेन उभयार्थत्वमिति सिद्धान्तितं प्रयुक्तिलक्षणे," आश्रयिषु अविशेषेण भावार्थः प्रतीयत" इति आद्यपादीय सप्तमाधिकरणे।

अत्र यथा स्विष्टकृदादौ उभयार्थत्वम् अभ्युपगतम्, तथा ओङ्कारोच्चारणस्यापि श्रुतिबलात् सामर्थ्याच्च उभयार्थत्वमभ्युपगन्तव्यमित्यर्थः ।

ननु स्विष्टकृदादौ प्रक्षेपत्यागादि अवच्छेदभेदेन उभयार्थत्वं दृष्टं, नैवमोङ्कारोच्चारणे अवच्छेदभेदः सम्भवति, येनोभयार्थत्वं स्यात् । किञ्च यत्रादृष्टार्थत्वं कल्प्यं तत्र दृष्टार्थत्वे सम्भवति नादृष्टार्थत्वमिष्यते । यथा स्वाध्यायोऽध्येतव्यः इत्यादौ । यत्र तु प्रमाणान्तरवशाददृष्टार्थत्वमावश्यकं तत्र सम्भवदपेक्षितमपि दृष्टार्थत्वं नाद्रियते । यथा स्तौति शंसतीत्यादौ । तथा च प्रकृते स्रवत्यनोंकृतमित्यादि श्रुत्या [1]अदृष्टार्थत्वे आवश्यके न प्रत्यायनार्थत्वावकाशः । अपि च प्रत्यक्षश्रुतिविधिवशाददृष्टार्थत्वे अवगते नोन्नेतव्यविधेः सामर्थ्याददृष्टार्थत्वा[2]वगम सम्भवः । अतः कथं ओङ्कारोच्चारणस्य उभयार्थत्वमिति चेत् -

उच्यते - स्तौति शंसतीत्यादौ देवताप्रकाशनरूपदृष्टप्रयोजनस्वीकारे [3]स्तुतिरूपं विहन्यत इति श्रुतिबाधः स्यात् । अतः तद्बलात् दृष्टार्थत्वं त्यक्तम्, यथोक्तं -

सत्यं दृष्टार्थाता युक्ता श्रुतिश्चेन्न विरुध्यते ।
देवता स्मरणार्थत्वे [1]श्रुतिरूपं विहन्यते ।। इति ।

---

[1] अदृष्टार्थत्वेन प्रत्ययना- (ख, ग, घ)

[2] दृष्टार्थत्वा- (क, ख, ग, घ, ङ, च, छ, ज)

[3] गुणसंबन्धाभिधानरूपस्तुति- (क, ख, ग, घ, ङ, च, छ, ज)

प्रकृते तु दृष्टार्थत्वाभ्युपगमे न काचित् श्रुतिः बाध्यते । न च सामर्थ्यस्य दौर्बल्यम् । न हि सूत्रेषु आद्यन्तयोः ओङ्कारमुच्चारयेदिति प्रत्यक्षो विधिरुपलभ्यते । येन दौर्बल्यं सामर्थ्यस्य स्यात् । किन्तु स्रवत्यनोंकृतमित्योङ्कारानुच्चारणे निन्दा श्रवणादन्यथानुपपत्या तदुच्चारणविधिः उन्नेतव्यः । अतः श्रुतिसामर्थ्ययोः उन्नेतव्यविध्योः तुल्यबलत्वादविरोधाच्चोभयार्थत्वम् । स्विष्टकृदादि दृष्टान्तस्योपन्यासस्तु उभयार्थत्वसम्भवमात्र इति न काचिदनुपपत्तिः ।। छ ।।

**न चैकस्यैकत्रोच्चारणे दृष्टार्थत्वे अन्यत्रापि तथात्वनियमः । मन्त्राणां प्रयोगकाले उच्चारणस्य दृष्टार्थत्वेऽपि जपकाले तस्यादृष्टार्थत्वदर्शनादिति ।** क्रत्वङ्गभूतानां मन्त्राणां किं अर्थप्रकाशनदृष्टं द्वारं उत अदृष्टमिति संशये, उपायान्तरेणापि प्रयोगवेलायामर्थप्रकाशनसम्भवात् तादर्थ्ये मन्त्राणां नित्यवत् आम्नातानां आनर्थक्यापत्तेः । [2]मन्त्रप्रत्यायनाददृष्टकल्पनायां उच्चारणादेव तत्कल्पनौचित्यात् पुरुषव्यापारगोचरत्वेन तत्रैव फलाकाङ्क्षायाः सत्वाददृष्टार्थाः मन्त्राः इति पूर्वपक्षं प्रापय्य, मन्त्रोच्चारणाददृष्टार्थस्मरणम् । तस्मात् प्रयोगः । तस्मात् फलमित्येवं दृष्टप्रयोजन-लाभात् नादृष्टार्थत्वकल्पनावसरः । यस्तु मन्त्रेणैव स्मर्तव्यमिति नियमः तस्य न दृष्टं फलं किञ्चिदस्तीति अदृष्टं कल्प्यते । उच्चारणस्य तु दृष्टमेव प्रयोजनम् । जपादौ विनियुक्तानां तु मन्त्राणामर्थप्रत्यायनानपेक्षतया अदृष्टार्थमुच्चारणमस्त्विति सिद्धान्तितं प्रमाणलक्षणे, "तदर्थशास्त्रादि"ति द्वितीयपादीयान्तिमाधिकरणे ।

अत्र यथा कर्मणि विनियुक्तानां मन्त्राणां उच्चारणस्य तदनुष्ठानकाले दृष्टार्थत्वम्, "त्रिभिः [3]अश्नन् पारायणैः पूतो भवति" इत्यादिना पारायणादिषु

---

[1] स्तुतिरूपं (क, ग, च, छ, ज)

[2] मन्त्रार्थप्रत्यायनात् (क, ख, ग, घ, च, छ, ज)

[3] अनश्नन् (क, ख, ग, घ, च, छ, ज)

विनियुक्तानां तेषामेवोच्चारणस्यादृष्टार्थत्वं, एवं ओङ्कारोच्चारणस्य प्रथमसूत्रे दृष्टार्थत्वं, उत्तरसूत्रेषु अदृष्टार्थत्वं चोपपद्यत इत्यर्थः ।। छ ।।

**अन्वेनं मातेत्यादौ एकवचनस्य एकपशुके दृष्टार्थत्वेऽपि बहुपशुके अदृष्टार्थत्वदर्शनाच्च। "न माता वर्धत" इति श्रुत्या मात्रादिशब्दे ऊहनिषेधादिति ।** मन्त्राधिकरणे ऊह इति गुणसूत्रेणाग्नीषोमीयाच्चोदकेन पशुगणे प्राप्ते "अन्वेनं माता मन्यतामनु पितानुभ्राते"त्यध्रिगुप्रैषगते वाक्ये मात्रादिपदानां ऊहप्रतिषेधपरं "न माता वर्धत" इति वचनमन्यत्रोहास्तित्वावगमकतया मन्त्राणामर्थविवक्षायां लिङ्गमुपन्यस्तम् । अत्र यथा पशुगणप्राप्तानां मात्रादिपदानां एकवचनान्तानामसमवेतार्थतया उच्चारण-मदृष्टार्थं एकस्मिन् पशौ दृष्टार्थमित्येवं प्रयोगभेदेन उभयार्थत्वं, तथा प्रकृतेऽपीत्यर्थः ।

नन्वत्र पशुगणे मात्रादिपदानां एकवचनान्तानां यदि असमवेतार्थत्वं स्यात् तदा तदुच्चारणमदृष्टार्थम् । नत्वेतदस्ति । तेषां [1]पशुपरेणैनमित्यनेन शब्देन सह अन्वयाभावात् । किन्तु अनुमन्यतामित्यनेन सम्बन्धः । स च तत्तत्पशुप्रतिसम्बन्धित्वाभिप्रायेण ।

ये मानवाः विगतरागपरापरज्ञाः
नारायणं सुरगुरुं सततं स्मरन्ति ।
ध्यानेन तेन हत किल्बिष चेतनास्ते
मातुः पयोधररसं न पुनः पिबन्ति ।। इति श्लोक इव एकवचनान्तत्वेऽपि अविरुद्धः । अतोऽर्थसमवायात् न तदुच्चारणमदृष्टार्थम् ।" न माता वर्धत" इति वचनं न्यायप्राप्त [2]ऊहानुवादमात्रं, न प्राप्तोह प्रतिषेधार्थम् । तदुक्तं वार्त्तिकन्यायसुधायां एकमात्रादि सम्बन्धे पशुभेदेऽपि मात्रादिशब्दोहस्यानाशङ्क्यत्वात् । मात्रादि भेदेऽपि

---

[1] पशुपरेणैनमितिशब्देन (क, च, छ, ज)

[2] अनूहानुवादमात्रं (क, ख, ग, घ, ङ, च, छ, ज)

एकपशुसम्बन्धाभावात् सम्बन्धि-भेदादेव तद्भेदसिद्धेः न्यायादेवानूहावगतेरिति। अतो [1]वचनबलादपि अदृष्टार्थत्वा-सम्भवात् कथमयं दृष्टान्तः इति चेत् -

मैवं - साक्षात् पशुपरे इदंशब्दसम्बन्धाभावेऽपि बहुत्वेनावगतत्वादनेक-कर्मिकायां अनुमतिक्रियायां एकस्य मात्रादेः अन्वयासम्भवात् तदन्वयघटनाय बहुवचनान्तत्वेन तेषां पदानां ऊहावश्यं भावात् । मातुः पयोधरमित्यादिकं तु गौणतयापि उपपन्नं, नेह तदाश्रयणे प्रमाणमस्ति । एवं चात्र वचनबलादेवा-नूहोऽभ्युपगन्तव्यः । तस्मादेकवचनान्तानां तेषां उच्चारणं पशुगणे अदृष्टार्थमिति अकामेनापि आश्रयणीयमिति न दृष्टान्तानुपपत्तिः ।। छ ।।

**अध्याह्रियमाणस्य आपादितममन्त्रावयवत्वं च मन्त्रेण सह एककार्यकारित्वाभावः इति नेष्टापत्तिरिति** । यद्यपि ग्रन्थे मन्त्रानवयवत्वमात्रमापादितम्। नामन्त्रत्वमिति इष्टापादानं सुपरिहरम् । तथापि आपादनस्यामन्त्रत्वपर्यन्तत्वेऽपि नानुपपत्तिरिति प्रौढ्या परिहारान्तरमुक्तम् ।। छ ।

**जिज्ञासान्विततया प्रथमं प्रतीतस्य ओतत्वस्य तत्र असम्भवेन "सप्तदशारत्निर्वाजपेयस्य यूप" इत्यादाविवाङ्गावतारन्यायेन तदुपसर्जने ब्रह्मणि अन्वय सम्भवाच्चेति** । "सप्तदशारत्निर्वाजपेयस्य यूप" इत्यत्र अरत्निसाप्तदश्यं किं ऊर्ध्वपात्रद्वारा वाजपेयाङ्गम् । उत यूपद्वारा पशुयागाङ्गमिति संशये, अव्यवधानात् प्रधानत्वात् प्रकरणानुग्रहाच्च वाजपेयस्याङ्गम् । परिमाणस्य साक्षात् कर्मणि अन्वयासम्भवेऽपि तत्साधानीभूत ऊर्ध्वपात्रद्वारा तन्निर्वाहः । यूप शब्दोऽपि सादृश्यात् ऊर्ध्वपात्रपरः । यूपद्वारापश्वङ्गत्वे तु वाजपेयशब्दः पशौ लाक्षणिकः स्यात् । लक्षणा च न युक्ता । मुख्यत्वात् वाजपेयशब्दस्य । यूपशब्दस्तु जघन्यो लक्षणां सहते । तस्मात् वाजपेयाङ्गं साप्तदश्यमिति पूर्वपक्षं प्रापय्य, देवदत्तस्य नप्तेतिवत् परम्परासम्बन्धेऽपि षष्ठ्युपपत्तेः न

[1] वचनबाधादपि (क)

वाजपेयशब्दे लक्षणाप्रसङ्गः । पूर्वपक्षे तु यूपशब्दे लक्षणा दुर्वारा । न च सा युक्ता श्रुतिसम्भवे । अतः श्रुत्यनुग्रहायाव्यवहितसम्बन्धादित्रयमनादृत्य यूपद्वारा पश्वङ्गत्व-मेवाभ्युपगन्तुं युक्तमिति सिद्धान्तितं शेषलक्षणे, "आनर्थक्यात्तु तदङ्गेष्वि"ति आद्यपादीयाष्टमाधिकरणे ।। छ ।।

अत्र यथा अरत्निसाम्तदश्यस्य प्रधानभूतवाजपेयाङ्गत्वेन प्रतीयमानस्यापि तत्र अन्वयासम्भवात् तदुपसर्जनीभूत[1]पशुयूपान्वयः, [2]एवं ओतत्वस्यापि उपसर्जनान्वयः इत्यर्थः ।। छ ।।

**अर्थवादप्राशस्त्यस्य यजेतेत्यत्र उपसर्जनीभूत यागविशेषणत्वदर्शनाच्चेति।** प्रत्ययोपात्तायां भावनायां करणत्वेन [3]उपसर्जनीभूते यागविशेषणत्वेनान्वयदर्शनाच्चेत्यर्थः ।

**दण्डी प्रैषानन्वाहेत्यादौ दण्डस्य उपसर्जनस्य विध्यन्वयदर्शनाच्च । उक्तं हि वार्त्तिके**

**विशेषणपरत्वं च दण्डीत्यादिषु दर्शितम् । इति ।**

अत्र दण्डमैत्रावरुणसम्बन्धस्य मैत्रावरुणप्रैषानुवचनसम्बन्धस्य च प्रतीयमानस्य "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति, मैत्रावरुणः प्रैष्यति [4]चानुवाहे"ति वाक्याभ्यां प्राप्तत्वेनाविधेयत्वात् - स्थित्वोच्चैरनवानं प्रैषानुवचनं कुर्वतो मैत्रावरुणस्यावलम्बनापेक्षायाः मैत्रावरुणार्थत्वेनावगतस्य दण्डस्य तदुपकारद्वारा अपेक्षायाः सत्वाच्च । "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"त्यत्रेव प्रकृत्यर्थत्वेन उपसर्जनीभूते दण्डे प्रैषानुवचनसम्बन्धित्वेन विधिसंक्रमदर्शनाच्चेत्यर्थः ।। छ ।।

---

[1] पशुयागेऽन्वयः (क, ख, ग, घ, ङ, च, छ, ज)

[2] एवं ओङ्कारार्थोतत्वस्यापि जिज्ञासोपसर्जन ब्रह्मान्वयः इत्यर्थः (क, च, छ, ज)

[3] उपसर्जनीभूतयागविशेषणत्वदर्शनाच्च (ख, ग, घ, ङ, छ), उपसर्जनीभूते यागे प्रशस्तो याग इति विशेषणत्वेन ... (क, च, ज)

[4] चानुचाहेति (क, ज), अन्वाहेति (ख, ग, घ, च)

**न चार्थिकेनाध्याहृतस्यैवान्वयः न तु श्रुतस्येत्यत्र नियामकमस्ति । "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" इत्यादौ द्रव्यदेवता सम्बन्धाक्षिप्तेन यागेन "यदाग्नेयोऽष्टाकपालो भवती"त्यादौ भवनाक्षिप्तभावनया च विधिप्रत्ययान्वय-दर्शनाच्चेति।** सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः इत्यत्र किं दर्शपूर्णमासिके निर्वापे चरुगुणाविधिः, किं वा निर्वापरूपकर्मान्तरविधिः । आहोस्वित् यागविधिरिति सन्देहे, गौरवात् न कर्मान्तरविधानम् । अश्रुतत्वात् न यागविधिः । असति च यागे देवता सम्बन्धायोगात् सौर्यमिति तेजो दैवत्यत्वात् आग्नेयस्य आनुवादः । चरुशब्दः स्थालीवचनः । स्थाल्यां निर्वपेदित्यर्थः । ब्रह्मवर्चसकाम इति सर्वकाम्यवाक्यप्राप्त-फलानुवादः । तस्मात् दर्शपूर्णमासिके निर्वापे चरुगुणविधिरिति पूर्वपक्षं प्रापय्य, नित्यवत् श्रुतस्य फलपदस्य पाक्षिकानुवादत्वानर्थक्ययोः अयोगात् फलविशिष्टं कर्मान्तरं यावदुक्तं विधीयत इति प्रथमपूर्वपक्षनिराकरणपूर्वकं, द्वितीयपूर्वपक्षं उत्थाप्य निर्वापे देवतान्वयायोगेन तत्पदवैय्यर्थ्य प्रसङ्गात्, द्रव्यदेवतासम्बन्धानुमितो यागो विधीयते । निर्वपतिस्तु तत्र चोदकप्राप्त निर्वापानुवाद इति सिद्धान्तितं भेदलक्षणे, "संस्कारश्चाप्रकरणेऽकर्मशब्दत्वादि"ति तृतीयपादीय पञ्चमाधिकरणे ।। छ ।।

अत्र यथा निर्वपेदिति श्रुतस्य विधिप्रत्ययस्य सौर्यमिति द्रव्यदेवता सम्बन्धाक्षिप्तेन यागेनान्वयः तथा प्रकृतेऽपीऽत्यर्थः ।

[1]ननु आक्षिप्तेन श्रुतस्यान्वयेन सौर्यवाक्यमुदाहरणम् । तत्राक्षिप्तस्य यागस्य भावनाविशेषणत्वेन आक्षिप्तविधिविधेयत्वावश्यंभावात् श्रुतविध्यन्वयानभ्युप-

---

[1] यथा वा "यदाग्नेयोऽष्टाकपालो भवति अमावास्यायां च पौर्णमास्यां चाच्युतो भवती"त्यत्र भावयितुः व्यापारं विना स्वयमेव भवनायोगाद्भवतीत्युक्तभवनेन

गमात्, विशिष्टविधिस्थले प्रत्ययार्थतया श्रूयमाणविधेः तदर्थभूतायां सकलविशेषण-विशिष्टायां भावनायामेवान्वये विशेषणानि तदाक्षिप्तैः विधिभिः विधीयन्त इति आचार्यमतानुवर्तिनां घण्टाघोषाः । अत एवानेकेषामर्थानां विधिसंस्पर्शावश्यं भावेऽपि विशिष्ट[1]विधिस्थलेन वाक्यभेदः । प्राप्तकर्मानुवादेन गुणविधानस्थले अनेकगुणश्रवणे श्रूयमाणस्य विधेः एकत्र संक्रान्तौ जातायामर्थापत्तिः उपरिक्षयेण इतरविशेषण-विध्याक्षेपानुन्मेषात्, तत्रापि श्रूयमाणस्य विधेः व्यापारस्य वक्तव्यतया वाक्यभेद इति व्यवस्था सङ्गच्छते । न च श्रुतस्यैव विधेः विशेषणेषु अवश्यं व्यापारो वाच्यः । तेषामाक्षिप्तविधिविधेयत्वे आक्षेपेण विशेषणविधौ सिद्धे विशिष्टविधिसिद्धिः । तत्सिद्धेन च विशेषणसिध्या आक्षेपसिद्धिः इति अन्योऽन्याश्रयापत्तिरिति भामत्युक्तमनुसरणीयमिति वाच्यम् । पश्चात् कल्प्यस्य विशेषणविधेः प्राक् प्रवृत्तत्वेनैव कल्प्यत्वात् नेतरेतराश्रयापत्तिरिति पौर्णमास्यधिकरणन्यायसुधोक्तरीत्या परस्पराश्रयत्वानापत्तेः । एवं च सकलस्य भावनाविशेषणस्य आक्षिप्तविधिविधेयत्वनियमात् श्रुतस्य आक्षिप्तेन सहान्वये न सौर्यवाक्यमुदाहरणम् । अधिकरणं तु आक्षिप्तविधिविधेयत्वाभिप्रायम् ।

[2]अस्तु तर्हि अग्निहोत्रं जुहोतीत्यादि उदाहरणम् । तत्र धात्वर्थस्य होमस्य करणत्वेन भावनायामन्वयात् । अग्निहोत्रमिति द्वितीयान्तस्य नाम्नः तत्सामानाधि-करण्येनान्वयायोगात्, अनिष्पन्नस्य होमस्य करणत्वासम्भवेन आक्षिप्तायां तद्धोमत्कर्मिकायां भावनायां [3]अन्वयस्य आश्रयणीयत्वात् । [1]मैवम् । तथासति उद्भिदा

---

प्रयोजनकर्तृव्यापारभूतभावनायाः आक्षेपात् । तथा च भवतीति लेट् प्रत्ययरूपविधेरन्वयदर्शनात्, तथात्रापि भवेदन्वय इत्यर्थः । ननु आक्षि- (क)

[1] विधिस्थले न वाक्यभेदः (ख, ग, च)

[2] न चास्तु तर्हि अधिकरणं उपलक्षणम् । अग्नि- (क, छ, च, ज)

[3] भाव्यकर्मनामतया अन्वयस्य- (क, च ज छ)

यजेत इत्यादिषु उद्भिच्छब्दितखनित्रादिद्रव्यविशिष्टयागान्तरविधित्वपूर्वपक्षे मत्वर्थलक्षणाभावप्रसङ्गात् । द्रव्यस्य सामानाधिकरण्येन धात्वर्थान्वयासम्भवेऽपि [2]तत्करणत्वानुपपत्त्या आक्षिप्तायां तत्कर्मिकायां भावनायां करणत्वेनान्वय[3]सम्भवात् । तस्मात् श्रुतस्य आक्षिप्तेन सहान्वय [4]सम्भवमभ्युपेत्यैव मत्वर्थलक्षणा निर्वाह्या । अग्निहोत्रमिति द्वितीयायाः करणत्वे लक्षणमाश्रित्य धात्वर्थसामानाधिकरण्येन तस्यान्वयः उपपादनीयः। तस्मात् श्रुतस्य आक्षिप्तेनान्वये सौर्यवाक्यस्यान्यस्य वा उदाहरणत्वासम्भवात् तदुक्तिः अयुक्त इति चेत् -

उच्यते - [5]विधिप्रत्ययान्वयदर्शनादित्यस्य नायमर्थः विधिप्रत्ययार्थीभूतप्रवर्तनारूपविध्यन्वयदर्शनादिति । किन्तु तदर्थीभूतायां [6]भावनायामवच्छेदकत्वेन [7]अन्वयदर्शनादिति । अभ्युपगतश्चायमन्वयः सौर्यवाक्ये ।

---

[1] वाच्यम् (क, च, छ, ज)

[2] धात्वर्थस्य करणत्वान्यथानुपपत्या (क, च, छ, ज)

[3] -भवात् मत्वर्थलक्षणाभावप्रसङ्गात् । (क, च, छ, ज)

[4] असम्भवं (क, ख, ग, घ, ङ, च, छ, ज)

[5] श्रुतस्यैव विधेर्विशेषणेष्ववश्यं व्यापारो वाच्यः । तेषामाक्षिप्तविधिविधेयत्वे आक्षेपेण विशेषणविधौ सिद्धे विशिष्टविधिसिद्धिः । तत्सिद्धौ च विशेषणविध्याक्षेपसिद्धिरित्यन्योऽन्याश्रयापत्तिरिति भामत्युक्तेः, तद्रीत्या सौर्योदाहरणस्य युक्तत्वात् । न च पश्चात्कल्प्यस्यापि विशेषणविधेः प्राक्प्रवृत्तत्वेन कल्प्यत्वादितरेतराश्रयानापत्तिरिति पौर्णमास्यधिकरणस्योक्तरीत्या आक्षिप्तविधिविधेयत्वेऽपि विशेषणानां न दोष इति वाच्यम् । यागेन विधिप्रत्यया.... (क)

[6] विध्यवरुद्धायां (क, च, छ, ज)

[7] यागान्वय- (क, च, छ, ज)

तत्र हि प्रत्ययार्थीभूतायाः भावनायाः धात्वर्थानवच्छेदे विध्यन्वयायोगात्, तदर्थमवच्छेदक धात्वर्थाकाङ्क्षायां समानपदोपात्तस्य निर्वापस्यान्वये तत्र देवतान्वयायोगेन तत्पदवैय्यर्थ्यापत्तेः । तत्सार्थकत्वाय द्रव्यदेवतासम्बन्धाक्षिप्तो यागः तत्रावच्छेदकत्वेनान्वीयते । ततः तद्विशिष्टा भावना श्रूयमाणेन विधिना विधीयते । तदाक्षिप्तेन विधिना यागो विधीयत इत्यभ्युपगम्यते । कथं तर्हि उद्भिदादिषु मत्वर्थलक्षणापादानम् । [1]आक्षिप्त धात्वर्थकर्मिकभावनान्वय सम्भवात् । उच्यते - श्रुतस्य श्रुतेनैवान्वयः, नाक्षिप्तेन इति उत्सर्गः । [2]अग्निहोत्रवाक्ये तत्प्रख्यशास्त्रवशात् नामधेयत्वेऽवधृते प्रत्ययलक्षणामात्रेण सामानाधि[3]करण्येन निर्वाहोपपत्तौ, नोत्सृष्टनियमापवादेन आक्षिप्तान्वयः आश्रीयते । सौर्यवाक्ये देवतापदवैयर्थ्यभिया सः नियमः अपोद्यते । उद्भिदादिषु उक्तदोषाभावात् नोत्सर्गत्यागः । तस्मात् सौर्यवाक्योदाहरणे न काचिदनुपपत्तिः।। छ ।।

[4]आग्नेयोदाहरणे तु कृत्स्नस्वाध्यायप्रयोजनपर्यवसानापादकाध्ययनविधि-प्रसादलब्धफलभावनाक्षिप्तया तद्भावनया भवतीति पञ्चमलकाररूपविधिप्रत्ययार्थीभूत-प्रवर्त्तनात्मक विध्यन्वय दर्शनादित्यर्थः ।

---

[1] तत्राक्षिप्तायां धात्वर्थकर्मिकायां भावनायां तृतीयान्तोद्भिदादेः करणत्वेनान्वय- (क, ख, ग, घ, च, छ, ज)

[2] न चापवादकाभावेऽपि उत्सर्गत्यागः समुचितः । अग्नि- (क, ख, ग, घ, च, छ, ज)

[3] करण्यनिर्वा- (क, ख, ग, घ, ङ, च, छ, ज)

[4] ननु तथापि यदाग्नेय इत्याद्युदाहरणमसंभवि । तत्र हि भवतीत्युक्तभावनाक्षिप्तभावनायाः विध्यन्वयानर्हत्वात्प्रयोजककर्तृव्यापारे हि प्रयोज्यकर्तृभाव्यत्वनियमेन भवनकर्तुराग्नेयाष्टाकपाल-शब्दाभ्यां उक्तस्य पुरोडाशस्य द्रव्यदेवतासम्बन्धाक्षिप्तस्य यागस्यैवापुमर्थस्यैव तस्यां भावनायां

ननु भवत्यभिहित भावनाक्षिप्तयेति किं न व्याख्यायते - उच्यते, नात्र भवत्यभिहित भावनाक्षिप्ता भावना विध्यन्वयार्हा । प्रयोजककर्तृव्यापारे प्रयोज्यकर्तृ-भाव्यत्वनियमेन [1]भावना कर्तुः आग्नेयाष्टाकपालशब्दाभ्यां अभिहितस्य पुरोडाशस्य द्रव्यदेवतासम्बन्धाक्षिप्तस्य वा यागस्यापुरुषार्थस्यैव तस्यां भाव्यत्वेनान्वयो वाच्यः । न हि अपुरुषार्थः भाव्यकाभावनाविधौ अन्वयमर्हति । चेतनप्रवर्त्तनात्मकस्य तस्य पुरुषार्थभाव्यकभावनान्वयापेक्षितत्वात् । अतः फलभावनाया एवात्र विध्यन्वयः इति व्याख्येयम् ।

अथ कथमस्य प्रत्ययस्य पञ्चमलकारत्वाश्रयणेऽपि विधायकत्वम् ! भावार्थाधिकरणोक्तरीत्या भवति धातुपरस्य आख्यातप्रत्ययस्य भावना अनभिधायकतया तत्समनियत विध्यनभिधायकत्वावश्यं भावात् इति चेत् - मैवं - भवति धातुसमभिव्याहरेण तस्य [2]भावनानभिधानशक्ति [3]प्रतिबन्धेऽपि विध्यभिधान शक्ति अप्रतिबन्धात् ।

विधिमन्त्राधिकरणोक्तानां आमन्त्रणादिहेतूनामेव तत्प्रतिवन्धकत्वात् । [4]अत्र श्रुतस्यापि यच्छब्दस्य क्रिया समानाधिकरणस्य क्रिया स्वरूपानुवादकत्वेऽपि कर्तव्यातानुवादकत्वेनाप्रतिबन्धकत्वात् । न चाडागमादि चिह्नाभावात्, वर्त्तमानापदेश-सरूपत्वाच्च न पञ्चमलकारत्वाध्यवसानमिति वाच्यम् । "अङ्गिरसो वा इति उत्तमाः सुवर्गं लोकमायन्" इति अर्थवादसमभिव्याहारात् तदध्यवसानसम्भवात् । अत एव

भाव्यत्वेनान्वयो वाच्यः । स च न । न ह्यपुमर्थाः भाव्यकाभावनाविधौ अन्वयमर्हति । चेतन-प्रवर्तनात्मकस्य विधेः पुमर्थभाव्यकभावनान्वयापेक्षितत्वादिति चेत्, उच्यते-आग्नेय...(क,च,छ,ज)

[1] भवनकर्तुः (ख, ग, घ)

[2] भावनाभिधायकत्वशक्ति (क, च, छ, ज), भावनाभिधानकत्वशक्ति (ख, ग, घ, ङ)

[3] प्रवर्तनाभिधविध्य- (क)

[4] न च यच्छब्दः प्रतिबन्धकः । अत्र- (क, च, छ, ज)

**वार्त्तिकोपन्यस्तेऽस्मिन् पक्षे भवति, परस्य आख्यातस्य प्रयोजकव्यापारानभिधायकतया विधिशक्तिप्रतिबन्ध इति न्यायसुधोक्तं अस्वारस्यं अलग्नकं वेदितव्यम् । तस्मादाग्नेयोदाहरणेऽपि न काचिदनुपपत्तिः ।। छ ।।**

[1]**जातेष्ट्यधिकरणे पितुः पुत्रस्य स्वार्थत्वात् पुत्रः पूतः स्यादितीछावदित्यादि ।** "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जातः" इति विधाय श्रुतं, "यस्मिन् जात एतामिष्टिं

---

[1] श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिर्हि उक्तमप्रमाणेष्वन्यतमस्याभावादिति, पंचमेऽध्याये आद्यपादे श्रुत्यादीनि षट्-क्रमप्रमाणानि निरूपितानि । तथा हि – श्रुतिलक्षणमानुपूर्वं तत्प्रमाणत्वादित्याद्यनये "हृदयस्याग्रेऽवद्यति । अथ जिह्वायां, अथ वक्षसः, वेदं कृत्वा वेदिं करोति, अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती"त्यादौ अथादिश्रुतिः हृदयावदानाद्यानन्तर्ये मानमित्युक्तम् । तथा अर्थाच्चेति द्वितीयनयेऽग्निहोत्रं जहोति, यवागूं पचतीत्यादावग्निहोत्रस्य यवागूसाध्यत्वेन यवागूपाकानन्तरमेवाग्निहोत्रकरणे सामर्थ्यशब्दितमर्थरूपं मानमुक्तम् । तथा क्रमेण वा नियम्येत क्रत्वैकत्वे तद्गुणत्वादिति चतुर्थनये "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती"त्यादौ पाठक्रम एवानुष्ठानक्रमे मानमुक्तम् । तथा "स्थानाच्चोत्पत्तिसंयोगादि"ति षष्ठनये ज्योतिष्टोमविकृतिभूते साद्यस्कनामके यागविशेषे सहपशूनालभत इति श्रुत्या सहानुष्ठेयस्याग्नीषोमीयसवनीयानुबन्ध्यरूपपशुत्रयस्य मध्ये पूर्वं सवनीयस्यानुष्ठाने आश्विनं गृहीत्वा सवनीयं पशुमुपाकरोतीत्युत्पत्तिवाक्यावगताश्विनग्रहणसामीप्यरूपं स्थानं प्रमाणमुक्तम् । तथा "मुख्यक्रमेण चाङ्गानां तदर्थत्वादि"ति सप्तमनये सारस्वतौ भवत इति विहिते पुमांस्त्रियेत्येकशेषेण सरस्वतीदेवताकसरस्वद्देवताकरूपकर्मद्वये निर्वापाद्यनुष्ठाने प्रधानक्रमापरपर्यायो मुख्यक्रमो मानमुक्तम् । तथा "प्रकृत्या तुल्यकालानां गुणानां तदुपक्रमादि"ति पंचमाधिकरणे "सप्तदशप्राजापत्यान्पशूनालभत" इति वाक्यविहिते सप्तदशपशुद्रव्यकसप्तदशयागाङ्गपश्वङ्गतया विहितेषु प्रोक्षणोपाकरणपर्यग्निकरणादि धर्मेषु सप्तदशपशुमध्ये प्रथममत्र पशौ प्रोक्षणम् । अनन्तरमत्रेति विशेषे मानाभावेन इच्छयैव क्वचित्पशावादौ प्रोक्षणे अनुष्ठिते प्रथमप्रवृत्तप्रोक्षणानुरोधेन तत्रैवोपाकरणाद्यनुष्ठाने नियामकः

निर्वपति पूत एव तेजस्व्यन्नादं इन्द्रियावी पशुमान् भवतीति" । अत्र किं पूतत्वादिकमिष्टिकर्तुः पितुः फलं, उत पुत्रस्येति विचारे, अन्यफले कर्मणि अन्यस्य प्रवर्तनासंभवात् पितुरेव प्रवर्त्यत्वेन [1]विध्यवरोधात् [2]आधानवाक्यगत आत्मनेपदादग्निसाध्यकर्मफलानां आधानकर्तृगामित्वनियमात् पितुरेव फलमिति पूर्वपक्षं प्रापय्य, "यस्मिन् जाते निर्वपति स पूतो भवती"ति स्पष्टं पुत्रगामितावगमात् पुत्रफलमपि पितुरभिलषितमेवेति विधेरात्मनेपदस्य चाविरोधात् पुत्रस्यैव फलमिति सिद्धान्तितं प्रयुक्तिलक्षणे, "फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वादि"ति तृतीयपादीय सप्तदशाधिकरणे ।। अत्र पुत्रस्य [3]पित्रर्थत्वात् [4]पूतत्वादिच्छा पितुः यथा सम्भवति, न तथा अहमर्थस्य चिन्मात्रमुक्तं स्यादितीच्छा सम्भवति । [5]तस्य तादर्थ्याभावादित्यर्थः ।। छ ।।

किं वा गृहदाहादेरिव शास्त्रादिति । "यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदि"त्यत्र क्षामवत्यां गृहदाहो निमित्तमधिकारिविशेषणं यथा शास्त्रादवगम्यते, तथा मुमुक्षावद्विवेकादिरपि अधिकारिविशेषणं किं वा शास्त्रादवगम्यत इत्यर्थः ।।

---

प्रोक्षणप्रवृत्तिक्रम इत्युक्तम् । तेषु नैकमपि प्रमाणं कर्मविचारानन्तरं ब्रह्मविचारोऽनुष्ठेय इत्यत्रास्तीत्यर्थः । (क, च, छ, ज)

[1] विधि वरोधात् (क, च, छ, ज)

[2] अग्नीनादधीतेत्याधान- (क, च, छ, ज)

[3] उपकारकत्वेन पित्रर्थत्वात् (क, ख, ग, घ, च, छ,ज))

[4] पुत्रत्वादिच्छा (ङ)

[5] तस्याहमर्थोपकारकत्वाभावेन (क, च, छ, ज)

**श्रुत्याद्यवगतशेषत्वस्यापि मन्त्रस्य वस्तुसामर्थ्यापरपर्यायलिङ्गेनानुष्ठेयप्रकाशनद्वारैव शेषत्ववत्, आरुण्यादेः एकहायन्यादिद्रव्यावच्छेदद्वारेणैव क्रयशेषत्ववच्च विवेकादेरपि वैराग्यादिद्वारैव विचारहेतुत्वस्य न्यायत्वादिति ।** काम्ययाज्यानुवाक्याकाण्डमिति समाख्याते मन्त्रकाण्डे समाम्नातानां "इन्द्राग्नी रोचना दिव" इत्यादि मन्त्राणां किं लिङ्गेन सर्वत्र विनियोगः किं वा क्रमसमाख्याभ्यां काम्येष्टिकाण्डमिति आख्यातेष्टिकाण्डे क्रमेणाम्नातास्विष्टिषु इति संशये, श्रुतिवल्लिङ्गस्यापि प्रमाणान्तरानपेक्षस्यैव विनियोजकत्वात्, क्रमसमाख्याभ्यां प्रबलत्वाच्च तद्बाधेन [1]सर्वत्र विनियोग इति पूर्वपक्षं प्रापय्य, मन्त्रप्रकाश्यानां इन्द्रादीनां कर्मणोऽन्यत्रापि प्रतीतेः तत्स्वरूपमात्रप्रकाशनेन मन्त्राणां प्रयोजनानवाप्तेः तदवाप्तये कर्मसम्बन्धापादकं प्रमाणान्तरमपेक्ष्य, द्वारविशेषलिङ्गस्य विनियोजकत्वमिति क्रमसमाख्यानुसारेण [2]काम्येष्वेव विनियोगः इति सिद्धान्तितं शेषलक्षणे "लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानं" इति द्वितीयपादीय सप्तमाधिकरणे ।।छ।।

तथा ज्योतिष्टोमे श्रुतं - "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती"ति । तत्र किमारुण्यं वाक्यभङ्गाश्रयणेन सर्वेषु द्रव्येषु निविशते किं वा क्रमेण सम्बन्ध्यैकहायन्यां निविशते इति संशये, तृतीयया करणत्वावगमादमूर्तस्य गुणस्य क्रियानिवर्तनाशक्तेः क्रयसम्बन्धासम्भवात् वाक्यभेदेन प्राकरणिकसर्वद्रव्यविनिवेश इति पूर्वपक्षं प्रापय्य, गुणस्य साक्षात् क्रिया निवर्तकत्वासम्भवेऽपि [3]साधनीभूतद्रव्यपरिच्छेदद्वारा तत्सम्भवात् न वाक्यभेदो न्यायः इति एकहायन्यामेव निवेश इति सिद्धान्तितं शेषलक्षणे, अर्थैकत्वे द्रव्यगुणयोरे[4]कहायन्यां नियमः स्यादिति आद्यपादीय

---

[1] अर्थवशेन सर्वत्र - (क, च, छ, ज)

[2] काम्येष्टिष्वेव (क, ख, ग, घ, ङ, च, छ, ज)

[3] क्रयसाधनीभूतसमभिव्याहृतगोद्रव्य ( क, च, छ, ज)

[4] एकमर्थ्यात् (क, ख, ग, घ, ङ, च, छ, ज)

षष्ठाधिकरणे । अत्र लैङ्गिकविनियोगस्य सामान्यसम्बन्धघटकप्रमाणान्तरसापेक्षतया श्रुतिप्रकरणादिना सिद्धे तस्मिन् लिङ्गेनानुष्ठेयविशेषप्रकाशनद्वारा यथा मन्त्राणां कर्मशेषत्वं, यथा वा आरुण्यादेः क्रयसाधनीभूतैकहायनीद्रव्यावच्छेदद्वारेण तच्छेषत्वं, तथा विवेकादेरपि वैराग्यादिद्वारैव विचारान्वयो न्याय्य इत्यर्थः ।। छ ।।

**स्रुवेणावद्यतीत्यादौ द्रवद्रव्यमितिवत् यत इत्यादि भाष्योक्ताध्याहारेण शब्दतः प्रकृतत्वसम्भवात्** इति । "स्रुवेणावद्यति स्वधिति नावद्यति हस्तेनावद्यति", तत्र किं स्रुवादीनां द्रवद्रव्येष्वाज्यादिषु संहतेषु पुरोडादिषु मांसादिषु चाविशेषेण विनियोगः, किं वा यथासामर्थ्यमिति विशये विशेषाश्रवणादनियमे प्राप्ते अशक्यार्थविध्ययोगादवश्यं विधायकस्य शक्तिः सहकारिणीत्यभ्युपगन्तव्यम् । तस्माच्छक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति इति द्रवद्रव्यादिषु स्रुवादीनां [1]विनियोग इति सिद्धान्तितं प्रमाणलक्षणे "अर्थाद्वा कल्पनैकदेशत्वादि"ति चतुर्थपादीयान्तिमाधिकरणे ।।

अत्र यथा सामर्थ्यानुसारेण विनियोगे सिद्धे स्रुवेण द्रवद्रव्यमवद्यतीत्यध्याहारेण वाक्यं पूर्यते तथेत्यर्थः ।। छ ।।

**[2]तदेवं स्वर्गादिसाधने ज्योतिष्टोमादौ यथा तत्कामः त्रैवर्णिकोऽधिकारि तथा विचारस्य सत्यपि विषये फले च मुमुक्षुः त्रैवर्णिकोऽधिकारीति ।**

---

[1] हस्तस्थ पुरोडाशे स्वधितेर्मांस इति विनि- (क, च, छ, ज)

[2] तथेहापि यमेवेत्यादिश्रुत्योक्तशङ्का निरासहेतोरन्यस्याभावान्मोक्षहेतुप्रसादजनकज्ञानकारणत्वस्योक्तशङ्का निरसनसमर्थतया स एव भाष्योक्ताध्याहारेण पूर्यत इत्यर्थ । **"अथैष ज्योति"रित्यादौ वक्ष्यमाणेप्येतच्छब्दार्थदर्शनादिति** । "अथैषज्योतिरथैषविश्वज्योतिरथैषसर्वज्योतिरेतेन सहस्रं दक्षिणेन यजेते"त्युदाहृत्य किं प्रकृतज्योतिष्टोम एव ज्योतिरादिशब्दैरुच्यते । अथ कर्मान्तरमिति संदिह्येत तच्छब्दस्य प्रकृतगामित्वात् ज्योतिष्टोमः तैश्शब्दैरुच्यत इति प्राप्ते एतच्छब्दस्य वक्ष्यमाणपरतयाप्युपपत्त्या संज्ञाभेदात्कर्मान्तराण्येवं नामकानीति सिद्धान्तितं भेदलक्षणे द्वितीयपादे "संज्ञाचोत्पत्ति संयोगादि"त्यष्टमेऽधिकरणे ।

ज्योतिष्ठोमादिषु किं चतुर्णामपि वर्णानामधिकारः, उत अपशूद्राणामधिकार इति विशये, विशेषाश्रवणात्, अध्ययनांगभूतोपनयनवाक्येषु त्रैवर्णिकश्रवणेन चतुर्थस्य स्वतो [1]लब्धविद्यत्वाभावेऽपि साधारणक्रतुविध्याक्षेपेण विद्यार्जनसम्भवात् चतुर्णामधिकार इति पूर्वपक्षं प्रापय्य, स्वतोलब्धविद्यां त्रैवर्णिकानधिकृत्य चरितार्थैः क्रतुविधिभिः चतुर्थस्य विद्यानापेक्षादध्ययननियमवशात् उपायान्तरलब्धायाः विद्यायाः कर्मानङ्गत्वाच्च अपशूद्राणां त्रयाणामेव वर्णानामधिकारः इति सिद्धान्तितमधिकारलक्षणे, "चातुर्वर्ण्यमविशेषादि"ति आद्यपादीय सप्तमाधिकरणे ।। स्पष्टो दृष्टान्तदार्ष्टान्तिकभावः ।।

**राजसूयादौ राजत्वादिव शान्त्यादिरपि तद्विशेषणमितीति ।** "राजा स्वाराज्यकामो राजसूयेन यजेत ब्राह्मणो बृहस्पतिसवेन यजेत वैश्यो वैश्यस्तोमेन यजेत" इत्यादिना यथा राजसूयादौ राजत्वादिकमधिकारिविशेषणं तथा शान्त्यादिकमपीत्यर्थः ।। छ ।।

**वेदे चापरिमितं देयमित्याधानप्रकरणगतस्यापरिमितशब्दस्य परिमितान्य-रूप[2]मुख्यार्थनियतानेकत्वगुणयोगादेव बहुत्ववृत्ति[3]प्रयोगसम्भवात् रूढिः न स्यात् । उक्ता च रूढिः पष्ठ इति ।** आधाने श्रुतं "एका देया द्वे देये षट् देयाः शतं देयं सहस्रं देयं अपरिमितं देय"मिति । तत्रापरिमितं देयमिति किं पूर्वोक्तैकादिपरिमाणप्रतिषेधः उत [4]संख्यान्तरविधिरिति संशये अपरिमितशब्दस्यावयवप्रसिध्या परिमाणशून्यवचनत्वात्

---

अत्र यथा एषज्योतिरित्येतच्छब्दो वक्ष्यमाण सहस्रदक्षिणाकयागपरामर्शकः तथायमप्यतः शब्दार्थः । तदेवं स्वर्गादि- (क, च, छ, ज)

[1] लब्धविद्यात्वाभावेऽपि (ख, ग, घ, ङ)

[2] मुख्यार्थनिष्ठ- (ख, ग, घ, च, छ, ज)

[3] प्रयोगासम्भवात् (क, ङ, च, छ, ज)

[4] अयमपि संख्या- (क, ख, ग, घ, ङ, च, छ, ज)

तस्य च दानासंभवात् [1]प्रकृतपरिमाणमनूद्य तस्य प्रतिषेधः क्रियत इति पूर्वपक्षं प्रापय्य, अवयवप्रसिद्धेः बलीयस्याः समुदायप्रसिध्या तस्य स्वार्थवाचकत्वात् सुज्ञातपरिमाणेष्वपि बहुत्वमात्रेणापरिमितशब्दप्रयोगदर्शनेन तस्याः लब्धात्मकत्वादयमपि [2]संख्यान्तर-विधिरिति सिद्धान्तितं, अधिकारलक्षणे, "अपरिमाणे विशिष्टस्य संख्या प्रतिषेधः तच्छ्रुतित्वादि"ति सप्तमपादीय दशमाधिकरणे ।।

अत्रानेकत्वगुणयोगनिमित्तगौणत्वमनादृत्य रूढ्याश्रयणं दृष्टम् । तन्नस्यादित्यर्थः । योगापेक्षया प्रबलया अपि लक्षणायाः यदपेक्षया संभवस्थले दौर्बल्यं किमु वक्तव्यं लक्षितलक्षणापर्यवसायिन्या गौण्याः ततो दुर्बलत्वमिति भावः ।। छ ।।

**न चैवं वैश्वदेवेन यजेतेत्यादौ वैश्वदेवीमामिक्षामिति वाक्यविहितयागे यौगिकस्य वैश्वदेवशब्दस्य वैश्वदेवावैश्वदेवसमुदाये लक्षणा न स्यात् । किन्तु रूढिरेव स्यादिति वाच्यमिति** । चातुर्मास्येषु श्रुतं, "आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपाल"मिति, तत्सन्निधाविदमाम्नायते "वैश्वदेवेन यजेते"ति । तत्र किं यजेतेति अनूदितानां [3]प्राकृतानां यागानां वैश्वदेवशब्दो देवतारूपगुणविधिः किं वा तेषामेव नामधेयमिति संशये, नामधेयत्वे तस्याविधेयत्वात् विधेयान्तरासम्भवाच वाक्यमिदं अनर्थकं स्यात्। अतो देवताविधिः । "आनर्थक्यप्रतिहतानां विपरीतं बलबल"मित्युत्पत्तिशिष्टाभिः अग्न्यादिभिः विश्वदेवा विकल्प्यन्त इति पूर्वपक्षं प्रापय्य, नामधेयत्वेऽपि "प्राचीनप्रवणे वैश्वदेवेन यजेते"त्यादिषु आमिक्षायागस्य वैश्वदेवत्वेन तत्संबन्धात् प्राणभृन्न्यायेन "यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वं" इति

[1] प्रकृतैकादिपरि- (क, च, छ, ज)

[2] सन्निहितसहस्राधिकसंख्या- (क, च, छ, ज)

[3] प्रकृतानां (क, ङ, च, छ, ज)

आर्थवादिकेन योगेन वा आग्नेयादियागसमुदायस्य तेन ग्रहणसिद्धेः नानर्थक्यम् । इतरथा ह्यामिक्षायागस्यैव प्रत्यभिज्ञानात् प्राचीनप्रवणसंबन्धः स्यात् । वरं चानर्थक्यात् लक्षणाश्रयणम् । न च सापि, योगसंभवात् । न च देवताविशिष्टयागविधानं शक्यम् । गौरवात् । अष्टौ हवींषीत्यत्यन्तानन्यगतैकलिङ्गविरोधाच्च । तस्मात् नामधेयमिति सिद्धान्तितं प्रमाणलक्षणे, "वैश्वदेवे विकल्प इति चेदि"ति चतुर्थपादीय दशमाधिकरणे ।।

अत्रैकत्र यौगिकस्यान्यत्र लाक्षणिकत्वं दृष्टं, तन्नस्यादिति शंकार्थः । यद्यपि वैश्वदेवशब्दस्य यद्विश्वेदेवाः समयजन्तेति वाक्यशेषानुसारात् यष्टृत्वयोगेन यौगिकत्वमपि सिद्धान्ते दर्शितम् । तथापि देवताधिकरणविरुद्धार्थवादलब्धयोगापेक्षया आमिक्षायागविधिमुखलब्धलक्षणैव ज्यायसीति सैव सिद्धान्तिनोऽभिमतेत्यभिप्रायेणेयमुक्तिः ।।

**न हि स्वर्गकामपदेनेच्छाविषयतया प्रतीत स्वर्गो विधीयत इति ।** ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ स्वर्गस्य विधेयत्वं उत नेति चिन्तायां भावनाविशेषणत्वाविशेषात् [1]कारणात् विधेयत्वमिति पूर्वपक्षे, विधेयत्वस्य [2]प्रवृत्तिसिद्धत्वात् फले रागादेव प्रवृत्तिसिद्धेः [3]विधेयत्वाफलत्वाभावात् [4]क्रमसंयोगस्य विधेयत्वप्रतिबन्धकत्वाच्च न विधेयत्वं फलस्येति सिद्धान्तितं प्रयुक्तिलक्षणे वीप्सासूत्रे द्वितीयवर्णके । अत्र यथा इच्छाविषयतया प्राधान्येन प्रतीयमानः स्वर्गः न विधेयः, तथा ज्ञानमपीत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां जिज्ञासाधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

[1] करणात् (क,ख, ग, घ, च, छ, ज)

[2] प्रवृत्तिसिध्यर्थत्वात् (क, ख, ग, घ, च, छ, ज)

[3] विधेयत्वेऽङ्गत्वापत्या फल- (क, ख, ग, घ, च, छ, ज)

[4] कामसंयोगस्य (क, ख, ग, घ, ङ, च, छ, ज)

## ।। ओं जन्माद्यस्य यतः ओं ।।

**रूढेश्च अवयवार्थनिरपेक्षायाः तत्सापेक्षात् योगात् बलीयस्त्वस्य रथकारादिशब्दे स्थितत्वादिति** । "वर्षासु रथकारोऽग्नीन् आदधीत" इत्यत्र किं ब्राह्मणादीनामेव रथकरणे निमित्ते वर्षाकालविधानं, उत रथकारसंज्ञकस्यावान्तरवर्णस्य आधानान्तरविधानमिति संशये, त्रैवर्णिकानां वैदुष्यस्य स्वतो लाभात् कालमात्रविधाने च लाघवात् तेषामेव कालविधिः, नाविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधिरिति पूर्वपक्षं प्रापय्य, अवयवार्थपर्यालोचनसापेक्षायाः तत्प्रसिद्धेः, तन्निरपेक्षायाः समुदायप्रसिद्धेरेव बलीयस्त्वात्, वचनबलादविदुषोऽपि विध्याक्षेपेणाधिकारविधानात्, ऋभूणां चेति मन्त्रवर्णाच्च सौदन्वना अपरपर्यायस्यावान्तरवर्णस्येदं आधानान्तरं विधीयत इति सिद्धान्तितमधिकारलक्षणे, "वचनात् रथकारस्य आधानमि"ति अद्यपादीयोपान्त्याधिकरणे । अत्र रूढिबलीयस्त्वस्य व्युत्पादितत्त्वात् [1]ब्रह्मण्यपि सैव [2]ऊह्येत्यर्थः ।। छ ।।

**प्रोक्षणीशब्दे तु क्लृप्तो योगः अक्लृप्ता रूढिरिति** । प्रोक्षणीरसादयेत्यादिषु प्रोक्षणीशब्दः संस्कारनिमित्तकः किं वा [3]जातिनिमित्तकः । आहोस्वित् यौगिक इति संशये, [4]शास्त्रस्य प्रयोगात् संस्कारनिमित्तत्वं प्राप्तमपोद्य [5]बर्हिरादिवदसंस्कृतेऽपि क्वचित्प्रयोगाद[6]व्यभिचारात् जातिनिमित्तता प्राप्ता । न च यौगिकत्वं युक्तम् । [7]समुदायप्रसिद्धेः बलीयस्त्वादिति पूर्वपक्षं प्रापय्य, लब्धात्मिकायाः एव रूढेः योगात्

---

[1] ब्रह्मशब्देऽपि (क, च, छ, ज)

[2] ग्राह्येत्यर्थः (क, ख, ग, घ, ङ, च, छ, ज)

[3] अस्वजाति- (क, ख, ग, च)

[4] संस्कृतासु अप्सु शास्त्रस्थानां प्रयोगात् (क, ख, ग, घ च, छ, ज)

[5] बर्हिराज्यादि शब्दवदसंस्कृतास्वपि क्वचि- (क, ख, ग, घ, च, छ, ज)

[6] जात्यव्यभिचारात् (क, च, छ, ज)

[7] संशयप्रतीतेः (क)

बलीयस्त्वात्, [1]अश्वकर्णादेः अवयवार्थः समुदाय एव तस्यात्मलाभात् । [2]अवयवार्थत्त्वे तु तन्मात्रेणैव उपपत्तौ अदृष्टसमुदायकल्पना अयोगात् । प्रकृते च अप्सु प्रकृष्टोक्षणहेतुत्वरूपावयवार्थसमवायेन रूढ्यनुन्मेषात् यौगिकः प्रोक्षणीशब्दः इति सिद्धान्तितं प्रमाणलक्षणे, "प्रोक्षणीष्वर्थसंयोगात्" इति चतुर्थपादीयाष्टमाधिकरणे ।।छ।।

अत्र प्रकृष्टोक्षणहेतुत्वरूपावयवार्थानुस्यूते योगः क्लृप्तः, रूढेस्तु अलब्धात्मकत्वात् कल्प्येत्यर्थः ।। छ ।।

**अस्यानुवादकत्वेऽपि "शास्त्रस्था वा तन्निमित्तत्वा"दिति न्यायेन भाष्योक्तश्रुतिप्राप्तकारणपरत्वादिति** । "यवमयश्चरुः वाराहउपानहावि"त्यत्र यववाराह-शब्दौ किं दीर्घशूकसूकरपरौ किं वा प्रियङ्गुकृष्णशकुनिपराविति संशये, उभयत्र प्रयोगदर्शनात् उभयपरौ, तुल्यबलत्वाच्च विकल्प इति पूर्वपक्षं प्रापय्य, एकत्र मुख्यत्वे अन्यत्र गौणत्वेनापि उपपत्तौ न उभयत्र शक्तिकल्पना युक्ता । न च विनिगमना विरहः। "यत्र अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ती"ति [3]वाक्यशेषदर्शनात्, "वाराहं गावो अनुधावन्ती"ति वाराहविधिवाक्यशेषदर्शनाच्च, तदनुगुणविशिष्टव्यवहारस्य दीर्घशूकसूकरविषयस्य [4]तदनुगुणप्रियङ्गुकृष्णशकुनिविषयम्लेच्छव्यवहारापेक्षया बलीयस्त्वेन शक्तिनियामकत्वात् । तस्मात् [5]तुल्यबलत्वात् यववाराहशब्दौ दीर्घशूकसूकरपराविति न विकल्प इति सिद्धान्तितं, प्रमाणलक्षणे, तृतीयपादे "तेष्वदर्शनात् विरोधस्य समा विप्रतिपत्तिः स्यादि"ति पञ्चमाधिकरणे । अत्र अधिकरणे

---

[1] अश्वकर्णादिशब्देषु वृक्षादावयवार्थासंभवैव समुदाये तस्यात्मलाभात्। (क,ख,ग,घ,च,छ,ज)

[2] अवयवार्थस्य सिद्धत्वे तु (क, ख, ग, घ, च, छ, ज)

[3] यवमयकरम्भपात्रवाक्य- (क, ङ), यवमयवाक्य (ख, ग, घ), यवमयचरुवाक्य- (च, छ, ज)

[4] तदननुगुण (क, घ, च, छ, ज)

[5] तुल्यबलत्वाभावात् (क, ख, ग, घ, च, छ, ज)

सिद्धान्तसूत्रं "शास्त्रस्था वा तन्निमित्तत्वादि"ति[1] । "विप्रतिपत्तिः स्यादि"ति अनुवर्तते । अत्र दृष्ट एव व्यवहारो ग्राह्यः तन्मूलत्वात् श्रौतव्यवहाराणामिति सूत्रार्थः ।।

अत्र यथा यवादिशब्दानां वाक्यशेषानुगुणार्थपरत्वं, तथा [2]यत इत्यादिभाष्योक्तश्रुतिप्राप्तकारणपरत्वमेव न्याय्यम् । न प्रत्यक्षादिमानान्तरप्राप्त अस्मदादिरूपकारणपरत्वमित्यर्थः ।। छ ।।

**विद्वद्रूढेश्च यवादिशब्दानां प्रियङ्ग्वादिषु म्लेच्छप्रसिद्धितोऽपि दीर्घशूकेषु आर्यप्रसिद्धेरिवेत्यादि** । इदं च अधिकरणं प्रागनुक्रान्तं । आर्यम्लेच्छप्रसिद्ध्योरिव विद्वदविद्वत्प्रसिद्ध्योरपि बलाबलं द्रष्टव्यमित्यर्थः ।।

पिकादिशब्दानां च आर्यप्रसिध्यविरोध एव म्लेच्छप्रसिद्धितः कोकिलाद्यर्थत्वमुक्तं पिकनेमाधिकरणे इति । आर्यप्रसिद्धिविधुराणां पिकनेमादिशब्दानां किं निरुक्तादिवशेनार्थकल्पनं किं वा म्लेच्छप्रसिध्यनुरोधेन कोकिलाद्यर्थकत्वमिति संशये, म्लेच्छेषु पदानामर्थानां च प्रायशो विप्लुतिदर्शनात् न तत्प्रसिद्धिः प्रामाण्यार्हा । न हि तेषां दृष्टार्थमात्रव्यवहारिणां पदार्थविप्लुतौ यत्नः । अतो निरुक्तादि द्वारेणार्थकल्पनं पिकादिशब्दानामिति पूर्वपक्षं प्रापय्य, श्रुतौ प्रयोगात् एतानि पदानि अविप्लुतानि । न च तेषां आर्येषु अर्थः कश्चिदस्ति, यत्र मुख्यानि भूत्वा म्लेच्छेषु गौणानि विप्लुतिं गच्छेयुः । तस्मात् म्लेच्छप्रसिद्ध एवार्थो अमीषां ग्राह्य इति कोकिलाद्यर्थाः पिकादिशब्दाः इति सिद्धान्तितं प्रमाणलक्षणे, "चोदितं तु प्रतीयेताविरोधात् प्रमाणेने"ति तृतीयपादीय षष्ठाधिकरणे । न ह्यत्र पिकादिशब्देषु म्लेच्छप्रसिद्धेः स्वरूपेणादरणीयता, येन तथा प्रकृते परस्य स्यात् । किन्तु आर्यप्रसिध्यविरोधेन । न चासौ अत्रास्ति [3]इत्यर्थः ।। छ ।।

---

[1] शास्त्रस्थाः शास्त्रीयाः एव व्यवहाराः ग्राह्याः । तन्मूलत्वात् - (क, ख, ग, घ, च, छ, ज)

[2] य इत्यादि (क, ख, ग, घ, च, छ, ज), तत इत्यादि (ङ)

[3] विद्वद्रूढिर्नामकार्यप्रसिद्धेः जागरूकत्वादित्यर्थः । (क, ख, ग, घ, च, छ, ज)

**राजशब्दस्य पालनादिकर्तरि आर्याणां प्रयोगेऽपि आर्यवरपाणिनि-स्मृत्यनुगृहीतत्वात् क्षत्रिय[1]जातिविशेषे म्लेच्छप्रसिद्धिरेव ग्राह्येत्युक्तं अवेष्टिनय इति ।**
"आग्नेयमष्टाकपालं निर्वपति, हिरण्यं दक्षिणे"त्यादिना राजसूये विहितां [2]अवेष्टिं प्रकृत्य श्रूयते", "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये [3]निधायाहुतिं हुत्वा तमभिघारयेत् । यदि राजन्यं ऐन्द्रं, यदि वैश्यो वैश्वदेवं" इति । तत्र किं इमानि वचनानि ब्राह्मणादीनां [4]अवेष्टौ प्राप्तानां मध्ये निधानविशेषं प्रति निमित्तार्थानि श्रवणानि, किं वा अप्राप्तानां प्रापकाणीति संशये, "राजा राजसूयेन यजेते"ति श्रुतस्य [5]राजशब्दस्य आर्यवर्तप्रसिध्या जनपदरक्षणरूपराज्य[6]कर्तृत्वनिमित्तत्वावगमेन वर्णत्रयसाधारणत्वादवेष्टौ प्राप्तानामेव ब्राह्मणादीनां निमित्तार्थानि [7]श्रवणानि । [8]*न च क्षत्रियत्वनिमित्तो राजशब्द इति युक्तम्। युक्तम्। तत्प्रसिद्धेः अनार्यप्रमितमात्रनिष्टत्वात् । न च आर्यावर्तप्रसिद्धेन राजशब्दे स्वातन्त्र्यापादक यग्विधायकस्मृत्या बाधः शङ्कनीयः। शब्दार्थावधारणस्य लोकव्यवहाराधीनतया तद्विरोधे तन्मूलायाः स्मृतेः अप्रमाण्यात् ।** यदि शब्दोऽपि अस्मिन्नेव पक्षे स्वारस्यं लभते इति पूर्वपक्षं प्रापय्य, राजानमभिषेचयेदित्यभिषेकविधौ

---

[1] -जातिविषया (क, ख, ग, घ, ङ, च, छ, ज)

[2] अवेष्टिनामिकामिष्टिं (क, ख, ग, घ, च, छ, ज)

[3] आहुतिमाहुतिं (क, घ, च, छ, ज)

[4] अवेष्टिनामकेष्टौ (क, ख, ग, घ, च, छ, ज)

[5] राजशब्दस्यानार्यप्रसिध्या क्षत्रियत्वनिमित्तत्वेन रूढत्वावगमेऽपि तत्प्रसिद्धेः अप्रामाण्यात् आर्यावर्तप्रसिध्या ततो बलीयस्याः जनपद- (क, ख, ग, घ, च, छ, ज)

[6] कर्तृत्वयोगे निमि- (क, च, छ, ज)

[7] वचनानीति । (क, ख, ग, घ, ङ, च, छ, ज)

[8] * .... ** omitted in (क, च, छ, ज)

प्रागेव राज्ययोगात् क्षत्रियमात्रे प्रयोगात् रूढ एव राजशब्दः। [1]न स्मृतेरप्रामाण्यं युक्तम्। क्षत्रियमात्रविषयद्रविडप्रयोगस्य मूलत्वसम्भवात् । [2]तथाचाभियुक्ततरपाणिनिप्रणीतया स्मृत्या सम्भवात् गौणभ्रान्त्यादिमूलस्यार्यावर्ताचारस्य वाधो न्यायः । [3]*तस्मात् राजयोगादेव राज्यशब्दः, स्वतन्त्रस्तु राजशब्दः क्षत्रियवचनः ।** [4]*यदि शब्दोऽपि निपातत्वात् यथाकथंचित् नीयमानो न दूष्यति।** अतो ब्राह्मणादीनामेवावेष्टौ प्राप्त्यभावात् तत्प्रापकाणि वचनानीति सिद्धान्तितं भेदलक्षणे "अवेष्टौ यज्ञसंयोगात् क्रतुप्राधानमुच्यत" इति तृतीयपादीय द्वितीयाधिकरणे । अत्र यथा क्षत्रियत्वविषयायाः अनार्यप्रसिद्धेः स्वरूपेणाग्राह्या एव पाणिनिस्मृत्यनुग्रहवशात् ग्राह्यत्वं, न तथा [5]विद्वद्रूढेः ग्राह्यता प्रयोजकमनुग्राहकं किञ्चित् पश्यामः इति भावः ।। छ ।।

**लक्षणात्वाविशेषेऽपि प्रोद्गातृणामित्यत्र बहिरङ्गषोडशर्त्विग्लक्षणातोऽन्तरङ्ग-प्रस्तोत्रादि चतुष्टयलक्षणायाः ज्यायस्त्ववदिति** । "प्रैतुः होतुश्चमस प्रब्रह्मणः प्रोद्गातृणां प्रयजमानस्य प्रैतु सदस्यानामि"ति मन्त्रमुदाहृत्य चिन्तितं प्रोद्गातृणामिति । तत्र श्रुतं उद्गातृचमसमुद्गातैको भक्षयेत् उत सर्वे, अथवा सुब्रह्मण्यादन्ये सामगायिनो, यद्वा तत्सहितो चत्वारः इति संशये, उद्गातैको भक्षयेत् प्रातिपदिकार्थविरोधिनो बहुत्वस्याविवक्षितत्वादिति प्रथमपक्षं उद्भाव्य, लक्षणया अर्थपरत्वसंभवे अविवक्षायोगात् प्रकरणगतसर्वपुरुषेषु अविशेषात् लक्षणामाश्रित्य सर्वेषां ऋत्विजां भक्षणमिति

---

[1] किञ्च पाणिनिरपि "तस्य कर्मणि पत्यन्तपुरोहितादिभ्यो यक्" इत्यधिकृत्य राजासे अ से असमासे राजशब्दो यकमुत्पादयति कर्मणीति राज्ञः कर्मराज्यमिति, राजशब्दाद्यगन्तराज्यशब्दोत्पत्तिवदनुराजशब्दस्य रूढिमेव मन्यते । अन्यथा राज्ययोगाद्राजा, राजयोगाच्च राज्यमित्यन्योन्याश्रयप्रसङ्गात् । न स्मृते- (क, ख, ग, घ, ङ, च, छ, ज)

[2] शब्दार्थावधारणस्य लोकव्यवहाराधीनतया अनार्यप्रसिद्धेरपि ग्राह्यत्वात्। तथाच- (क,च,छ,ज)

[3] * .... ** omitted in (क, च, छ, ज)

[4] * .... ** omitted in (ख, ग, घ)

[5] अविद्वद्रूढेः (क, घ, ङ, च, छ, ज)

द्वितीयपक्षं उपन्यस्य, श्रुत्यर्थसंभवे लक्षणायोगात् उद्गायन्तीत्यवयवप्रसिध्या गानकारिणामपसुब्रह्मण्यानां त्रयाणां छन्दोगानां भक्षणमिति तृतीयपक्षमभिधाय, समुदायप्रसिध्या उत्पूर्वस्य गायते वेदे द्वितीयसामभक्तिविषयत्वेनावयवप्रसिध्या-श्रयणायोगात्, बहुवचनानुपपत्या लक्षणायामेवाश्रयणीयायां उद्गातृवचनसम्बन्धावान्तर-सामान्यात् ससुब्रह्मण्यानां छन्दोगानां चतुर्णामपि भक्षणमिति चतुर्थपक्षं प्रापय्य, लक्षणायामपि एकस्तोत्रसंबन्धसदः सन्निधानभक्षणव्यापार-रूपानेकान्तरङ्गावान्तर-समान्यानुरोधेन स्तोत्रकारिषु त्रिष्वेव लक्षणायाः न्याय्यत्वादपसुब्रह्मण्यानामेव त्रयाणां [1]लक्षणेति सिद्धान्तितं शेषलक्षणे "उद्गातृचमसमेकस्य श्रुतिसंयोगादि"ति पञ्चमपादेऽष्टमाधिकरणे । यद्यपि आचार्यमतानुवर्तिभिः निरुक्तरीत्या [2]ससुब्रह्मण्य न्यायोऽपि न्याय्य इति प्रस्तोत्रादि चतुष्टयलक्षणा पक्षोऽपि दूषितः, तथापि गुरुमतानुसारेणेदं उदाहरणमित्यनुसन्धेयम् ।। छ ।।[3]

इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां जन्माधिकरणन्यायमालासंग्रहः समाप्तः।।

---

[1] भक्षणमिति (क, ख, ग, घ, ङ, च, छ, ज)

[2] अपसुब्रह्मण्य त्रयोपन्यासेति प्रस्तोतृ प्रोद्गातृ प्रतिहर्तृ सुब्रह्मण्यरूपचतुष्ट-(क,ख,ग,घ,च,छ,ज)

[3] नित्यकर्मणि यस्य पुंसो यावदङ्गोपसंहारे शक्तिस्तत्प्रयोगे तावदङ्गोपेततेव ब्रह्मण्यपि यस्य वस्तुनः सृष्टयाद्यष्टके यावत् संभवति तावद्धेतुतानुगतैवेति । यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यादौ किं सर्वोपसंहारशक्तानामेवाधिकार उत यस्तु यावन्त्यपुसंहर्तुं शक्नोति तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेतेति सन्देहे अग्निहोत्रेण भावयेदित्युक्ते कथं भावयेदिति कथंभावापेक्षया सर्वाङ्गानां समुच्चयेन ग्रहणात्सर्वाङ्गोपेतस्यैव प्रधानस्य समुच्चयेन नाङ्गहीनस्य तत्राधिकार इति प्राप्ते यावच्छब्दोपबद्धं हि जीवनं धातुसम्बन्धविहितेन णमुल् प्रत्ययेन सम्बन्धान्तराभावात् निमित्तत्वेन यागानुरक्तां भावनां प्रत्यवगम्यते निमित्तस्य चैतद्रूपं यत्तस्मिन् प्रति नैमित्तिकमवश्यं कार्यमित्यतः प्रधानानुरक्ताभावनास्ववाक्यश्रुतनिमित्त-वशप्राप्तावश्यकत्वानुरोधेन यथा संभवमङ्गानि गृह्णाति । तावतैव शास्त्रवशात्फलसिद्धिरिति यथाशक्तिप्रयोगेणैवाधिकार इति सिद्धान्तितमधिकारलक्षणे तृतीयपादे "सर्वशक्तौ प्रवृत्तिः

## ।। ओं शास्त्रयोनित्वात् ओं ।।

श्रुतौ शिवस्य आगमे विष्णोः कराणत्वनिषेधस्तु यथोदितहोमादिनिन्दा अनुदितहोमादिस्तुतिपरा । तथा विष्ण्वादेः कारणता विधिपर इति । शाखान्तरेषु किं अग्निहोत्रादिकर्म भिद्यते उत सर्वशाखास्वेकमेवेति संशये अविशेषे पुनः श्रुतिलक्षणादभ्यासात् दूरत्वलक्षणात् प्रकरणान्तराच्च भेदः । क्वचित् ऐन्द्राग्नमेकादश-कपालं निर्वपेदिति श्रुतं, क्वचित् द्वादशकपालमिति । तत्र गुणाद्भेदः, तथा नामादिभ्योऽपि शाखाभेदे कर्मभेद इति पूर्वपक्षं प्रापय्य, विधिपुनः श्रुत्या कर्माभिधेयमित्येतावत् सिध्यति । एवमसान्निध्यादावपि कर्मविधिः । नत्वेतावता कर्मभेदसिद्धिः । [1]विहितस्यापि पुरुषान्तरं प्रति विधिसंभवात् । एवं एकादशकपाल-द्वादशकपालयोः उत्पत्तिविशिष्टत्वात् न भेदकत्वम् । एवं नामादयोऽपि तत्र परिहरिणीया इति सिद्धान्तितं भेदलक्षणे "नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचन-प्रायश्चित्तान्यार्थदर्शनात् शाखान्तरे कर्मभेदः स्यात्" इत्यधिकरणे । अत्र यथा "प्रातः प्रातरनृतं ते वदन्ति पुरोदयात् जुह्वति येऽग्निहोत्रं, दिवाकीर्त्यमदिवा कीर्तयन्तः, सूर्यो ज्योतिः न तदा ज्योतिरेषा"मिति, "यथा अतिथये प्रद्रुतायान्नं हरेयुः तादृक् तद्यदुदिते जुहोति" इति पूर्वपक्षोपपादकत्वेन उपन्यस्ता उदितानुदितहोमनिन्दा । न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते । अपि तु निन्दितादितरत् प्रशंसितुमिति न्यायेन तत्तद्विधिविधेय स्तुतिपरेत्यभ्युपगम्यते, [2]तथा प्रकृतेऽपीत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां शास्त्रयोनित्वाधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

स्यात् तथा भूतोपदेशादि"त्याद्याधिकरणे । तथा च तत्र यथा यत्र यावच्छक्यं तत्र तावदङ्गोपेतता तथा अत्रापि सृष्ट्याद्यष्टके यत्र यावदुपेतता तत्र तावदेवकरोतीत्यर्थः ।। (क, ख, ग, घ, च, छ, ज)

[1] एकं प्रति विहितस्य (क, ख, ग, घ, च, छ, ज)

[2] तथेहापि दृष्टान्तदार्ष्टान्तिकभावो द्रष्टव्यः ।। (क, च, छ, ज)

## ।। ओं तत्तुसमन्वयात् ओं ।।

**अश्वप्रतिग्रहेष्टिः उपक्रमात् दातुरुपसंहारात् प्रतिगृहीतुरिति** । "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् स पर्यदीर्यत, स तं वारुणं चतुष्कपालमपश्यत् तन्निरवपत् ततो वै स वरुणपाशादमुच्यते" इति उपक्रमः । तत्र प्रजापतिर्वरुणायाश्वमनयदिति प्रजापतिः [1]कर्ता सङ्कीर्तितः । वरुणः प्रतिगृहीता । स स्वां देवतानामार्च्छदिति समानविभक्तिनि[2]विष्टः प्रजापतिः स्वां देवतां पूर्ववाक्ये संप्रदाननिवेशात् [3]वरुणं, तेन प्रजापतिरश्वं दत्वा वरुणग्रहं जलादेरव्याधिं प्राप्तवानित्यर्थः। स पर्यदीर्यतेत्यादौ सर्वत्र प्रजापतिरेव सर्वनामाभिधानता । सफला तेन परकृतिरूपार्थवादात् दातुरेवेष्टिः वर्णितेति अन्योऽपि तथैव कुर्यादिति दातुरेवेष्टिः प्रतीयते। यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालां निर्वपेदिति उपसंहारे स्पष्टं प्रतिगृहीतुरिष्टिः प्रतीयत इत्यर्थः । अधिकरणं त्वनुक्रमिष्यते ।। छ ।।

**अपच्छेदादौ परबलीयस्त्वस्यापि स्वीकारादिति** । ज्योतिष्टोमे "बहिष्पवमानं प्रसर्पतां, प्रतिहर्त्तापच्छिन्द्यात् सर्ववेतसं दद्यात् । [4]अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत, तत्र तद्दद्यात् यत्पूर्वस्मिन् दास्यं स्यादि"ति अपच्छेदद्वये प्रायश्चित्तद्वयमाम्नातम् । तत्रानुपूर्व्येण उद्गातृप्रतिहर्त्रोः अपच्छेदे किं पूर्वोत्पन्नं निमित्तं प्रायश्चित्तं कार्यं उत विकल्पः । उतोत्तरनिमित्तमिति संशये, पूर्वनिमित्तमसंजातविरोधिनिर्विघ्नमवगम्यते । परं तु तद्विरुद्धत्वादशक्यमवगन्तुम् । अतः पूर्वबलीयस्त्वम् । विकल्पो वा । द्वयोरपि प्रामाण्यादिति पूर्वपक्षं प्रापय्य, नात्र पूर्वेणोत्तरस्य ज्ञानस्योत्पत्तिः शक्यते निरोद्धुम् ।

---

[1] दाता (क, ख, ग, घ, च, ज)

[2] निर्दिष्टः (क, घ, च, ज)

[3] वरुणमार्च्छत् प्रजा- (क, ख, ग, घ, च, ज)

[4] यदि उद्गाता अपच्छिन्द्याददद- (क, ख, ग, घ, च, छ, ज, झ)

प्रत्यक्षेण वाक्येन तदवश्यमुत्पद्यत एव । तच्चोपजायमानं स्वविरुद्धं पूर्वज्ञानं बाधमानमेवोत्पद्यते । तेन उत्पन्नमपि पूर्वज्ञानं मिथ्या भवति । बाधितत्वात् । तस्मात् परप्राबल्यात् उत्तरनिमित्तमेव प्रायश्चित्तं कार्यमिति सिद्धान्तितमधिकारलक्षणे "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदे"ति पञ्चमपादीयाष्टादशाधिकरणे ।। छ ।।

आदिशब्देन "अङ्गगुणविरोधे च तादर्थ्यादि"त्यधिकरणं संगृह्यते । तद्यथा दीक्षणीयायाः सोमस्य च य इष्ट्यादि वचनेन [1]पूर्वकालत्वे प्राप्ते प्रत्येकदीक्षापक्षे द्वयोः कालासंभवात् कस्य कालोऽनुग्राह्य इति विचारे, [2]अनियमेन मुख्यत्वात् दीक्षणीयाधर्मानुग्रहेणैवेति पूर्वपक्षं प्रापय्य, [3]प्रधानकर्मत्वात् श्रुत्या कालानुग्रहः सर्वाण्यङ्गानि तदवैगुण्याय क्रियन्ते । न च तत्साद्गुण्यसंभवे परंपरामाश्रयन्ति । तस्मात् प्रधानकालानुग्रह इति सिद्धान्तितं प्रसङ्गलक्षणे "अङ्गगुणविरोधे च तादर्थ्यादि"ति द्वितीयपादीय नवमाधिकरणे ।।

**वेदोपक्रमाधिकरणेषु उपक्रमबलीयस्त्वस्याप्युक्तेरिति ।**

"प्रजापतिरकामयत प्रजा सृजेयेति, स तपोऽतप्यत तस्मात् तेपानात् त्रयो देवाः असृजन्त अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यः त्रयो वेदाः असृज्यन्त । अग्नेः ऋग्वेदो वायोः यजुर्वेदः आदित्यात् सामवेद" इत्युपक्रम्य ज्योतिष्टोमे श्रुतं "तस्मात् उच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ने"ति । अत्र किं उच्चैष्ट्वादयो मन्त्रधर्माः किं वा वेदधर्माः इति संशये, उपक्रमे वेदशब्दस्य उपसंहारे ऋगादिशब्दानां च श्रवणात् एकवाक्यत्वेनोभयोरेकविषयत्वे अवश्यं भाविनि मुख्योऽपि अर्थवादगतो

---

[1] पर्वकालत्वे (क, ख, ग, घ, ङ, च, छ)

[2] सनियमेन (क, ख, ग, घ, च, छ, ज)

[3] प्रधानधर्मत्वात् (क, ख, ग, घ, च, छ, ज)

वेदशब्दः, [1]तस्यानुवादकत्वात् उपसर्जनत्वाच्च लक्षणया ऋगादिमन्त्रपरो वाच्यः । जघन्यादिति विध्युद्देशगतो ऋगादिशब्दः, तस्य [2]अप्राप्तविषयत्वात् प्राधान्याच्च न लक्षणां सहते । अतो मन्त्रधर्माः उच्चैष्ट्वादयः इति पूर्वपक्षं प्रापय्य, लब्धात्मन एव प्रधानस्योपसर्जनाद्बलीयस्त्वम् । न चेह विध्युद्देशो मन्त्रविषयत्वेन लब्धात्मा, येनार्थवादादपि बली स्यात् । न चास्याप्राप्तविषयतया प्राबल्यम् । उपक्रम एव वेदानां किञ्चित् विधास्यत इत्यवगमेन ऋगादिशब्दानामवगतिविषयत्वात् ।

किञ्च वेदशब्दः उपक्रमगतोऽसंजातप्रतिपक्षत्वात् यथाश्रुतार्थपर एवावधार्यते, उपसंहारगत ऋगादिपदं तु उपजातप्रतिपक्षविज्ञानत्वात् यथाश्रुतार्थं सत् तदेकवाक्यतामप्रतिपद्यमानं तदनुगुणवेदपरतयैवात्मानं लभते । तस्मात् उच्चैष्ट्वादयो वेदधर्माः इति सिद्धान्तितं शेषलक्षणे, "श्रुते जाताधिकारः स्यादि"ति तृतीयपादीयाद्याधिकरणे ।

अत्रादिपदेन "मुष्टिलोपात् संख्यालोपः तद्गुणत्वादि"त्यधिकरणम् । "मुख्यं वा पूर्वचोदनाल्लोकवदि"त्यधिकरणं च ग्राह्यम् । [3]तदुभयं यथा वाजपेये बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवतीति श्रुतम् । चोदकप्राप्तैः चरुभिः मुष्टिभिः सप्तदशशराव-परिमाण[4]चरुसंपादनादवश्यं संख्याद्रव्ययोः अन्यतरस्मिन् बाधितव्ये किमनियमः, किं वा संख्याबाधः, आहोस्वित् द्रव्यबाधः इति संशये, अविशेषादनियमः संख्यायाः द्रव्याङ्गत्वात् तत्प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः । संख्यायास्तु बाधः इति पूर्वपक्षं प्रापय्य, न संख्यायाः मुष्ट्यङ्गत्वं वाक्यलक्षणसामानाधिकरण्यलब्धद्रव्यसम्बन्धबाधेन द्वितीयया

---

[1] तस्याप्रधानत्वादनुवादत्वाच्च लक्ष- (क, च, छ, ज)

[2] विधेये अप्राप्त- (ख, ग, घ)

[3] तत्राद्यं (क, च, छ, ज)

[4] चरुसंपादनासंभवात् (क, ख, ग, घ, च, छ, ज)

श्रुत्या निर्वापसंबन्धावगमात् उभयोः क्रियाङ्गत्वं तुल्यम् । तत्र मुख्यत्वात् संख्यानुग्रहः जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्तितं बाधलक्षणे "मुष्टिलोपात्तु संख्यालोपः तद्गुणत्वात् स्यादि"ति द्वितीयपादीयाष्टाविंशत्यधिकरणे ।

[1]तथा अध्वरकल्पायां श्रुतं आग्नावैष्णवमेकादशकपालं निर्वपेत्, अपराह्णे सारस्वतीमाज्यभागस्य यजेतेति । तत्राग्नावैष्णवस्यौषधद्रव्यत्वात् द्विदैवत्यत्वाच्च द्वादशकपालैन्द्राग्नविकारत्वात् [2]द्वादशधर्मापेक्षा । आज्यस्य तु उपांशुयाजविकारत्वात् पौर्णमासधर्मापेक्षा । तत्राज्यभागमन्त्रयोः विरोधे अन्यतरबाधे अवश्यं भाविनि कस्यानुग्रहः कस्य बाधः इति चिन्तायामनियमे प्राप्ते मुख्यस्य स्वाधर्म्यं युक्तम् । तस्य धर्मो असंजातविरोधावस्थायां निर्विघ्नमवगम्यते । जघन्यस्य कुतः तद्विरुद्धत्वात् न धर्मः संगृहीतुं शक्यते । न चात्रावगतस्य त्यागेनानवगतसंग्रहे च किञ्चित् कारणं भूयस्त्वं प्रधानधर्मत्वं वास्ति । तस्मात् वृधन्वतावाज्यभागाविति सिद्धान्तितं प्रसङ्गलक्षणे "मुख्यं वा पूर्वचोदनाल्लोकवदि"ति द्वितीयपादीयाष्टमाधिकरणे ।। छ ।।

**अन्यथा समिधो यजतीत्यादौ अभ्यासात् कर्मभेदो नस्यादिति ।**

"समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति" इत्यादौ पञ्चकृत्वोऽभ्यस्तं यजति पदं किं धात्वर्थावच्छिन्नां एकां भावनां प्रतिपादयति, उत प्रत्यभ्यासं भावनाभेद इति संशये प्रकृतिप्रत्यययोः पुनः पुनः श्रवणात्, तत्सन्निधिप्रत्यभिज्ञावशाच्छब्दाभेदे अर्थभेदस्य निष्प्रमाणकत्वात् स एव यागःसैव भावना । तत्र च "समिधो यजती"ति नामावच्छिन्नकर्मविधिः । तनूनपादादयस्तु तदनुवादेन देवतारूपगुणविधयः । न चागृह्यमाणविशेषत्वम् ।

---

[1] द्वितीयं यथा (क, च, छ, ज)

[2] दर्शधर्मा- (क, च, छ), दार्शिकधर्मा- (ख, ग, घ)

**प्राथम्यनियामकत्वात्** । तस्मादेकेव भावनेति पूर्वपक्षं प्रापय्य, अप्रवृत्तप्रवर्तनात्मक विधिविरोधापत्त्या कर्मान्तरत्वं युक्तम् । न च सन्निधिकृतप्रत्यभिज्ञाबाधाय गुणविधानार्था विधिः पुनः श्रुतिरिति युक्तम् । [1]फलपदलक्षणया प्रत्ययलक्षणया वा श्रुत्या हि धात्वर्थयोरेव विधेयत्वं गम्यते । न तत्सन्निधिमात्रेण बाधितुं शक्यम् । यदि तनूनपादादि दध्यादिवदविधीयमानमनर्थकं स्यात्, ततः तस्यावश्यं विधेयत्वाद-नेकार्थविध्यशक्त्या कर्माऽनुवादाकाङ्क्षायां सन्निधिकृतमभेदज्ञानं विधिरनुमन्यते। यदा तु मन्त्रवर्णप्राप्तत्वात् तनूनपादादिदेवतानां तत्प्रख्यन्यायेन नामधेयत्वसंभवात् नानर्थक्यं, तदा श्रुत्यवगतं कर्मविधानं न बाधितव्यम् । तस्मात् यागभावनयोः भेद इति सिद्धान्तितं भेदलक्षणे, "एकस्यैव पुनः श्रुतिरविशेषादनर्थकं हि स्यादि"ति द्वितीयपादीय द्वितीयाधिकरणे । अत्रासकृदुक्तेः वैय्यर्थ्यं मा भूदिति कर्मभेदः स्वीकृतः, स न स्यादित्यर्थः ।। छ ।।

**अत एव तेन ह्यन्नं क्रियत इति हेतुवत् निगदार्थवादस्य हेतुसमर्पकत्वे अप्रामाण्यप्रसङ्गात् त्याग इति** । "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" इत्यत्र किं शूर्पेण होमे कर्तव्ये अन्नकरणत्वं हेतुः, उत अर्थवाद इति संशये हिशब्दस्य श्रुत्या हेतुपरत्वात् न लक्षणया प्राशस्त्यपरत्वं युक्तम् । [2]हेतुनिर्देशश्च [3]स्वानुपपत्तिं कल्पितेन येनान्नं क्रियते तेन तेन होतव्यमिति व्याप्तिवचनेन शूर्पादन्यैः दर्वीपीठरादिभिः विकल्पेन होमसिध्या [4]न

---

[1] पदलक्षणया (क, ख, ग, घ, ङ, च, छ, ज)

[2] हेतुनिवेशश्च (क, ख, ग, घ, च, ज)

[3] सङ्घानुपपत्तिं (ख, ग)

[4] नाप्रयोजकः (क, च), नाप्रयोगो व्यर्थः (ख, ग, घ)

प्रयोजकः । [1]अनर्थप्रायश्चार्थवादः । तस्मात् [2]अन्नकरणता हेतुरिति पूर्वपक्षं प्रापय्य, तृतीया श्रुतिलब्ध[3]करणस्य शूर्पस्या[4]नुमानिकैः दर्वीपिठरादिभिः विकल्पायोगात्, वेदेनोच्यमानस्य शूर्पहोमसाधनत्वस्य हेत्वपेक्षत्वे वेदस्याप्रामाण्यप्रसङ्गात्, प्ररोचनार्थमर्थवादस्यापेक्षितत्वात्, तेन हीत्यादेः अर्थवादत्वमिति सिद्धान्तितं प्रमाणलक्षणे, "हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्यामि"ति द्वितीयपादीय तृतीयाधिकरणे । अत्र हेतुसापेक्षत्वस्याप्रामाण्यापादकत्ववर्णनात् उपपत्तिसापेक्षत्वमप्रामाण्यापादकमेवेत्यर्थः ।। छ ।।

**पक्षे बाधस्य षोडशिग्रहणाग्रहणयोरिव न्यायप्राप्तत्वादिति** । अतिरात्रनामके ज्योतिष्टोमसंस्थाविशेषे "अतिरात्रे षोडशिनं गृह्णतीति विधाय श्रूयते नातिरात्रे षोडशिनं गृह्णाती"ति । अत्र किं [5]पर्युदासो अर्थवादो वेति पूर्वपक्षं कृत्वा अन्यवाक्यशेषाभावात् तदुभयासंभवात् प्रतिषेध एवायं अगत्या ग्रहणाग्रहणयोः विकल्पः । [6]प्रतिषेधसत्वाच्चाकरणेऽपि क्रतुसिद्धिरस्तीति कल्प्यते । विध्यर्थवत्वाय चानुष्ठाने

---

[1] अनर्थकश्च प्रायश्चित्तार्थवादः (क), अनर्थकस्तुत्य प्रायश्चित्तार्थवादः (ख, ग, घ), अनर्थकश्चार्थवादः (च, ज)

[2] अन्नकारणता (क, ङ, च)

[3] करणत्वस्य (क, ख, ग, घ, छ,च, ज)

[4] आनुमानिककरणत्वैः (क, च, ज), आनुमानिके करणत्वैः (ख, ग, घ)

[5] "नातिरात्रे षोडशिनं गृह्णाती"ति वाक्ये नञ् पर्युदासो अर्थवादो वा प्रतिषेधो वेति संशये "यजतिषु ये यजामहे करोति नानुयाजे"ष्वित्यत्रानुयाजिभिन्नेष्वितिवत् नञ् पर्युदासः, "तौ पशौ करोति न सोमेऽध्वर" इत्यत्र सोमेन यथा नाज्यभागौ तथा पशावपीति, न सोम इतिवदर्थवादो वेति पूर्वपक्षं प्रापय्य अतिरात्रभिन्ने इति पर्युदासे प्रागुक्तविधेर्निर्विषयत्वापत्तेः । षोडशिनिषेधेन षोडशिनः स्तुतौ व्याघातेनार्थवादत्वायोगादन्यशेषत्वाभावाच्च तदुभय- (क,च,ज)

[6] प्रतिषेधार्थवत्वायाकरणेऽपि (क, घ, च, ज)

फलभूयस्त्वमित्युभयोपपत्तिरिति सिद्धान्तितं बाधलक्षणे "शिष्टा तु प्रतिषेधः स्यादि"ति अष्टमपादीय तृतीयाधिकरणे । अत्र यथा [1]न्यायप्राप्तत्वात् पक्षे बाधः संग्राह्यः तथा[2] प्रकृतेऽपीत्यर्थः ।

**तदुक्तं वार्त्तिके**

अन्य एवैकदेशेन [3]**शब्दस्यार्थः प्रतीयते ।**
**अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ ।**
**पौर्वापर्यपरामृष्टः शब्दोऽन्यां कुरुते मतिम् ।** इति ।

अयमर्थः । महावाक्यैकदेशभूतेनाङ्गवाक्येन प्रधानवाक्येन च तत्तत्कर्तव्यतारूपः शास्त्रार्थैकदेशः प्रतीयते । प्रधाने सर्वाङ्गोपसंहारे कर्तव्ये अङ्गवाक्यैः वाक्यैकवाक्यतामुपगतेन परिपूर्णेन प्रधानवाक्येन [4]साङ्गप्रधानकर्मकर्तव्यतारूपः अन्यः परिपूर्णः शास्त्रार्थः प्रतीयते इति पूर्वापरपर्यालोचनवशात् प्रथमोत्पन्नप्रतीतेः अन्यां प्रतीतिं शब्दः करोतीति । अत्र यथा तदभियुक्तोऽर्थः उक्तः तथा निगमन्यायादिसमस्तवेदाङ्गोपसंहारे सति परिपूर्णोऽर्थः प्रतीयतेत्यपि तस्यार्थः । प्रतीयतेत्युक्तार्थे सम्मतिरिति ध्येयम् ।। छ ।।

**उपक्रमादीनि शेषत्वादौ श्रुतिलिङ्गादीनीव तात्पर्ये प्रत्येकं प्रमाणानीति ।** शेषित्वादौ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां यथा परस्पर नैरपेक्ष्येण प्रामाण्यं,

---

[1] विहितप्रतिषिद्धत्वरूपन्याय (क, च, ज)

[2] विष्णुतदितरयोः कारणत्वबोधकशास्त्रद्वयप्रामाण्यरूपन्यायप्राप्तत्वात् पक्षे बाधः सह्यः । (क, च, ज)

[3] स्वस्यार्थः (घ), शास्त्रस्यार्थः (ङ)

[4] साङ्गप्रधानकर्तव्यतारूपः (क, ख, ग, घ, च, ज), साध्यप्रधानकर्तव्यतारूपः (ङ)

तथोपक्रमादीनामपि प्रत्येकं तात्पर्ये प्रामाण्यमित्यर्थः । यद्यपि लिङ्गस्य श्रुत्यादि अन्यतमप्रमाणसापेक्षत्वेनैव प्रामाण्यमुक्तं काम्येष्टि अधिकरणे, तथापि यत्र [1]एकान्तिकत्वकारणत्वं तत्र भवत्येव लिङ्गादपि तादर्थ्यम् । यथा अर्थज्ञानस्य [2]अनुष्ठानोपाधिकत्वं, यथा वा आत्मज्ञानस्य सांपरायिकफलकर्मोपयिकत्वमित्यभि-प्रायेणेयमुक्तिरिति ध्येयम् ।

"अरुणया क्रीणाती"त्यादौ तृतीया श्रुत्या आरुण्यादेः क्रयादिशेषत्वम् । "व्रीहीन् प्रोक्षती"त्यादौ द्वितीया श्रुत्या व्रीह्यादीनां प्रोक्षणादिशेषत्वम् । "बर्हिर्देवसदनं दामी"त्यादौ लिङ्गेन मन्त्रस्य बर्हिर्लवन [3]शेषित्वम् । "स्वर्गकामो यजेते"त्यादौ वाक्येन यागस्य स्वर्गशेषत्वम् । "समिधो यजती"त्यादौ प्रकरणेन समिदादीनां दर्शपूर्णमासादि-शेषत्वम् । "[4]दब्धिर्नामासी"त्यादौ स्थानेन मन्त्रस्य उपांशुशेषत्वम् । "आध्वर्यवं हौत्रमौद्गात्रमि"त्यादौ समाख्यया आध्वर्यवादीनां तत्काण्डे विहितकर्मशेषत्वमिति उदाहरणानि ।

निरपेक्षो रवः श्रुतिः । वस्तुसामर्थ्यं लिङ्गम् । पदान्तरसमभिव्याहारो वाक्यम् । अङ्गप्रधानयोः परस्पर आकाङ्क्षा प्रकरणम् । सादेश्यं स्थानम् । यौगिकी संज्ञा समाख्या इति लक्षणानि ।

अरुणाधिकरणे श्रुतिविनियोगः । मन्त्राधिकरणे श्रुवाधिकरणे च लिङ्गविनियोगः। वेदोपक्रमाधिकरणे च वाक्यविनियोगः । [5]प्रकरणाधिकरणे च प्रकरण-

---

[1] ऐकान्तिकं कारणत्वं (क, ख, ग, घ, च, ज)

[2] अनुष्ठानौपयिकत्वं (क, घ, च, ज)

[3] शेषत्वम् (क, ख, ग, घ, च, ज)

[4] दब्धिरसि (क, ख, ग, घ, च)

[5] तत्रैव पादे असंयुक्तं प्रकरणादिति चतुर्थे प्रकरणाधिकरणे (क, ख, ग, घ, च, ज)

विनियोगः । एतानि प्रागनुक्रमान्तानि । स्थानसमाख्ययोः अनुक्रमिष्यते । तत्र स्थानविनियोगः । "दब्धिर्नामासि" इति मन्त्रः किं उपांशुयागाङ्गं उत नेति संशये, श्रुत्यादि अभावादनंगत्वे प्राप्ते मन्त्राणां कर्मणां च क्रमेण समाम्नातानां एकस्मिन्नवगते अन्यस्योपस्थानात् एवमाम्नानां नूनं परस्परसंबन्धार्थमिति अध्यवसीयते । तस्मात् आम्नानसादेश्यरूपात् स्थानात् उपांशुयागाङ्गमिति सिद्धान्तितं शेषलक्षणे "क्रमश्च देशसामान्यादि"ति तृतीयपादीय पञ्चमाधिकरणे ।

तथा समाख्याविनियोगस्तु दर्शपूर्णमासादिषु समाम्नाताः पदार्थाः किमाध्वर्यवादिभिरेव कर्तव्या उत अनियमो वेति संशये नियामकाभावादनियमे प्राप्ते अपौरुषेयाध्वर्यवादिसमाख्या पदार्थानां कर्तॄणां च परस्परसंबन्धावगमात् तया नियमः इति सिद्धान्तितं शेषलक्षणे, "आख्यात्वेवं तदर्थत्वादि"ति तृतीयपादीय षष्ठाधिकरणे ।।छ।।

**"समिधो यजति इडो यजती"त्यादौ असकृदुक्ते भिन्नप्रकारत्वेनेत्यादि** । यद्यप्यत्र [1]समिदाद्युपदेशो निष्प्रकारमभ्यस्तम् । यजति पदमेवाभ्यासोदाहरणम् । तत्र न कश्चित् प्रकारभेद उपलभ्यते । तथापि अज्ञातज्ञापकत्वरूप विधिस्वारस्यमेवात्र प्रकार इति अभिप्रायः ।। छ ।।

**अत एवावघातादेः वैतुष्यसाधनतायाः वेदानुपजीविमानान्तरग्राह्यत्वेन "व्रीहिनवहन्ती"त्यादेरपूर्वविधित्वासंभवान्नियमविधित्वमाश्रितमिति** । "व्रीहीन् अवहन्ती"ति किमयं विधिरुतानुवाद इति संशये पुरोडाशप्रकृतित्वेन व्रीहिविधानात् वैतुष्यार्थमर्थाक्षिप्त अवहननानुवाद इति पूर्वपक्षं प्रापय्य, वैतुष्ये नखविदलनादि साधनान्तरस्यापि सम्भवात् न नियमेनावहननाक्षेपः । अतोऽप्राप्तांशपूरणेन नियमार्थो विधिरिति सिद्धान्तितं प्रयुक्तिलक्षणे "संस्कारे च तत्प्रधानत्वादि"ति द्वितीयपादीय एकादशाधिकरणे । अत्र अपूर्वविधित्वासम्भवेन नियमविधित्वमाश्रितमित्यर्थः ।।छ।।

---

[1] समिदाद्युपपदं निष्प्र– (क, ख, ग, घ, च, ज)

अत एव च "इमामगृभ्णन् रशना मृतस्ये"त्यश्वाभिधानीमादत्त इत्युदाहृत्य अगृभ्णन् रशनामिति, रशनाग्रहणप्रकाशनसामर्थ्येन लिङ्गेनाश्वरशनाग्रहणे मन्त्रस्य नियतप्राप्तिसत्वेनापूर्वनियमाविध्योः असंभवात् लिङ्गविशेषात् गर्दभरशनाग्रहणेऽपि प्राप्तिप्रसक्तौ तन्निवर्तनरूपपरिसंख्याविधित्वं निर्णीतं प्रमाणलक्षणे "परिसंख्येति" मन्त्राधिकरणे गुणसूत्रे समाश्रितमित्यर्थः ।

ननु प्रमाणान्तरगृहीतार्थमेवापूर्वविधित्वप्रतिवन्धकम् । न च प्रकृते तदस्ति। झडितिप्रवृत्तया प्रत्यक्षश्रुत्या अश्वरशनायां मन्त्रे विनियुक्ते श्रुतिकल्पना द्वारा विनियोजकस्य लिङ्गस्य तत्रानुन्मेष्यादित्याशंक्योक्तं **मन्थरगामिनेत्यादि** । प्रमाणान्तरग्रहणयोग्यार्थतामात्रमपूर्वविधित्वप्रतिबन्धकम् । न तु तद्गृहीतत्वम् । विध्यप्रवृत्तिदशायां तद्विषयस्य प्रमाणान्तरग्राह्यत्वसंभावना भावस्य तल्लक्षणे [1]निवेशितत्वादिति भावः।।

"य एवं विद्वानि"त्यादि **अनुवादस्य स्वानुपजीवीना पुरोवादरूपेणाग्नेयादि-वाक्येन गृहीतार्थत्वादपूर्वत्वाभाव इति** । विद्वद्वाक्यद्वयस्य आग्नेयादि त्रिकत्रिकानुवादकत्वं प्रागनुक्रान्ते पौर्णमास्याधिकरणे द्रष्टव्यम्।।छ।।

**दध्ना जुहोतीत्यादेश्च गुणविधेः स्वानुपजीविना अग्निहोत्रं जुहोतीत्यादिना ग्राह्यार्थत्वान्न होमांशेऽपूर्वता । किन्तु तदग्राह्य दध्यादाविति** । "दध्ना जुहोति ऊर्ध्वमाघारयती"त्यादिकं गुणविशिष्टकर्मविधिः किं वा गुणमात्रविधिरिति संशये, "अग्निहोत्रं जुहोति, आघारमाघारयती"त्यत्र द्रव्यदेवतादिरूपापरिज्ञानेन विशेषानव-धारणात् कर्मविधानासंभवादिति दध्यादिवाक्यैः तदनुवादेन गुणविधानासंभवात्, अव्यापाररूपस्य गुणस्य विधातुं अशक्यत्वाच्च गुणविशिष्टकर्मविधिरिति पूर्वपक्षं प्रापय्य, "दध्ना जुहोती"त्यादौ अप्राप्तदध्याक्षिप्तशक्तिविधायकानेक विधिनिमित्तगौरवपरि-

---

[1] निवेशादिति (क, ख, ग, घ, ङ, च, ज)

जिहीर्षया कर्मानुवादं प्रार्थयमानो यदि न कथञ्चिदपि प्राप्तिं लभते, ततो विशिष्टविधिमङ्गीकरोति । सत्यां त्वग्निहोत्रादिवाक्येन कर्मणः प्राप्तौ तदनुवादेन गुणमात्र-विधाने लाघवात् न विशिष्टविधानमङ्गीकरोति । ततश्च अग्निहोत्रवाक्यस्यानाक्षिप्त-शक्तित्वात् कर्मविधिः । न च रूपालाभात् तदसंभवः । [1]दध्यादिवाक्यैः तत्संभवात् । न च गुणस्याव्यापाररूपत्वादविधेयत्वं, व्यापारविशिष्टत्वेन तदुपपत्तेः । प्राप्ताप्राप्तविवेकेन गुणविधिव्यपदेशसंभवात् । तस्मात् दध्यादिवाक्येषु गुणविधिरिति सिद्धान्तितं भेदलक्षणे "आघारान्नाग्निहोत्र रूपत्वादि"ति द्वितीयपादीय पञ्चमाधिकरणे, स्पष्टो वाक्यार्थः ।।छ।।

एवं देवतासहितकर्मविधायकस्य ब्राह्मणवाक्यस्य स्वविहिते कर्मणि देवतार्पकं समानशाखास्थं शाखान्तरस्थं वा मन्त्रं प्रत्युपजीव्यत्वात् देवतांशेप्यपूर्वता, मन्त्रस्य तु तदंशे नापूर्वता । किन्तु ब्राह्मणं प्राप्त देवता गुणादाविति । "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती"त्यत्र किमाग्नेयशब्दो गुणविधिः किं वा कर्मनामधेयमिति संशये, अनेकगुणविधाने वाक्यभेदादष्टाकपालद्रव्यकं कर्ममात्रं विधीयते । तस्य च क्रमादग्निदैवत्यं याज्यानुवाक्यायुगलमङ्गं भवतीति मान्त्र-वर्णिकदेवता प्राप्तेः तत्प्रख्यन्यायेन नामधेयमिति पूर्वपक्षं प्रापय्य, अष्टाकपालो भवतीति पुरुषव्यापारानुपादानात् न कर्मानुष्ठानाय मन्त्राकाङ्क्षा । कथञ्चित् सत्यामपि तस्य पुरोडाशमात्रविषयस्य व्यापारस्य देवतावाचिमन्त्रसंबन्धा[2]योग्यत्वादसंबन्धः । तथा च द्रव्यदेवतासंबन्धेन यागे लब्धे पश्चात् मन्त्रसंबन्धः इत्याग्नेयशब्देनैव देवता विधातव्या। विशिष्टकर्मविधानाच्च अर्थापत्त्या अनेकेषामपि गुणानां विधिः सिध्यतीति न वाक्यभेदः ।

---

[1] दध्यादिवाक्योक्तद्रव्यस्याग्निर्ज्योतिर्ज्योतिरिति मान्त्रवर्णिक्या देवतायाश्च संभवात् । (क, च, ज)

[2] अयोगात् न देवता संबन्धः । (च. ज)

तस्मात् गुणविधिरिति सिद्धान्तितं प्रमाणलक्षणे, "तद्गुणास्तु विधीयेरन् न विभागात् विधानार्थेन चेदन्येन शिष्टास्युरि"ति चतुर्थपादीय षष्ठाधिकरणे ।

उक्तन्यायेन [1]देवताक्षिप्तकर्मविधायकस्य यदाग्नेयोऽष्टाकपाल इत्यादेः ब्राह्मणवाक्यस्य स्वविहिते कर्मणि आग्नेययागेऽपेक्षित [2]अग्निदेवताप्रतिपादकं तैत्तिरीयशाखायां दर्शपूर्णमासिकयाज्यानुवाक्यायुगलमनाम्नानात् शाखान्तरस्थं "अग्निर्मूर्धादिवः ककुदि"त्यादिकं [3]अङ्गमन्त्रं प्रति प्रधानीभूतयागसमर्पकतया उपजीव्यत्वात्, आग्नेय इति देवतांशोऽपि मानान्तराग्राह्यार्थत्वादपूर्वता । अग्निर्मूर्धेत्यादिस्तु मन्त्रस्याग्निरित्यंशे ब्राह्मणप्राप्तत्वात् नापूर्वता । किन्तु ब्राह्मणाप्राप्ते मूर्धत्वे द्युककुत्पतित्वादिरूपदेवतागुणादौ इत्यर्थः । ऐन्द्राग्नादि काम्येष्ट्यंगभूतेषु उभावामिन्द्रग्नी इत्यादिषु समानशाखाप्राप्तेषु मन्त्रेष्वप्येवमुन्नेयम् ।।

**भिन्नशाखास्थयोश्चेत्यादिना अत्र स्वीकारादित्यन्तेन** । "भूयस्त्वेनोभय श्रुति"रिति तार्तीयाधिकरणन्यायेनोपन्यासः । तद्यथा यजुर्वेदे सामवेदे च समाम्नाते ज्योतिष्टोमे किं वेदनिबन्धनस्वरो ग्राह्य इति विचारे नियामकाभावादनियमे प्राप्ते, यजुर्वेदे द्रव्यदेवतयोः श्रवणात् परिच्छिन्नकर्मस्वरूपावगति संभवात्, इतिकर्तव्यताभूयस्त्व-दर्शनाच्च तत्रैव विधिरध्यवसीयते । वेदान्तरे तु स्तोत्रादि विधानार्थं [4]समययुक्तं क्रियामात्रं श्रूयत इति विध्यवगति समास्यसंभवात् तत्रानुवादः । अतो "[5]यजुर्वेदनासौ

---

[1] देवता सहित- (क, ख, ग, घ, ङ, च, ज)

[2] अग्निदेवताप्रतिपादकस्य (क, ख, ग, घ, च, ज)

[3] आकाङ्क्षा प्राप्तं अङ्ग- (क, च, ज)

[4] नामयुक्तं (क, च, ज)

[5] यजुर्वेदेनासौ (क, ख, ग, ङ, च, ज)

जिहीर्षया कर्मानुवादं प्रार्थयमानो यदि न कथञ्चिदपि प्राप्तिं लभते, ततो विशिष्टविधिमङ्गीकरोति । सत्यां त्वग्निहोत्रादिवाक्येन कर्मणः प्राप्तौ तदनुवादेन गुणमात्र-विधाने लाघवात् न विशिष्टविधानमङ्गीकरोति । ततश्च अग्निहोत्रवाक्यस्यानाक्षिप्त-शक्तित्वात् कर्मविधिः । न च रूपालाभात् तदसंभवः । [1]दध्यादिवाक्यैः तत्संभवात् । न च गुणस्याव्यापाररूपत्वादविधेयत्वं, व्यापारविशिष्टत्वेन तदुपपत्तेः । प्राप्ताप्राप्तविवेकेन गुणविधिव्यपदेशसंभवात् । तस्मात् दध्यादिवाक्येषु गुणविधिरिति सिद्धान्तितं भेदलक्षणे "आघारान्नाग्निहोत्र रूपत्वादि"ति द्वितीयपादीय पञ्चमाधिकरणे, स्पष्टो वाक्यार्थः ।।छ।।

**एवं देवतासहितकर्मविधायकस्य ब्राह्मणवाक्यस्य स्वविहिते कर्मणि देवतार्पकं समानशाखास्थं शाखान्तरस्थं वा मन्त्रं प्रत्युपजीव्यत्वात् देवतांशेप्यपूर्वता, मन्त्रस्य तु तदंशे नापूर्वता । किन्तु ब्राह्मणं प्राप्त देवता गुणादाविति ।** "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती"त्यत्र किमाग्नेयशब्दो गुणविधिः किं वा कर्मनामधेयमिति संशये, अनेकगुणविधाने वाक्यभेदादष्टाकपालद्रव्यकं कर्ममात्रं विधीयते । तस्य च क्रमादग्निदैवत्यं याज्यानुवाक्यायुगलमङ्गं भवतीति मान्त्र-वर्णिकदेवता प्राप्तेः तत्प्रख्यन्यायेन नामधेयमिति पूर्वपक्षं प्रापय्य, अष्टाकपालो भवतीति पुरुषव्यापारानुपादानात् न कर्मानुष्ठानाय मन्त्राकाङ्क्षा । कथञ्चित् सत्यामपि तस्य पुरोडाशमात्रविषयस्य व्यापारस्य देवतावाचिमन्त्रसंबन्धा[2]योग्यत्वादसंबन्धः । तथा च द्रव्यदेवतासंबन्धेन यागे लब्धे पश्चात् मन्त्रसंबन्धः इत्याग्नेयशब्देनैव देवता विधातव्या। विशिष्टकर्मविधानाच्च अर्थापत्त्या अनेकेषामपि गुणानां विधिः सिध्यतीति न वाक्यभेदः ।

[1] दध्यादिवाक्योक्तद्रव्यस्याग्निर्ज्योतिर्ज्योरिति मान्त्रवर्णिक्या देवतायाश्च संभवात् । (क, च, ज)

[2] अयोगात् न देवता संबन्धः । (च. ज)

तस्मात् गुणविधिरिति सिद्धान्तितं प्रमाणलक्षणे, "तद्गुणास्तु विधीयेरन् न विभागात् विधानार्थेन चेदन्येन शिष्टास्युरि"ति चतुर्थपादीय षष्ठाधिकरणे।

उक्तन्यायेन [1]देवताक्षिप्तकर्मविधायकस्य यदाग्नेयोऽष्टाकपाल इत्यादे· ब्राह्मणवाक्यस्य स्वविहिते कर्मणि आग्नेययागेऽपेक्षित [2]अग्निदेवताप्रतिपादकं तैत्तिरीयशाखायां दर्शपूर्णमासिकयाज्यानुवाक्यायुगलमनाम्नानात् शाखान्तरस्थं "अग्निर्मूर्धादिवः ककुदि"त्यादिकं [3]अङ्गमन्त्रं प्रति प्रधानीभूतयागसमर्पकतया उपजीव्यत्वात्, आग्नेय इति देवतांशोऽपि मानान्तराग्राह्यार्थत्वादपूर्वता । अग्निर्मूर्धेत्यादिस्तु मन्त्रस्याग्निरित्यंशे ब्राह्मणप्राप्तत्वात् नापूर्वता । किन्तु ब्राह्मणाप्राप्ते मूर्धत्वे द्युककुत्पतित्वादिरूपदेवतागुणादौ इत्यर्थः । ऐन्द्राग्नादि काम्येष्ट्यंगभूतेषु उभावामिन्द्रग्नी इत्यादिषु समानशाखाप्राप्तेषु मन्त्रेष्वप्येवमुन्नेयम्।।

**भिन्नशाखास्थयोश्चेत्यादिना अत्र स्वीकारादित्यन्तेन** । "भूयस्त्वेनोभय श्रुति"रिति तार्तीयाधिकरणन्यायेनोपन्यासः । तद्यथा यजुर्वेदे सामवेदे च समाम्नाते ज्योतिष्टोमे किं वेदनिबन्धनस्वरो ग्राह्य इति विचारे नियामकाभावादनियमे प्राप्ते, यजुर्वेदे द्रव्यदेवतयोः श्रवणात् परिच्छिन्नकर्मस्वरूपावगति संभवात्, इतिकर्तव्यताभूयस्त्व-दर्शनाच्च तत्रैव विधिरध्यवसीयते । वेदान्तरे तु स्तोत्रादि विधानार्थं [4]समययुक्तं क्रियामात्रं श्रूयत इति विध्यवगति समास्यसंभवात् तत्रानुवादः । अतो "[5]यजुर्वेदनासौ

[1] देवता सहित- (क, ख, ग, घ, ङ, च, ज)

[2] अग्निदेवताप्रतिपादकस्य (क, ख, ग, घ, च, ज)

[3] आकाङ्क्षा प्राप्तं अङ्ग- (क, च, ज)

[4] नामयुक्तं (क, च, ज)

[5] यजुर्वेदेनासौ (क, ख, ग, ङ, च, ज)

क्रियत" इति, ज्योतिष्टोमस्योपांशुस्वरत्वमिति सिद्धान्तितं शेषलक्षणे "तृतीयचरणे भूयस्त्वेन उभयश्रुतिरि"ति तृतीयाधिकरणे ।

यद्यपि इदमधिकरणं वेदद्वयसमाम्नातकर्मविधायकं विषयम् । तथापि न्यायसाम्यात् **भिन्नशाखास्थयोरित्युक्तम्** । अङ्गप्रधानवाक्यैकवाक्यतापत्तिलब्धमहा-वाक्याभिप्रायोऽयं कर्मविधायकवाक्यशब्दः वार्त्तिकाभिप्रायेण द्रव्यदेवताख्ययागरूपस्य कर्मविधिलिङ्गत्वेन उपन्यासः । भाष्याभिप्रायेण इतिकर्तव्यताभूयस्त्वस्येतिकर्तव्यता-विधायकस्य स्वोद्देश्य शेषिस्वरूपविधानसमर्पणाय कर्मविधायकोपजीवित्वात्, प्राप्तस्यैव उद्देश्यकत्वात् न कर्मांशे अपूर्वता, इतिकर्तव्यतांशे तु अतथाभूतत्वादपूर्वता ।

कर्मविधिलिङ्ग साम्ये तु कर्मेतिकर्तव्यतांशयोः उभयोरपि अपूर्वतायां न विवादः । किन्त्वसौ मीमांसकमते पुरुषभेदे तु व्यवस्थितैव तत्तच्छाखाध्यायिनां शाखान्तरस्य वाक्यद्वयस्यानुपस्थितत्वेनाबोधकत्वात् । स्वस्वशाखास्थेनैव वाक्येन बोधावश्यं भावात् । शाखान्तरस्थवाक्यानुपस्थितेश्च एकैकस्यां तैत्तिरीयादि शाखायां सर्वाध्वर्यवाद्युपदेशेन तदनाकाङ्क्षात् । काण्वादिशाखान्तराध्ययने नियमाभावात् । न च वेदान्तराध्ययनवत् तन्नियमः शंक्यः । स त्रिभिर्वेदैः विधीयत इति आपस्तम्बवचनात्तु त्रयीं विना सर्वाङ्गोपेत ज्योतिष्टोमादि [1]कर्मस्वरूपानवगमैः एकैकस्मिन् वेदे सर्वानुपदेशेन आकाङ्क्षावशात् त्रय्यध्ययनं नियतम् । इह तु न तथेति वैषम्यात् । स्वमते तु [2]तृतीयोक्तरीत्या [3]शक्त्यविषये [4]अव्यवस्थितविकल्पेन विधायकत्वमिति [1]अव्यवस्थितै वा

---

[1] अनवगते (क, ख, ग, घ, ङ, च, ज)

[2] "स्वाध्यायस्य तु तथात्वेन समाचारे अधिकाराच्च ओमि"ति तृतीयाध्याय तृतीयपादीयाद्याधिकरण गुणोक्तरीत्या (क, ख, ग, घ, च, ज)

[3] सर्वशाखाध्ययन शक्ति- (क, ख, ग, घ, च, ज)

[4] अनया वा तया वा कर्मकर्तव्यमित्यव्यव- (क, ख, ग, घ, च, ज)

अपूर्वता । यथा विधिलिङ्गसाम्यवति वेदद्वयस्य वाक्यद्वये, यथा वा समानशाखास्थेषु "एकहायन्या क्रीणाति, वाससा क्रीणाति हिरण्येन क्रीणाती"त्यादिषु सर्वत्र गुणश्रवणात् उत्पत्तिशिष्टप्राबल्येनानूद्य विधानायोगात् सर्वेषां उत्पादकत्वावश्यं भावेन विधान [2]विकल्पाश्रवणादव्यविस्थिता अपूर्वता । अशक्तान् प्रति तु विधानव्यवस्थया अपूर्वता [3]व्यवस्थेत्यर्थः ।

स्यादेतत्, कथं तावत् तैत्तिरीयशाखायां सर्वाध्वर्यव उपदेशोक्तिः, अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिषु तत्तदङ्गभूतानामग्न्युद्धरण नाराशंस संज्ञकद्वितीय-[4]प्रयाजकशेषस्थानादीनां भूयसां कर्मणां तत्तन्मन्त्राणां बोधायनापस्तम्बभारद्वाज-सत्याषाढवाधूलवैखानसैरुपनिबद्धानां तैत्तिरीयशाखायामनुपलंभात्, माद्यन्दिनादिषु उपलंभाच्च, एकस्यां शाखायां कृत्स्नाङ्गोपदेशस्वीकारे बोधायनादीनां गुणोपसंहारमात्रप्रयोजनकल्पसूत्रनिबन्धनारम्भवैय्यर्थ्यापाताच्च ।

कथं वा एकस्यां शाखायां कृत्स्नोपदेशस्य शाखान्तराध्ययन-नियममूलत्वोक्तिः । तस्याध्ययनविधौ स्वशब्दग्रहणमूलत्वात् । स्वाध्यायोऽध्येतव्य इत्यत्र हि स्वाध्यायस्याध्ययनसंस्कार्यत्वेन उद्देश्यतया स्वशब्दोक्तपितृपितामहादि परंपरागतत्वरूपविशेषणसहितत्वेऽपि अर्थज्ञानं प्रति उपादेयत्वात् तद्विशेषणविवक्षा तावदावश्यकी । तथा च अध्ययनेनैव स्वाध्यायं संस्कुर्यात् [5]इत्युपायनियमोऽपि

---

[1] अव्यवस्थितौ (क, ख, ग, घ, च, ज)

[2] विकल्पस्य आश्रयणीयत्वात् (क, ख, ग, घ, च, ज)

[3] अव्यवस्थितेत्यर्थः (क, ख, ग, घ, च, ज)

[4] प्रयाजसंस्कारोपस्थानादीनां (क, ख, ग, घ, च, ज)

[5] इत्युपायवदध्ययनेन स्वाध्यायमेव संस्कुर्यादित्युपाय-(क, ख, ग, घ, ङ, च, ज)

लभ्यते। तेन च शाखान्तराध्ययनस्वरूपमेतावत् व्यवच्छिद्यते, किमु वक्तव्यं तन्नियम व्यवच्छेदे।

कथं तदेककर्मप्राप्तशाखान्तरीयगुणोपसंहारः । उपायान्तरेणैवेति ब्रमः । तदेतत् सर्वशाखान्तराधिकरणे न्यायसुधायां निपुणतरं उपपादितमनुसंधेयम् ।

कथं वा त्रैय्यध्ययनस्य एकैकस्मिन् वेदे कृत्स्नानुपदेशमूलत्वोक्तिः। एकैकस्मिन्ननुपदेशेऽपि वेदान्तरस्थानामङ्गानां उपायान्तरेणापि अवगति संभवेन तदध्ययननियमानापेक्षात् । किन्तु वेदानधीयीतेत्यादिषु श्रुतिवशात् तन्नियमलाभः ।

कथं वात्र [1]यथावाक्यशेषविधानविकल्पोक्तेः । तेषां वाक्यानां भिन्नक्रमविधायकत्वात् । तत्र हि एकेन वाक्येन द्रव्यविशिष्टक्रये विहिते वाक्यान्तरश्रुतं द्रव्यान्तरम् । तत्र निवेशमलभमानं [2]वाजिनात् कर्म भिनत्ति । अत एव आरुण्यस्य स्ववाक्यविहिते क्रये साधनत्वनिर्वहाय तत्साधनीभूतायां एकहायन्यामेव निवेशः, न वाक्यान्तरविहितक्रयसाधनीभूते वासःप्रभृताविति अभ्युपगम्यते । क्रयैक्ये तत्रापि अन्वयो दुर्वारः स्यात् । तथा च न इतर [3]विधायकत्वावकाश इति ।

अत्रोच्यते - तैत्तिरीयशाखाग्रहणमत्रोपलक्षणार्थम् । यत्र शाखायां कृत्स्नोपदेशः तदभिप्रायः । सम्भवति चायं क्वचिदनन्तासु शाखास्वित्यदोषः । त्रय्यध्ययनं शाखान्तराध्ययननियमानियमयोः कृत्स्नानुपदेशतदुपदेशमूलत्वोक्तिरपि न विरुध्येते । तयोः नियमांशस्य विधिमूलत्वेऽपि स्वरूपांशस्य तन्मूलत्वोपपत्तेः । अनुगुणप्रमाणान्तरोपन्यासस्यादोषत्वाच्च । क्रयवाक्येषु यद्यपि आचार्यमते भिन्नक्रय-विधायकत्वं स्वीकृतम् । तथापि गुरुमते संस्कारकर्मणां भेदानभ्युपगमात् विधानविकल्प

---

[1] क्रयवाक्येषु विधानविकल्पोक्तिः (क, ख, ग, घ, ङ, च, ज)

[2] वाजिनवत् (क, ख, ग, घ, ङ, च, ज)

[3] विधाने एकत्वावकाशः (क, घ, ङ, च, ज)

एवाश्रयणीयः । तन्मताभिप्रायोऽयं ग्रन्थः इत्यविरोधः । यदत्र अर्वाचीनानां आचार्यमतानुवर्तिनां आधानदृष्टान्तादिभिः संस्कारकर्मणः [1]भेदाभेदसंभवोपपादनं तत् यथाकथञ्चित् नेयमित्यलं बहुना ।। छ ।।

**अत एव स्मृतीनां स्वानुपजीवीत्यादि।** मन्वादिस्मृतीनां प्रामाण्यमस्त्युत नेति संशये मूलासंभवादप्रामाण्यम् । न तावत् प्रत्यक्षादि मूलत्वम् । धर्माधमयोः तदप्रवृत्तेः । नापि उत्पन्नश्रुतिमूलत्वम् । तदुत्पादनकल्पनस्य निर्हेतुत्वात् । नापि नित्यानुमेय श्रुतिमूलत्वम् । अन्धपरंपरा दोषात् । नापि [2]प्रकीर्णश्रुतिमूलत्वम् । स्मृतिप्रणयनवैय्यर्थ्यापातात्। नापि स्वातन्त्र्येण प्रामाण्यम् । पौरुषेयत्वेन तदयोगादिति पूर्वपक्षं प्रापय्य, अग्निहोत्रादिभिः कर्तृसामान्यात् वैदिकपरिग्रहदाढ्यात् स्मर्तृणां त्रैवर्णिकत्वेन [3]श्रुतिमूलत्वसम्भवात् प्रामाण्यम् । न च मूलाभावः । विप्रकीर्णश्रुतिमूलत्वाभ्युपगमात् । न च स्मृतिप्रणयन वैय्यर्थ्यम् । शाखान्तराध्यायिनां [4]शाखान्तरार्थ अनुपलंभात् । उपलंभेऽपि वा मन्दधियां उपसंहाराशक्तेः । तदुपसंहारस्य प्रयोजनत्वात् । तस्मात् स्मृतीनां प्रामाण्यमिति सिद्धान्तितं प्रमाणलक्षणे, "धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यादि"त्यधिकरणे।

तत्रत्येन न्यायेन स्मृति प्रणयनस्य तत्तच्छाखाविक्षिप्तार्थोपसंहारप्रयोजनत्वादस्मदादीनां तादृशार्थोपसंहाराशक्त्या स्मृतिमुख[5]निरीक्षितत्वावश्यं भावादपूर्वतेत्यर्थः । सत्यं हि पूर्वं मनुष्या अजायन्ते । तस्मादविवध्यं प्रपन्नं न

---

[1] भेदसंभवोप- (क, ख, ग, घ, ङ, च, ज)

[2] विप्रकीर्णप्रत्यक्षश्रुतिमूलत्वम् (क, ख, ग, घ, ङ, च, ज)

[3] स्मृतीनां समूलत्व- (क, च, ज), स्मृतिमूलत्व (ख, ग, घ)

[4] शाखान्तरानुगुणार्थ (क, च, ज), शाखान्तराम्नातार्थ (ख, ग, घ)

[5] निरीक्षितृत्व- (घ, च, ज)

प्रतियच्छन्तीत्यादौ परप्रकरणगत[1]वाक्यशेषस्थसिद्धवत् निर्देशान्यथानुपपत्तिकल्पविधि-मूलत्वद्योतनार्थं [2]अदृष्टमित्युक्तम् । मन्वादिवदर्वाचीनानां केषाञ्चित् प्राचीनकर्मलब्ध-प्रतिभाशालिनां तत्तत् शाखागतार्थोपसंहारशक्तिसंभावनाभिप्रायेण उक्तमपुर्वत्वा-भावेऽपीत्यादिना प्रयोजनानुवादकतापि अपूर्वता तुल्येति भावः ।। छ ।।

[3]श्रुतौ निन्दायामित्यादि । एकानेककर्तृकोपाख्यानरूपत्वेन परकृति-पुराकल्पशब्दव्याख्यानं कपर्दिप्रदर्शितमनुसन्धेयं इति । "इति ह स्माह बट् कुर्वार्ष्णेयो माषानेव मह्यं पचती"ति परकृतेरुदाहरणम् . "उल्मुकैर्ह स्म पूर्वे समाजग्मुःताननुरक्षांसि निजघ्नुरि"ति पुराकल्पोदाहरणम् । एकधर्मोपाधित्वसंभवेन नानाशक्तिकल्पनमन्याय्यमिति [4]अस्वारस्य मन्त्रवदित्युक्तम् ।

यद्यपि भेदलक्षणे आद्यपादे "तच्चोदकेषु मन्त्राख्ये"ति अष्टमाधिकरणे सूत्रेणानुष्ठानोपयोग्यर्थस्मारकत्वं मन्त्रलक्षणमुक्तम् । तथापि तद्भाष्यवार्त्तिकयोः तस्याभियुक्तप्रसिध्युपलक्षणत्वमुपपादितमित्यविरोधः ।

अभियुक्तप्रदर्शितोपाधिस्वीकारसंभवेन स्वमनीषितं [5]होमाद्यन्तरान्वेषणं न्यायं इति अस्वारस्यात् विधिशेषत्वरूपैकोपाधिको वेत्युक्तम् । आपस्तम्बेन ह्येवमनुक्रान्तं विधिशेषोऽर्थवादी निन्दा प्रशंसा परकृतिः पुराकल्पश्चेति ।। छ ।।

---

[1] वाक्यशेषस्य (क, घ, च, ज)

[2] अस्पष्टं (क, घ, ख, ग, च, ज)

[3] स्तुतो (क, ख, ग, घ, ङ, च, छ, ज)

[4] अस्वरसात्, (क, च, ज), अस्वारः स्यात् (घ, ङ)

[5] उपाध्यन्तरान्वेषणमन्याय्यं (क, ख, ग, घ, च, ज)

**वेदे च वासः परिधत्ते यत्क्षौममित्यादौ दर्शनादित्यादि** । "अक्ताः शर्करा उपदधाति । तेजो वै घृत"मित्यत्र किं घृततैलादिना येन केनचिदञ्जनं किं वा घृतनैवेति संशये अप्राप्तविषयत्वात् उपक्रमस्थत्वात् प्राधान्याच्च विधेः बलीयस्त्वात् न लक्षणया अक्तशब्दस्य घृतपरत्वं युक्तम् । अर्थवादस्य तु उपसर्जनत्वात् उपसंहारस्थानात् प्राप्तविषयत्वाच्च दुर्बलत्वेन लक्षणा सहिष्णुत्वात् घृतशब्द एवाञ्जनसाधनद्रव्यमात्रपर इति येन केनचिदञ्जनं कर्तव्यमिति पूर्वपक्षं प्रापय्य, विधिबोधितस्य सामान्यस्य सर्वविशेषेषु कार्त्स्न्येन उपस्थानात् विरोधाभावात् सामान्येन व्यवहारायोगेन विशेषोपादनावश्यंभावात्, यस्मिन् कस्मिंश्चित् विशेषे उपादातव्ये सन्निहितपरित्यागे कारणाभावात्, घृतेनैवाञ्जनमिति सिद्धान्तितं प्रमाणलक्षणे "सन्दिग्धे तु वाक्यशेषादि"ति चतुर्थपादीयान्त्याधिकरणे ।

अत्रत्येन न्यायेन चरमश्रुतस्य क्षौमशब्दस्य प्रथमश्रुतवासः शब्दस्वारस्य विरोधिनोऽपि अवैय्यर्थ्याय तत् व्याख्यानरूपतया "वाससा दीक्षयति सौम्यं वै क्षौमं देवतये"त्यादाविव दर्शनादित्यर्थः । **निश्चितप्रामाण्यानुसारेणत्यादि** । "याते अग्ने अयाशया तनूर्वर्शिष्टा गह्वरेष्टोग्रं वचो अपावधीत्वेष वचो अपावधी स्वाहे"त्युपसन्मन्त्रे व्याख्येयमुग्रं वचस्त्वेषं वच इत्येतदुभयं "अशनायापिपासे ह वा उग्रं वचः एनश्च वैरहत्यं च त्वेष वच इति निश्चितप्रामाण्यव्याख्यानरूपब्राह्मणानुसारेणाशनायापिपासादिपरत्वेन यथा नीयते तथा प्रकृतेऽपीत्यर्थः ।।

**न च वेदोपक्रमाधिकरणविरोध** इत्यादि । वेदोपक्रमाधिकरणे उपक्रमप्राबल्यात् तद्विरोधेन उपसंहारस्थानमृगादिशब्दानां वेदे लक्षणाश्रयणं दृष्टम्,

तद्विरोध स्यादिति [1]न शङ्कनीयम् । तथा श्रवणस्य उपक्रमस्थ वेदशब्दतात्पर्यग्राहकाभ्यासप्रमाणमूलत्वेन उपक्रमप्राबल्यमूलत्वाभावादित्यर्थः[2]।।

**नाप्यश्वप्रतिग्रहेष्टि नयविरोधः । तन्त्रसारे**

**मैत्रायणीयशाखायां दातृप्रक्रमतोऽप्यृते ।**
**कर्माङ्गत्ववशेनैव दातुरिष्टि प्रतीयत ।।**

**इति उपक्रमं विनैव दातुरिष्टिरिति उक्तत्वादिति ।**

"प्रजापति वरुणयाश्वमनयत्" इत्यादि श्रूयते । तस्यार्थः प्रागुपन्यस्तः । तत्र उपक्रमोपसंहारयोः विरोधे हि किं उपसंहारानुसारात् प्रतिगृहीतुरिष्टिः, किं वोपक्रमानुसारात् दातुरिति संशये विध्युद्देशस्य प्रधानत्वात् तदनुरोधेनार्थवादो व्याख्येयः, दातुस्तावदिष्टिः स्यात् किं पुनः प्रतिगृहीतुरिति । अतः प्रतिगृहीतुरिति पूर्वपक्षं प्रापय्य, अनुपसंजातविरोधित्वेनार्थवादस्य यथाश्रुतव्याख्येयत्वात् तद्विरुद्धे सति विध्युद्देशगतस्यापि प्रतिगृहीतेः दानविषयत्वेन नेयत्वात् दातुरिति । प्रपञ्चितं च वेदोपक्रमाधिकरणे उपक्रमबलीयस्त्वम् । न च तेन गतार्थत्वम् । ऋगादिशब्दाः वेदेऽपि बहुलं दृष्टप्रयोगाः । गृह्णातिस्तु दातृव्यापारे न क्वचित् दृष्टप्रयोगाः । तेनासौ न तत्परत्वेन व्याख्यातुं शक्य इति विशेषाशङ्का निरासार्थत्वादिति सिद्धान्तितं शेषलक्षणे, "अचोदितं च कर्मभेदादि"ति चतुर्थपादीय पञ्चदशाधिकरणे ।

दातुरिति सिद्धान्तकरणात् उपसंहारप्राबल्यस्वीकारे तद्विरोधः स्यादित्यपि न शंकनीयम् । [1]पूर्वाधिकरणे इयमिष्टिः अश्वप्रतिग्रहवतः कर्मणो अङ्गम् । न स्वतन्त्रेति

[1] नाशङ्कनीयम् (क, च, ज)

[2] अत एव तत्र वेदो वा प्रायदर्शनात् इति प्रायपदप्रयोग इति भावः । (क, च, ज)

व्यवस्थापनादङ्गप्रधानयोः एककर्तृकत्वनियमात् क्रतुकर्तुदातुरेवेयमिष्टि, न प्रतिगृहीतुरिति सिध्यति । अत एव [2]पौत्रायणीयशाखायां स एषोऽश्वः प्रतिगृह्यत इति [3]दातृ प्रक्रमं विनैव आम्नातेत्यर्थः । आम्नातेत्यर्थकेन तन्त्रसारश्लोकेन उपक्रमं विनैव इत्युक्तत्वादित्यर्थः ।

"सा लिङ्गादार्त्विजे स्यादि"त्यधिकरणसिद्धान्तसूत्रस्थं लिङ्गपदं अङ्गस्य प्रधानेनैककर्तृकस्य स्वत एव तदुपकारजननसामर्थ्यपरमिति वार्त्तिककारीयं व्याख्यानं यद्युपक्रमगतस्य दातुरिष्टिः स्यात्, तदाश्वदानयुक्तपौण्डरीकानुप्रवेशादधिकारान्त[4]रस्य कल्पनीयत्वात् लाघवम् । प्रतिगृहीतुश्चेत्यस्य फलान्तरं कल्पनीयमिति गौरवं स्यादिति। गुरुणा कृतमुपपादनं चात्रानुसन्धेयम् ।

**शास्त्रदीपिकायामपि इति ।**

**"सालिङ्गादार्त्विजे स्यादि"ति सूत्रानुसारात् भाष्यकारान्तरैः "तत्रापि उपसंहारानुरोधात् प्रतिगृहीतुरेवेष्टिः स्वीकृते"त्युक्तत्वात् इति ।**

अयमर्थः - शास्त्रदीपिकायां यथा भाष्यमधिकरणं उपन्यस्य उपक्रमप्राबल्येन सिद्धान्तकरणात् वेदोपक्रमाधिकरणेन गतार्थतामाशङ्क्य अभ्यधिका शङ्का निरासार्थत्वेनागतार्थत्वमुपपाद्य वस्तुगति अभिप्रेत्येदमुक्तम् । नात्राधिकरणस्यावकाशः । तथापि भाष्यकारान्तरैः "सा लिङ्गदार्त्विजे स्यादि"ति सूत्रे सा इष्टिः [5]लब्धात् उपसंहारप्राबल्यरूपात् आर्त्विजे ऋत्विग्व्यापाररूपे प्रतिगृहे निमित्तं स्यादित्यर्थस्वारस्यमनुरुध्य प्रतिगृहीतुः इष्टिराश्रिता । तदसहमानो भाष्यकारः

[1] दोषात्विष्टिः लौकिके स्यात् । शास्त्राद्धि वैदिके न दोषः स्यादिति पूर्वा- (क,ख,घ,ङ,च, ज)

[2] मैत्रा- (क,ख, ग, घ, ङ, च, छ, ज)

[3] दातृ पक्रमं (क, छ, ज)

[4] -रान्तस्याकल्पनीयत्वात् फलं न कल्प्यमिति लाघवं स्यात् । (क, ख, ग, घ, च, ज)

[5] लिङ्गात् (क, घ, च, ङ, ज)

प्रौढवादमाश्रित्य तेनैव सूत्रेण दातुरिष्टि [1]व्यवस्थापनीया, अधिकरणान्तरं च किं नात्राधिकरणस्यावकाश इत्यत्र अस्यान्वयः । सूत्रं तु पूर्वाधिकार एव योज्यमिति । **याज्ञिकैरपि तथैव स्वीकृतत्वादिति** [2]कल्पसूत्राधिकरणोक्तरीत्या प्रबलन्यायविरोधे याज्ञिकाभ्युपगमस्यानादरणीयत्वेऽपि अत्र तादृशविरोधाभावात् न तदनादरो युक्त इत्यर्थः । **प्राभाकरैरपि "पौण्डरीके श्रूयत" इति कृत्वा चिन्तयेत् । अन्यथा दातुरिष्टिरिति सिद्धान्तासिद्धेरिति वदद्भिः, वस्तुतः प्रतिगृहीतुरिष्टिरिति स्वीकृतत्वाच्चेति।** पौण्डरीको नामैकदेश रात्रोऽहीन विशेषः । तत्रायुतं दक्षिणा । अश्वसहस्रमैकादशमिति अश्वदानं विहितम् । न तत्प्रकरणे इयमिष्टिराम्नाता । तैत्तरीयाणां काम्येष्टिकाण्डे तदाम्नानात् । अतो दातुरिष्टिरिति सिद्धान्तसिध्यर्थं पौण्डरीके श्रूयत इति कृत्वा चिन्तयेदमधिकरणं प्रवर्तितम्। वस्तुतः प्रतिगृहीतुरेवेष्टिरिति प्राभाकरैः स्वीकृतत्वादित्यर्थः ।।

**सम्मतं चैतन्मीमांसकानामपि भूयसामनुग्रहायाल्पबाधं वदतामिति ।** अश्वप्रतिग्रहेष्ट्यधिकरणमनुक्रान्तम् । तत्र प्रतिगृहीतुरिष्टिपक्षे वरुणायेति चतुर्थ्याः पञ्चम्यर्थत्वादनयदिति नयतेः प्रतिग्रहार्थत्वात् । स्वान् देवतान् इत्यत्र प्राधान्यात् निर्दिष्टवरुणदेवतापरामर्शित्वेन देवतापदस्याविवक्षितार्थत्वात् बहुबाधः स्यात् । दातुरिष्टिपक्षे तु प्रतिगृह्णातिमात्रस्य दानार्थत्वादल्पबाधः । अतो भूयोऽनुग्रहायाल्पबाधः न्यायमिति वदतामित्यर्थः । **सम्मतं चैतन्मीमांसकानामपि "दध्ना जुहोति, पयसा जुहोती"त्यादेः।** अग्निहोत्राधिकरणार्थवादाधिकरणयोः आवृत्यनादरेणाप्राप्ते तात्पर्यम् । प्राप्तार्थानामप्राप्तानुसरणं च वदतामिति स्पष्टम् ।।

---

[1] व्यवस्थापनाय अधिकरणान्तरं चकार । सूत्रं तु पूर्वाधिकरण एव योज्यमिति (क, च, ज, ङ)

[2] प्रमाणलक्षणे तृतीयपादे प्रयोगशास्त्रमिति चेदिति कल्प- (क, च, ज)

सम्मतं चैतन्मीसांसकानामपि अङ्गप्रधानवाक्ययोः अपूर्वतायामित्यादि । प्रागनुक्रान्ते प्रकरणाधिकरणे समिद्वाक्यदर्शपूर्णमासवाक्ययोः अपूर्वतायां सत्यामपि निष्फलस्य समिदादेः फलवद्दर्शपूर्णमासाङ्गत्वं समिद्वाक्यस्य वाक्यैकवाक्यतया प्रधानवाक्यानुसारेण चोक्तम् । तथा "सौर्यं चरु"मित्यादेश्चायमर्थः- विधेः तावत् चातुरूप्यम्। उत्पत्तिविनियोगाधिकारप्रयोगभेदात्। अप्राप्तप्रापको विधिः उत्पत्तिविधिः। उत्पन्नस्य फलसाधनत्वं फलोपकारकत्वं वा बोधयन्विधिः विनियोगविधिः । [1]फलसाधनैककर्मपि पुरुषस्य स्वामित्वबोधको विधिः अधिकारविधिः । अनुष्ठापको विधिः प्रयोगविधिः इति तेषां भेदः । आवश्यकं चैतच्चातुरूप्यम् । स्वरूपेणैवा[2]नुष्ठापनस्य विधेयत्वान्यथानुपपत्या उत्पत्तिविनियोगाधिकारकल्पकत्वात् । तत्र चतुष्टयेऽपि चैतस्मिन् क्वचित् किञ्चित् विवक्षितम् । "एकं द्वयं त्रयं वापि क्वचिच्चापि चतुष्टयमि"ति ।

मिश्रोक्तरीत्या यथासंभवं क्वचित् किञ्चित्परत्वमाश्रियते । तथा "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" इत्यत्र चतुष्टयपरत्वम् । "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यत्र त्रितयपरत्वम्.। उत्पत्तेः "सोमेन यजेते"त्यनेन सिद्धत्वात् "समिधो यजती"त्यादौ द्वितयपरत्वम् । प्रयोगाधिकारयोः प्रधानवाक्यसिद्धत्वात् "अग्निहोत्रं जुहोती"ति उत्पत्ति-मात्रपरत्वम् । अन्येषां "अग्निहोत्रं जुहुयात् स्वर्गकाम" इति स्वर्गकामवाक्यसिद्धत्वात् । एवं च प्रकृते सौर्यवाक्यवत् स्वर्गकामवाक्यस्यापि विधिचतुष्टयपरत्वसंभवे सति "अग्निहोत्रं जुहोती"त्यस्य स्वातन्त्र्ये फलाभावात् आनर्थक्यापत्तेः । [3]तत्त्वार्थकत्वात् उत्पत्तिपरत्वम् । स्वर्गकामवाक्यस्य त्रितयपरत्वं चाश्रितमित्यपूर्वतापेक्षया फलस्य प्राबल्यमाश्रयणीयमिति ।

---

[1] फलसाधने कर्मणि पुरुषस्य (क, ख, ग, घ, ङ, च, छ, ज)

[2] अनुष्ठानस्य (क, च, ज)

[3] तत्सार्थकत्वाय उत्पत्ति - (क, ख, ग, घ, च, ज)

यद्यपि अत्र अग्निहोत्रं जुहोतीत्यस्य कर्मान्तपरत्वेनापूर्वता न संभवति रूपालाभात् । फलाभावात् । "दध्ना जुहोति, यदग्नये चे"त्यादीनां फलवाक्यशेषत्वावश्यं भावात् । न चाग्निहोत्रशब्देन देवता लाभः । न चतुर्थीसमासस्य लक्षणं चात्र विद्यत इति वार्त्तिकोक्तरीत्या तदसंभवात् । नापि संभवत्यामपूर्वतायां फलाभावः प्रसंगः । "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादि"ति न्यायेन तत्संभवात् । अन्यथा विश्वजिदादि-वाक्यानां फलघटितवाक्यान्तरोपात्त कर्मोत्पत्तिपरत्वापत्तेः। तथापि अश्वघासादिवत् समासोपपत्तेः। क्लिष्टतया स्वर्गफलकल्पनानुपपत्तिं चाभिप्रेत्येदमुदितमिति ध्येयम् ।।छ।।

**सम्मतं चैतन्मीमांसकानामपि निवीतवाक्यस्यानुष्ठानसौकर्यवत्त्वेऽपि सप्रयोजनसत्वेऽपि देवलक्ष्ममेव तत्कुरुते इति सार्थवादकोपनीतवाक्यानुसरणं वतदामिति** । निवीतं मनुष्याणां प्राचीनावीतं पितृणां उपवीतं देवानां उपव्ययते देवलक्ष्ममेव तत्कुरुत इति दर्शपूर्णमासप्रकरणे श्रुतं वाक्यमुदाहृत्य उपव्ययत इत्यत्र किं विधिः उत अनुवाद इति संशये नित्योदकी नित्ययज्ञोपवीति इति स्मृतिप्राप्तत्वादनुवाद इति पूर्वपक्षं प्रापय्य, स्मृतितः पुरुषार्थतया प्राप्तत्वेऽपि क्रत्वर्थतया अप्राप्तत्वात् तादर्थ्येनायं विधिरिति सिद्धान्तितं शेषलक्षणे, "विधिर्वा स्यादपूर्वत्वादि"ति चतुर्थपादीय तृतीयाधिकरणे । निवीतवाक्यस्यार्थवादत्वम् । औदुम्बराधिकरण सिद्धान्तीयं तु निवीताधिकरणं कृत्वा चिन्तया प्रवृत्तम् ।

यद्यप्यत्र "अजिनं वासो वा दक्षिणं उपवीय दक्षिणं बाहुमुद्धरतेव धत्ते सव्यमि"ति, [1]यज्ञोपवीतमित्युक्तलक्षणोपवीतानुष्ठानापेक्षया [2]उरोलंवनरूप निवीतानुष्ठाने सौकर्यलाभात् नित्यप्रयोजनवत्त्वेन निवीतवाक्यं विधिः, उपवीतवाक्यं तु तदर्थवाद इति वक्तुं युक्तम्, तथापि उपवीतवाक्यस्यार्थवादत्वे तत्र देवलक्ष्ममेव कुरुत

[1] यज्ञोपवीतमेतदेव विपरीतं , प्राचीनावीतँ संवीतं मानुषमित्युक्तलक्षणो- (क,च, ज, घ,)

[2] हारवदुरोलं- (क, च, ज, घ)

इत्यर्थवादानन्वयापत्त्या, तदन्वयाय तत्रैव विधिमाश्रित्य निवीतवाक्यस्य तदर्थवादत्वं वदन्ति मीमांसकाः । तथावदतां तेषां फलापेक्षया अर्थवादस्य प्राबल्यं सम्मतमित्यर्थः । **सम्मतं चैतन्मीमांसकानामपि "न [1]ह्यशब्दनियमार्थं विधिरपि विदधाती"**ति । प्रागुपन्यस्ते श्रुवाधिकरणे विधेरपि सामर्थ्यरूपोपपत्त्यनुवर्त्तनं वदतां मीमांसकानां तदनुवर्त्तनं सम्मतमित्यर्थः ।। छ ।।

**हेतुमन्निगदाधिकरणे तेन ह्यन्नं क्रियत इत्यत्रेत्यादि** । अधिकरणं प्रागनुक्रान्तम् । अयमर्थः - अन्नकरणतायाः होमसाधनत्वे हेतुत्वेनान्वयत्यागः । आचार्यमते विवरणमते वा नाप्रामाण्यभीत्या प्रामाण्याभ्युपगमेनैव पूर्वपक्षकरणात् । विषमविशिष्टविकल्पप्रसङ्गापादनेन सिद्धान्तकरणाच्च । नापि निवन्धनरीत्या चतुर्गृहीतान्याज्यानि भवन्ति । न ह्यत्रानुयाजा इज्यन्ते इत्याद्यवगते वाक्ये व्याप्तिवचन-कल्पनद्वारा हेतुत्वेनान्वयाभ्युपगमात् । रक्तपटन्यायेन आकाङ्क्षोत्थापनसंभवात् यागस्य स्वर्गहेतुत्वोपपादकदेहाक्षेपवत् व्याप्तिवचनाक्षेप उपपत्तेः तद्रीतेरेवायुक्तत्वादिति ।।

[2]**एतेनार्थवादाधिकरणे निबन्धने विवरणे** चेत्यादि । अर्थवादाधिकरणं प्रागनुक्रान्तम्'।

---

[1] ह्यशकनीयमर्थं (क)

[2] अत्र निबन्धनरीत्या किं विधिवाक्येऽर्थवादस्य हेतुत्वेनान्वयत्यागः, किं कुत्रापि तथान्वयस्यानङ्गीकारात्, वेदोक्ते हेत्वाकाङ्क्षाविरहाद्वा हेतुतोपपादकव्याप्त्यादिबोधकमानान्तरा-पेक्षितया वा । नाद्यः, "चतुर्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत्, अष्टावुपभृति प्रयाजानुयाजेभ्यस्तत्, चतुर्ध्रुवायां, सर्वस्मै वा एतद्यज्ञाय गृह्यते य ध्रुवायामाज्यमि"त्यत्र श्रुतं नह्यत्रानुयाजा इति। श्रुते हिशब्दस्य हेत्वर्थत्वमङ्गीकृत्यानुयाजाभावस्याष्टगृहीताभावे हेतत्वान्वयोपगमात् । न द्वितीयः । इष्टसाधनता वोधनेन निराकाङ्क्षस्य विधेरर्थवादान्वयाय रक्तपटन्यायेन तदर्पित स्तुतावाकाङ्क्षोपनयनस्योक्तत्वेनात्रापि तथासम्भवात् । न तृतीयः यजेत स्वर्गकाम इत्यत्र लौकिकसुखरूपस्वर्गस्याधुनिक शरीरावच्छेदेन जननाद्देहान्तरोपस्थापकमानाभावात् यागस्य

यद्यप्यत्र [1]मन्त्रद्वयस्याप्रामाण्याभिप्रेत्यैव हेतुत्वेनान्वयत्यागः । तन्मते चोदना प्रामाण्य निरूपणस्य प्रथमाध्यायार्थतया तत्रत्येषु सर्वेष्वधिकरणेषु पूर्वोत्तरपक्षयोः अप्रामाण्यप्रामाण्यपर्यवसानावश्यं भावात् । तथापि न तन्मतमादरणीयम् ।तात्पर्यनिर्णयाय तदपेक्षया अप्रामाण्यानापादकत्वादित्यर्थः ।।छ।।

**श्रुत्यादौ तु पूर्वबलीयस्त्वमिति ।।**

"ऐन्द्या गार्हपत्यमुपतिष्ठत" इत्यत्र किं ऐन्द्या ऋचा "कदाचन स्तरीरसी"त्यादिकया गार्हपत्येन्द्रयोः उपस्थानं कार्यं, उत गार्हपत्यस्यैवेति संशये, श्रुतिलिङ्गयोः प्रामाण्याविशेषेण तुल्यबलत्वात् विकल्पेन समुच्चयेन वा उभयोरुपस्थानं कार्यमिति पूर्वपक्षं प्रापय्य, मन्त्रेण तदर्थं स्मृत्वा पश्चात् सामर्थ्यमालोच्य मन्त्राकाङ्क्षावशेन इन्द्रोपस्थाने विनियोजिका श्रुतिः कल्पनीया । प्रत्यक्षश्रुतिस्तु झडिति गार्हपत्योपस्थाने मन्त्रं विनियुङ्क्ते । अतः शीघ्रप्रवर्तिन्या श्रुत्या विलंबितप्रवृत्तिकस्य लिङ्गस्य बाधः । तदुक्तं

प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् ।
शीघ्रमंदरवृत्तित्वात् तथेह श्रुतिलिङ्गयोरिति ।

एवं च लिङ्गवाक्यादि समवायेऽपीष्टम् । तस्मात् ऐन्द्या गार्हपत्यस्यैव उपस्थानं कर्तव्यमिति सिद्धान्तितं शेषलक्षणे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यं अर्थविप्रकर्षात्" इत्यधिकरणे ।।

एवमस्मिन्नेवाधिकरणे लिङ्गवाक्यप्रकरणस्थानानां पूर्वबलीयस्त्वमनुसन्धेयम्।।

---

स्वर्गसाधनत्वमयुक्तमित्याशङ्कयायमेव शब्दो देहान्तराक्षेपक इत्युक्तत्वेनात्रापि हेतुपरशब्देनैव तदुपयुक्तव्यास्याद्याक्षेपसंभवात् । एवं चायुक्तिसहायास्तद्रीतेरेवायुक्तत्वादित्यर्थः । एतेनार्थवादाधिकरणे -.... (क, च, ज)

[1] "यतो वायुः क्षिप्रगामिनी देवता, क्षिप्रफलदात्री, अतो वायव्यः श्वेतालम्भः कार्यः" इति (क,ज)

अत्र "स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमान" इत्यत्र वाक्यापेक्षया लिङ्गस्य बलीयस्त्वम् । "अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोक्रातामि"त्यत्र प्रकरणापक्षया वाक्यस्य बलीयस्त्वम् । राजसूयान्तर्गतेषु विदेवनादिषु स्थानापेक्षाया प्रकरणस्य बलीयस्त्वम् । "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इत्यत्र समाख्यापेक्षया स्थानस्य बलीयस्त्वम् । विस्तरस्तु आकरे ।। छ ।। छ ।। 4 ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां समन्वयाधिकरणन्यायमालासंग्रहः समाप्तः ।।**

## ।। ओं आनन्दमयोऽभ्यासात् ओं ।।

**अन्यथा स्वर्गकामाधिकरणसिद्धफलान्वयमुपेत्य इत्यादि** । स्वर्गकामाधिकरणं प्रथमसूत्रे अनुक्रान्तम् । भेदलक्षणे भावार्थाः कर्मशब्दाः तेभ्यः क्रिया [1]प्रतिपत्त्यै षष्ठ्यर्थौ विधीयत इति भावार्थाधिकरणम् । तद्यथा "श्येनेनाभिचरन् यजेत, उद्भिदा यजेत पशुकाम" इत्यादौ किं द्रव्यादेः फलसाधनत्वं किं वा [2]क्रत्वर्थस्येति संशये, साध्यमानस्य फलस्य सिद्धरूपसाधना[3]नपेक्षत्वात्, सोमादिद्रव्यदेश्च तथात्वेनापेक्षा-पूर्णसामर्थ्यात्, धात्वर्थस्य स्वयं साध्यरूपत्वेनातथात्वात् द्रव्यादिरेव फलसाधनमिति पूर्वपक्षः ।

द्रव्यादेः फलसाधनत्वे तत्रैकमपूर्वं कल्प्यम् । धात्वर्थस्य द्रव्यादिशेषत्वावश्यं भावात् । तत्र दृष्टार्थ असंभवेनापूर्वान्तरकल्प्यमिति गौरवात्, फलसाधनस्य भावना[4]कारणत्वात्, तस्यां च पदान्तरोपात्तद्रव्यापेक्षया प्रकृत्युपात्तस्य

---

[1] प्रतीयते (ख, ग, घ), प्रतीयेत एष ह्यर्थौ विधास्यत (क, च, ज)

[2] धात्वर्थस्येति (क, ख, ग, घ, ङ, च, छ, ज)

[3] साधनापेक्षत्वात् (क, ख, ग, घ, ङ, च, छ, ज)

[4] करणत्वात्, (क, ख, ग, घ, ङ, च, छ, ज)

धात्वर्थस्य सन्निहितत्वेन [1]कारणत्वात्, तत्साध्यमानस्यापि स्वसाधनसाधितस्यापि करणत्वोपपत्तेः । स एव फलसाधनम् । सति चैवं उपपदेषु नामत्वं चिन्तितमिति सिद्धान्तयति द्वितीयाध्याय आद्यपादीय "भावार्थ" इत्यादि द्वितीयाधिकरणे ।।

यदधिकरणसिद्धान्तासिद्धार्थमभ्युपगम्य प्रवृत्तं यदधिकरणं, तदधिकरणसिद्धान्तः [2]तदधिकरणपूर्वपक्षविरोधीति वाक्यार्थः ।। छ ।।

**यथा स एष यज्ञः पञ्चविधोऽग्निहोत्रमित्यादि ।** तत्तत्कर्मवाक्योपात्तानामग्नि-होत्रादिशब्दानां धर्मे प्रामाण्यप्रकारापेक्षायां यज्ञविभाजकवाक्यादिषु नामधेयत्वेन निर्देशे सत्यपि तन्निर्वाहाय बाधकोत्थानादिना व्यवस्थापनार्थं यथा नामधेयपादारंभः तथा प्रकृतेऽपीत्यर्थः ।

[3]हेमशब्दो यद्यपि द्रव्यवचनो न कर्मनामधेयम् । तथापि [4]अवक्तामर-सोमस्य इत्यादिष्वेव लक्षणया कर्मविषयत्वेन निर्देश इति ध्येयम् । [5]पूर्वतन्त्र इति ।

इत्थमिदं कार्यं इति उपदेशः । तद्वदिदं कर्तव्यमिति अतिदेशः । तदुभयप्रमाणकत्वात् धर्मस्य द्वैराश्येन यथा षट्कद्वयव्यवस्था तथेत्यर्थः ।। छ ।।

**अत्र केचित् उद्भिदग्निहोत्रादिशब्दानामिव आनन्दमयशब्दानामित्यादि ।** "उद्भिदा यजेत पशुकामः" इत्यत्र उद्भिच्छब्दः किं गुणविधिः किं वा कर्मनामधेयमिति संशये व्रीह्यादिशब्दवत् क्वचित् रूढ्यभावेऽपि खनित्रादौ अवयवप्रसिद्धिसंभवात्,

---

[1] करणत्वात्, (क, ख, ग, घ, ङ, च, छ, ज)

[2] न तदधिकरण- (क, घ, च, ज)

[3] सोमशब्द (घ, ज, क, ख, ग, च)

[4] अव्यक्तासु तु (क, च, ज)

[5] पूर्वतन्त्रोपदेशातिदेशविषयत्वेन पूर्वोत्तरषट्कद्वयवदिति । इत्थमिदं कर्तव्यमित्युपदेशः । तद्वदिदं कर्तव्यमित्यतिदेशः, तदुभयप्रमाणकत्वाद्धर्मस्य द्वैराश्येन यथा षट्कद्वयव्यवस्था तथेत्यर्थः । (क)

प्रवृत्त्यौपयिकत्वेन साफल्याच्च ज्योतिष्टोमे फलार्थं गुणविधिः, गुणविशिष्टकर्मान्तरविधिर्वेति पूर्वपक्षं प्रापय्य, धातोः स्वविधानार्थत्वसंभवे [1]परार्थाभियोगात् पदश्रुत्या धात्वर्थविधिसंभवे वाक्येन गुणविध्ययोगात् नामधेयत्वेनापि उपपत्तेः दध्यादिवदवगतिकत्वाभावात्, कर्मण एव विधेयत्वात् फलोद्भेदनसाधनतया कर्मण्यवयवप्रसिद्धि सम्भवात् गुणफलोपवन्धेऽपि उपयोगित्वेन वैय्यर्थ्याभावाच्च नामधेयत्वम् । न गुणविशिष्टकर्मान्तरविधानं युक्तम् । सामानाधिकरण्यनिर्वाहाय मत्वर्थलक्षणा कल्पनापत्तेः । सोमेन यजेतेत्यादौ अगत्या स्वीकारादिति सिद्धान्तितं प्रमाणलक्षणे "अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वविधायकत्वादि"ति चतुर्थपादीय आद्याधिकरणे ।। छ ।।

तथा "अग्निहोत्रं जुहोति आघारमाघारयती"ति अग्निहोत्रादिशव्दाः आघारशव्दश्च किं गुणविधिः किं वा नामधेयमिति संशये अग्निशव्दस्य प्रसिद्धार्थत्वात्, अग्नये होत्रमस्मिन्निति वहुव्रीहिणि मत्वर्थस्य उक्तत्वेन लक्षणानापत्तेः । नामधेयत्वे दध्यादिवाक्यैः [2]द्रव्यैः अभेदेऽपि "यदग्नये च प्रजापतये च सायं जुहोती"त्यस्यानेकगुणश्रवणात् कर्मान्तरविधायकत्वेन प्रकृते देवतासमर्पणाशक्तेः [3]अपूर्वत्वात् उपसर्जनाग्निदेवताविशिष्टहोमविधिरिति पूर्वपक्षं प्रापय्य, श्रुत्या धात्वर्थमात्रविधानसंभवे वाक्यार्थविधानायोगात् । "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती"ति वाचनिकमन्त्रवर्णादग्निप्राप्तेः तन्निमित्तकाग्निहोत्रशब्दो नामधेयम् । एवमाघारशब्देऽपि यथासंभवं पूर्वोत्तरपक्षौ द्रष्टव्यौ इति सिद्धान्तितं प्रमाणलक्षणे, "तत्प्रख्यं चान्यशास्त्रमि"ति चतुर्थपादीय चतुर्थाधिकरणे ।

---

[1] परार्थ्यायोगात् (क, च, ज)

[2] द्रव्यलाभेऽपि (क, ख, ग, घ, ङ, च, छ, ज)

[3] अरूपत्वात् (क, ख, ग, घ, ङ, च, छ, ज)

अत्र उद्भिद्यते फलमनेनेति फलोद्भेदनसाधनत्वं वा असुराणां वै वलः तमसा प्रावृतो [1]नोपधानमस्मादित्यादि वाक्यशेषप्रतिपन्नं फलोद्भेदनसाधनत्वं वा उद्भिद्शब्दप्रवृत्तिनिमित्तम् । अग्नये होत्रमस्मिन्निति अग्निदैवत्य हविष्कत्वमग्निहोत्रशब्दप्रवृत्तिनिमित्तमिति उभयोः यौगिकत्वं द्रष्टव्यम् ।। छ ।।

यथा पूर्वतन्त्रे पौर्णमास्यधिकरणस्य मुखतो विद्वद्वाक्यमनुवादकमित्यादि । प्रथमसूत्रे पौर्णमास्यधिकरणमनुक्रान्तम् । अस्याधिकरणस्य [2]रूपलाभेन स्वतन्त्रयाग-विधायकत्वासंभवात् आग्नेयादि त्रिकत्रिकानुवादकं विद्वद्वाक्यद्वयमिति मुखतो व्युत्पादनार्थत्वेऽपि षड्यागाः करणं, समिदादयस्त्वितिकर्तव्यतेति भेदस्य फलतो लाभात् यथा भेदलक्षणसङ्गतिरित्यर्थः ।। छ ।।

नन्वस्याधिकरणस्य कथं भेदफलकतया लक्षणसङ्गतिः उच्यते । अभ्यासप्रमाणाया भेदापवादकतया मुखत एव सङ्गति संभवात्, सापवादकस्यैव भेदशेषत्वादेः तल्लक्षणार्थत्वात् । अन्यथा आधानस्य [3]क्रतुशेषत्वापवादकस्य इष्ट्यर्थमग्न्याधेयमित्यधिकरणस्य, हविर्धानाञ्जनस्यैकहायनीनयनप्रयोजकत्वापवादकस्य पदकर्माप्रयोजकनयनस्य परार्थत्वादित्यधिकरणस्य, भिन्नशाखाम्नातानां प्रयाजानुमन्त्रण-मन्त्राणां क्रमनियमापवादकस्यानियमोऽन्यत्रेत्यधिकरणस्य, [4]आधादीनां कर्माधिकारापवादकस्य फलार्थत्वात् कर्मणः शास्त्रे सर्वाधिकारस्यादित्यधिकरणस्य तल्लक्षणार्थफलकस्य शेषप्रयुक्ते क्रमाधिकारलक्षणेषु असङ्गत्यापत्तेः । विरोधात् आग्नेयाधिकरणयोः स्मृतिनामधेयपादासङ्गत्यापत्तेश्च । प्रस्तुतार्थासंस्पर्शिनां

---

[1] नौपिधान आसीदि- (क, ङ, ख, ग, घ, च, ज)

[2] रूपालाभेन (क, ङ, ज)

[3] क्रतुविशेषापादकस्य (क, ख, ग, घ, ङ, च, छ, ज)

[4] आधानाङ्ग (क, च, ज)

प्रासंगिकाधिकरणानां सर्वथा असङ्गत्यापत्तेश्च । कथं चानेनाधिकरणेन करणेतिकर्तव्यतयोः [1]असिध्युपन्यासः । तस्याग्नेयवाक्येषु द्रव्यदेवताद्यनेकगुणरूपगुण-प्रमाणाधीनत्वात् । किन्तु अनेन आग्नेयादीनां समिदादीनां च अंगांगिभावोपलभ्यते । न च अयमेव लक्षणार्थ इति शक्यं वक्तुम् । [2]तृतीयाभेदापत्तेः । अभ्यासलब्धभेदेषु समिदादिषु अन्योऽन्यं तदभावाच्च इति चेत् -

सत्यम् । आपवादिवाक्यादिसङ्गत्या तदधिकरणप्रवृत्तिः वक्तुं शक्या । तथापि सति संभवे फलतो लभ्यापि साक्षात् लक्षणप्रतिपाद्यविषयासङ्गतिः । ततोऽपि अभ्यर्हितेत्यभिप्रायेणैवमुक्तिः । करणेतिकर्तव्यताभावस्य भेदनियततया तदभिप्रायेण भेदफलत्वोक्तेश्च न किञ्चिदनुपपन्नम् ।। छ ।।

**यथा चित्राज्याधिकरणे "आज्यै स्तुवत" इत्युत्पत्तिवाक्यमुपेक्ष्य वाक्यभेदरूपसिद्धान्तहेतोः सत्वात्, "पञ्चदशान्याज्यानी"ति गुणवाक्योदाहरणमिति ।** "चित्रया यजेत पशुकामः, पञ्चदशान्याज्यानी"त्यत्र किं चित्राज्यशब्दयोः गुणविधित्वं किं वा कर्मनामधेयत्वमिति संशये रूढत्वेन उद्भिदादिन्यायेनावतारात् संख्याविशिष्टाज्यविधानेन वाक्यभेदात् आज्यशब्दो अवान्तरप्रकरणेन स्तोत्रे गुणविधिरिति पूर्वपक्षं प्रापय्य, समासाभावेन संख्याविशिष्टद्रव्याप्रतीतेः उभय-विधानावश्यं भावेन वाक्यभेदापरिहारात् आज्यानुवादेन संख्यामात्रस्य विधेयत्वात् "आज्यैः स्तुवत" इति उत्पत्तिवाक्ये सामानाधिकरण्येन निर्देशात् "यदा [3]वाजिमीयुः तदाज्यानां आज्यात्वमि"ति वाक्यशेषे व्याख्यानाच्च आज्यशब्दो गुणविधिः । एवं च चित्रोदाहरणेऽपि यथासंभवं पूर्वोत्तरपक्षौ द्रष्टव्याविति सिद्धान्तितं प्रमाणलक्षणे "यस्मिन् गुणोपदेशः प्रधानतेऽभिसंबन्धः" इति चतुर्थपादीय तृतीयाधिकरणे ।

---

[1] भेदसिध्यु- (क, घ, च, ङ, ज)

[2] तृतीयभेदापत्तेः (क, च, ज)

[3] आज्यमीयुः (क, ख, ग, घ, ङ, च, छ, ज)

अत्राज्यैस्तुवत इति उत्पत्तिवाक्ये गुणविधिपक्षे द्रव्यकर्मणोरुभयोः उपपादनेऽपि कारकविशिष्टक्रियाविधानोपपत्तेः । चित्रोदाहरणसाधारणस्य वाक्यभेद-रूपस्य सिद्धान्तहेतोः अनवतारात् वाक्यमुपेक्ष्य पञ्चदशान्याज्यनीति, स्विष्टकृते [1]समवद्यतीतिवत् समासाभावेन [2]विशिष्टद्रव्यवदयोगात् उक्तरूपसिद्धान्तहेतुसत्वात् तदुपजीवनेनैव उत्पत्तिवाक्यस्याज्यशब्दस्य स्तोत्रनामत्वनिर्वाहात् यथा तदेवोदाहृतमित्यर्थः ।। छ ।।

"अथैष ज्योतिः अथैष विश्वज्योतिः" इत्यादाविव संज्ञाभेदात् कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यादाविव प्रकरणभेदादन्नमयादयोऽपि न ब्रह्मेति। "अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः एतेन सहस्रदक्षिणेन यजेते"त्यत्र दक्षिणाविशेषविधानार्थं ज्योतिरादिशब्दैः प्रकृत ज्योतिष्टोमोऽनूद्यते, किं वा कर्मान्तराणि एवं नामानि विधीयन्त इति संशये, प्रकरणात् प्रकृताभिधायि एतच्छब्दसामानाधिकरण्याच्च ज्योतिरादिशब्दैः दक्षिणाविधानार्थं ज्योतिष्टोमोऽनूद्यत इति पूर्वपक्षं प्रापय्य, संज्ञान्तरश्रवणेनार्थभेदावगमात् बलवद्बाधकाभावात्, यजेतेत्यनेनैव ज्योतिष्टोमानुवादसिद्धेः अथैष ज्योतिरित्यादेः आनर्थक्यापातात्, एतच्छब्दस्य प्रस्तूयमानपरामर्शित्वसंभवाच्च, दक्षिणाविशिष्टज्योतिरादिसंज्ञककर्मान्तरविधानमिति सिद्धान्तितं भेदलक्षणे "संज्ञाचोत्पत्ति संयोगादि"त्यधिकरणे ।

तथा कुण्डपायिनामयने श्रूयते – "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति," इत्यत्र किं नैय्यमिकाग्निहोत्रमासौ विधीयेते, किं वा कर्मान्तरविधानमिति संशये, अनुपादेयमासोद्देशेन कर्मोपादानेऽपि अप्राप्तो मास एव विधीयते इति पूर्वपक्षं प्रापय्य, असन्निहितस्य नैय्यमिकस्य स्वतो बुद्धिविपरिवृत्त्यभावात्, अनुपादेयगुणयोगेन यदाहवनीये जुहोतीत्यादिवत् आख्यातेन यावत् स्वकर्मोपस्थानासंभवात्, नाम्नोऽपि

[1] समपद्यते च (ख, ग, घ, ङ)

[2] विशिष्टद्रव्यविध्ययोगात् (क, ख, ग, घ, च, ज)

विध्युपनीतपूर्वापरभावधात्वर्थोपस्थापकत्वायोगात् कर्मान्तरविधिरिति सिद्धान्तितं भेदलक्षणे "प्रकरणान्तरे प्रयोजनान्यत्वमि"ति तृतीयपादीय एकादशाधिकरणे ।

अत्रोभयत्र यथा संज्ञाभेदात् प्रकरणभेदाच्च कर्मभेदः । तथा अन्नमयादीनामपि ब्रह्मभेदः इति भावः ।

एवं यथा "दाक्षायण यज्ञेन यजेत साकं प्रस्थाय्यीयेन यजेते"त्यादौ दाक्षायणयज्ञसाकं प्रास्थाय्यादिशब्दाः प्रकृत एव दर्शपूर्णमासयागो आवृत्यादि गुणविध्यर्थः । न तु ततोऽतिरिक्त कर्मविधिपर इति "दाक्षायणयज्ञेन स्वर्गकामो यजेत, साकं प्रस्थाय्यीयेन यजेत पशुकामः" इत्यत्र किं कर्मान्तरविधिः किं वा दर्शपूर्णमासयोः एव फलार्थगुणविधिरिति संशये दाक्षायणादिसंज्ञकस्य गुणस्य लोके अप्रसिद्धत्वात् उद्भिदादिवत् सामानाधिकरण्येन नामधेयत्वात् तेनाभ्यासेन वा कर्मान्तरविधिरिति पूर्वपक्षं प्रापय्य, लोकप्रसिध्यभावेऽपि "द्वे पौर्णमास्ये द्वे अमावास्ये सह कुम्भीभिः अभिक्रामती"त्यादि वाक्यशेषबलात् दाक्षायणादिशब्दानां आवृत्तिसह प्रस्थानादिगुण-परत्वावसायेन कर्मनामधेयत्वाभावात्, फलश्रवणेनाविशेष पुनः श्रुत्यभावाच्च फलार्थं गुणविधिरिति सिद्धान्तितं भेदलक्षणे "अयनेषु संज्ञान्तरं चोदनोपलंभादि"ति तृतीयपादे चतुर्थाधिकरणे । अत्र दर्शपूर्णमासापेक्षया अतिरिक्तकर्मविधिपरत्वेनावभासमाना अपि दाक्षायणादिशब्दाः [1]यथा गुणविध्यर्थाः, तथा अन्नमयादिशब्दाः वस्त्वन्तरपरत्वेनाव-भासमाना अपि प्रकृते ब्रह्मणि सर्वोपजीव्यत्वादि गुणविशेषविधानार्थाः इत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां आनन्दमयाधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

[1] यथा दक्षस्येमे दाक्षाः प्रयोगाः तेषामयनमिति व्युत्पत्या दाक्षायणशब्दः आवृत्तिपरः । तद्युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दाक्षायण यज्ञ इति । यथा चामावास्यायागे द्वौ द्वौ दौहौ संपाद्य चतसृणां दधिपयसोः कुम्भीनां सहप्रस्थापनं साकं प्रस्थापनीयम्। तद्युक्तोदर्शयागः साकं-प्रस्थापनीयः इति व्युत्पत्तिमाश्रित्य स्वर्गपश्वादि फलायावृत्ति साकंप्रस्थानादिरूपगुणविध्यर्थः, तथात्रापि सर्वं उपजीव्यत्वादिगुणविशेषविधानार्थः इत्यर्थः ।।(क, च, ज)

## ।। ओं अन्तस्तद्धर्मोपदेशात् ओं ।।

उक्तं हि

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक् श्रुति ।

निर्णीयते निरूढं तु न स्वार्थादेव नीयते ।

**उद्भिदाधिकरणवार्त्तिक इति शेषः ।**

अयमर्थः - पिकादिपदं अर्थविशेषवाचित्वेनाज्ञातम् । सन्दिग्धं चाक्षादिपदं कोकिलः पिको विदेवनोक्ष इत्यर्थविशेषवाचित्वेन प्रसिद्धैरपृथक् श्रुतिसामानाधिकरण्यनिर्दिष्टं सदर्थविशेषवाचित्वेन निरूढनियतं, तत्प्रसिद्धपदसामानाधिकरण्येऽपि स्वार्थात् नापनीयत इति ।

**यद्यपि ऐन्द्या इत्यादौ श्रुत्या लिङ्गबाधेन श्रुतेः उत्सर्गतो बलवत्वम् । तथापि "श्येनेनाभिचरन् यजेते"त्यादौ श्येनशब्दः अन्यत्र रूढोऽपि "यथा वै श्येनो निपत्यादत्त" इति वाक्यशेषोक्तस्य श्येनसादृश्यस्य श्येने अनुपपत्या यागपर इति ।** ऐन्द्याधिकरणं प्रागनुक्रान्तम् । "श्येनेनाभिचरन् यजेते"त्यत्र श्येनशब्दः किं गुणविधिः किं वा कर्मनामधेयमिति संशये, लोके द्रव्यविशेषपरत्वेनात्यन्तं निरूढत्वात्, काम्यगुणत्वेन उत्पत्तिविशिष्टस्यापि नित्यस्य सोमस्य बाधदर्शनात् ज्योतिष्टोमे फलार्थो गुणविधिः । अथवा मत्वर्थलक्षणामाश्रित्य विशिष्टकर्मान्तरविधिः। न च "यथा वै श्येनो निपत्यादत्ते एवमेवायं द्विषन्तं भ्रातृव्यं निपत्यादत्त" इति वाक्यशेषदर्शितक्रियासामान्येन गौण्या कर्मपरत्वं शङ्क्यम् । लक्षितलक्षणापर्यवसायिन्याः गौण्याः लक्षणातो जघन्यत्वात् । तस्मात् गुणविधिरिति पूर्वपक्षं प्रापय्य, गुणविधौ तस्यैव स्तोतव्यत्वात् स्वस्य स्वात्मनासादृश्यायोगेन वाक्यशेष अनुपपत्तेः, गौरवेण विशिष्टविध्ययोगाच्च कर्मनामत्वमिति सिद्धान्तितं प्रमाणलक्षणे, "तद्व्यपदेशश्चेदि"ति चतुर्थाधिकरणे ।

ऐन्द्यादिषु सृष्टस्यापि श्रुतिप्राबल्यस्य यथा श्येनादिषु [1]वाक्यशेषोपस्थापितानामन्यथासिद्धलिङ्गेन बलिना बाधो न दोषाय, तथा प्रकृतेऽपीत्यर्थः।। एवं च आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्याये सति, यदि श्रुत्यादिषु पूर्वपूर्वप्रमाणसिद्धार्थस्वीकारे उत्तरोत्तरं प्रमाणं [2]अनर्थकं स्यात्, तथा विपरीतो बाधो भवतीति बलाबलाधिकरणवार्तिकोक्त न्यायेनेत्यर्थः ।। छ ।।

**तथा "कदाचन स्तरीरसि नेन्द्रे"ति मन्त्रस्येत्यादि ।** ऐन्द्याधिकरणं ग्रहणाग्रहणाधिकरणं चानुक्रान्तम् । "व्रीहिभिः यजेत यवैः यजेते"त्यत्र विकल्पः समुच्चयो वेति संशये सर्वाङ्गोपसंहारे प्रयोगवचनानुग्रहायाष्टदोषनिदानविकल्पपरिहाराय ज्योतिष्टोमवदभ्यासमाश्रित्य समुच्चयो, मिश्रैर्वा यागः इति पूर्वपक्षं प्रापय्य, एकार्थानां एकस्मिन् उपकारे अन्योऽन्यानपेक्षया विनियुक्तानां विकल्पः स्यात् । ज्योतिष्टोमे हि द्रव्यदेवतासंयोगानामदृष्टार्थानां प्रकरणात् युगपत् ग्रहणाभ्यासो न्यायः । व्रीहियवौ तु वाक्यशेषद्वयेनान्योऽन्यनैरपेक्ष्येण पुरोडाशप्रकृतिद्रव्यतया विधीयमानो प्रयोगवचनं पर्यायेण गृह्णाति न युगपत् । येन बलात् प्रधानावृत्तिः स्यात् । मिश्रत्वमपि निरपेक्ष विधानादयुक्तमेव, अगत्या विकल्पाश्रयणात् । तदुक्तं

एवमेवाष्टदोषोऽपि यवव्रीह्योः स्वतन्त्रतयोः ।
विकल्पाश्रितः तत्र गतिरन्या न विद्यत

इति सिद्धान्तितं प्रसङ्गलक्षणे "एकधा तु विकल्पेरन् समुच्चये त्वावृत्तिः स्यात् प्रधानस्य" इति चतुर्थपादीय चतुर्थाधिकरणे ।।

यदि श्रुतिलिङ्गयोः अन्यतराबाधेन उभयानुग्रहायाभेदाश्रयणं, तदा मन्त्रब्राह्मणगतयोः लिङ्गश्रुत्योः अनुग्रहाय ऐन्द्रगार्हपत्ययोः अभेदः आश्रयणीयः स्यात् ।

---

[1] वाक्यशेषोपस्थापितानन्यथासिद्धलिङ्गबलेनापराधो (क, घ, ङ)

[2] अर्थकं (ख, ग, घ, ङ)

**न तु श्रुत्या लिङ्गस्य बाधः** । यदि शास्त्रद्वयाविरोधायाभेदाश्रयणं, तदा व्रीहियवयोः **ग्रहणाग्रहणयोः अभेदः आश्रयणीयः । न तु विकल्पाश्रयणेन पाक्षिको बाधः ।** [1]**तस्मात् विरुद्धप्रमाणद्वयानुग्रहायाभेदाश्रयणमयुक्तमित्यर्थः । यद्यपि "निवेशनः सङ्गमनो** वसूनां" इति, "ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इत्यग्निप्रकरणस्थवाक्यं भाष्यादौ उदाहृतम् । तथापि अग्निहोत्रप्रकरणेन होमस्थानेषु ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति वाक्यदर्शनात् **तन्मन्त्रोपन्यास इत्यविरोधः ।। छ ।।**

**अर्थैकत्वाभावात् वाक्यभेदः स्यादिति** । अर्थैकत्वात् एकं वाक्यं साकाङ्क्षं चेत् विभागे स्यादिति, लक्षणादिति शेषः । श्रुतिलिङ्गाधिकरणसिद्धान्तात् प्रागिव श्रुतिः प्रबला, लिङ्गं तु दुर्बलमिति । श्रुतिलिङ्गाधिकरणं प्रागनुक्रान्तम् । तत्सिद्धान्तेन बलाबलावधारणादित्यर्थः ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अन्तस्थत्वाधिकरणन्यायमालासंग्रहः समाप्तः ।।**

## ।। ओं आकाशस्तल्लिङ्गात् ओं ।।

**वाजपेयाधिकरणे उद्भिदादिशब्दानामपि विचार्यत्वेऽपि वाजपेयशब्द इवेति।** "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयशब्दः किं गुणविधिः किं वा कर्मनामधेयमिति संशये यजेतेत्यत्र यागे द्वितीयाद्यभावेन कर्मत्वकरणत्वयोः अप्रतीते, प्रकृतिप्रत्ययाभ्यां यागभावनामात्राभिधानात् समभिव्याहारेण तयोः संबन्धमात्रमवगम्यते । तच्च कर्मत्वकरणत्वसाधारणमिति तद्यागभावनयात्रैव आख्यातयागकर्मत्वंशे गुणसंबन्धः, तत्करणत्वांशे फलसंबन्धश्च विनैव मत्वर्थलक्षणया तन्त्रेण सिध्यतीति गुणविधिरिति पूर्वपक्षं प्रापय्य, संबन्धमात्रपरत्वे आकाङ्क्षा अनुदयेन गुणफलयोः अन्यतरेणाप्यसंबन्धः स्यात् । लक्षणया अन्यतरस्य विशेषपरत्वे अन्यतरेणैव संबन्धः स्यात् । उभयविशेषपरत्वे तु वाक्यावृत्तिः, गुणप्रधानत्वोद्देश्यत्व उपादेयत्व

---

[1] तथा च मीमांसोन्मूलिता स्यात् । (क)

[1]विध्यनुवादकत्वं वैरूप्यं च स्यात् । अतः तन्त्रसंबन्धासंभवात् [2]गुणविवक्षा-सामानाधिकरण्यनिर्वाहाय मत्वर्थलक्षणादोषो दुर्वार इति "[3]वाजपेयमन्नरूपं सुरा द्रव्यं, पेयमस्मिन्" इति मूलाग्रह विधानात् तत्प्रख्यन्यायेन नामधेयमिति सिद्धान्तितं प्रमाणलक्षणे "नामधेये गुणश्रुतेः स्यात् विधानमिति चेदि"ति चतुर्थपादे षष्ठाधिकरणे ।।

अत्र सर्वेषु आख्यातशब्देषु तन्त्रसम्बन्धसंभवात् मत्वर्थलक्षणादोषो नास्तीत्याक्षिप्यते । अधुना उक्तरीत्या पूर्वपक्षे उद्भिदादिषु विशिष्टविधिपक्षोद्भावित-मत्वर्थलक्षणा दोषोद्धारात्, सिद्धान्ते तद्यवस्थापनाच्च उद्भिदादिशब्दानां विचार्यत्वेऽपि यथा वाजपेयशब्दोदाहरणं तथा प्रकृतेऽपीत्यर्थः ।। यथा अग्निहोत्रादिशब्दो नामधेयतयेति नामधेयपादे उदाहरणं, समुदायानुवादापवादतया शब्दान्तरपादे इति । "अग्निहोत्रं जुहोती"त्यत्र अग्निहोत्रशब्दो यथा "अग्निर्ज्योतिर्ज्योतिरग्निस्वाहेति", "सायं जुहोती"ति नामधेयत्वापादकगुणप्रख्यापक शास्त्रान्तरविषयतया, प्रथमाध्याय नामधेयपादे तत्प्रख्याधिकरणोदाहरणं, दध्यादिवाक्यप्राप्तहोमसमुदायानुवादकत्वशङ्का विषयतया, द्वितीयाध्याय शब्दान्तरपादे [4]समुदायापवादविषयतया आधाराग्निहोत्राधि-करणोदाहरणं इत्यर्थः ।

**श्येनादिशब्दानां यजि सामानाधिकरण्यवदिति** । श्येनेनाभिचरन् यजेत इत्यत्र तृतीयान्ततया निर्दिष्टस्य श्येनादिशब्दस्यान्यत्र रूढस्यापि प्रत्ययार्थीभूतभावनाकरणसमर्थ यजिधातु सामानाधिकरण्यात् यथा यागपरत्वं तथेहापीत्यर्थः ।। छ ।।

---

[1] विध्यनुवादकृतंल (क)

[2] गुणविवक्षायां (क)

[3] वाजपेयमन्नरूपं सुरा द्रव्यं, पेयमस्मिन्निति सुराग्रह (क, ख, ग, घ)

[4] समुदायानुवादापवादतया (क), समुदायानुवादापवादापेक्षितायां (ङ)

**उत्पत्तिशिष्ट सोमावरुद्धेऽपी**[1]ति । "यदि राजन्यं वैश्यं वा याजयेत् [2]स य वै सोमं विभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधाति उन्मृज्य तस्मै भक्षं प्रयच्छेत् न सोम"मित्यत्र राजन्यवैश्यनिमित्तेन सोमविकारतया श्रूयमाणः फलचमसः किं भक्षमात्रे सोमं कुर्यात्, उत यागेऽपीति संशये "विभक्षयिषेदि"ति, "भक्षं प्रयच्छेदि"ति उपक्रमोपसंहाराभ्यां तत्रैव [3]विधौ न यागे, अश्रवणादिति पूर्वपक्षं प्रापय्य, यागसाधनद्रव्यसंस्काररूपभक्षसंबन्धित्वेन श्रूयमाणः फलचमसोऽन्यथा तत्संबन्धायोगात् यजमानचमसयागाभ्यां साधनत्वं प्रतिपद्यते । तस्मात् यागेऽपि सोमविकार इति सिद्धान्तितं शेषलक्षणे "फलचमसो नैमित्तिको भक्षविकार श्रुतिसंयोगादि"ति पञ्चमपादीयोपान्त्याधिकरणे ।।

अत्र उत्पत्तिशिष्टनित्यापेक्षया नैमित्तिकस्य उत्पन्नशिष्टस्य प्राबल्यात् फलचमसस्य यागसाधनद्रव्यसंस्काररूपभक्षणद्वारा साधनत्वेन यथा यागेऽनुप्रवेशः तथा इन्द्रादिशब्देऽपीत्यर्थः ।। छ ।।

**आमिक्षावरुद्धे यागे वाजिनविदिति** । वैश्यदेव्यामिक्षायागं विधाय आम्नायते- "वाजिभ्यो वाजिनमि"ति । अत्र किं पूर्वस्मिन् आमिक्षायागे वाजिनं गुणो विधीयते किं वा कर्मान्तरमिति संशये वाजिनशब्देन आमिक्षायागदेवतारूपवैश्वदेवप्रत्यभिज्ञानात् तत्संबन्ध्यमानं वाजिनं पूर्वकर्मण्येव विहितं भवति । संभवति चैवं [4]गुणमात्रविधिः, विशिष्टविधौ गौरवं नाश्रयितुं युक्तम् । अतः पूर्वयागे वैकल्पिकद्रव्यविधानमिति पूर्वपक्षं प्रापय्य, आमिक्षायुक्तस्यैव उत्पत्तौ

---

[1] यागे उत्पन्नशिष्टस्य फलचमसस्य भक्षणमुखेनानुप्रवेशवदिति (क, ङ), यागे उत्पन्नशिष्टस्य फलत्वं मत्वर्थलक्षणामुखेनानुप्रवेशवदिति (ख, ग, घ)

[2] स यदि सोमं विभक्षयिषेत् (क, घ)

[3] विकारः (क, ख, ग, घ)

[4] गुणमात्रविधाने, विशिष्टविधिगौरवं (क, ख, ग, घ, ङ)

पूर्वयागस्यावगमात्, वाजिनविधौ तेनैवरूपेणानुवाद्यत्वात्, तस्य च द्रव्यान्तरसम्बन्धापेक्षायोग्यत्वभावात् तत्र निवेशनमलभमानं वाजिनं आत्मनिवेशनक्षमां कर्मान्तरोत्पत्तिं साधयतीति कर्मान्तरविधिरिति सिद्धान्तितं भेदलक्षणे "गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्" इति द्वितीयपादीय नवमाधिकरणे । स्पष्टोवाक्यार्थः ।। छ ।।

एवं च यथा नवमोक्तरीत्या "स्रुवेण पार्वणौ होमौ" इत्यत्र पर्वशब्दः प्रतीयते । दीयते अस्मिन्निति दर्शादिकाले यौगिकः न तु रूढ इति । "स्रुवेणपार्वणौ जुहोती"त्यत्र तद्धितश्रुत्या पर्वदैवत्यौ होमौ विकृतिषु अतिदिश्येते न वेति संशये पर्वशब्दस्य काले मुख्यत्वात्, तस्य च असंस्कार्यत्वात् आरादुपकारकाविमौ विकृतिषु अतिदिश्येते इति पूर्वपक्षं प्रापय्य, पृणातेः दानार्थकात् धातोः पर्वशब्दो निष्पन्नः । स च दीयतेऽस्मिन्निति अधिकरणव्युत्पत्या काले मुख्यः । भावव्युत्पत्या तु कर्मण्यपि मुख्यः। तत्र प्रकरणात् सामवायिकत्वलाभाच्च कर्मवचनत्वमङ्गीकृत्य तत्संस्कारार्थौ होमौ इति अभ्युपेयम् । तेषां च कर्माणां तन्त्रेणाभिहितानां [1]अग्नीषोमीययोरिव व्यासक्तं देवतात्वमिति, समुदायस्य देवतात्वात् तस्य विकृतिषु अनतिदेशादतद्विकारत्वाच्च सौर्यादेः न तत्र होमयोः अतिदेश इति सिद्धान्तितं ऊहलक्षणे "पार्वणयोस्तु प्रवृत्तिः समुदायार्थ संयोगादि"ति द्वितीयपादीय पञ्चविंशाधिकरणे ।।

अत्र पर्वशब्दस्य पूर्वोत्तरपक्षयोः मुख्यत्वविशेषप्रदर्शनार्थं पृणातेरधिकरणव्युत्पत्तिमाश्रित्य यौगिकत्वमङ्गीकृतं, तद्वदित्यर्थः ।। छ ।।

**यथा तृतीये इन्द्रपीतस्येति मन्त्रस्य मैत्रावरुणादिशेषभक्षणे वस्तुतः ऊहाभावेऽपि न्यायव्युत्पादनार्थं ऊहविशेषनिरूपणार्थानि अनेकानि अधिकरणानि कृत्वा चिन्तया युक्तानीति,** भक्षानुवागके श्रुत "इन्द्रपीतस्य नराशँ सपीतस्य मधुमत

---

[1] अग्नीषोमयोरिव (क)

उपहूतस्योपहूतो भक्षयामी"ति मन्त्रः किं [1]ऐन्द्रप्रदानविशेषभक्षणेन प्रयोक्तव्यः उत ऊहेन प्रयोक्तव्यः आहोस्वित् यथासमाम्नात एव प्रयोक्तव्यः इति संशये, "इन्द्रेण पीतः सोमो यस्मिन्नि"ति बहुव्रीहिः, द्वयोः पदयोः अन्यपरत्वेन दुर्बलतया सवनविशेषणत्वायोगात्, "इन्द्रेण पीत" इति तत्पुरुषस्योत्तरपदे स्वार्थ-लाभेनाभ्यर्हिततया सोमविशेषणत्वात्, तस्यानैन्द्रेषु असामर्थ्यात्, समानकर्मणि प्रकृतिविकारासंभवेनोहाभावादमन्त्रकं भक्षणमिति प्रथमपूर्वपक्षं प्रापय्य, सत्यपि कर्मैकत्वे प्रदानानां भिन्नतया प्रकृतिविकृतिभावसंभवात्, "इन्द्राय त्वा वसुमते सोमं गृह्णामी"ति मानग्रहणमन्त्रवशात् सोमस्या[2]भिषवादनैन्द्रप्रदानधर्मत्वादधर्मकाणामनैन्द्रप्रदानानां तद्विकृतित्वात् तत्र चोदकप्राप्तस्यान्यमन्त्रस्य ऊहेन प्रयोग इति द्वितीय पूर्वपक्षं प्रापय्य, [3]परिसमाप्याधिकरणं कृत्वा चिन्तारूपेण षड्भिः अधिकरणैः ऊहविषयं विचार्यमाणग्रहणाग्रहणमन्त्रयोः लिङ्गात् ऐन्द्रप्रदानविषयत्वेऽपि उत्पत्तिवाक्ये श्रुतस्य सोमस्य सर्वाभ्यास साधारण्यात् समानविधानतया प्रकृतिविकृतिभावाभावात् नास्त्यूह इति द्वितीयपक्षं निरस्य प्रथमपक्षावलम्बनेन पुनः कृत्वा चिन्तारूपेणाधिकरणद्वयं उपन्यस्य तत्पुरुषाश्रयेण [4]संबुध्यन्तेन सोमशब्देन "त" इति प्रत्यक्षविषयेण युष्मच्छब्देन निर्दिष्टस्यावशिष्टस्य सोमावयवस्य विशेषणं स्यात् । तथा च हुताहुतसमुदायविषये इन्द्रपीतशब्दे लक्षणा स्यात् । तस्मात् बहुव्रीह्याश्रयणेन सवनविशेषणत्वादनैन्द्रेष्वपि यथासंख्यं आम्नातं मन्त्रकं भक्षणमिति सिद्धान्तितं शेषलक्षणे लिङ्गपादे एकादशाधिकरणेषु ।।

---

[1] अनैन्द्र- (क)

[2] विषवौदश्चैन्द्र (ख, ग, घ)

[3] अपरि- (क)

[4] वसुमद्गणस्य सोमदेवत इति संबुध्य- (क)

इत्थं च कृत्वा चिन्ताधिकरणं सवनमखीयेषु चमसेषु ऐन्द्रेषु सर्वेषु हुतेषु होतृकाणां मैत्रावरुणादीनां चमसास्तेषु अभिक्षितेषु सशेषेषु एव पुनः सोममभ्युन्नीय देवेतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते । तत्र किं पूर्वप्रकृतप्रदानदेवतेन्द्रोऽपि उपलक्षणीयः इन्द्रमित्रावरुणपीतस्येति, किं वा नेति संशये उन्नीतकाले देवतानिर्देशाभावात् प्रदानकाले च देवतानिर्देशात् पूर्वशेषस्याभ्युन्नीतस्यैव चमसस्थत्वेन [1]देवतान्तरसंबन्धात्, पूर्वदेवतापीति संबन्धत्वात् नोपलक्षणीय इति पूर्वपक्षः ।

यद्यपि उन्नयनकालेन देवता संकल्पः । तथापि उन्नयनं तावत् करिष्यमाण-यागार्थमिति असन्दिग्धम् । यश्च करिष्यमाणयागार्थः तस्यैव तदीयदेवता संबन्धो नान्यस्य । तस्मात् पूर्वशेषस्य स्वदेवतासंबन्धानपायात्, इन्द्रोऽपि उपलक्षणीय इति सिद्धान्तम् । एवमन्यान्यपि अधिकरणानि आकरे अनुसन्धेयानि । विस्तरभयात् न लिख्यन्ते ।।

इन्द्रपीतशब्दस्य बहुव्रीहि आश्रयणेन सवनविशेषणत्वात् मैत्रावरुण-प्रदानशेषभक्षणे मन्त्रस्य ऊहाभावेऽपि ऊहमभ्युपेत्य प्रवृत्तानि अनेकाधिकरणानि यथा युक्तानि तथेत्यर्थः ।। छ।।

**कांस्यभोजिन्यायेन सर्वप्राबल्यानां बाधकमिति** । आग्रायणे ऐन्द्राग्न-वैश्वदेवद्यावापृथिव्यादीनि हवींष्याम्नातानि । तत्र [2]द्यावापृथिव्यस्य वैश्वदेविकद्यावा-पृथिव्यविधि विकारित्वात् प्रसूनं बर्हिः प्राप्तम्। ऐन्द्राग्नादेस्तु प्रसूनमप्रसूनं वा बर्हिर्मात्रम्। तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वा उपादेयं, उत प्रसूनमेवेति संशये मुख्यत्वात् भूयस्त्वाच्चानियम एव युक्त इति पूर्वपक्षं प्रापय्य, न हि अनियमो नाम किञ्चिदङ्गम् ।

---

[1] देवतान्तरसंबन्धो न पूर्वदेवता, येन संबन्धत्वात् नोपलक्षणीय (ख, ग, घ)

[2] द्यावापृथिव्य विकारत्वात् (ख, ग, घ)

[1]यदनुगृहीत बर्हिर्मात्रमङ्गम् । तच्च प्रसूनोपादानेऽपि अविरुद्धमिति न कस्यचित् वैगुण्यम्। अनियमे तु द्यावापृथिव्यस्य वैगुण्यं स्यात् । न चावैगुण्यसंभवे तद्युक्तम् । तस्मात् [2]प्रसूनमेवोपादेयमिति सिद्धान्तितं प्रसङ्गलक्षणे, "अधिकं च गुणःसाधारणे अविरोधात् कांस्यभोजनवदमुख्येऽपी"ति द्वितीयपादीयोपान्त्याधिकरणे । अत्र व्युत्पन्नाविरोधे प्रबलस्यापि दुर्बलानुवर्तन न्यायः कांस्यभोजिन्यायः । यत्र शिष्यस्य कांस्यभोजनव्रतनियमः, यत्र गुरोः अनियमः, एकत्र उभयसमावेशे गुरुणा शिष्या[3]नुरोधेन कांस्यपात्रमादर्तव्यं इति तदर्थः ।। छ ।।

**दृश्यते च - घृतादौ निरूढानामपि आज्यादि शब्दानां मुखान्तरं विनैवाज्यैः स्तुवत इत्यादौ तैस्तैर्हेतुभिः स्तोत्रादिनामधेयत्वमिति ।** चित्राज्याधिकरणमनुक्रान्तम् । श्येनवत् निपत्यादानरूपक्रियाद्वारकं गौणत्वं विनैव तैः तैः वाक्यभेदादिभिः हेतुभिरित्यर्थः ।।

**उक्तं हि [4]षष्ठे प्राधानखदिराबाधाय लक्षणाद्यनेकगुणबाधेन तक्षणाद्ययोग्योऽपि पशुनियोजनयोग्य इत्यादि ।** यदा पुनः तनुत्वात् तक्षणादिसंस्काराणामयोग्यः खदिरो नियोजनमात्रे योग्यः, कदरश्च महान् संस्कारयोग्यः, तदा कस्योपादानमिति संशये, खदिरोपादाने संस्काराणां बहूनां लोपः स्यात् । [5]खादिरोपादाने तु केषामनुग्रहः । खदिरशास्त्रमपि किञ्चित् न्यूनमनुगृहीतं भवति । अतः तस्योपादानमिति पूर्वपक्षं कृत्वा, बहवोऽपि द्रव्यार्थाः एव संस्काराः इति,

---

[1] यदनुगृह्येत बर्हिमात्रं त्वङ्गम् । (क, ख,ग,घ )

[2] अत्र प्रसूनशब्देन पुष्पितं बर्हिरेवोच्यते । (क)

[3] -नुरोधेन वर्तितव्यं (क)

[4] षष्ठे प्राधाने खदिरप्रतिनिधिः कदर इति । (ख, ग, घ )

[5] कदरोपादाने तु तेषां अनुग्रहः। (क, ख, घ, ग )

न तद्वशेन द्रव्यपरित्यागो युक्तः । अतः संस्कारहीनोऽपि प्रधानभूतखदिर एव उपादेयः। तक्षणादीनि लुप्येरन्निति सिद्धान्तितं अधिकारलक्षणे "द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वादि"ति तृतीयपादीय एकोनविंशाधिकरणे । स्पष्टो वाक्यार्थः ।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां आकाशाधिकरणन्यायमालासंग्रहः समाप्तः।।**

## ।। ओं अत एव प्राणः ओं ।।[1]

**मीमांसकमते चान्यपरत्वेनाचेतनसंबोधनपरत्वाभावादिति** । अभिधानादर्थवाद इति मन्त्राधिकरणगुणसूत्रोक्तरीत्या ओषधे त्रायस्वैनं इत्यादेः चैतन्यारोपेण क्रतुसाधनीभूतउपकरणवर्हिस्तुतिपरत्वेनेत्यर्थः।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां प्राणाधिकरणन्यायमालासंग्रहः समाप्तः।।**

## ।। ओं ज्योतिश्चरणाभिधानात् ओं ।।

**शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैकत्वादिति** । शाखान्तराधिकरणं प्रागनुक्रान्तम् । [2]तत्रत्येन "एकं वा संयोगरूपचोदनाख्यो विशेषादि"ति सिद्धान्तसूत्रोपन्यस्तेन फलसंयोगादि [3]साधारणधर्मकृतप्रत्यभिज्ञारूपेण न्यायेन, यथा शाखाभेदेऽपि अग्निहोत्रज्योतिष्टोमादि कर्माभेदः तथा वेदभेदेऽपि ज्योतिरभेद इत्यर्थः ।

**यथा** आघाराग्निहोत्राद्यधिकरणे आघारमाघारयति अग्निहोत्रं जुहोतीत्युदाहरणभेदेऽपि द्रव्यदेवतालक्षणयागरूपाभावात् नानयोर्यागविधित्वमिति

---

[1] एतदधिकरणं रिक्तमस्ति (क)

[2] तत्र श्येनः एकः (ङ ), तत्र एकं वा (क, ख, ग, घ)

[3] साधारण चमत्कृत (ख, ग, घ )

**पूर्वपक्षयुक्तिसाधारण्यात् मन्त्रवर्णादिना देवतादिलाभात् न रूपाभाव इति सिद्धान्तयुक्तिसाधारण्याश्चैकाधिकरणतेति** । आघाराग्निहोत्राधिकरणं प्रागनुक्रान्तम् । रूपालाभे सति विधानयोग्यस्वरूपविशेषानवगत्या नानयोः यागविधित्वमिति । दधिवसन्तादिवाक्यप्राप्त होमाघारसमुदायानुवादकत्वरूपपूर्वपक्षयुक्तिसाधारण्यात् "अग्निर्ज्योतिः अग्निस्वाहेति, सायं जुहोति इन्द्र ऊर्ध्वो अध्वर आज्याघारमाघारयती"ति वचनविनियुक्तमन्त्रवर्णात् । "दध्ना जुहोति चतुर्गृहीतं वा एतदभूदि"त्यादिना च द्रव्यदेवतालाभरूपस्वतन्त्रहोमाघारविधिसिद्धान्तयुक्तिसाधारण्याच्च इत्यर्थः । आदिपदेन चित्राज्याधिकरण यववराहाधिकरणादीनां च ग्रहणम् ।

**यथा अर्थवादनये भट्टमते एको विचारः अर्थवादमन्त्रसाधारण । अन्यस्तु अर्थवादमात्रासाधारणः इति द्विपर्वा विचारः** इति ।। अर्थवादाधिकरणं प्रागनुक्रान्तम् । तत्र "आम्नायस्य अक्रियार्थत्वादि"ति सूत्रेण क्रियार्थानामर्थवादमन्त्रनामधेयानां आनर्थक्यादप्रामाण्यमिति पूर्वपक्षः । "विधिना तु एकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युरि"ति सिद्धान्तसूत्रस्थेन तुशब्देन "तुल्यं च साम्प्रदायिकमि"ति सूत्रेण वा कृत्स्नस्वाध्यायस्य पुरुषार्थपर्यवसाय्यध्ययनविधिमहिम्ना अर्थवादादीनां सप्रयोजनत्वावसायेन प्रामाण्यमिति सिद्धान्त इति [1]*साधारण एको विचारः । पुनः अर्थवादानां [2]द्वाराभावादप्रामाण्यमिति पूर्वपक्षः, सिद्धान्तसूत्रे स्तुतिग्रहणार्थं तद्वारसंभवात् प्रामाण्यमिति सिद्धान्त इति** असाधरणान्यो विचारः इति द्विपर्वा विचारः इत्यर्थः ।। छ ।।

**विष्णुसूक्तमित्यध्यापकप्रसिद्धिस्तु "धान्यमसीति"मन्त्रस्य मांसहविष्क्रिये यागे अतिदिष्टस्य "मांसमसी"त्यूहे कर्तव्ये "मृगोसी"त्यूहवत्**

---

[1]*.... ** एतत् भागं लुप्तं (ख, घ, ग )

[2] अनुवाद द्वाराभावात् (क)

**प्रसिद्धविष्ण्वादिशब्दाभावदज्ञानमूलेति** । शक्यानामयनाख्ये षड्विंशत् संवत्सरसत्रे श्रुतं "संस्थितेऽहनि ग्रहपतिमृगयां यातीति, [1]तया मृगान् हन्ति [2]क्षोन्तरसमाया पुरोडाश" इति । तेषु मांसमयेषु चोदकप्राप्तो "धान्यमसि धिनु हि देवा[3]नि"त्यर्थवादमन्त्रः किं ऊहितव्य उत नेति संशये धान्यशब्दः सतुषद्रव्यवचनतया प्रकृतौ तण्डुल-प्रकाशना[4]सामर्थ्यादसमवेतार्थः । तथा चादृष्टार्थो मन्त्रो विकृतौ [5]नोहितव्य इति पूर्वपक्षं प्रापय्य, प्रकृते विकाराभावमूलया लक्षणया तण्डुलानेव धान्यशब्दः प्रकाशयति। शालयो भुञ्जत इतिवत् । तस्मात् [6]प्रकृतासमवेतार्थत्वात् "मांसमसी"त्यूहितव्यमिति सिद्धान्तितं ऊहलक्षणे "गुणशब्दस्तथेति चेत्यधिकरणे आद्यपादीयः द्वितीयवर्णके ।

अत्र प्रकृतौ लक्षणायाः आर्थिकत्वेनाविवक्षितत्वात् स्वाधीनप्रयोगे तदाश्रयणायोगात् [7]न मृगोऽसीत्यूहः न्याय्यः । याज्ञिकानां तु तादृश ऊहाभ्युपगमो यथा अज्ञानमूलः तथा अध्यापकप्रसिद्धिरपी[8]त्यर्थः ।

**यथा च वत्समालभेतेत्यत्र आलम्भनं गुणकर्मभूतगोदोहनादि साहचर्यात् गुणकर्मतेति** । अग्निहोत्रप्रकरणे दोहाधिकारे श्रुते वत्समालभेतेत्यत्र किं यागविधिः किं वा संस्कारकर्मविधिरिति संशये, असत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भनत्व-सामान्यात् श्वेतमालभेतेतिवत् यागविधिरिति पूर्वपक्षं प्रापय्य, स्पर्शमात्ररूपस्य

---

1 मत त्रयान् हन्ति (ख, ग, घ) तत्र पाकैः मृगान् (क)

2 केषीतर समाया कान्तरसमायाः (ङ) तेषान्तरसमयाः (क, ख, ग, घ)

3 अधिवादः (ख, ग, घ, ङ) अधिवाप (क)

4 -शन सामर्थ्यात् (ख, ग, घ, ङ)

5 नोहितव्य सौरयागे देवस्यत्वेति मन्त्रगतसावित्रादिशब्दवत् (क)

6 प्रकृतौ समवेतार्थत्वात् (ख, ग, क)

7 न मांसलक्षकतया मृगो (क)

8 विष्ण्वादि शब्दाभावनिमित्त अज्ञानमूल (क)

आरम्भस्य यागमन्तरेणानुपपत्यभावात् गोदोहनादिगुणकर्मप्रायपाठात् स्वगुणकर्मेति सिद्धान्तितं भेदलक्षणे "विशये प्रायदर्शनादि"त्यधिकरणे । स्पष्टो वाक्यार्थः ।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां ज्योतिरधिकरणन्यायमालासंग्रहः समाप्तः।।**

## ।। ओं छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात् तथाहि दर्शनम् ओं ।।

**यथा वा मतान्तरे दुरितप्रागभावस्य निषिद्धाकरणाधीनतेति** । न कलञ्जं भक्षयेदित्यादौ किं पर्युदासः उत प्रतिषेधः इति संशये भक्षणव्यवधानेनैव [1]विध्योः असंवन्धात् [2]अव्यवहितसंबन्धलाभाय भक्षणाभावो विधीयते । तस्य च [3]अननुमेयत्वात् [3]अननुमेयत्वात् सत्वकल्पनं लक्ष्यते । विश्वजिन्न्यायेन तस्य स्वर्गफलं कल्प्यते । एवं तस्य पर्युदास इति पूर्वपक्षं प्रापय्य, पर्युदासाश्रयणे संकल्पलक्षणाश्रयणात् श्रुतिबाधः । प्रतिषेधे तु प्रत्यासत्तिमात्रबाधनम् । न च तदपि किं तर्हि भक्षयेन्नेति परिपूर्णपदस्य नञा सम्बन्ध्यते। नञ् [4]सूक्तेन विधिना निवर्तमाना गम्यते । तदन्यथानुपपत्त्या निषेध्यमानस्य प्रत्यवायफलकत्वं कल्प्यते । अतः प्रतिषेध इति सिद्धान्तितमधिकार-लक्षणे "प्रतिषिद्धेषु अकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्माणां" इति द्वितीयपादीय पञ्चमाधिकरणे ।। अत्रत्यन्यायेन निषिद्धानुष्ठानस्य प्रत्यवायमूलत्वेन तत्प्रागभावस्य यथा तदननुष्ठानमूलत्वं तथेत्यर्थः । गुरुमते प्रत्यवायकल्पना अनुभ्युपगमात् मतान्तरे इत्युक्तम् ।। छ ।।

**यथा व्रीहीनवहन्तीत्यत्र द्वितीया श्रुतिं अतन्त्रीकृत्य अवघाते लिङ्गात् व्रीहिशेषतोक्तेति** । व्रीहीनवहन्तीत्यत्र किं अवघातादपूर्वमस्त्युत नेति संशये

---

[1] नञ् विध्योः (क, ख, ग, घ, ङ)

[2] द्रव्यविधिसंवन्ध (क)

[3] अननुष्ठेयत्वात् तद्विरोधि संकल्पलक्षणा । (क)

[4] युक्तेन ( क, ख, ग, घ)

वाक्यसाफल्यायावश्यं अपूर्वं कल्प्ये भावार्थाधिकरणन्यायेन धात्वर्थादेव तत्कल्पनं न्याय्यम् । तस्मादवघातादपूर्वं व्रीहयश्च तदर्था इति पूर्वपक्षं कृत्वा, भवेदेतत् यदि अपूर्वं कल्प्येत, न तु एवं । सामर्थ्यपर्यालोचनया तुषविमोकद्वारा पुरोडशनिर्वर्तनस्य दृष्टप्रयोजनस्य लाभात् । न च वाक्यवैय्यर्थ्यम् । [1]नियमादृष्टस्वीकारात् । तस्मात् व्रीह्यर्थोऽवघात इति सिद्धान्तितं भेदलक्षणे "तानि द्वैधं गुणप्रधानभूतानी"ति आद्यपादीय चतुर्थाधिकरणे ।

अत्र यथा व्रीहीनिति शेषत्वबोधन्यां श्रुतौ विद्यमानायामपि तदनादरेण सामर्थ्यालोचनेनैवावघातस्य व्रीहिशेषतोक्ता तथा प्रकृतेऽपीत्यर्थः ।। छ ।।

**गृहं सम्मार्ष्टि इत्यत्र गृहैकत्वमविवक्षितमिति** । "गृहं सम्मार्ष्टि" इत्यत्र किं एकस्य गृहस्य सम्मार्गः किं वा सर्वेषामिति संशये उपादेयगतायाः इव उद्देश्यगतायाः अपि संख्यायाः श्रुतिबलेन विवक्षितत्वात् एकस्यैव सम्मार्गः इति पूर्वपक्षं प्रापय्य, किं एकत्वस्य उद्देश्यगतत्वेन विवक्षितत्वं किं वा विधेयत्वेन । नाद्यः। गृहस्यापि उद्देश्यत्वेन गृहं सम्मार्ष्टि, एकं सम्मार्ष्टि इति प्रत्युद्देश्यं वाक्यपरिसमाप्ते वाक्यभेदः । न द्वितीयः । सम्मार्गस्यापि विधेयत्वेन गृहं संमृज्यात्, स चैक इति [2]विधिभेदात् वाक्यभेदः। सम्मार्गक्रियाकर्मत्वस्य एकत्वस्य च प्रत्ययार्थतया युगपत् गृहसंबन्धात् नोद्देश्य-गृहविशेषणम् । विभक्तिनिर्दिष्टत्वाच्च, न विधेयसम्मार्गविशेषणत्वम् । तस्मात् एकत्वस्य विवक्षासंभवात् सर्वेषां सम्मार्ग इति सिद्धान्तितं शेषलक्षणे एकत्वयुक्तं एकस्य श्रुतिसंयोगात् इति आद्यपादीय सप्तमाधिकरणे । अत्र यथा गृहैकत्वमुद्दिश्य विशेषणत्वादविवक्षितं तथा [3]प्रकृतेऽपीत्यर्थः ।। छ ।।

---

[1] दृष्टानुनिष्पादिनो नियः- (क, ख, ग, घ, ङ)

[2] विधेय (क, ख, ग, घ, ङ)

[3] न तथा पादैकत्वमित्यर्थः (क, ख, ग, घ, ङ)

**यथा च पशुना यजेत इत्यत्र पश्वैकत्ववत् विधेयगतत्वादेकत्वे विवक्षितेति ।** पशुना यजेतेत्यत्र किं एकत्वं [1]अयज्ञाङ्गं अविवक्षितं, किं वा यज्ञांगं विवक्षितमिति संशये समानपदश्रुत्या पश्वङ्गत्वावगमात् वाक्यलभ्यपदान्तरोपात्तयागाङ्गत्वायोगात् [2]अयज्ञाङ्गत्वमविवक्षितमिति पूर्वपक्षं प्रापय्य, समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि सन्निहितेन [3]प्रधानकारकेणावरुद्धं एकत्वं प्रातिपदिकार्थं पशुमनादृत्य क्रियाङ्गमवगम्यमानं वाक्यसमर्पितेन क्रियाविशेषेण संवन्ध्य, पश्चादरुणैकहायनी न्यायेन पशुना विशेषणत्वेनार्थात् संबध्यते । तादर्थ्यं तु यज्ञं प्रत्येवेति विवक्षितमेकत्वमिति सिद्धान्तितं प्रयुक्तिलक्षणे "तत्रैकत्वमयज्ञाङ्गं, अर्थगुणभूतत्वादि"ति आद्यपादीय पञ्चमाधिकरणे । अत्र पशोः विधेयत्वेन तद्गतमेकत्वं यथा विवक्षितं तथा पादैकत्वमपीति भावः ।। छ ।।

**यथा "पौर्णमास्यां पौर्णमास्या यजेते"त्यादौ सप्तम्यन्तः "पौर्णमासी" शब्दः काले मुख्यः । तृतीयान्तस्तु तत्सम्बन्धिनि कर्मणि अमुख्य इति ।** दर्शपूर्णमासयोः विभज्य पर्वद्वये प्रयुज्यमानयोः किं यागाङ्गानि तन्त्रं उत प्रतित्रिकर्मा[4]वर्तनं इति संशये एकफलत्वात् षण्णामपि यागानां एकोपक्रमा[5]वसानकत्वावगमात्, सकृदनुष्ठितानि अङ्गानि सर्वेषामुपकुर्वन्तीति पूर्वपक्षं प्रापय्य, षण्णां एकफलत्वेन प्रयोगैक्यावगमेऽपि वाचनिक[6]कालभेदेन प्रयोगभेदो भवति । "पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायां अमावास्य यजेते"ति वचनाभ्यां पौर्णमास्यमावास्या करणकः फलार्थो यः व्यापारः प्रत्ययवाच्यः तदङ्गत्वेन पौर्णमास्यमावास्या[7]यागौ

---

[1] यज्ञाङ्गं अविवक्षितं (ङ)

[2] अयज्ञाङ्गमेकत्वं (ङ) - पात्तयागाङ्गत्वात् तद्यागांगत्वादेकत्वं (ख, ग, घ)

[3] प्रधानभूतेन करणेन (क)

[4] आवर्तेरन् (क, ख, ग, घ, ङ)

[5] अवसानत्व- (क, ख, ग, घ, ङ)

[6] कालभेदेन न प्रयोग- (ख, ग)

[7] कालौ (क, ख, ग, घ, ङ)

विधीयेते । तेन अङ्गानामपि तत्तकरणकफलक्रियान्तर्गतानां तत्तत्कालता विहिता भवति। तस्मात् प्रतित्रिकमङ्गानि आवर्तेरन्निति सिद्धान्तितं तन्त्रलक्षणे "इष्टिराजसूयचातुर्मास्येषु चैककर्म्यात् अङ्गानां तन्त्रता स्यादि"ति द्वितीयपादीय द्वितीयाधिकरणे । अत्रत्यन्यायेन यथा सप्तम्यन्तपौर्णमासीशब्दः काले मुख्यः तृतीयान्तस्तु तत्संबन्धिनि गौणः तथा प्रकृतेऽपीत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां छन्दोऽधिकरणन्यायमालासंग्रहः समाप्तः।।**

## ।। ओं प्राणस्तथानुगमात् ओं ।।

**दृष्टं हि "दर्शपूर्णमासाभ्यां यजेते"त्यादौ यजेः प्रवृत्त दर्शपूर्णमासानामनुसारेण षड्यागमात्रपरत्वमिति** । "दर्शपूर्णमासाभ्यां यजेते"त्यत्र किं सर्वेषां यागानां [1]प्राधान्यं उत आग्नेयादीनां षण्णां एवेति संशये, नामधेयं तावत् आख्यातानुसारित्वात् यत्राख्यातं तत्रैव वर्तते । आख्यातं चाविशेषात् सन्निहितान् सर्वान् यागान् प्रयाजादीन् परामृशतीति सर्वेषां प्राधान्यमिति पूर्वपक्षं प्रापय्य, तत्र असिद्धार्थस्य नामधेयस्य आख्यातपारतन्त्र्येऽपि प्रसिद्धार्थस्यास्वातन्त्र्यं अस्त्येव । दर्शपूर्णमासाभ्यामित्येतत् षण्णां यागानां उत्पत्तौ कालसंयोगात् विद्वद्वाक्यद्वयेन त्रिकद्वयसंपादनात् प्रसिद्धार्थम् । तस्मादत्र आख्यातस्यैव नामपारतन्त्र्यात् षण्णामेव प्राधान्यम् । समिदादीनां तु तदङ्गत्वमिति सिद्धान्तितं प्रयुक्तिलक्षणे "दर्शपूर्णमासयोरिज्या प्राधान्यमविशेषादि"ति तुरीयपादीयैकादशाधिकरणे । अत्रत्यन्यायेन फलवाक्यस्थस्य यजेः विद्वद्वाक्यप्रवृत्तनामानुसारेण यथा षड्यागपरत्वं दृष्टं तथा प्रकृतेऽपीत्यर्थः ।।

**अन्यथा राजसूये यजेतेतिवत् सन्निहित सर्वयागपरः स्यादिति ।**

---

[1] फलसम्बन्धात् प्राधा- (क)

"राजा स्वाराज्यकामो राजसूयेन यजेते"त्यत्र किं अनुमत्यादीनां यागानां विदेवनादीनामयागादीनां च फलसम्बन्धेन प्राधान्यं उत यागानामेवेति संशये राजसूयशब्दस्याप्रसिद्धार्थत्वेऽपि तृतीयान्ततया फल[1]साधनत्वावगमात्, प्रकृतानां फलापेक्षाणां सर्वेषां यागायागरूपाणां कर्मणां नामधेयत्वमिति अध्यवसीयते । यजेश्च छत्रिन्यायेन तेषामेव परामर्शः । अतः सर्वेषां प्राधान्यमिति पूर्वपक्षं प्रापय्य, भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसम्बन्धावगमात्, नामार्थस्यातथार्थत्वात्, यजेश्च [2]यागमात्रवचनत्वात् तत्सामानाधिकरण्येन राजसूयशब्दस्य तन्नामत्वावगमात् तेषामेव फलसंबन्धात् प्राधान्यम् । विदेवनादीनामयागरूपाणां फलवदफलन्यायेन तदङ्गत्वमिति सिद्धान्तितं प्रयुक्तिलक्षणे "प्रकरणशब्दसाम्यात् चोदनानामनङ्गत्वमि"ति चतुर्थपादीय आद्याधिकरणे । अनेन न्यायेन यथा राजसूयवाक्यस्थस्य यजेः प्रकृतसर्वयागपरता तथा दर्शपूर्णमासवाक्यस्थस्यापि यजेः [3]प्रवृत्तनामानुसारेण संकोच अनंगीकारे सर्वयागपरता स्यादित्यर्थः ।

**"यथा वत्समालभेत" इत्यादि** । अग्निहोत्रप्रकरणे दोहाधिकारे श्रूयते "वत्समालभेते"ति । अत्र किं यागविधिः किं वा संस्कारकर्मविधिरिति संशये, "श्वेतमालभेते"तिवत् सत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भवत् सामान्यात् यागविधिरिति पूर्वपक्षं प्रापय्य, स्पर्शमात्ररूपस्य आलम्भस्य लोकेऽपि दृष्टत्वेन यागमन्तरेणानुपपत्यभावात् गोदोहनादिगुणकर्मप्रायपाठात् [4]स्वगुणकर्मैति सिद्धान्तितं भेदलक्षणे "विशये प्रायदर्शनादि"ति तृतीयपादीय षष्ठाधिकरणे । तद्वदत्रापि प्राणोऽन्यो विष्णुर्वेति विशये चक्षुरादिप्रायपाठादप्रधानो मुख्यप्राण एव भवेदित्यर्थः । स्फष्टो वाक्यार्थः ।। छ ।।

---

[1] साधनपरत्व (क, ख, ग, घ, ङ)

[2] मासमात्र (ख, ग, घ, ङ)

[3] प्रकृत (क)

[4] संस्काराख्यं गुण (क)

**येन मासाग्निहोत्रे अग्निहोत्रशब्दस्येव विष्णौ प्राणशब्दस्य गौणता स्यादिति।** मासमग्निहोत्रं जुहोतीत्यत्र किं अग्निहोत्रशब्दो नैयमिकाग्निहोत्र-धर्माणामतिदेशकः किं वा नेति संशये उभयत्रापि सामानाधिकरण्येन निर्देशा[1]विशेषात् नामधेयत्वेन मुख्यत्वं, न धर्मातिदेश इति पूर्वपक्षं कृत्वा, एकत्र मुख्यत्वेऽन्यत्र गौणत्वेनाप्युपपत्तौ नोभयत्रशक्तिकल्पनं न्याय्यम् । न चागृह्यमाणविशेषणत्वम् । नैय्यमिकेऽग्नि-होत्रमस्मिन्निति प्रवृत्तिनिमित्तावगतिसंभवात् । इतरत्र [2]तदनुभवाच्च, विशेषावगमाच्च । अतो नैय्यमिक एवायं शब्दः मुख्यः । अन्यत्र तु तत्सादृश्य-विधित्सया गौणं प्रयुज्यते । तस्मात् [3]धर्मातिदेश इति सिद्धान्तितं सामान्यातिदेशलक्षणे उक्तं "क्रियाभिधानं तच्छ्रुतौ तदन्यत्र विधिप्रवेशादि"ति तृतीयपादीय आद्याधिकरणे । अत्रत्येन न्यायेन यथा अग्निहोत्रशब्दो मासाग्निहोत्रे गौणः न तथा विष्णौ प्राणशब्दः इत्यर्थः ।। छ ।।

**यथा प्राभाकरमते चोदना प्रामाण्यनिर्णयस्य आद्याध्यायमात्रसाध्यत्वेऽपि अवान्तरनिर्णयभेदादधिकरणभेद इति ।** आचार्यमते श्रुतिस्मृत्यादिसाधारण्येन धर्मप्रमाणविचारः प्रथमाध्यायार्थः । गुरुमते चोदनामात्रप्रामाण्यविचारः इति व्यवस्था। तत्र सामान्येन चोदना प्रामाण्यनिर्णयस्य आद्या[4]ध्यायमात्रसाध्यत्वेऽपि अर्थवादाधिकरणे सापेक्षत्वमूलकाप्रामाण्यशङ्का निरासकः प्रमाण्यनिर्णयः । विधिसंवन्निगदाधिकरणेन तु एकेनैव वाक्येन [5]संबन्धद्वयविधानाच्छक्तिमूलकाप्रामाण्य-शङ्का निरासपूर्वकः तन्निर्णय इति अवान्तरनिर्णयभेदात् यथा अधिकरणभेदः तथेत्यर्थः ।

---

[1] विशेषात् (ख, ग, घ)

[2] तदभावाच्च (क)

[3] धर्मातिदेशक (ख, ग, घ, ङ)

[4] अध्यायार्थत्वेऽपि (क, ख, ग, घ, ङ)

[5] औदुम्वरत्वसंबन्धफलसंवन्धरूप (क)

**यथा वा मतान्तर "ऊर्जः पशूनाप्नोति", "न स पापं श्लोकं श्रुणोति" इत्यादेः अर्थवादत्वनिर्णयस्य औदुम्बराधिकरणपर्णमय्यधिकरणसाध्यत्वेऽपि अवान्तरनिर्णयभेदादधिकरणभेद इति।** "औदुम्बरो यूपो भवति । ऊर्ग्वा उदुम्बर ऊर्क्पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जावरुध्या" इति । तत्र "ऊर्जावरुध्या" इत्येतत् औदुम्बरतायाः फलसमर्पकं उत अर्थवाद इति संशये अवरुध्या इति तादर्थ्यचतुर्थी श्रुत्या ऊर्क् शब्दितानां पशूनां साध्यत्वमवगम्यते । लक्षणया च प्राशस्त्यफलपरत्वे च अर्थवत्वात्वम् । [1]आनर्थक्यं च अर्थवादत्वे । साध्यस्य साधना-पेक्षित्वात् । सन्निधौ आम्नातं औदुम्बरत्वमसत्यपि विधौ साधनत्वेनावगम्यते । न च प्रवृत्यर्थं विध्यपेक्षा । साधनत्वावगमादेव तत्सिद्धेरिति पूर्वपक्षं प्रापय्य, विध्यभावे उदुम्बरता भावनाक्षिप्तभावना, सै व [2]भाव्या स्यात् । न फलं सन्निकृष्टा च सा । विप्रकृष्टं च फलम् । अतो न फलसंबन्धः । यद्यपि ऊर्जावरुध्या इत्यनेन शक्यते फलमभिधातुम्। तथापि अव्यवहितस्य औदुम्बरत्वस्य फलवचनमनर्थकमिति अर्थवादतः एव विधिरुन्नेयः । तस्मादर्थवाद इति सिद्धान्तितं प्रमाणलक्षणे, विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकमिति द्वितीयपादीय द्वितीयाधिकरणे ।। छ ।।

तथा "यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति" इति । अत्र पर्णमयीत्वं किं क्रत्वर्थं उत पुरुषार्थमिति । [3]क्रत्वर्थजुहूद्देशेन विधीयमानतया क्रत्वर्थं चेति द्वेधा पूर्वपक्षं प्रापय्य, संयोगपृथक्त्वा[4]भावेनोभयार्थत्वासंभवात् श्रुणोतीति वर्तमानापदेशात्, अपापश्लोकश्रवणस्य साध्यत्वाप्रतीतेः पुरुषार्थस्यापि असंभवात्

---

[1] आनर्थक्यं अर्थवादत्वम् । साध्यसाधनापेक्षित्वात् । (क)

[2] उदम्बरतायाः भाव्या (क)

[3] सन्दिग्धफलश्रवणात् पुरुषार्थमेवापद्वा क्रत्वर्थजुह्वनुवादेन विधानात् क्रत्वर्थे फलश्रवणात् पुरुषार्थं चेति दध्यादिवत् उभयार्थमिति द्वेधा

[4] -भावेन दध्यादिवत् उभयार्थत्वाभावात् (क)

क्रत्वर्थमेव । तच्छ्लोकश्रवणं, तु अर्थवादः इति सिद्धान्तितं प्रयुक्तिलक्षणे "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवाद" इति तृतीयपादीयाद्याधिकरणे ।

अत्र उभयत्रापि "ऊर्जोऽवरुध्यै न स पापं श्लोकं शृणोती"ति, अनयोः अर्थवादत्वनिर्णयाविशेषेऽपि औदुम्बराधिकरणे उदुंबरतायाः विध्यभावात् साधानत्वासंभवमूलकोऽर्थवादत्वनिर्णयः । पर्णमय्याधिकरणे तु अपापश्लोकश्रवणात् वर्त्तमानापदेशात् साध्यत्वासंभवमूलकोऽर्थवादत्वनिर्णयः इति अवान्तरनिर्णय-भेदादधिकरणभेदः तथेहापीत्यर्थः ।

ऊर्जं पशूनाप्नोतीत्यत्र[1] ऊर्जोऽवरुध्या इत्यस्य उपलक्षणार्थं, तस्यैवाधिकरणविषयत्वात् ऊर्जं पशूनाप्नोतीत्यस्य पक्षद्वयेऽपि अर्थवादत्वात् ।

**इति श्रीविजयीन्द्रार्यकृत चन्द्रिकान्यायमालायां प्रथमाध्यायस्य प्रथमपादस्य न्यायमालासंग्रहः समाप्तः ।।**

## ।। ओं सर्वत्र प्रसिद्धोपदेशात् ओं ।।

**पशुशब्दस्य तद्विशेष छागवाचित्ववत् आदित्यश्रुत्या चक्षुर्मयत्वादिजीवलिङ्गानां तद्विशेषादित्यपर्यवसायितेति** । अग्नीषोमीयं पशुमालभेतेत्यत्र किं यः कश्चित् पशुरालब्धव्यः उत छाग एवेति संशये चोदनायाः

---

[1] ऊर्जं पशूनाप्नोतीत्यस्य न स पापँ श्लोकँ शृणोतीत्यनेन तुल्यविचारत्वेनावश्यकत्वात्, प्रसिद्धशाखायामेतावदेवेत्युदाहृतमिति द्रष्टव्यम् ।

विशये प्रायदर्शनादिति, विशये संशये सति प्रायशब्दितसाहचर्यदर्शनान्निर्णय इति जैमिन्याचार्यैरुक्तमित्यर्थः । अधिकरणं तु प्रागनुक्रान्तम् ।

**इति श्रीमद्विजयीन्द्रतीर्थश्रीपादविरचितायां चन्द्रिकान्यायमालायां प्रथमाध्यायस्य प्रथमपादस्य न्यायमालासंग्रहः समाप्तः ।।**

**सामान्यमात्रपर्यवसायितया कस्यचित् पशोरालम्भः । न च छागस्य "वपाया मेदसोऽनुब्रूही"ति मन्त्रवशात् विशेषपरत्वम् । तस्य चोदितार्थप्रकाशनार्थतया पारतन्त्र्यात् । भिन्नवाक्यतया "तेजो वै घृतमि"ति घृताद्यर्थवादवैलक्षण्याच्च । अतः मन्त्रगतछागशब्दो निरुक्तादिवशेन पशुमात्रे यौगिकः, पाक्षिकानुवादो वेति पूर्वपक्षं प्रापय्य, चोदनाप्रतिपन्नस्य सामान्यस्य प्रतिव्यक्तिसमाप्तेः, छागेऽपि अवैकल्यात् रूढिप्राबल्येन योगासंभवात्, नित्याम्नातस्य पाक्षिकत्वायोगाच्च छागस्यैव आलम्भनमिति** सिद्धान्तितमधिकारलक्षणे "पशुचोदनायाः अनियमो विशेषादि"त्यधिकरणे ।।

अत्र यथा पशुशब्दस्य तद्विशेषे छाग एव पर्यवसानं, तथा चक्षुर्मयत्वादिजीवलिङ्गानां आदित्य एव पर्यवसानमित्यर्थः । श्रुतेरपि सामान्यरूपायाः विशेषश्रुत्यनुरोधित्वं न्याय्यम्, किमु वक्तव्यं तादृशानां लिङ्गानां तदनुरोधित्वमिति भावः।

**एतच्छब्दस्याथैषज्योतिरित्यादाविव वक्ष्यमाणजीवरूपचक्षुर्मयादि-परत्वादिति** । संज्ञाधिकरणमनुक्रान्तम् । तत्र यथा एतच्छब्दस्य प्रस्तूयमान-यागान्तरपरत्वं, तथा प्रकृतेऽपीत्यर्थः । तच्छब्दस्य चाथैष ज्योतिरित्यादौ अथशब्दादेरिवात्र प्रकरणविच्छेदकस्याभावेन पूर्वोक्तप्राज्ञात्मपरत्वादिति । युक्तं अथैषज्योतिरित्यादौ ज्योतिष्टोमप्रकरणविच्छेदकस्याथशब्दस्य श्रवणात् एतच्छब्दस्य प्रस्तूयमानपदार्था[1]न्तरपरत्वम् । न तथात्र प्रकरणविच्छेदकं पश्यामः । येनान्यप्रस्तूय-मानपरत्वं स्यादिति भावः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां सर्वगतत्वाधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

[1] यागान्तर (क), यथार्थान्तर (ख, ग, घ, ङ)

## ।। ओं अत्ता चराचरग्रहणात् ओं ।।

**दर्शपूर्णमासप्रकरणात्** "पूषा प्रपिष्ठभाग" **इत्युक्तपौष्णं पेषणमिव विष्णुप्रकरणात् तददितेरदितित्वं इत्यादिकं उत्कृष्यतामिति** । "पौष्णं पेषणं विकृतौ चोदनात् प्रकृतावि"ति [1]तार्त्तीये प्राप्ते सूत्रे दर्शपूर्णमासप्रकरणाम्नातमपि पौष्णं पेषणं, प्रकरणे [2]पूष्णो अभावात्, यत्र पूषा, तत्रोत्कृष्यत इत्युक्तम् । तद्वददितेरदितित्वं इत्यादिकमपि [3]उत्कृष्यतामित्यर्थः ।

**यथा** "अभिक्रामं जुहोती"ति **दर्शपूर्णमासप्रकरणे श्रुतस्याभिक्रमणस्य तदङ्गप्रयाजान्वयार्थं प्रयाजस्यावान्तरप्रकरणं तथा विष्णुप्रकरणे अदितेरवान्तरप्रकरणमस्त्विति** । "अभिक्रामं जुहोती"ति होमानुवादेन विधीयमानमभि-क्रमणं किं प्राकरणिकसर्वहोमाङ्गं उत प्रयाजहोमाङ्गमिति संशये [4]उद्भूतफलभावेन इत्थंभावतिरोधानेन अङ्गानां [5]इत्थंभावानुत्थानात्, उत्थाने च तेषां अव्यवस्थया परस्परं अंगांगिभावापत्तेः । प्रयाजानामवान्तरप्रकरणाभावात्, सन्निधेश्च दौर्बल्यात्, प्रकरणेन दर्शपूर्णमासभावना संबन्धात्, तदीयसकलहोमाङ्गमभिक्रमणमिति पूर्वपक्षं प्रापय्य, "समानयत उपभृतः यो वै प्रयाजानां मिथुनं वेदे"ति [6]अभिमतप्रयाजसंबन्धिनः पशूनामभिक्रमणस्यान्यत्रान्वयायोगादस्ति प्रयाजानामवान्तरप्रकरणम् । संदंशस्यैव नियामकत्वात् । न च अव्यवस्थाप्रसंगः । [7]अन्त्यमतत्प्रकरणात् प्रबलेनावान्तर-

---

[1] तृतीयाध्याय तृतीयपादीय सूत्रे (क)

[2] पूषोऽभावात् (क, ख, ग, घ, ङ)

[3] विप्रकरणादुत्कृष्य यत्रादितिः तत्र निवेश्यतामित्यर्थः (क)

[4] उद्भूतफलभावनेत्थंभावाकाङ्क्षाविरोधेन (क, घ, ङ)

[5] इत्थंभावाकाङ्क्षानु-(क)

[6] अभिमतं प्रयाजसंबन्धिनं पशूना (क, ख, ग, घ, ङ)

[7] अत्यामरप्रक- (ख, ग, घ, ङ), अतो महाप्रक- (क)

**सामान्यमात्रपर्यवसायितया कस्यचित् पशोरालम्भः । न च छागस्य "वपाया मेदसोऽनुब्रूही"ति मन्त्रवशात् विशेषपरत्वम् । तस्य चोदितार्थप्रकाशनार्थतया पारतन्त्र्यात् । भिन्नवाक्यतया "तेजो वै घृतमि"ति घृताद्यर्थवादवैलक्षण्याच्च । अतः मन्त्रगतछागशब्दो निरुक्तादिवशेन पशुमात्रे यौगिकः, पाक्षिकानुवादो वेति पूर्वपक्षं प्रापय्य, चोदनाप्रतिपन्नस्यं सामान्यस्य प्रतिव्यक्तिसमाप्तेः, छागेऽपि अवैकल्यात् रूढिप्राबल्येन योगासंभवात्, नित्याम्नातस्य पाक्षिकत्वायोगाच्च छागस्यैव आलम्भनमिति** सिद्धान्तितमधिकारलक्षणे "पशुचोदनायाः अनियमो विशेषादि"त्यधिकरणे ।।

अत्र यथा पशुशब्दस्य तद्विशेषे छाग एव पर्यवसानं, तथा चक्षुर्मयत्वादिजीवलिङ्गानां आदित्य एव पर्यवसानमित्यर्थः । श्रुतेरपि सामान्यरूपायाः विशेषश्रुत्यनुरोधित्वं न्याय्यम्, किमु वक्तव्यं तादृशानां लिङ्गानां तदनुरोधित्वमिति भावः।

**एतच्छब्दस्याथैषज्योतिरित्यादाविव वक्ष्यमाणजीवरूपचक्षुर्मयादि-परत्वादिति** । संज्ञाधिकरणमनुक्रान्तम् । तत्र यथा एतच्छब्दस्य प्रस्तूयमान-यागान्तरपरत्वं, तथा प्रकृतेऽपीत्यर्थः । तच्छब्दस्य चाथैष ज्योतिरित्यादौ अथशब्दादेरिवात्र प्रकरणविच्छेदकस्याभावेन पूर्वोक्तप्राज्ञात्मपरत्वादिति । युक्तं अथैषज्योतिरित्यादौ ज्योतिष्टोमप्रकरणविच्छेदकस्याथशब्दस्य श्रवणात् एतच्छब्दस्य प्रस्तूयमानपदार्था[1]न्तरपरत्वम् । न तथात्र प्रकरणविच्छेदकं पश्यामः । येनान्यप्रस्तूय-मानपरत्वं स्यादिति भावः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां सर्वगतत्वाधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

[1] यागान्तर (क), यथार्थान्तर (ख, ग, घ, ङ)

## ।। ओं अत्ता चराचरग्रहणात् ओं ।।

**दर्शपूर्णमासप्रकरणात्** "पूषा प्रपिष्ठभाग" **इत्युक्तपौष्णं पेषणमिव विष्णुप्रकरणात् तददितेरदितित्वं इत्यादिकं उत्कृष्यतामिति** । "पौष्णं पेषणं विकृतौ चोदनात् प्रकृतावि"ति [1]तार्त्तीये प्राप्ते सूत्रे दर्शपूर्णमासप्रकरणाम्नातमपि पौष्णं पेषणं, प्रकरणे [2]पूष्णो अभावात्, यत्र पूषा, तत्रोत्कृष्यत इत्युक्तम् । तद्वददितेरदितित्वं इत्यादिकमपि [3]उत्कृष्यतामित्यर्थः ।

**यथा "अभिक्रामं जुहोती"ति दर्शपूर्णमासप्रकरणे श्रुतस्याभिक्रमणस्य तदङ्गप्रयाजान्वयार्थं प्रयाजस्यावान्तरप्रकरणं तथा विष्णुप्रकरणे अदितेरवान्तरप्रकरणमस्त्विति** । "अभिक्रामं जुहोती"ति होमानुवादेन विधीयमानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गं उत प्रयाजहोमाङ्गमिति संशये [4]उद्भूतफलभावेन इत्थंभावतिरोधानेन अङ्गानां [5]इत्थंभावानुत्थानात्, उत्थाने च तेषां अव्यवस्थया परस्परं अंगांगिभावापत्तेः । प्रयाजानामवान्तरप्रकरणाभावात्, सन्निधेश्च दौर्बल्यात्, प्रकरणेन दर्शपूर्णमासभावना संवन्धात्, तदीयसकलहोमाङ्गमभिक्रमणमिति पूर्वपक्षं प्रापय्य, "समानयत उपभृतः यो वै प्रयाजानां मिथुनं वेदे"ति [6]अभिमतप्रयाजसंबन्धिनः पशूनामभिक्रमणस्यान्यत्रान्वयायोगादस्ति प्रयाजानामवान्तरप्रकरणम् । संदंशस्यैव नियामकत्वात् । न च अव्यवस्थाप्रसंगः । [7]अन्त्यमतत्प्रकरणात् प्रवलेनावान्तर-

---

[1] तृतीयाध्याय तृतीयपादीय सूत्रे (क)

[2] पूषोऽभावात् (क, ख, ग, घ, ङ)

[3] विप्रकरणादुत्कृष्य यत्रादितिः तत्र निवेश्यतामित्यर्थः (क)

[4] उद्भूतफलभावनेत्थंभावाकाङ्क्षाविरोधेन (क, घ, ङ)

[5] इत्थंभावाकाङ्क्षानु-(क)

[6] अभिमतं प्रयाजसंबन्धिनं पशूना (क, ख, ग, घ, ङ)

[7] अत्यामरप्रक- (ख, ग, घ, ङ), अतो महाप्रक- (क)

सामान्यमात्रपर्यवसायितया कस्यचित् पशोरालम्भः । न च छागस्य "वपाया मेदसोऽनुब्रूही"ति मन्त्रवशात् विशेषपरत्वम् । तस्य चोदितार्थप्रकाशनार्थतया पारतन्त्र्यात् । भिन्नवाक्यतया "तेजो वै घृतमि"ति घृताद्यर्थवादवैलक्षण्याच्च । अतः मन्त्रगतछागशब्दो निरुक्तादिवशेन पशुमात्रे यौगिकः, पाक्षिकानुवादो वेति पूर्वपक्षं प्रापय्य, चोदनाप्रतिपन्नस्य सामान्यस्य प्रतिव्यक्तिसमाप्तेः, छागेऽपि अवैकल्यात् रूढिप्राबल्येन योगासंभवात्, नित्याम्नातस्य पाक्षिकत्वायोगाच्च छागस्यैव आलम्भनमिति सिद्धान्तितमधिकारलक्षणे "पशुचोदनायाः अनियमो विशेषादि"त्यधिकरणे ।।

अत्र यथा पशुशब्दस्य तद्विशेषे छाग एव पर्यवसानं, तथा चक्षुर्मयत्वादिजीवलिङ्गानां आदित्य एव पर्यवसानमित्यर्थः । श्रुतेरपि सामान्यरूपायाः विशेषश्रुत्यनुरोधित्वं न्याय्यम्, किमु वक्तव्यं तादृशानां लिङ्गानां तदनुरोधित्वमिति भावः।

**एतच्छब्दस्याथैषज्योतिरित्यादाविव वक्ष्यमाणजीवरूपचक्षुर्मयादिपरत्वादिति** । संज्ञाधिकरणमनुक्रान्तम् । तत्र यथा एतच्छब्दस्य प्रस्तूयमानयागान्तरपरत्वं, तथा प्रकृतेऽपीत्यर्थः । तच्छब्दस्य चाथैष ज्योतिरित्यादौ अथशब्दादेरिवात्र प्रकरणविच्छेदकस्याभावेन पूर्वोक्तप्राज्ञात्मपरत्वादिति । युक्तं अथैषज्योतिरित्यादौ ज्योतिष्टोमप्रकरणविच्छेदकस्याथशब्दस्य श्रवणात् एतच्छब्दस्य प्रस्तूयमानपदार्था[1]न्तरपरत्वम् । न तथात्र प्रकरणविच्छेदकं पश्यामः । येनान्यप्रस्तूयमानपरत्वं स्यादिति भावः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां सर्वगतत्वाधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

[1] यागान्तर (क), यथार्थान्तर (ख, ग, घ, ङ)

## ।। ओं अत्ता चराचरग्रहणात् ओं ।।

**दर्शपूर्णमासप्रकरणात् "पूषा प्रपिष्ठभाग" इत्युक्तपौष्णं पेषणमिव विष्णुप्रकरणात् तददितेरदितित्वं इत्यादिकं उत्कृष्यतामिति** । "पौष्णं पेषणं विकृतौ चोदनात् प्रकृतावि"ति [1]तार्त्तीये प्राप्ते सूत्रे दर्शपूर्णमासप्रकरणाम्नातमपि पौष्णं पेषणं, प्रकरणे [2]पूष्णो अभावात्, यत्र पूषा, तत्रोत्कृष्यत इत्युक्तम् । तद्वददितेरदितित्वं इत्यादिकमपि [3]उत्कृष्यतामित्यर्थः ।

**यथा "अभिक्रामं जुहोती"ति दर्शपूर्णमासप्रकरणे श्रुतस्याभिक्रमणस्य तदङ्गप्रयाजान्वयार्थं प्रयाजस्यावान्तरप्रकरणं तथा विष्णुप्रकरणे अदितेरवान्तरप्रकरणमस्त्विति** । "अभिक्रामं जुहोती"ति होमानुवादेन विधीयमानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गं उत प्रयाजहोमाङ्गमिति संशये [4]उद्भूतफलभावेन इत्थंभावतिरोधानेन अङ्गानां [5]इत्थंभावानुत्थानात्, उत्थाने च तेषां अव्यवस्थया परस्परं अंगांगिभावापत्तेः । प्रयाजानामवान्तरप्रकरणाभावात्, सन्निधेश्च दौर्बल्यात्, प्रकरणेन दर्शपूर्णमासभावना संबन्धात्, तदीयसकलहोमाङ्गमभिक्रमणमिति पूर्वपक्षं प्रापय्य, "समानयत उपभृतः यो वै प्रयाजानां मिथुनं वेदे"ति [6]अभिमतप्रयाजसंबन्धिनः पशूनामभिक्रमणस्यान्यत्रान्वयायोगादस्ति प्रयाजानामवान्तरप्रकरणम् । संदंशस्यैव नियामकत्वात् । न च अव्यवस्थाप्रसंगः । [7]अन्त्यमतत्प्रकरणात् प्रबलेनावान्तर-

---

[1] तृतीयाध्याय तृतीयपादीय सूत्रे (क)

[2] पूषोऽभावात् (क, ख, ग, घ, ङ)

[3] विप्रकरणादुत्कृष्य यत्रादितिः तत्र निवेश्यतामित्यर्थः (क)

[4] उद्भूतफलभावनेत्थंभावाकाङ्क्षाविरोधेन (क, घ, ङ)

[5] इत्थंभावाकाङ्क्षानु-(क)

[6] अभिमतं प्रयाजसंबन्धिनं पशूना (क, ख, ग, घ, ङ)

[7] अत्यामरप्रक- (ख, ग, घ, ङ), अतो महाप्रक- (क)

प्रकरणेनाभिक्रमणं प्रयाजहोमाङ्गमिति सिद्धान्तितं शेषलक्षणे "कर्तृगुणे तु कर्मसमवायात् वाक्यभेदः स्यादि"ति प्रथमपादीय नवमाधिकरणे । वाक्यार्थः स्पष्टः ।

**पूषादाविव नात्रास्ति बाधो, येन अपकृष्यतामिति** । युक्तं पौष्णपेषणस्य प्रकरणे सर्वथा अनन्वयात् [1]अत्रोत्कर्षः । प्रकृते तु प्रकरणेनानन्वयशङ्का, येनोत्कर्षः स्यादित्यर्थः । अवान्तरप्रक्रिया तु [2]सन्देहात् कल्प्यते । स च अभिक्रामं जुहोतीति वाक्येऽस्ति प्रकृते तन्नेति ।

अभिक्रमणवाक्यस्य उभयतः [3]प्रयाजादिसंवन्धस्य वाक्ये श्रवणात् संदंशेनावान्तरप्रकरणकल्पनं युक्तम् । प्रकृते तु न तादृश संदंशोऽस्ति । येनावान्तरप्रकरणं कल्प्येतेत्यर्थः ।।

**यदेनमधिनोत्तद्दध्नो दधित्वमित्यादिवदिति** । तैत्तरीयके दर्शपूर्णमासप्रकरणे ऐन्द्रे दध्नि दधिशब्दनिर्वचनार्थोऽयं अर्थवादः । एनमिन्द्रमधिनोत् [4]प्रीणयेदिति यत् तद्दध्नो तद्दध्नो दधित्वमित्यर्थः ।।

**यदाजिमीयुः तदाज्यानामाज्यत्वं इत्यादावपि दर्शनादिति**। छन्दोगब्राह्मणे ज्योतिष्टोम-प्रकरणे [5]बहिष्पवमानश्रुतपवमानस्तोत्रनामनिर्वचनार्थोऽयं अर्थवादः। एतानि स्तोत्राणि अवष्टभ्य देवा आजिं युद्धमीयुः प्राप्ताः तदेवाज्यानां स्तोत्राणां आज्यत्वमित्यर्थः ।।छ।।

**न चाबाधे प्रकरणादुत्कर्ष इति** अभिक्रमणस्यावान्तरप्रकरणं च, तस्य प्रयाजविषयैः वाक्यैः पूर्वं पश्चाच्च स दृष्टत्वात् । न चातृत्वं स्यादिति विषयै वाक्यैः

---

[1] अन्यत्रोत्कर्षः (ख, ग, घ, ङ)

[2] संदंशात् (क, ख, ग, घ, ङ)

[3] प्रयाजादिसंवन्धवाक्य (ख,ग, घ), प्रयाजादिसंबन्धिवाक्य (क, ङ)

[4] अप्रीण- (क, ख, ग, घ, ङ)

[5] बहिष्पवमानाषूत्तरभाविस्तोत्रनाम- (ख, ग, घ, ङ)

**सन्दंशोऽस्तीति** । न चाबाधेऽपि पूषादिवच्च । नात्रास्तीत्यादि प्रागुपन्यस्त श्लोकार्थव्याख्या । अभिक्रमणस्येति अवान्तरप्रक्रियात्वेन तत् श्लोकं व्याख्यायार्थः प्रागेवोक्तः ।।

**न वा प्रोद्गातृणामित्यत्रोद्गातृशब्दोऽन्तरङ्गभूतान्प्रस्तोत्रादीनिव षोडशर्त्विजो लक्षयति, येनात्राप्योदनशब्दः संहर्तृत्वमुपस्थापयेदिति** । अधिकरणं प्रागनुक्रान्तम् । एवमत्र एकस्तोत्रवचनसंबन्धादिः अन्तरङ्गभूतान् प्रस्तोत्रादीन् इव बहिरङ्गभूतान् षोडश ऋत्विजो यथोद्गातृशब्देन लक्षयति, तथोदनशब्दोऽपीत्यर्थः । लक्षणायां अन्तरंगोपस्थापनमेव न्याय्यमितिभावः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अतृत्वाधिकरणन्यायमालासंग्रहः समाप्तः।।**

## ।। ओं गुहां प्रविष्टावात्मानौ तद्दर्शनात् ओं ।।

**अन्यथा सप्तदशप्राजापत्यान् पशूनालभत इत्यादौ संख्यया: कर्मभेदो न स्यादिति** । सप्तदशप्राजापत्यान् पशूनालभत इत्यत्र किं सप्तदशपशुद्रव्यक एको यागः किं वा एकैकपशुद्रव्यकाः सप्तदशयागाः इति संशये, प्राजापत्यशब्देन देवतासंबन्धोपसर्जनद्रव्यमेव प्राधान्येन उच्यते । [1]न च यत्र प्राधान्यं तस्यैवार्थान्तरेण बहुत्वेन संवन्धात् उपसर्जनदेवता संबन्धस्य, तथा च बहुभिः पशुभिः व्यासज्यैकदेवता संबध्यते । द्रव्यदेवतासंबन्धैक्यात् एको यागः इति पूर्वपक्षं प्रापय्य, प्रथममेव प्रकृतिप्रत्ययोरन्वयात्, देवताविशिष्टमेव द्रव्यं प्रजापतिशब्देनाभिहितम् । पश्चात् विशिष्टेनैवरूपेण संख्यान्वयि स्यात् । तथा च भिन्नैः द्रव्यदेवतासंबन्धैः भिन्नाः एव यागाः कल्प्यन्ते । एवं च सति चोदकावगतं एकपशुनिष्पन्नैकादशावदानद्रव्यकत्वं

---

[1] यच्च प्रधानं तस्यैवार्थान्तरेण वहुत्वेन संवन्धो नोपसर्जनस्य देवतासंबन्धस्य (क), यच्च प्रधानं तस्यैवार्थान्तरेण बहुत्वेन संवन्धे नोपसर्जनदेवतासंवन्धस्य (ख,ग,घ)

**यागस्यानुग्रहीतं भवति । नान्यथेति सिद्धान्तितं भेदलक्षणे** "पृथक्त्व निवेशित्वात् संख्यया कर्मभेदः स्यादि"ति द्वितीयपादीय सप्तमाधिकरणे । यदि पिबन्ताविति द्वित्वसंख्यया ब्रह्मणि भेदो न स्यात् । तदा प्राजापत्यवाक्येऽपि संख्यया कर्मभेदो न स्यादित्यर्थः । किन्तु [1]संज्ञाधिकरणन्यायेनेत्यादि । संज्ञाधिकरणदाक्षायणयज्ञाधिकरणे प्रागनुक्रान्ते, न्यायद्वयस्य शङ्का परिहाराय उपयोगः प्रागेव दर्शितः ।। छ ।।

**न च गृहं सम्मार्ष्टी इत्यादाविव उद्देश्यविशेषणत्वात् संख्या न विवक्षितेति युक्तम् । ब्रह्मणि ऋतपानस्याप्राप्तत्वादिति ।** गृहैकत्वाधिकरणं प्रागनुक्रान्तम् । "उपांशु गृह्णाति ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाती"त्यादिना उत्पन्नानां गृहैर्यजेतेति होमसाधनत्वेन प्राप्तानां ग्रहाणां "गृहं सम्मार्ष्टि" इति सम्मार्गरूपसंस्कारविधानार्थमत्र गृहशब्देन उद्देशात् तद्गतसंख्या न विवक्षितेति वक्तुं युक्तम् । इह तु न तथा ब्रह्मणि, ऋतपानस्याप्राप्ततया विधेयत्वात् । किन्तु "पशुना यजेते"त्यादाविव संख्या विवक्षैव युक्तेत्यर्थः । गृहैकत्वस्य वाक्यभेदापत्त्या विध्यसंस्पर्शोऽपि प्रत्येकं गृहेषु एकत्वस्य स्वरूपतः सत्वेनानुवादवत् प्रकृते ब्रह्मणि द्वित्वस्य स्वरूपतः एवाभावेनानुवादकत्वासंभवाच्च । [2]एकत्वानुविधेयान्वयोपयोगि उद्देश्यकोटिप्रवेशे गृहस्यापि उद्देश्यत्वेन प्रत्युद्देशं [3]वाक्यावृत्या वाक्यभेदः । विधेयकोटिप्रवेशे सम्मार्गस्यापि विधेयत्वेन विधेयभेदात् वाक्यभेद इति वाक्यभेदापत्या विध्यसंस्पर्शोऽपि स्वरूपतो गृहेषु प्रत्येकं सत्वात् यथानुवादो घटते, न तथा ब्रह्मणि द्वित्वानुवादो घटत इत्यर्थः ।

---

[1] संख्याधि- (क)

[2] एकत्वस्य विधेयान्वयाय उद्देश्यकोटिप्रवेशे (क, ख, ग, घ)

[3] वाक्यं इति व्याख्या गृहं संमृज्यादेकं संमृज्यादिति वाक्यभेदः (क), वाक्यं इति व्याख्या (ङ), वाक्यपरसमस्या (ख, ग, घ)

येन "अग्नये जुष्टमि"ति मन्त्रस्य सौर्यातिदेशतः प्राप्तस्य सूर्यायेत्यूहवत् द्विवचनान्तस्यैकवचनान्ततया ऊहः स्यादिति । मन्त्रोहाधिकरणं प्रागनुक्रान्तम् । "अग्नये जुष्टं निर्वपामी"ति । दर्शपूर्णमासिकाग्नये हविर्निर्वापमन्त्रस्य "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" इति विहिते सौर्ययागे आग्नेयवत् सौर्यः कर्तव्यः इति अतिदेशतः प्राप्तस्य यथा सूर्यायेति प्रकृतिमात्रे ऊहः तथा पिबन्ताविति द्विवचनान्तस्य पिबन्तमिति एकवचनरूपप्रत्ययमात्र [1]ऊहो न स्यादित्यर्थः । न चैकस्मिन् यागे समिधो यजतीत्यादौ वहुवचनान्त समित्पदमिवेत्यादि । प्रागनुक्रान्ते अभ्यासाधिकरणे समिदादिपदानां यागनामत्वं उक्तं, एकयागवाचिनि समिच्छब्दे बहुवचनवत् एकब्रह्मवाचिन्यपि पिवच्छब्दे द्विवचनोपपत्तिः नाशङ्कनीया । रूढस्य समिच्छब्दस्य [2]उच्चैर्वक्ष्यत इत्यादाविव बहुवचन-प्रतिरूपकाव्ययत्वेन यागपरत्वोपपत्तावपि यौगिकस्य पिवच्छब्दस्य तदयोगादित्यर्थः । यद्यपि अयं समिच्छब्दो न योगरूढः । किन्तु यथा श्येनशब्दः पक्षिविशेषे रूढः, तत्सादृश्यात् यागे गौणनामधेयः । तथा देवतागुणविशेषे निरूढः तत्प्रकाशकमन्त्र-संबन्धापादित तद्देवतासंबन्धस्य लाक्षणिकं नामधेयम् । लक्षणायां च लिङ्गव्यत्ययवत् वचनव्यत्यययोऽपि न दोषः । [3]एवमेव उपपादितं प्रयाजेऽपि इति चेति नावमिकाधिकरण

---

[1] -मात्रे ऊहो येन स्यात् (क, ख, ग, घ)

[2] उच्चैर्वृक्ष (क, ङ, घ), चैरुचा (ख, ग)

[3] एवमेव उपपादितं नवमे द्वितीयपादान्तिमाधिकरणे "प्रयाजेऽपीतिचेदि"त्यत्र । तथाहि "समिधो यजती"त्यादौ समिदादिकं देवतात्वेनोद्दिश्य तत्संस्कारत्वेन यागाः विधीयन्ते । अथवा उपकारकतया यागाः इति विशये, सामवायिकत्वलाभात्संस्कारविधिरिति प्राप्ते, तथात्वे द्वितीयायाः उपचारापत्तेरारादुपरकारकत्वेन यागविधिः । समिदादिशव्दास्तु मन्त्रवर्णप्राप्तदेवतां निमीत्तीकृत्य नामधेयदेवता एवानुवदन्ति । नचानुवादे उपचारो दोष इति सिद्धान्तितम् । उक्तं च शावरभाष्ये समिदादिमन्त्रकत्वाद्यजीनां समिदादिशव्दवाचका इति । तथाच लाक्षणिक-समिदादिपदेषु न बहुवचनानुपपत्तिरित्यनुदाहरणम् । (क,-)

इति बहुवचनेन काचिदनुपपत्तिः । तथापि पौर्णमास्यधिकरणपूर्वपक्षफलवाक्यस्य दर्शपूर्णमासाभ्यामिति पदस्य द्विवचनप्रतिरूपकाव्ययत्वमाश्रित्य प्राकरणिकसर्वयागनामधेयत्वं उक्तम् । तद्वत् प्रकृतेऽपि वक्तुं शक्यमित्यभिप्रायेणैवं उक्तमित्यविरोधः ।।छ।।

**यथैकस्मिन्नेव पाशे "अदितिः पाशानि"ति श्रुतिः तथैकस्मिन्नीश्वरेऽस्तु पिबन्ताविति वागपीत्यादि** । अग्नीषोमीये पशावदितिः पाशान् [1]प्रमुमोक्त्विति बहुवचनान्तः पाशमन्त्रः आम्नातः । स किं प्रकृतावेव निवेशते, उत बहुपशुकेषु आग्नेयं कृष्णग्रीवमालभेतेत्यादिना विहितेषु पशुगणेषु उत्कृष्यत इति संशये, एकस्मिन् बहुवचनस्यासमर्थत्वात् उत्कर्ष इति पूर्वपक्षं प्रापय्य, पाशप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्मकारकं, प्रकृतावपि पाशकर्मकमोचनाभिधानेन संभवात् निवेशं नोत्कर्षं सहते । संख्यामात्रं तु असंभवदपि गुणत्वात् न प्रातिपदिकम् । [2]प्रधानभूतं चालमुत्कृष्टम् । अतो न संख्यावशेन मन्त्रोत्कर्षः । बहुवचनस्य एकस्मिन् प्रयोगे अवयवबहुत्वाभिप्रायेण छान्दसमिति सिद्धान्तितं ऊहलक्षणे विप्रतिपत्तौ विकल्पः स्यात् गुणे त्वन्यायकल्पनैकदेशत्वात् इति तृतीयपादीय चतुर्थाधिकरणे ।। छ ।।

तथा दर्शपूर्णमासयोः "पत्नीः सन्नह्येदि"ति मन्त्रः किं एकद्विबहुपत्नीकेषु सर्वेषु [3]अधिकारेण प्रयोक्तव्यः किं वा द्विबहुपत्नीकप्रयोगयोः द्विबहुवचनाभ्यां ऊहितव्यमिति संशये एकपत्नीके[4] समवेताभिधायित्वसंभवात् [5]नैकवचनमन्याय्यनिगदम्। [6]तस्मात् द्विबहुपत्नीकप्रयोगयोः ऊह इति पूर्वपक्षं प्रापय्य, स्यादेवं

---

[1] प्रमुमोक्तु देवेति (क)

[2] प्रधानभूतं कारकं चालं (ख, ग, घ), प्रधानभूतं कारणं वालं (ङ), प्रधानभूतं नाल (क)

[3] अविकारेण (क, ख, ग, घ)

[4] -के समवेते सम- (ख, ग, घ)

[5] अन्यत्र एकवचनं (ख, ग, घ)

[6] अन्यत्र असमवेतार्थ अभिधायित्वादन्याय्यनिगदम् । तस्मात् (क)

यद्येकपत्नीकप्रयोगाभिप्रायमिदं आम्नातं स्यात् । न चैवं । सर्वप्रयोगाणां तु [1]समानत्वात् सर्वाभिप्रायेणेदं आम्नानम् । तस्मात् सर्वेषु प्रयोगेषु अविकारेण प्रयोक्तव्यमिति सिद्धान्तितं ऊहलक्षणे नवमे "अपूर्वे त्वविकारो अप्रवेशात् प्रतीयत" इति तृतीयपादीय पञ्चमाधिकरणे ।।

अत्र यथा नवमगतद्विवहुपत्नीकेष्विति पत्न्यधिकरणसिद्धदृष्टान्तोपन्यासः, यथा अग्नीषोमीयेत्यादिश्लोकसंगृहीतपाशदृष्टान्तोपन्यासः, अन्यथाहीत्यादि तदधिकरण-पूर्वपक्षापादनं, स च नेष्ट इति सिद्धान्तोपक्षेपः । गुणभूतेत्यादिः तदुपपादनं तथेहापीति दार्ष्टान्तिकोपसंहारः । उक्तं च शावरभाष्ये गुणेत्वन्याय्यकल्पना स्यात् न प्रधाने गुणश्च विभक्त्यर्थः । प्रधानं प्रातिपदिकार्थः इत्यादि ।

नन्वत्र कथं प्रातिपदिकार्थप्राधान्योक्तिः । प्रकृतिप्रत्ययौ हि सहार्थं ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येनेति हि वैयाकरणानां घण्टाघोषः । अभिमतं चैवं भावना प्राधान्यवादिनां आचार्यमतानुवर्तिनाम् । नियोगप्राधान्यवादिनां गुरुमतानुवर्तिनां च । अतः एव पश्वैकत्वाधिकरणे "पशुना यजेते"त्यत्र एकत्वसंख्यायाः प्रधानभूतकारकान्वयद्वारा क्रियाङ्गत्वमभ्युपेयते । न पशु अङ्गत्वम् । तदुक्तं

प्रधानप्रत्ययार्थेन कारकेणात्मसात्कृता ।
क्रियायै नीयते संख्या न पश्वङ्गं पदाद्भवेत् ।। इति ।

अत एव च गृहैकत्वाधिकरणे "गृहं सम्मार्ष्टि" इत्यत्र गृहैकत्वयोः युगपत् [2]कर्म अनन्वयादेव एकत्वविशिष्टगृहोद्देशासंभवोऽभिहितः । प्रयाजशेषाधिकरणे च दृष्टार्थता लाभ एव तृतीया श्रुतिभंगे हेतुः, न शेषप्रातिपदिकार्थप्राधान्यम् । पाशाधिकरणेऽपि

---

[1] समानविधानत्वात् (क, ख, ग, घ, ङ)

[2] कर्मकारकान्वयात् (क), कर्मकान्वयात् (ख, ग, घ)

विभक्त्यभिहित प्रधानभूतकारकस्य [1]प्रकृतेरपि निवेशसंभवात् नोपसर्जनसंख्यानुसारेणोत्कर्ष इत्युक्तम्। अतो न प्रातिपदिकार्थप्राधान्योक्तिः युक्तेति चेत् -

सत्यम् । शब्दान्वयदशायां प्रत्ययार्थप्राधान्यं अरुणैकहायन्योरिव विशेषणविशेष्य[2]भावरूपेण संबन्धेन प्रातिपदिकार्थस्य विशेष्यतया प्राधान्यमस्तीति तदभिप्रायेणेयमुक्तिः । अत एव तदाश्रयत्वेनेति हेतूपन्यास इति अविरोधः । यजमान-द्वित्वाधिकरणविरोध शङ्कानिरासायोक्तम् "युवं हि स्थः स्वर्पती"त्यादि । ज्योतिष्टोमे श्रुतं "युवं हि स्थः स्वर्पती"ति द्वयोः यजमानयोः प्रतिपदं कुर्यात् । "एते असृग्रमिन्दव" इति बहुभ्यो यजमानेभ्य इति स्तोत्रस्यादौ पठनीया ऋक् प्रतिपदित्युच्यते । एतां ऋचं प्रतिपदं प्रथमं कुर्यादित्यर्थः । तत्र किं प्रतिपदौ ज्योतिष्टोमस्य, उत बहुयजमानकेषु [3]अहीनादिषु उत्कृष्टव्ये इति संशये, नित्ये कर्मणि अशक्तिकृताङ्ग-त्यागाभ्युपगमात् यदा एको यजमानो ज्योतिष्टोममनुष्ठातुं न शक्नुयात् तदा "वसन्ते वसन्ते ज्योतिषा यजेते"त्याख्यातोपात्तं फल[4]गुणभूतोपादेयकर्तृगतमेकत्वं क्रत्वङ्गमपि परित्यज्य द्वौ बहवो वा यजेरन्निति ज्योतिष्टोम एव प्रतिपदो निवेशसंभवात् नोत्कर्षः इति पूर्वपक्षं प्रापय्य, यथाशक्तिन्यायस्य उपादेयाङ्गविषयत्वात् यजमानगतस्य एकत्वस्य कालवदनुपादेयत्वात् तत्यागायोगेन प्रकृतौ निवेशासंभवात् कुलायादिषु उत्कर्षः इति सिद्धान्तितं शेषलक्षणे द्वित्वबहुत्वयुक्तं च चोदनात् तस्येति तृतीयपादीय नवमाधिकरणे।

अत्रत्येन न्यायेन यजमानद्वित्वादिकं प्रकरणादुत्कृष्टमित्यर्थः । संख्यायां कारके च प्रत्ययस्यानुशासनादन्यतराभिधानेन चारितार्थ्यवत् आदिप्रातिपदिकस्य

---

[1] प्रकृतावपि (क, ख, ग, घ)

[2] -भावरूपे पाश्चात्यसंबन्धे प्राति- (घ, ख, ग, क, ङ)

[3] तुवायाहीनादिषु (ख, ग, घ, ङ), कुलयाहीनादिषु (क)

[4] गुणभूतेऽनुपादेय (क)

तदसंभवात् तदर्थविवक्षा आवश्यकीति दर्शयितुं अदि[1]प्रातिपदिकार्थत्वात् इत्यादि । रूपविशेषविवक्षया यजमानद्वित्वोपपादनेनापि ज्योतिष्टोमे निवेशो न संभवतीति दर्शयितुं रामकृष्णावित्यादि । दर्शपूर्णमासप्रकरणादिति पाठो लेखकदोषमूलः पातः । ज्योतिष्टोमप्रकरणादिकत्वात् स्तोत्रं प्रति तद्विधानस्य ।। छ ।।

**ननु प्रोद्गातृणामिवेत्यादि** । "प्रैतुः होतुश्चमस[2]" इति मन्त्रे बहुवचनानुग्रहाय प्राति[3]पदिकलक्षणाश्रयणात् इहापि तथैव किं न स्यादिति शङ्कार्थः - युक्तं तत्र [4]लक्षणीयसंभवात् लक्षणाश्रयणम् । प्रकृते तु तदसंभवात् न तदाश्रयणमिति परिहारार्थः। [5]लक्षणीयासंभवेन लक्षणानाश्रयणे दृष्टान्तप्रदर्शनाय, अत एव पाशान् इत्यत्रापि उक्तम् । उद्गातृशब्देन प्रस्तोत्रादिलक्षणायां छन्दोगत्वमिव पाशपदेन द्रव्यान्तरलक्षणायां बन्धकत्वं संबन्ध इति आश्रयणीयम् । न च प्रकरणे बन्धकबहुत्वं छन्दोगबहुत्ववत् संभवतीत्यर्थः । यागसाधनत्वरूपधर्मपुरस्कारेण द्रव्यान्तर-लक्षणामाशङ्क्य [6]प्रकृतक्रिया अनन्वयेन परिहर्तुं यागसाधनद्रव्येत्याद्युक्तम् ।।

विवक्षेति । "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः शरदि वैश्य" इति वाक्ये अग्नीनित्यस्य बहुत्वस्याविवक्षायां गार्हपत्याहवनीयान्वाहार्यपचनरूपाग्नि-त्रयाधानसिद्धिर्नस्यादितिभावः ।

---

[1] नापि प्राति- (क), चापि प्राति- (ख, ग, घ, ङ)

[2] प्रसुब्रह्मण्यस्य प्रोद्गातृणां इति (क)

[3] -पदिकलक्षणाश्रयणं कृतं "उद्गातृ चमसमेकस्य श्रुतिसंयोगादि"त्यधिकरणे । अधिकरणं प्रागनुक्रान्तं तद्वदिहापि - (क)

[4] लक्षणीयानां छन्दोगानां संभवात् (क)

[5] लक्षणोपयोगि धर्मासंभवेन (क)

[6] प्रकृतिक्रिया (ख, ग, घ)

विभक्त्यभिहित प्रधानभूतकारकस्य [1]प्रकृतेरपि निवेशसंभवात् नोपसर्जनसंख्यानुसारेणोत्कर्ष इत्युक्तम्। अतो न प्रातिपदिकार्थप्राधान्योक्तिः युक्तेति चेत् -

सत्यम् । शब्दान्वयदशायां प्रत्ययार्थप्राधान्यं अरुणैकहायन्योरिव विशेषणविशेष्य[2]भावरूपेण संवन्धेन प्रातिपदिकार्थस्य विशेष्यतया प्राधान्यमस्तीति तदभिप्रायेणेयमुक्तिः । अत एव तदाश्रयत्वेनेति हेतूपन्यास इति अविरोधः । यजमान-द्वित्वाधिकरणविरोध शङ्कानिरासायोक्तम् "युवं हि स्थः स्वर्पती"त्यादि । ज्योतिष्टोमे श्रुतं "युवं हि स्थः स्वर्पती"ति द्वयोः यजमानयोः प्रतिपदं कुर्यात् । "एते असृग्रमिन्दव" इति बहुभ्यो यजमानेभ्य इति स्तोत्रस्यादौ पठनीया ऋक् प्रतिपदित्युच्यते । एतां ऋचं प्रतिपदं प्रथमं कुर्यादित्यर्थः । तत्र किं प्रतिपदौ ज्योतिष्टोमस्य, उत बहुयजमानकेषु [3]अहीनादिषु उत्कृष्टव्ये इति संशये, नित्ये कर्मणि अशक्तिकृताङ्ग-त्यागाभ्युपगमात् यदा एको यजमानो ज्योतिष्टोममनुष्ठातुं न शक्नुयात् तदा "वसन्ते वसन्ते ज्योतिषा यजेते"त्याख्यातोपात्तं फल[4]गुणभूतोपादेयकर्तृगतमेकत्वं क्रत्वङ्गमपि परित्यज्य द्वौ बहवो वा यजेरन्निति ज्योतिष्टोम एव प्रतिपदो निवेशसंभवात् नोत्कर्षः इति पूर्वपक्षं प्रापय्य, यथाशक्तिन्यायस्य उपादेयाङ्गविषयत्वात् यजमानगतस्य एकत्वस्य कालवदनुपादेयत्वात् तत्यागायोगेन प्रकृतौ निवेशासंभवात् कुलायादिषु उत्कर्षः इति सिद्धान्तितं शेषलक्षणे द्वित्वबहुत्वयुक्तं च चोदनात् तस्येति तृतीयपादीय नवमाधिकरणे।

अत्रत्येन न्यायेन यजमानद्वित्वादिकं प्रकरणादुत्कृष्टमित्यर्थः । संख्यायां कारके च प्रत्ययस्यानुशासनादन्यतराभिधानेन चारितार्थ्यवत् आदिप्रातिपदिकस्य

---

[1] प्रकृतावपि (क, ख, ग, घ)

[2] -भावरूपे पाश्चात्यसंबन्धे प्राति- (घ, ख, ग, क, ङ)

[3] तुवायाहीनादिषु (ख, ग, घ, ङ), कुलयाहीनादिषु (क)

[4] गुणभूतेऽनुपादेय (क)

तदसंभवात् तदर्थविवक्षा आवश्यकीति दर्शयितुं ञादि[1]प्रातिपदिकार्थत्वात् इत्यादि । रूपविशेषविवक्षया यजमानद्वित्वोपपादनेनापि ज्योतिष्टोमे निवेशो न संभवतीति दर्शयितुं रामकृष्णावित्यादि । दर्शपूर्णमासप्रकरणादिति पाठो लेखकदोषमूलः पातः । ज्योतिष्टोमप्रकरणादिकत्वात् स्तोत्रं प्रति तद्विधानस्य ।। छ ।।

**ननु प्रोद्गातृणामिवेत्यादि** । "प्रैतुः होतुश्चमस[2]" इति मन्त्रे बहुवचनानुग्रहाय प्राति[3]पदिकलक्षणाश्रयणात् इहापि तथैव किं न स्यादिति शङ्कार्थः - युक्तं तत्र [4]लक्षणीयसंभवात् लक्षणाश्रयणम् । प्रकृते तु तदसंभवात् न तदाश्रयणमिति परिहारार्थः। [5]लक्षणीयासंभवेन लक्षणानाश्रयणे दृष्टान्तप्रदर्शनाय, अत एव पाशान् इत्यत्रापि उक्तम् । उद्गातृशब्देन प्रस्तोत्रादिलक्षणायां छन्दोगत्वमिव पाशपदेन द्रव्यान्तरलक्षणायां बन्धकत्वं संबन्ध इति आश्रयणीयम् । न च प्रकरणे बन्धकबहुत्वं छन्दोगबहुत्ववत् संभवतीत्यर्थः । यागसाधनत्वरूपधर्मपुरस्कारेण द्रव्यान्तर-लक्षणामाशङ्क्य [6]प्रकृतक्रिया अनन्वयेन परिहर्तुं यागसाधनद्रव्येत्याद्युक्तम् ।।

विवक्षेति । "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः शरदि वैश्य" इति वाक्ये अग्नीनित्यस्य बहुत्वस्याविवक्षायां गार्हपत्याहवनीयान्वाहार्यपचनरूपाग्नि-त्रयाधानसिद्धिर्नस्यादितिभावः ।

---

[1] नापि प्राति- (क), चापि प्राति- (ख, ग, घ, ङ)

[2] प्रसुब्रह्मण्यस्य प्रोद्गातृणां इति (क)

[3] -पदिकलक्षणाश्रयणं कृतं "उद्गातृ चमसमेकस्य श्रुतिसंयोगादि"त्यधिकरणे । अधिकरणं प्रागनुक्रान्तं तद्वदिहापि - (क)

[4] लक्षणीयानां छन्दोगानां संभवात् (क)

[5] लक्षणोपयोगि धर्मासंभवेन (क)

[6] प्रकृतिक्रिया (ख, ग, घ)

**तथापि अग्नीनादधीतेत्यादौ बहुत्वस्येत्यादि** । "सत्रादुदवसाय [1]पृष्टशमनीयेन यजेरन्नि"ति विहितः [2]पृष्टशमनीयः किं [3]उदवसायिभिः [4]संहत्य प्रयोक्तव्यः उत [5]एकेनैवेति संशये यजेरन्निति आख्यातोपात्तस्य [6]वहुत्वस्य उपादेयकर्तृगामित्वेन विवक्षितत्वात् संहत्य प्रयोक्तव्यः इति पूर्वपक्षं प्रापय्य, यदि वहुत्वं विधीयेत, तदा एवं स्यात् । उदवसायेति क्त्वा प्रत्ययात् उदवसानसमान-कर्तृकत्वावगमात् । उदवसाने च वहुनां कर्तृत्वात् प्राप्तमेव बहुत्वं न विधीयते । न चाविहितमङ्गं भवति । उदवसाने गम्यमानेऽपि वहुत्वं उद्देश्यगतत्वादविवक्षितम् । यागे च अनुवादत्वात् नाङ्गम् । तस्मात् एकैकश्येन प्रयुंजीरन्निति सिद्धान्तितं वाधलक्षणे "तेषां तु वचनात् द्वियज्ञवत् सहप्रयोगः स्यादि"ति द्वितीयपादीय त्रयोदशाधिकरणे ।

अयमत्र वाक्यार्थः - संख्याविवक्षाविवक्षयोः उद्देश्यविशेषणत्वं विधेयविशेषणत्वं च न तन्त्रम् । [7]आघारवाक्ये पृष्टशमनीयवाक्ये च व्यभिचारात् । निर्ज्ञातत्वमनिर्ज्ञातत्वं च व्यवस्थापितं चैतत् गृहैकत्वपश्वैकत्वाधिकरणयोः ।

तत्र हि "दशैतानध्वर्युः प्रातस्सवने गृह्णाती"त्यादिना गृहाणां [8]निर्ज्ञातसंख्यात्वात्, पशोश्च निर्ज्ञातसंख्यात्वाच्च विवक्षाविवक्षे दर्शिते । प्रकृते च पूर्ववाक्येन संख्यायाः [9]निर्ज्ञातत्वात् न विविक्षा युक्ता । प्राजापत्यवाक्ये तु संख्यायाः

[1] सृष्टशमनीयेन (ग, घ, ङ)

[2] सृष्टशमनीयः (ख, ग, घ, ङ)

[3] उदवसातृभिः (क), यदवसादत्रिभिः (ख ग), यदकसादतृभिः (घ, ङ)

[4] हंसत्व प्रयो- (ख, ग, घ)

[5] एकैकश्येनेनेति (क), एकदेशेनेति (ङ,) एकस्य नेति (ख, ग, घ)

[6] वहत्वानुपादेयकर्तृ (ख, ग, घ, ङ)

[7] आधान- (क)

[8] एकत्वविरुद्ध दशत्वाख्यनिर्ज्ञा- (क)

[9] न ज्ञातत्वात् (ङ)

प्रागनिर्ज्ञातत्वात् विवक्षेति । अत एव एकादशप्रयाजान् यजति इत्यत्र पञ्चप्रयाजानामेव आवृत्या एकादशत्वमित्युक्तं पञ्चमे । नवमेऽपि अतिजगतिषु स्तुवत इति बहुवचनं विश्वाः पृतना इत्येकस्यामेवातिजगत्यां ऋचि सप्तकृत्वोऽभ्यासमात्रेण, न तु अतिजगती व्यक्तिबहुत्वेनेत्युक्तमिति । एकादश प्रयाजान् [1]यजतीत्यादौ श्रुता संख्या किं प्रत्येकं भवति किं वा सर्वसंपादनीति संशये प्रयाजान् उपसदश्चोद्दिश्य संख्या विधानात् उद्देश्यानां च साहित्य[2]विशेषासंभवात् प्रतिप्रयाजं [3]प्रत्युपादानं च संख्या स्यादिति पूर्वपक्षं प्रापय्य, एकैकशः समुदितानां वा न स्वरूपेण संख्यान्वयः संभवति । एकस्य पञ्चानां च एकादशत्वायोगात् । अतः संख्यान्वयसिद्धये प्रयाजाः प्रयोगं लक्षयन्तीति, तं लक्षयन्तः संख्या[4]भिधानात् सहितः तयैव लक्षयन्ति । संख्या चेयं अनेकवृत्तिस्वभावा समस्तलक्षित[5]प्रयोगगतापि शक्नोति सर्वेषां प्रयाजानां उपकर्तुम् । अतः सर्वसंपादिनीति सर्वसंपादिनीति सिद्धान्तितं पञ्चमे तृतीयपादे "विवृद्धिःकर्मभेदात् पृषदाज्यवत्तस्य तस्योपदेश्येत" इति आद्याधिकरणे ।।

तथा द्वादशाहे "पाक्षिकं चतुर्थमह एकविंशः षोडश वैराजसामे"ति श्रुतम् । तत्र त्रैशोकं नाम ब्रह्मसामातिजगतीषु स्तुवत इति श्रूयते । तच्चातिजगत्यां उत्पन्नं "विश्वाः पृतना" इति । उत्तर द्वि बृहत्यौ नेमि नमति पक्ष समित्याद्येकत्र ऋचिगाने क्रियमाणे किं अतिजगत्यौ द्वे अनियमसामान्यगानं, उत बृहत्यदेवपत्नीविषयं अनुगानमिति संशये, [6]संचारविचारदोषपरिहारायातिजगतीषु स्तुवत इति अतिजगती बहुत्वानुग्रहाय च समानगानमिति पूर्वपक्षं प्रापय्य, बृहत्यौरुत्तरग्रन्थे पठितयोः

---

[1] -यजतिषु उपसद इत्यादि श्रुता (क)

[2] साहित्यविवक्षा- (क)

[3] प्रत्युपसदं (क)

[4] तत्राभिधानात् (क, घ, ङ), तत्र विधानात् (ख, ग)

[5] प्रयाजगतापि (ख, ग)

[6] विसदृषत्वदोष- (क), संशयविशेषपरि- (ङ)

[1]अक्रत्वर्थत्वात्, तत्परित्यागे तयोः आनर्थक्यात्, एकविंशसंपत्तये एकस्यां ऋचि सप्तकृत्वोऽभ्यस्यमानायां अभ्यासापेक्षया अतिजगती वहुत्वानुवादरूपस्य वर्तमानापदेशस्य उपपत्तेः, विषमायां गानमिति सिद्धान्तितं नवमे "नैमित्तिकं तूत्तरात्वमि"त्यधिकरणद्वितीयवर्णके द्वितीयपादे द्वितीयपादीय चतुर्थाधिकरणे । यावत्संख्यं व्यक्तिभेदानाश्रये दृष्टान्तद्वयमिदं द्रष्टव्यम् ।

**एवं च यथा नवमे "मेधपतये मेधमि"त्यादि** । अग्नीषोमीये पशौ "अध्रिगुप्रैषे आशासाना मेधपतिभ्यां मेधमि"ति क्वचित् शाखायां श्रूयते । क्वचित्तु "मेधपतये मेधमि"ति । तत्र किं उभयोः विकृतिषु अविकारः उत द्विवचनस्य देवतापर ऊहः, एकवचनस्य तु यजमानपरः अथवोभयोः यजमान परः ऊहः किं वा उभयोरपि देवतापर ऊह इति चतुर्धा संशये, मेधपतिशब्देन मेधस्य पशो स्वामी यजमानो देवताभूतौ चाग्नीषोमौ उभयेऽपि अभिधीयन्ते । तेन द्विवचनमेकवचनं च उभयमपि अन्याय्यनिगदम् । तस्मादनूह इति प्रथम पूर्वपक्षं प्रापय्य, संभवत्यर्थपरत्वे नान्याय्य-निगदता युक्ता । तस्मात् द्विवचनान्तो देवतावचनमस्ति । तेनासौ देवता विवृद्धौ ऊहितव्यः । एकवचनान्तस्तु स्वामिवचनः । स्वामिविवृद्धाविति द्वितीयपूर्वपक्षं प्रापय्य, एकोऽपि अयं मन्त्रः शाखाभेदेन किञ्चित् भिन्नः समाम्नातः । तत्र यजमानपरत्वे मेधपतये यो मेधः तमाशासाना इति संबन्धः। देवतापरत्वे मेधपतिभ्यां आशासाना इति। न चैकस्य वाक्यस्य वचनव्यक्तिद्वयं संभवति । तस्मात् उभाभ्यामपि यजमानस्य [2]देवतायां [3]अनियमेनाभिधानम् । तत्र देवतापरत्वे सति अग्नीषोमयोः द्वित्वात् एकवचनमनुपपन्नं स्यात् । यजमान पक्षे तु द्विवचनं पत्न्यभिप्रायत्वेनावकल्पते । तस्मात् स्वामिपरावुभावपि स्वामिवशात् ऊहितव्या इति तृतीयं पक्षं प्रापय्य, मेधमाशासाना

---

[1]क्रत्वर्थत्वात् (क) परियाजक्रत्वर्थत्वात् (ङ), परियोक्तृक्रत्वर्थत्वात् (ख, ग, घ)

[2] देवताया वा (क),

[3] नियमेन (ख, ग)

इत्युक्ते किमर्थं आशासाना इत्यपेक्षा भवति । तत्र मेधपतिभ्यां आशासाना इत्यपेक्षा पूरणाय संबध्यते । न च यजमानायासौ आशास्यते । तस्य देवताभ्यां आशास्यते । तस्मात् देवतावचनं एकवचनम् । तर्हि कथम् अग्नीषोमयोः व्यासक्तं देवतात्वम् । तेन देवतात्मना तयोरेकत्वात् तदभिप्रायम् । अग्नीषोमौ देवतेतिवत् द्विवचनं च अधिष्ठानाधीनम् । तेन द्विवचनमधिष्ठानसंख्यावशात्, एकवचनं च देवता संख्यावशात् विकृतिषु ऊहितव्यमिति सिद्धान्तितं नवमे तृतीयपादे मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र प्रयुक्तत्वात् तस्यान्याय्यनिगदत्वात् सर्वत्रैवाधिकारः स्यादिति द्वादशाधिकरणे ।

अत्र यथा मेधपतिशब्दे एकवचनद्विवचनयोः रूपविशेषविषयत्वेन उपपत्तेः, तथा प्रकृतेऽपीत्यर्थः । यद्यपि अत्र शाखाभेदेनावगतयोः द्वित्वेन तयोः अग्नीषोमीये पशौ कल्प्यते, एकार्थत्वात्, तथापि उभयोः प्रकृतावेव निवेशेनोत्कर्षः इत्यभिप्राय-समुच्चयश्चशब्द इत्यविरोधः ।। छ ।।

**विच्छिन्ना सामिदेनीनां निविद्भिः प्रक्रिया यतः ।**
**न तु काम्यैः पुनः कल्पैः सन्धातुं स हि शक्यते ।।**

**इत्युक्त न्यायेन मध्यस्थनिविद्भिः सामिधेनीप्रकरणस्यैवेति ।** उपव्ययत इत्यत्र किं सामिधेनि अङ्गं किं वा दर्शपूर्णमासाङ्गमिति संशये पुरस्तादुपरिष्टाच्च सामिदेनीकीर्तनादवान्तरप्रकरणेन सामिधेन्यङ्गमिति पूर्वपक्षं प्रापय्य, "[1]देवोत्थो मन्विद्ध" इत्यादिभिः निविद्भिः [2]व्यवधानात् सामिधेनी प्रकरणस्य विच्छेदात् न तदङ्गत्वम् । न च "एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्ये"त्यादि काम्यसामिधेनीकल्पेषु आश्रमतया सामिधेनीनां प्रकरणानुवृत्तिः शङ्क्या तेषां स्वातन्त्र्येण प्रकृताश्रितत्वाभावात्[3]। अतो

[1] देववेद्धो (क, ख, ग ) देवोद्धो (घ, ङ)

[2] मन्त्रैः व्यवधानात् (क), निवद्भिः द्रव्यवलात् सामि- (ख, ग, घ)

[3] -श्रितत्वाभावेन प्रकरणानुवृत्य- (क)

महाप्रकरणेन दर्शपूर्णमासाङ्गमिति सिद्धान्तितं शेषलक्षणे प्रथमपादे "सन्दिग्धे तु वाक्यभेदः स्यादि"ति दशमेऽधिकरणे ।।

एतदधिकरणसिद्धान्तवार्तिकं विच्छिन्ना सामिधेनीनामिति । यस्मात् निर्विद्भिः विच्छिन्नं सामिधेनीनां प्रकरणं काम्यसामिधेनीकल्पैः आश्रयसमर्पणार्थं, न पुनः सन्धातुं शक्यं, इति तद्वार्त्तिकार्थम् । सामिधेनीप्रकरणविच्छेदवदत्र प्रकरण-विच्छेदशङ्का नास्तीति वाक्यार्थः ।।

लिङ्गात् आनन्तर्यरूपक्रमदौर्बल्यस्य त्वन्मते एतच्छास्त्रपूर्वभागे पूर्वतन्त्र एव सिद्धत्वे सति, द्वितीयप्रमाणापेक्षया पञ्चमप्रमाणस्य दौर्बल्यमपि एकशास्त्रवादिनः तवमते बलाबलाधिकरणे सिद्धत्वेनेत्यर्थः ।। छ ।।

**किञ्च औदुंबराधिकरणेऽपीत्यादि** । औदुंबराधिकरणपर्णमैय्यधिकरणयोः न विषयवाक्यभेदमात्रेण पौनरुक्त्यम् । पूर्वोत्तरभागभेदेन विषयभेदसंभवादिति औदुंबराधि-करणवार्तिक[1] एवोक्तम् । एवं प्रकृतेऽस्तु । न चोपजीव्योपजीवकभावो अधिकरणभेदे बाधकः । सत्यपि तस्मिन् भेददर्शनात् । न हि उत्तरभागस्य साध्यसमर्पकत्वासंभवं विना पूर्वभागस्य साधनसमर्पकत्वासंभवः सिध्यति । उत्तरभागोपात्तस्य [2]संभवत्वसंभवे [3]वत्सलोदेः पूर्वभागोपात्तस्य साधनत्वापातात्, साधनं विना साध्यानिष्पत्तिरित्यर्थः ।।

**प्रोद्गातॄणामित्यत्रेत्यादि** । तार्तीयं प्रोद्गात्राधिकरणम् । साप्तमिकं चमसाग्निहोत्राधिकरणं प्रागनुक्रान्तम्। भाष्यकारमते [4]उद्गातृचमसशब्दस्य षोडशर्त्त्विक-

---

[1] वार्तिक एवैकस्यैव न्यायवाक्यस्य क्वचित् क्वचित् अंशः परिशोध्यत इति पुनरारम्भ इत्यादिनोक्तम् । (क)

[2] साधनत्वासंभवे (ख, ग, घ), साधनत्व संभवे (क, ङ)

[3] तत्फलादेः (क)

[4] उद्गातृशब्दस्य (क, ख, ग, घ, ङ)

साधारणाकारं [1]अप्रकृतगतत्वं विहाय छन्दोगत्वरूपेण साधारणाकारेण उद्गात्रादीनां चतुर्णामिव वार्तिककारमते स्तोत्रकारित्वसदःसन्निहितत्वादिना ततोऽपि असाधारणाकारेणापसुब्रह्मण्यानां त्रयाणामेव लक्षणायाः तथैवाग्निहोत्रशब्दस्य गौणतायाश्च उक्तत्वात् इत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां गुहाधिकरणन्यायमालासंग्रहः समाप्तः।।**

## ।। ओं अन्तर्याम्यधिदेवादिषु तद्धर्मव्यपदेशात् ओं ।।

**"नान्तरीक्षे न दिवि" इति अन्तरिक्षादौ [2]अप्रसक्तनिषेधस्तु "हिरण्यं निधाय चेतव्यमि"ति** । [3]विधिस्तु निषेधं औचित्यमुखेनाप्रामाण्यमाशङ्क्य, अन्त्ययोः यथोक्तमिति [4]अर्थवादाधिकरणगुणसूत्रेणान्तरिक्षेत्यादौ स्तुत्यर्थमिति । आद्यस्य द्वितीयपादे अर्थवादनये "अभागिप्रतिषेधादि"ति गुणसूत्रेण चयननिषेधौचित्यमुखेन विधीयमान हिरण्यस्तुत्यर्थं इतरनिन्दा क्रियते । असति प्रसङ्गे नित्यानुवाद इति स्तुत्यर्थत्वमुक्तमित्यर्थः । स्यादग्ने गौणमिन्द्रत्वं [5]यज्ञसम्बन्धकारित्वं इदं स्वार्थानुसाराद्वा स्वकार्ये सोऽपि ईश्वर इति।

"ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इत्यत्र श्रौतेन विनियोगेन मन्त्रस्य गार्हपत्यशेषतया [6]तत्प्रकाशकत्वात्, तत्रत्यस्य इन्द्रशब्दस्य यज्ञसाधनत्वगुणमूलतया गौण्या वा इदिधात्वर्थः यथोचित ऐश्वर्ययोगेन वा गार्हपत्ये वर्तनमित्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अन्तर्याम्यधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

[1] प्रकरणगतत्वं ( ङ, घ, ख, ग, क)

[2] अप्रसक्त चयननिषेधस्तु (ख, ग, घ, ङ)

[3] विधिस्तुत्यर्थमित्यन्तयोः यथोक्तं (ख, ग, घ, ङ)

[4] सिद्धान्तगुणसूत्रेण (क)

[5] -सम्बन्धकारितं (क, ख, ग, घ, ङ)

[6] तत्प्रकारत्वात् । (ख, ग, घ)

## ।। ओं अदृश्यत्वादिगुणको धर्मोक्तेः ओं ।।

यथा वा एतस्यैव "रेवेतीषु वारवन्तीयमि"त्यादि । "त्रिवृदग्निष्टोमस्तस्य वायव्यासु [1]अग्निष्टोमसामकृत्वा ब्रह्मवर्चसकामो यजेते"ति । [2]*अग्निष्टुत्संज्ञकं यागं विधाय पुनः श्रूयते एतस्यैव रेवतीषु वारवन्तीयं, अग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति** । अत्र किं पूर्वस्मिन्नेव यागे पशुफलाय रेवत्याधारं वारवन्तीयं गुणो विधीयते उत कर्मान्तरनिति इति संशये, विशिष्टयागान्तरविधौ गौरवात् प्रकृतहानादिदोषात् एतच्छब्दाच्च पूर्वत्रैव फलाय गुणविधिः । न च यागस्य [3]सामाश्रयत्वासंभवः । अङ्गावतारन्यायेन स्तोत्रद्वारा तत्संभवात् । न च अग्निष्टोमसंबन्धः फलसंबन्धश्च विधीयत इति वाक्यभेदः । क्रत्वर्थवारवन्तीयपदस्यापि [4]अग्निष्टोमसंबन्धसिद्धेः तस्याविधेयत्वादिति पूर्वपक्षं प्रापय्य, नात्र यागस्य आश्रयत्वं संभवति । आश्रयाश्रयिभावस्य क्रियाकारकभावरूपत्वात् । न हि यागस्य सामकारकत्वं संभवति । न च अङ्गावतारन्यायस्यायं विषयः । तस्याङ्गाङ्गिभावविषयत्वात् ।

किञ्च वाक्यभेदोऽपि दुर्वार । क्रत्वर्थवारवन्तीयस्याग्निष्टोम[5]संबन्धदर्शने प्रकृते तदसिद्धेन, शब्दगम्यार्थे सामान्यतो दृष्टस्यानवतारात् । एतच्छब्दश्च प्रस्तूयमानपरः । तस्मात् कर्मान्तरपरमिति सिद्धान्तितं भेदलक्षणे द्वितीयपादे "समेषु कर्मयुक्तं स्यादि"ति द्वादशाधिकरणे । अत्र यथा वाक्यभेदबलात् एतच्छब्दश्रवणेऽपि प्रकृतत्यागाप्रकृतस्वीकारौ न दोषाय, तथा प्रकृतेऽपीत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अदृश्यत्वाधिकरणन्यायमालासंग्रहः समाप्तः।।**

---

[1] एकविंशत्यग्नि- (ख, ग, घ, ङ)

[2] * .......... **एतत् लुप्तं (क)

[3] वारवन्तीयाख्यस्तोत्रसा- (क)

[4] -ष्टोमस्तोत्रसंबन्धसिद्धेः अर्थसिद्धत्वादिति पूर्वपक्षं - (क)

[5] -ष्टोमसंवन्धस्यादर्शनेन (क)

## ।। ओं वैश्वानरः साधारणशब्दविशेषात् ओं ।।

यथा सामशब्दः तद्विशेषबृहद्रथन्तरादिशब्दाश्च ऋगाश्रितगीतिविशेषे **परममुख्याः। तदाश्रयभूतासु ऋक्षु च अमुख्याः तथैव द्वितीये उक्तत्वात् सप्तमे उपपादितत्वात्, नवमे स्मारितत्वाच्चेति** । मन्त्रविभागावसरे सामशब्दो गीतिवाचीति । "गीतिषु सामाख्ये"ति द्वितीये आद्यपादे द्वादशाधिकरणे उक्तत्वात् । "रथन्तर-मुत्तरयोर्गायति, कवतीषु रथन्तरं सामगायती"ति अतिदेशविषयनिर्णयार्थकरथन्तरादि शब्दाः अध्येतृप्रसिध्या गीतिविशिष्ट-ऋग्वाचकाः इति पूर्वपक्षं प्रापय्य, "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिविशेषणे" इति न्यायेन गीतिमात्रवाचकाः इति साम्नोऽभिधानशब्देन प्रवृत्तिः स्यात्, यथा विशिष्टं इत्यादिना सप्तमे द्वितीये उपपादितत्वात् । ऊहविशेष-निरूपणार्थं सप्तमसिद्धस्यैव गीतिवाचित्वस्य "सामानि मन्त्रमेकस्मृत्युपदेशाभ्यामि"ति नवमे स्मारितत्वाच्च यथा सामादिशब्दाः गीतिविशेषे मुख्याः ऋक्षु तु अमुख्याः तथा प्रकृतेऽपीत्यर्थः ।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां वैश्वानराधिकरणन्यायमालासंग्रहः समाप्तः।।**

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां**

**प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ।।**



## ।। ओं अक्षरमम्बरान्तधृतेः ओं ।।

**उक्तं हि दर्वीहोमानां इत्यादि** [1]। दर्विहोमनामकेषु वास्तोष्पतीयादिषु होमेषु

[1] ओं द्युभ्वाद्यायतनं स्वशब्दात् ओं

**पदि न्यायेनेति** । ज्योतिर्गमे "एकहायन्या क्रीणाती"त्येकहायन्या गवा सोमक्रयणं प्रकृत्य, षट्-पदान्यनुनिष्क्रामति । सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीति षट्-पदनयनान्तरं साज्यसप्तमपदपांसुग्रहणं विधाय, "यर्हि हविर्धाने प्राचीः प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्", इति हविर्धानशकप्रवर्तनकालतदक्षाञ्जनं, तेन पदपांसुना साज्येन कर्तव्यमाम्नायते । तत्र सोमक्रयणवत् पदपांसुसाध्यमक्षाञ्जनमप्येकहायनीनपतनस्य प्रयोजकं, अनुष्ठापकमिति यावत्, उत नेति संशये, उभयोरप्येकहायनीनयनसाध्यत्वादुभयं प्रयोजकमिति प्राप्ते, "एकहायन्या क्रीणाती"ति एकहायन्याः क्रयणार्थत्वेन विधानात् । यदर्थं द्रव्यं तदर्थस्तत्संस्कारः इति एकहायन्याः सोमक्रयणदेशप्रतिनयनरूपस्य संस्कारस्यापि क्रयणार्थत्वात्क्रयणेमेव प्रयोजकम्। अन्यदनुनिष्पादीति सिद्धान्तितं, चतुर्थस्याद्यपादे "पदकर्माप्रयोजकं नयनस्य परार्थत्वादि"त्यधिकरणे । अत्र सप्तमं पदमित्यत्र पदशब्दस्य सन्निधानादेकहायनीपदविषयत्वं सिद्धं कृत्वा विचारः प्रकृत इति पदिन्यायेनेत्युक्तमित्याहुः । पदयुक्तन्यायः पदिन्याय इत्यर्थः ।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां**
**द्युभ्वाध्यधिकरणन्यायमालासङ्ग्रहः समाप्तः ।।**

### ओं अक्षरमम्बरान्तधृतेः ओं ।।

**प्राभाकरेति** । "निर्मथ्येनेष्टकाः पचन्ती"त्यत्र श्रुताग्निवाचको निर्मथ्यशब्दोऽरणि-मथनसंस्कारनिमित्तको उत अग्नित्वजातिनिमित्तकेति संशये, मथनकर्मत्वस्य निष्पन्नेऽग्नावभावात्, "निर्मथ्येन यक्ष्याम" इति लौकिकेऽपि प्रयोगात् न संस्कारनिमित्तक इति प्राप्ते, अचिरनिर्मथनविशिष्टेऽग्नौ निर्मथनविशेषस्य सत्वेन तत्र यौगिक इत्युक्तम् । आधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतः अग्निः चिरनिर्मथितः, सद्य एव लौकिकमथनेन जातोऽग्निरचिरनिर्मथितः, तेनेष्टकाः पच्यन्ते । यथा पुरातननूतनयोः घृतयोर्नवनीतजन्यत्वे समानेऽपि नूतनमेव नावनीतमिति व्यवह्रियते, तावन्निर्मथ्यशब्दस्य मथनकर्ममात्रे

किं सोमविकृतित्वं उत [1]अपूर्वत्वं इति संशये, अव्यक्तासु तु सोमस्येति न्यायेन सोमविकृतित्वमिति पूर्वपक्षं कृत्वा यागत्वहोमत्वाभ्यां परस्परमत्यन्तवैसादृश्ये न सोमविकृतित्वमिति सिद्धान्तितं "तस्मिन् सोमः प्रवर्तताव्यक्तत्वादि"ति विशेषातिदेशलक्षणे अष्टमे चतुर्थपादे । अनेन न्यायेन विकृतित्वराहित्यं तन्मुखनिरीक्षककर्मान्तराभावे प्रकृतित्वराहित्यं च यथा दर्विहोमानां तथा प्रकृतेऽपीत्यर्थः।

यद्यपि प्रकृतित्वविकृतित्वयोः न परस्परं विरोधः । अग्नीषोमीयपशोः पश्वन्तरापेक्षया प्रकृतित्वेऽपि दर्शपूर्णमासापेक्षया विकृतित्वस्यानुपदमेव वक्ष्यमाणत्वात्। द्वादशाहनि अहर्गणापेक्षया प्रकृतित्वेऽपि [2]दर्शपूर्णमासापेक्षया विकृतित्वाच्च । तथापि प्रतियोगिभेदाभावे तयोः विरोध इत्यभिप्रायेणेयमुक्तिरिति अविरोधः ।

**दर्शपूर्णमासादीनां केवलप्रकृतित्वेऽपीत्यादि** । "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम" इत्यादिषु किं दर्शपूर्णमासिको विध्यन्तः उत सौमिको विध्यन्तः इति संशये, नियामकाभावादनियम इति पूर्वपक्षं प्रापय्य, तद्धितेन देवतानिर्देशः । [3]कपालवता निर्वपतिशब्दश्च, इत्येतेषां प्रकृतिचोदने लिङ्गानां नियामकत्वात् दर्शपूर्णमासिक इति सिद्धान्तितं, विशेषातिदेशलक्षणे "इष्टिषु दर्शपूर्णमासयोः [4]प्रकृतिः स्यादि"ति चतुर्थाधिकरणे ।

---

पाणिनिस्मरणेऽप्यचिरनिर्मथिते चिरनिर्मथितव्यावृत्ता चिरनिर्मथनविशेषविशिष्टे यौगिक एव । न तु रुढ्यावृत्यर्थं रूढिराश्रयणीयेति प्रमाणलक्षणे नामधेयपादे "तथा निर्मन्थ्ये"ति दशमेऽधिकरणे चिन्तितम् । तद्वदत्राप्यन्यव्यावृत्ता विनाशविशेषनिमित्तको यौगिक एव । न तु अन्यव्यावृत्यर्थं रूढिराश्रयणीयेत्यर्थः ।

[1] अपूर्वकर्मत्वं (क)

[2] ज्योतिष्टोमापेक्षया (ख, ग, घ, ङ)

[3] कपालवत्वानि निर्व- (ख, ग,), कपालवत्तानि निर्व- (घ, ङ)

[4] प्रवृत्तिः (ख, ग, घ, ङ)

तथा अग्नीषोमीये पशौ पूर्ववत्संशये, पूर्वपक्षश्च प्राप्तः । "अग्नीषोमीयं पशुमालभेते"ति चोदनायां [1]द्रव्यदेवतावत्तारूपलिङ्गविशेषात् दर्शपूर्णमासिको विध्यन्त इति सिद्धान्तितमष्टमेऽध्याये "पशौ च लिङ्गदर्शनादि"त्यधिकरणे ।

तथा सवनीयनिरूढादिषु पशुबन्धेषु किं दर्शपूर्णमासयोः विध्यन्तः उत दैक्षस्याग्नीषोमीयस्येति संशये, पूर्ववत् दर्शपूर्णमासविध्यन्त इति पूर्वपक्षं कृत्वा, आलभति चोदना सामान्यात् पशुद्रव्यकत्वाच्च विशेषलिङ्गात् दैक्षस्य विध्यन्त इति सिद्धान्तितं, तत्रैवाध्याये दैक्षस्य चेतरेष्विति तदनन्तराधिकरणे ।।

तथा "मैत्रं श्वेतमालभेत वारुणं कृष्णमि"त्यादि पशुगणेषु किं दैक्षविध्यन्त उत एकादशिकानामिति संशये, पूर्वोक्तन्यायेनाग्नीषोमीयविध्यन्त इति पूर्वपक्षं कृत्वा, [2]प्रतिपशुयूपदर्शनादिविशेषणात् एकादशिनविध्यन्त इति सिद्धान्तितं तत्रैव "तत्प्रवृत्तिगुणेषु स्यात् प्रतिपशुयूपदर्शनादि"त्यव्यवहितानामनन्तराधिकरणे ।। छ ।।

तानि द्वैधाधिकरणं प्रागनुक्रान्तम् । स्विष्टकृदुभयार्थत्वाधिकरणं प्रागनुक्रान्तम् ।

यथा "गोदोहनेन पशुकामस्य प्रणयेदि"त्यत्र किं गोदोहनं [3]क्रत्वर्थं उत पुरुषार्थमिति संशये, षष्ठी श्रुत्या पुरुषार्थत्वं, क्रतूपकारकत्वाच्च क्रत्वर्थमपीति उभयार्थमिति पूर्वपक्षं प्रापय्य, उपकारकत्वलक्षणविशेषत्वनिराकरणात्, अन्यार्थस्यापि क्रतूपकारकत्वविरोधात् श्रुत्या पुरुषार्थमेवेति सिद्धान्तितं प्रयुक्तिलक्षणे वीप्सासूत्रतृतीयवर्णके ।।

---

[1] द्रव्यदेवतारूप (ख, ग, घ)

[2] प्रतिपशुयूपदर्शनादि विशेषलिङ्गात् एकादशानि (ख, ग, घ, ङ)

[3] क्रत्वर्थमपि उत पुरुषार्थमेवेति (क, ख, ग, घ, ङ)

"दध्नेन्द्रियकामस्य जुहुयादि"त्यत्र किं काम्यमेव दधि नित्येऽपि स्यात् उत ततोऽन्यत् नित्यं इति संशये काम्यस्य नित्यार्थत्वासंभवात् [1]अन्यदेव नित्ये स्यात् । न च दध्ना जुहोति इति [2]दध्नो नित्यार्थत्वमपि श्रूयत इति वाच्यम् । तस्य काम्यवाक्यैकवाक्यत्वात् इति पूर्वपक्षं प्रापय्य, उभयोः वाक्ययोः नैराकांक्ष्येण एकवाक्यताभावात् सन्देहयोगपृथक्त्वेन उभयार्थमिति सिद्धान्तितं प्रयुक्तिलक्षणे तृतीयपादे "एकस्य तूभयत्वे संयोगपृथक्त्वमि"ति तृतीयाधिकरणे ।

अयमत्रवाक्यार्थः। दर्शपूर्णमासाग्निहोत्रज्योतिष्टोमानां सर्वाङ्गोपदेशेन केवलप्रकृतित्वेऽपि "आग्नेयं कृष्णग्रीवमालभेत सौम्यं चरुं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान" इत्यादि पशुगणानां शक्यानामयनादि संवत्सरसत्राणां केवलविकृतित्वेऽपि अग्नीषोमीयपशुद्वादशाहादीनां यथा प्रकृतित्वेऽपि विकृतित्वं, यथा वा अवघातपेषणादीनां वैतुष्यादिदृष्टमात्रार्थत्वेऽपि प्रोक्षणसम्मार्गादिना द्रव्यगतादृष्टमात्रार्थत्वेऽपि, यथा स्विष्टकृदुत्तमप्रयाजानां अंशभेदेनोभयार्थत्वम् । यथा वा "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" । "[3]यस्य गृहं दहत्यग्नये क्षामवते पुरोडाशं [4]एकादशकपालं निर्वपेत्" इति ऐन्द्राग्नक्षामवत्यादौ कामाधिकारनैमित्तिकाधिकारयोः अन्यतरमात्र-सत्वेऽपि, यथा वा जातेष्टौ "यस्मिन् जात [5]एनां इष्टिं निर्वपति पूत एव [6]सः तेजस्व्यन्नाद इन्द्रियावी भवति" इति अधिकारद्वयसंवलनम् । "व्रीहिभिर्यजेत सोमेन यजेते"त्यादिना व्रीहिसोमादीनां क्रत्वर्थमात्रत्वेऽपि गोदोहनेन पशुकामस्य प्रणयेत् ।

---

[1] अन्यदेव पयादिकं (क)

[2] दध्येव नित्यार्थत्वेनापि (क), दध्येव नितयार्थत्वेऽपि (ख, ग, घ, ङ)

[3] यस्यां गृहे (ख, ग)

[4] अष्टादशकपालं (ख, ग), अष्टाकपालं (घ, ङ, क)

[5] एतां (क, ख, ग, घ)

[6] नास्ति (क, ख, ग, घ, ङ) omitted

एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्येत्यादिना गोदोहन एकविंशत्यनुवचनानां [1]पुरुषार्थत्वमात्रेऽपि, यथा वा "दध्ना जुहोति, दध्नेन्द्रियकामस्य जुहुयात्, खादिरो यूपो भवति, खादिरं वीर्यकामस्य यूपं कुर्यात्" इत्यादिना दधिखादिरत्वादीनां उभयार्थत्वं, तथा प्रकृतेऽपीति । कामाधिकारनित्याधिकारयोरिति पाठे नित्यशब्दः नैमित्तिकपरः ।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अक्षराधिकरणन्यायमालासंग्रहः समाप्तः ।।**

## ।। ओं दहर उत्तरेभ्यः ओं ।।

**"यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यं" इत्यत्र एकत्वस्य विधेयविशेषणत्वेन पश्वैकत्ववत् विवक्षितत्वादिति** । पश्वैकत्वाधिकरणं प्रागनुक्रान्तम् । "पशुना यजेते"त्यत्र एकत्वं यथा विधेयविशेषणतया विवक्षितं, तथा तदन्वेष्टव्यमित्यत्राऽपीत्यर्थः ।। छ ।।

**"सप्तदशारत्निः वाजपेयस्य यूप" इत्यत्र वाजपेयसंबन्धि पशुसंबन्धिनोऽपि यूपस्य वाजपेयसंबन्धव्यपदेशवच्चेति** । अरत्नि साप्तदश्याधिकरणं प्रागनुक्रान्तम् । साक्षात्परम्परासाधारण्येन सम्बन्धमात्रे षष्ठ्यनुशासनात् देवदत्तस्य नप्तेत्यादाविव परम्परया वाजपेयसम्बन्धिनो यूपस्य यथा वाजपेयसम्बन्धः व्यपदेशः तथा प्रकृतेऽपीऽत्यर्थः ।।

**अत एव चातुर्मास्ये तृतीये पर्वणीति साकमेधे "एतद्ब्राह्मण एककपाल" इति श्रुतस्य एतच्छब्दस्य व्यवहितवैश्वदैविकैककपालत्यागेन सन्निहितवारुणप्रघासिक एककपालपरत्वमिति** । साकमेधपर्वणि "एतत् ब्राह्मण एककपाल" इत्यत्र किं वैश्वदैविक एककपाल ब्राह्मणातिदेशः किं वा वारुणप्रघासिक एककपाल ब्राह्मणातिदेशः इति संशये वैश्वदैविके भूयांसो धर्माः आविः पृष्ठकार्य इत्यादयः, अल्पा

---

[1] पुरुषार्थमात्रेऽपि (क, ख, ग, घ, ङ)

वारुणप्रघासिकहिरण्मयः स्रुचो भवन्ति इत्यादयः । अतः भूयो धर्मलाभाय वैश्वदैविकब्राह्मणातिदेश इति पूर्वपक्षं प्रापय्य, वारुणप्रघासिकस्य सन्निहितत्वात् वैश्वदैविकधर्माणां स्वरसां एककपालामिक्षां[1] च लिङ्गदर्शनात् इति न्यायेन सिद्धे वचन आनर्थक्यप्रसङ्गाच्च, वारुणप्रघासिकब्राह्मणातिदेशः इति सिद्धान्तितं सामान्यातिदेशलक्षणे, "एककपालानां वैश्वदेविकप्रकृतिराश्रयणे सर्वहोमापर्यायवृत्तिदर्शनादवभृथे च तद्दर्शनादि"त्यधिकरणे । अत्र एतच्छब्दस्य यथा व्यवहितपरत्वपरित्यागेन सन्निहितपरत्वं, तथा प्रकृतेऽपीत्यर्थः । चातुर्मासस्येति एकवचनं सामान्याभिप्रायेण ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां दहराधिकरणन्यायमालासंग्रहः समाप्तः।**

## ।। ओं अनुकृतेस्तस्य च ओं ।।

**अध्याहारेण लिङ्गनिर्वाहे "प्रास्मा अग्निमि"त्यत्र पशुशब्दाध्याहारेणास्मैशब्दस्य पुल्लिङ्गनिर्वाहात् मेषीपरत्वं स्यात् । तच्च नोक्तं नवम इति।** "सारस्वतीं मेषीं चतुर्थीं [2]अतिरात्र" इति विहितायां मेष्यां पशुसामान्यं विध्यपूर्वपक्षे किं अध्रिगुवचनं भवति उत नेति संशये, प्रकरणाविशेषात् "प्रास्मा अग्निमि"ति पुल्लिङ्गस्यास्मै शब्दस्य नियतपुल्लिङ्गपशुशब्दाभीधेय पशुत्वाभिप्रायेण "प्रास्मै पशवः" इत्येवं स्त्रियामपि उपपत्तेः, लिङ्गविरोधाभावात् तस्यामपि अध्रिगुवचनं स्यादिति पूर्वपक्षं प्रापय्य, स्यादेवं यदि पशुशब्दः श्रूयेत । नत्वसौ श्रूयते । अतः प्रयोगवेलायां पुरोवर्तिद्रव्यविषयतया प्रयुक्तोऽयम् अस्मै शब्दः न मेष्यां वर्तितुं शक्नोति इति "अध्रिगुः" लुप्यत इति सिद्धान्तितं ऊहलक्षणे "लिङ्गविशेषनिर्देशात् समानविधानेषु अप्राप्ता सरस्वती स्त्रीत्वादि"त्यधिकरणे ।। छ ।।

---

[1] -मिक्षं (क, ख, ग, घ, ङ)

[2] त्रिरात्रीति विहितायामप्युपांशुसामान्यविध्यपूर्वपक्षे किमपि मुखवचनं भवतीत्युतनेति संशये (ख, ग, घ)

यदि नपुंसकलिङ्गनिर्वाहाय रूपशब्दोऽध्याह्रियेत, तदा मेष्यधिकरणे पशुशब्दाध्याहारेण मेष्यामपि अस्मै शब्दनिर्वाहात् सिद्धान्तहानिः स्यादित्यर्थः ।।

**पाशमन्त्रादौ हि प्रातिपदिकानुसारेण प्रत्ययास्वारस्यमाश्रितम् ।** तथा **"प्रयाजशेषेण हवींष्यभिघारयेदि"त्यादौ प्रयाजशेषप्रातिपदिकस्वारस्याय तृतीयायाः व्यत्येन द्वितीयार्थता स्वीकृता । न तृतीयानुसारेण प्रातिपदिकस्य लक्षणेति ।** पाशाधिकरणं प्रागनुक्रान्तम् । प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र किं हविः संस्कारार्थमभिघारणं उत प्रयाजशेषप्रतिपत्तिरिति संशये, उपयोक्ष्यमाणसंस्कारस्य उपयुक्तसंस्कारापेक्षया अभ्यर्हितत्वात्, द्वितीयातृतीयाभ्यां प्रधानोपसर्जनभावानवगमाच्च, न्यायतः शब्दतश्च हविः संस्कारोऽभिघारण इति पूर्वपक्षं प्रापय्य, [1]शेषस्य प्रतिपत्यपेक्षत्वात् तादर्थ्ये अभिघारणं दृष्टार्थं भवति । हविः संस्कारोऽनपेक्षितोऽदृष्टः कल्प्येत । न च दृष्टे संभवति अदृष्टकल्पनं न्याय्यम् । अतः प्रयाजशेषं हविष्षु [2]क्षारयेदिति वाक्यार्थवर्णनेन प्रतिपत्तिरिति सिद्धान्तितं प्रयुक्तिलक्षणे "अभिघारणे विप्रकर्षादनूयाजवत् पात्रभेदः स्यादि"ति प्रथमपादीय चतुर्दशाधिकरणे । अत्रोभयत्र यथा प्रातिपदिकस्वारस्यानुग्रहाय प्रत्ययस्वारस्य त्यागः तथा प्रकृतेऽपीत्यर्थः ।।

यद्यपि पाशोदाहरणे प्रधानभूतकर्मकारकरूपप्रत्ययार्थ अनुग्रह एव संख्या अनादरे मूलं । [3]*न प्रातिपदिकस्वारस्यानुग्रहत्यागे मूलं**, न प्रातिपदिक-स्वारस्यानुग्रहः । तथापि संभावनामात्राभिप्रायेणेयं उक्तिः ।। छ ।।

यथा "तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षे"त्यत्र "सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्प्यते", इत्युक्तत्वेन तच्छब्दस्य पयःपरामर्शकत्वेऽपि

---

[1] अशेषश्च (क)

[2] धारयेत् (क) हवींषि अभिघारयेत् (ख, ग)

[3] * ..... ** omitted in (क, घ, ङ)

**आमिक्षाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गतेति** । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन"मिति । अत्र किं आमिक्षायागेनैव दध्यानयनं प्रयुज्यते, उत वाजिनयागेनापीति संशये, वैश्वदेवयागस्य तावदामिक्षा हविः, सा च रूपरसान्यत्वात् [1]क्षीरावदानानन्तरम् । अतो दध्यानयनमसंयुक्तम् । आमिक्षया केवलं विहितम् । केवलं तज्जननसामर्थ्यात् लिङ्गेन आमिक्षार्थं स्यात् । सामर्थ्यं च वाजिनेप्यस्तीति तादर्थ्यमपि युक्तम् । अतः उभयप्रयुक्तमानयनमिति पूर्वपक्षं प्रापय्य, "सा वैश्वदेव्यामिक्षे"ति तच्छब्दः पय एव परामृशति । तद्धि पूर्ववाक्ये [2]प्रथमेन कर्मणा दध्ना व्याप्यमानत्वात् प्रधानम् । प्रधानपरामर्शि च सर्वनामेति पय एव देवतासम्बन्धात् हविः । तथा च मन्त्रवर्णः - "जुषतां युज्यं पय" इति पय एव घनीभूतं आमिक्षेति आमिक्षापदं नित्यानुवादः । तत्सामानाधिकरण्याच्च सेति स्त्रीलिङ्गम् । यस्त्वाम्लो रसः, सः संस्कारकस्य दध्नः । न तु असौ आमिक्षापदस्याभिधेयः । तस्मात् पय एव आमिक्षा वैश्वदेवयागहविरिति वैश्वदेवयागप्रयुक्तमानयनं, न वाजिनयागप्रयुक्तमिति सिद्धान्तितं प्रयुक्तिलक्षणे "एकनिष्पत्तेः [3]सर्वसमा स्यादि"ति प्रथमपादीय नवमाधिकरणे । अत्रत्येन न्यायेन सर्वनाम्ना परामर्शः । तस्य पयस एव । अतः पूर्ववाक्ये प्राधान्येनावगतत्वादवकल्प्यत इति विशेषातिदेशलक्षणे शास्त्रदीपिकायां उक्तत्वेन सेति तच्छब्दस्य पयः परामर्शकत्वेऽपि यथा स्त्रीलिङ्गत्वं आमिक्षाशब्दसामानाधिकरण्यात् निर्वाह्यं तथा प्रकृतेऽपीत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अनुकृत्यधिकरणन्यायमालासंग्रहः समाप्तः।**

---

[1] क्षीरवत्पदार्थान्तरं (क)

[2] द्वितीयेन (क)

[3] सर्वसामञ्जस्यात्त् (क), सर्वसंह (ख, ग,), सर्वसमं (घ)

यदि नपुंसकलिङ्गनिर्वाहाय रूपशब्दोऽध्याह्रियेत, तदा मेष्यधिकरणे पशुशब्दाध्याहारेण मेष्यामपि अस्मै शब्दनिर्वाहात् सिद्धान्तहानिः स्यादित्यर्थः ।।

**पाशमन्त्रादौ हि प्रातिपदिकानुसारेण प्रत्ययास्वारस्यमाश्रितम् । तथा "प्रयाजशेषेण हवींष्यभिघारयेदि"त्यादौ प्रयाजशेषप्रातिपदिकस्वारस्याय तृतीयायाः व्यत्येन द्वितीयार्थता स्वीकृता । न तृतीयानुसारेण प्रातिपदिकस्य लक्षणेति ।** पाशाधिकरणं प्रागनुक्रान्तम् । प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र किं हविः संस्कारार्थमभिघारणं उत प्रयाजशेषप्रतिपत्तिरिति संशये, उपयोक्ष्यमाणसंस्कारस्य उपयुक्तसंस्कारापेक्षया अभ्यर्हितत्वात्, द्वितीयातृतीयाभ्यां प्रधानोपसर्जनभावानवगमाच्च, न्यायतः शब्दतश्च हविः संस्कारोऽभिघारण इति पूर्वपक्षं प्रापय्य, [1]शेषस्य प्रतिपत्यपेक्षत्वात् तादर्थ्ये अभिघारणं दृष्टार्थं भवति । हविः संस्कारोऽनपेक्षितोऽदृष्टः कल्प्येत । न च दृष्टे संभवति अदृष्टकल्पनं न्याय्यम् । अतः प्रयाजशेषं हविष्षु [2]क्षारयेदिति वाक्यार्थवर्णनेन प्रतिपत्तिरिति सिद्धान्तितं प्रयुक्तिलक्षणे "अभिघारणे विप्रकर्षादनूयाजवत् पात्रभेदः स्यादि"ति प्रथमपादीय चतुर्दशाधिकरणे । अत्रोभयत्र यथा प्रातिपदिकस्वारस्यानुग्रहाय प्रत्ययस्वारस्य त्यागः तथा प्रकृतेऽपीत्यर्थः ।।

यद्यपि पाशोदाहरणे प्रधानभूतकर्मकारकरूपप्रत्ययार्थ अनुग्रह एव संख्या अनादरे मूलं । [3]*न प्रातिपदिकस्वारस्यानुग्रहत्यागे मूलं**, न प्रातिपदिकस्वारस्यानुग्रहः । तथापि संभावनामात्राभिप्रायेणेयं उक्तिः ।। छ ।।

**यथा "तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षे"त्यत्र "सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्प्यते", इत्युक्तत्वेन तच्छब्दस्य पयःपरामर्शकत्वेऽपि**

---

[1] अशेषश्च (क)

[2] धारयेत् (क) हवींषि अभिघारयेत् (ख, ग)

[3] * ..... ** omitted in (क, घ, ङ)

**आमिक्षाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गतेति** । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन"मिति । अत्र किं आमिक्षायागेनैव दध्यानयनं प्रयुज्यते, उत वाजिनयागेनापीति संशये, वैश्वदेवयागस्य तावदामिक्षा हविः, सा च रूपरसान्यत्वात् [1]क्षीरावदानानन्तरम् । अतो दध्यानयनमसंयुक्तम् । आमिक्षया केवलं विहितम् । केवलं तज्जननसामर्थ्यात् लिङ्गेन आमिक्षार्थं स्यात् । सामर्थ्यं च वाजिनेप्यस्तीति तादर्थ्यमपि युक्तम् । अतः उभयप्रयुक्तमानयनमिति पूर्वपक्षं प्रापय्य, "सा वैश्वदेव्यामिक्षे"ति तच्छब्दः पय एव परामृशति । तद्धि पूर्ववाक्ये [2]प्रथमेन कर्मणा दध्ना व्याप्यमानत्वात् प्रधानम् । प्रधानपरामर्शि च सर्वनामेति पय एव देवतासम्बन्धात् हविः । तथा च मन्त्रवर्णः - "जुषतां युज्यं पय" इति पय एव घनीभूतं आमिक्षेति आमिक्षापदं नित्यानुवादः । तत्सामानाधिकरण्याच्च सेति स्त्रीलिङ्गम् । यस्त्वाम्लो रसः, सः संस्कारकस्य दध्नः । न तु असौ आमिक्षापदस्याभिधेयः । तस्मात् पय एव आमिक्षा वैश्वदेवयागहविरिति वैश्वदेवयागप्रयुक्तमानयनं, न वाजिनयागप्रयुक्तमिति सिद्धान्तितं प्रयुक्तिलक्षणे "एकनिष्पत्तेः [3]सर्वसमा स्यादि"ति प्रथमपादीय नवमाधिकरणे । अत्रत्येन न्यायेन सर्वनाम्ना परामर्शः । तस्य पयस एव । अतः पूर्ववाक्ये प्राधान्येनावगतत्वादव-कल्प्यत इति विशेषातिदेशलक्षणे शास्त्रदीपिकायां उक्तत्वेन सेति तच्छब्दस्य पयः परामर्शकत्वेऽपि यथा स्त्रीलिङ्गत्वं आमिक्षाशब्दसामानाधिकरण्यात् निर्वाह्यं तथा प्रकृतेऽपीत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अनुकृत्यधिकरणन्यायमालासंग्रहः समाप्तः।**

---

[1] क्षीरवत्पदार्थान्तरं (क)

[2] द्वितीयेन (क)

[3] सर्वसामञ्जस्यात्त् (क), सर्वसंह (ख, ग,), सर्वसमं (घ)

## ।। ओं शब्दादेव प्रमितः ।।

"**वसन्ताय कपिञ्जलानि**"त्यत्र तु **त्रित्वापर्यवसाने सर्वकपिञ्जलालम्भनस्याशक्यानुष्ठानत्वादष्टदोषदुष्टविकल्पापातादिति** । "वसन्ताय कपिञ्जलानालभेत" इत्यादिषु किं त्रयाणामेवालम्भः उत त्रिप्रभृतीनां संख्यानामिति संशये बहुवचनस्य सर्वत्र प्रवृत्तेः सर्वासां संख्यानां शास्त्रार्थत्वात्, शास्त्रीयाच्च प्रयासगौरवात् फलभूयस्त्वम् । अतः यावदुत्साहं विकल्पेन नानासंख्योपादानमिति पूर्वपक्षं प्रापय्य, बहुत्वमात्रं शब्दार्थः। न तु "षट् देया द्वादश देया" इत्यादिवत् संख्याविशेषाणां भेदेन शास्त्रमस्ति । यद्बलात् फलभूयस्त्वं कल्प्येत । एवं च त्रीननालभ्य चतुर्थालम्भ असंभवादवश्यं त्रयः आलब्धव्याः । तावता च सिद्धे शास्त्रार्थे नाधिकालम्भनं तावत् शास्त्रं कारयति । निवृत्तव्यापारे च विधौ, न हिंस्यादिति निषेध-शास्त्रं प्रवर्तत इति अधिकानामनालम्भ इति सिद्धान्तितं, तन्त्रलक्षणे "बहुवचनेन सर्वप्राप्तेः विकल्पः स्यादि"ति प्रथमपादीय षष्ठाधिकरणे ।।

अत्रत्येन न्यायेनाष्टदोषदुष्टविकल्पदोषपरिजिहीर्षया वसन्तादि वाक्येषु [1]त्रित्ववाक्यमित्यर्थः ।। छ ।।

**वामनवामनिशब्दयोः लोकवेदाधिकरणन्यायेन** इत्यादि । [2]*लोकवेदयोः पदपदार्थानामन्यत्वं उत अनन्यत्वमिति संशये, सत्यपि [3]वर्णाभावे स्वरविशेष-वर्णागमलोपविकारादिधर्मभेदात्** लोकवेदयोः पदानामन्यत्वं [4]अर्थनां पदन्यत्वादेवेति पूर्वपक्षं प्रापय्य, प्रयक्षप्रत्यभिज्ञानात् वर्णाभेदे तादात्मकत्वात् पदानां यत्किञ्चित्

---

[1] त्रित्वं वाच्यमित्यर्थः (क)

[2] * ...... ** omitted in (ख, ग, घ)

[3] वर्णाभेदे (क)

[4] अर्थ भेदोऽपि पदान्यत्वादेव (क)

धर्मभेदेऽपि अर्थभेदापादकधर्मभेदाभावात् पदाभेदः । तदभेदेऽपि [1]वेदार्थानामपि अभेद इति सिद्धान्तितं प्रमाणलक्षणे, "प्रयोगचोदनाभावादर्थैकत्वमविभागादि"त्यधिकरणे प्रथमवर्णके ।

अत्रत्यन्यायेन यथा "देवादेवास" इत्यादौ "वर्णाधिक्येन आत्मना" इत्यादौ वर्णलोपेन च एकदेशान्यथात्वेऽपि प्रत्यक्षप्रत्यभिज्ञानादभेदसंभवे भेदकल्पनमन्याय्यं । तथा वामनवामनिशब्दयोरपि इकाररूपैकदेशान्यथात्वेऽपीत्यर्थः । कथञ्चित् निरुपितायाः [2]प्रत्यभिज्ञादेरिव आधिकृत्यो विनाशादिमात्रेण विनाशो नास्तीति वार्तिकार्थः ।। छ ।।

**"यद्योन्यां तदुत्तरयोः गायती"त्यत्र उत्तराशब्द उत्तराग्रन्थसंज्ञारूपो निरपेक्ष इति तत्पर एव । न तु प्रतियोगिसापेक्षोत्तर ऋक्पर इति ।** "यद्योन्यां तदुत्तरयोः गायती"त्यत्र किं योन्युत्तरयोः गानं उत उत्तरत्र ग्रन्थाधीतयोरेवेति संशये उत्तराशब्दस्य संबन्धिशब्दत्वात्, यैव योनेः परत्र पठिता सैवोत्तरा । ततश्च योनिपरापेक्षया रथन्तरयोनेः परतो बृहद्योनेः पठितत्वात्, तस्याङ्गानां उत्तराग्रन्थेन रथन्तरयोनेः परतो "नत्वा वां अन्या दिव्या" इत्यस्याः पाठात् तस्याङ्गानामतो विकल्पः। द्वयोरपि [3]रथन्तरोक्तत्वात् इति पूर्वपक्षं प्रापय्य, यद्यपि अयं संबन्धिशब्दो लोके, तथापि उत्तराग्रन्थे संज्ञारूपेण प्रसिद्धः । तत्र संज्ञाशब्दस्यानपेक्षप्रवृत्तित्वात् सापेक्षप्रवृत्तेः संबन्धिशब्दात् बलीयस्त्वं, प्रकरणपाठाच्च उत्तराग्रन्थः क्रत्वङ्गम् । तस्मात् [4]उत्तराग्रन्थोदितायामेव गानमिति सिद्धान्तितं ऊहलक्षणे, "नैमित्तिकं

---

[1] पदार्थानामपि (क)

[2] प्रकृत्याभिघतेरिव (क, ख, ग, घ, ङ)

[3] रथन्तरयोन्युत्तरत्वादिति (क)

[4] उत्तराग्रन्थाधीतयोः गानं (क), उत्तराग्रन्थोदितान्येव गानं (ख, ग, घ, ङ)

[1]तूत्तरात्वमि"त्यधिकरणे । अत्रत्यन्यायेन यथा उत्तराशब्दः प्रतियोगिनिरपेक्षार्थपरः तथा वामनशब्दोऽपीत्यर्थः ।। छ ।।

**ऐन्द्राग्न्यादौ तु देवतात्वं व्यासज्यवृत्तीति अग्नेः प्रत्येकं तत्र देवतात्वाभावात् नाग्नेयतेति ।** "आग्नेयं चतुर्धा करोती"त्यत्र किं चतुर्धाकरणमाग्नेयाग्नीषोमीयैन्द्राग्नीनां उत आग्नेयस्यैवेति संशये, अग्नौ चतुर्धा[2]करणप्रश्नोपलक्षणमात्रत्वेन स्वयं कार्ययोगित्वाभावात्, संबन्धमात्रेणैव उपलक्षणत्वसंभवेन देवतात्वाकारानपेक्षणात्, संबन्धस्याग्नेः अग्नीषोमीयैन्द्राग्नयोः [3]विशिष्टत्वात् त्रयाणां चतुर्धाकरणमिति पूर्वपक्षं प्रापय्य, [4]देवताभूतस्यैव तद्धितान्तेन उपलक्षणतया उपादानात्, केवलाग्नेयस्यापि विद्यमानत्वेन यथाश्रुतस्यैव तस्योपलक्षणत्वसंभवात् [5]न शब्देनावगतसंबन्धमात्रेण उपलक्षणत्वं युक्तम् । अग्नीषोमीयादौ च समासादुत्पन्नः तद्धितः द्वयोः सापेक्षयोः [6]देवतात्वमाह । तेन तत्रान्यसापेक्षस्याग्नेः देवतात्वम् । न चापेक्षस्य तद्धिते सामर्थ्यमस्ति । तेन आग्नेयशब्दो न शक्नोति [7]अग्नीषोमीयादिक्रममपवदितुम् । प्रसिद्धसंबन्धं हि लक्षणं भवति । प्रसिद्धिः विधिवशादवाप्तव्या । विधिवाक्ये च अग्नेः देवतात्वेनैव [8]पुरोडाशे संबन्धोऽवगतः, न सम्बन्धमात्रम् । तस्मात् देवतात्वेनैव

---

[1] तूत्तरार्थ (क)

[2] करणविषयद्रव्योपल- (क), करणे विषयप्रद्योपमाल- (ख, ग, घ), चतुर्धाकरोति करणविषय प्रद्योपल- (ङ)

[3] अविशिष्टत्वात् (क), प्रविशिष्ट त्रया- (ख, ग, घ)

[4] देवताभूतस्यैवाग्नेः तद्धितेन (क, ख, ग, घ, ङ)

[5] न शब्दोऽनवगतसंबन्ध- (ख, ग, घ, ङ), न शब्दगतसंबन्धमात्रेण (क)

[6] देवतात्वमहत्वेन (ख, ग, घ, ङ )

[7] -मीयादिकमभिधातुम् (क, ख, ग, घ, ङ)

[8] पुरोडाशसंब- (क)

उपलक्षणम् । तच्चाग्नीषोमीयादौ नास्तीति आग्नेयस्यैव चतुर्धाकरणमिति सिद्धान्तितं शेषलक्षणे, शेषस्तु गुणसंयुक्तः साधारणं प्रतीयते, मिथस्तेषां असम्बन्धादिति प्रथमपादीय पञ्चदशाधिकरणे । स्पष्टो वाक्यार्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां वामनाधिकरणन्यायमालासंग्रहः समाप्तः।**

## ।। ओं तदुपर्यपि बादरायणः संभवात् ओं ।।

**यथा पश्वैकत्वादि शेषत्वचिन्ता शेषत्वरूपेण तृतीये सङ्गतापि औपादानिकत्वरूपेण चतुर्थे सङ्गतेति** । यथा गुरुमते चतुर्थे उपादानाख्य [1]प्रकरणविचारादौपादानिकस्य पश्वैकत्वादि शेषत्वस्य शेषत्वरूप तृतीयगतस्यापि तत्र सङ्गतिः तथेत्यर्थः ।। छ ।।

**विश्वजिदधिकरणपूर्वपक्षस्याप्रामाण्यपर्यन्तस्यापि षष्ठ इवेति** । विश्वजिदधिकरणं प्रागनुक्रान्तम् । तस्य पूर्वपक्षे पुरुषार्थभाव्यानंगीकारात् विध्यानर्थक्येन शास्त्राप्रामाण्यं उक्तम् । चतुर्थ इति वक्तव्ये षष्ठ इति पाठो लेखकदोषमूलः । स्वर्गकामाधिकरणाभिप्रायं षष्ठग्रहणम् । देवानां देवतान्तराभावेन तदुद्देशेन हविः त्यागायोगात् । ऋषीणां च भृग्वादीनां भग्वाद्यन्तराभावेन एकत्र वरणायोगात् यज्ञादि-कर्मस्वनधिकारेऽपीति । कर्माधिकारः किं अन्यबधिरपङ्गुमूकादिवत् देवर्षितिरश्चामपि किं वा समर्थानां मनुष्याणामेवेति संशये, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति प्रधानवाक्येन सर्वस्वर्गकामाधिकारं कर्मावगतम् । तदनुसारि च अङ्गवाक्यं न तत्संकोचायालम् । अतः चक्षुष्मदादीन् प्रति आज्यावेक्षणादेः विधिरिति सर्वेषां अर्थिनामशक्याङ्गरहितकर्मानुष्ठानात् सिद्धोऽधिकार इति पूर्वपक्षं प्रापय्य, न हि स्वातन्त्र्येणाङ्गवाक्यानि पुरुषैः संवन्ध्यन्ते । प्रधानवाक्यशेषत्वात् तेषां, तद्युक्तेन

---

[1] प्रमाण (क, ख, ग, घ )

प्रधानवाक्येन तस्यां [1]तदङ्गं उक्तः क्रतुः पुरुषैः संबध्यमानः सर्वांगोपसंहारसमर्थान् प्रति विज्ञायते । अतोऽन्धादीनां क्रतुरेवाविहित इति न तेषामधिकारः। तिरश्चां [2]प्रधान-मात्रस्यासामर्थ्यात् न क्वचिदधिकारः । ऋषीणां भृग्वादीनां आर्षेयवरणासंभवाद-नधिकारः । देवानां कर्मोद्देशाभावात् त्यागासंभवात् [3]विग्रहाभावच्च अनधिकार इति सिद्धान्तितमधिकारलक्षणे, "फलार्थत्वात्तु कर्मणां स्त्रीसर्वाधिकारः स्यादि"त्यधिकरणे । स्पष्टो वाक्यार्थः ।।

"**एतया निषादस्थपतिं याजयेदि**"**त्यादिवचनादत्रैवर्णिकत्वेनानाहिताग्नी-नामपि निषादस्थपतीनां लौकिकाग्नौ वैदिककर्माङ्गीकारादिति** । "रौद्रं वास्तुमयं चरुं निर्वपेदि"ति प्रकृत्या श्रूयते, "एतया निषादस्थपतिं याजयेदि"ति । तत्र किं द्विजातिरेव यो निषादानां आधिपत्यं करोति तस्याधिकारः, उत यो निषाद एव स्थपतिः तस्याधिकारः इति संशये, पक्षद्वयेऽपि शब्दस्य यौगिकत्वात् षष्ठी समासाश्रयणे अग्निविद्यावतामेवाधिकार लाभात्, कर्मधारये तदलाभात् षष्ठीसामासाश्रयणेन द्विजानामधिकार इति पूर्वपक्षं प्रापय्य, समासे षष्ठ्याश्रयणात् निषादपदस्य तत्संबन्धिनि लक्षणा स्यात् । कर्मधारये तु न काचित् लक्षणेति श्रुत्यर्थलाभाय विदुषो निषादस्यैवाधिकारः इति सिद्धान्तितमधिकारलक्षणे, "स्थपतिः निषादः स्याच्छब्द-सामर्थ्यादेवे"त्यधिकरणे । लौकिकाग्निसाध्यत्वार्थमधिकरणमग्रे अनुक्रमिष्यते । निषदानामिव देवानामनाहिताग्नित्वं नानधिकारापादकमित्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां देवताधिकरणन्यायमालासंग्रहः समाप्तः।**

---

[1] तदङ्गयुक्तः (क)

[2] प्रधानमात्रेऽपि (क)

[3] विग्रहाभावाच्चाशक्तेः (क)

## ।। ओं शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ओं ।।

**अन्यथा "वर्षासु रथकार आदधीते"त्यत्र रथकारशब्दस्यापि त्रैवर्णकपरत्वादिति** । रथकाराधिकरणं प्रागनुक्रान्तम् । रूढेः वलीयस्त्वानंगीकारे रथकारशव्दस्यापि रथं करोतीति व्युत्पत्त्या त्रैवर्णिकपरत्वं स्यादित्यर्थः ।। छ ।।

**मीमांसकमते अर्थवादानां स्वार्थपरत्वाभावेऽपीति** । अधिकरणमनुक्रान्तम्। अर्थवादानां स्तुतिपरत्वेन स्वार्थपरत्वाभावः स्पष्टः । एवं शूद्रस्यापि "नाग्निः न यज्ञ" इत्यादि निषेधादेव कर्मानधिकारः। न तु ज्योतिष्टोमादिकर्माणां आहवनीयाद्यग्निविद्या-साध्यात्वात, तयोश्चाधानोपनयनाधीनत्वात, तयोश्च वसन्तादि-वाक्याभ्यां त्रैवर्णिकनामेव विधानात् तेषामेवाधिकार इति मीमांसकोक्तरीत्या अनधिकार इति । ।।

"वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः शरदि वैश्यः" इति । तथा "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्य"मिति श्रूयते । तत्र किं ब्राह्मणादीनामधानोपनयनयोः प्राप्तानां वसन्तादिकालविधानं प्रति निमित्तार्थानि श्रवणानि, किं वा ब्राह्मणादीनामप्राप्तं उपनयनं आधानं च विधीयत इति संशये, अग्निविद्याभ्यां विना क्रत्वनुष्ठानासंभवात् तयोश्च आधानोपनयनसाध्यत्वात् क्रतुविधिभिरेवाग्निविद्यासाध्यैः तदुपायभूतयोः आधानोपनयनयोः आक्षेपतः प्राप्तेः, तयोः कालविधानाय निमित्तार्थानि श्रवणानीति पूर्वपक्षं प्रापय्य, वसन्तादिवाक्येषु तावत् यदिशब्दाद्यभावात् वाक्यान्तरविहित आधानोपयनविपरिवृत्त्यभावाच्च क्रियाविधिरेव प्रतीयते । क्रतुविधयोऽपि अग्निविद्यामात्रसाध्याः । अग्नयस्तु यद्यपि आधानसाध्याः, तथापि सर्वे न तेनैव निष्पाद्याः अन्येन निष्पादितानामन्येन क्रियादिभिरपि प्राप्ति संभवात्। तथा विद्यापि पुस्तकनिरीक्षणादि उपायसंभवात् न एकान्तेन उपनयन-माक्षिपति । तस्मात् आधानोपनयनयोः प्रापकाणि वचनानीति सिद्धान्तितं भेदलक्षणे "आधाने सर्वशेषत्वादि"ति तृतीयपादीय तृतीयाधिकरणे ।।छ।। अपशूद्राधिकरणं

प्रागनुक्रान्तम् । उपपादितनिषेधबलादेव शूद्रस्यानधिकारः, न तु पूर्वतन्त्ररीत्या । आधानोपनयनवाक्ययोः त्रैवर्णिकग्रहणमूल इत्यर्थः ।

उपनयनहोमस्थपतीषु अवकीर्णब्रह्मचर्याधिकारिकयागादिवल्लौकिकाग्नौ शूद्रस्यापि यागसंभवाच्च । उक्तं च षष्ठे अनेकैरधिकरणैः उपनयनहोमादयो लौकिकाग्नाविततीति । उपनयनाङ्गभूताः माणवककर्तृकहोमाः किं आहवनीये स्युः उत लौकिक इति संशये, [1]अध्ययनाङ्गभूतोपनयनार्थत्वात् एते होमाः [2]माणवककार्याः, तदधिकाराः तदीयाग्नौ कर्तव्या इति माणवकः प्रागुपनयनात् [3]अधीतः तदर्थं च भार्यां उद्वहेत् । या तु स्नानोत्तरकालादाविति कियाङ्गा सापत्यार्था भविष्यति । तस्मात् आहवनीये कर्तव्या इति पूर्वपक्षं प्रापय्य, आधानस्य विद्वदधिकारत्वात्, विद्यायाश्च उपनयनाधीनत्वात् न उपनयनात् प्राक् आधानसंभवः । तस्मात् [4]लौकिकाग्नौ उपनयन-होमाः इति सिद्धान्तितं, अधिकारलक्षणे अष्टमपादे उपनयन इत्यधिकरणे ।।छ।।

तथा "एतया निषादस्थपतिं याजयेदि"ति श्रुता स्थपतीष्टिः किं आहिताग्निषु स्यात् उत लौकिकाग्नौ इति संशये, प्रकृते आहवनीयादिप्राप्तेः आहवनीयादीनां च आधानाधीनत्वादसत्यपि स्थपतेः आधानविधौ इयमिष्टिः आधानं प्रयोजयेदिति पूर्वपक्षं प्रापय्य, वसन्तादिवाक्यविहिताधानजन्याग्निगतसंस्कारवाचित्वात् आहवनीयादिशब्दानां स्थपतिकृतेन आधानेन विहितेन च तत्संस्कारसिध्यनवगमात् न आधानस्याक्षेपः संभवति । तस्मात् लौकिकेऽग्नौ स्यादिति सिद्धान्तितं, अष्टमपादे "स्थपतीष्टिः प्रयाज-वदग्न्याधेयं प्रयोजयेच्च तादर्थ्याच्च अवप्रवृज्यते"ति अनन्तराधिकरणे ।। छ ।।

---

[1] आधानाङ्ग- (क)

[2] माणवकार्थाः (क, ङ, घ)

[3] आदधीतः (क), अधीनतः (ख, ग, घ)

[4] संकेताग्नौ (ख, ग, घ, ङ)

"यो ब्रह्मचार्यवकिरेत् गर्दभं पशुमालभेते"ति विहितो यागः किं आहवनीयादिषु उत लौकिक इति संशये, ब्रह्मचारिणः त्रैवर्णिकत्वात्[1] भार्यागमसंभवाच्च आधानमुपपन्नमिति । अतः [2]आधायाग्निं प्रायश्चित्तेऽपि प्रवर्ततेति पूर्वपक्षं प्रापय्य, [3]अपराधकृतं ब्रह्मचर्यविप्लवमसमाधाय गार्हस्थ्यप्रवेशासंभवात्, अविप्लुतब्रह्मचर्यो गृहस्थाश्रमं [4]अविशेदिति विधानात्, अपत्नीकस्य [5]आधानाभावात् लौकिक एवाग्नावयं पशुरिति सिद्धान्तितं "अवकीर्णपशुश्चेत् तद्वदाधानस्याप्राप्तकालत्वादि"ति तदनन्तराधिकरणे । स्पष्टोवाक्यार्थः ।

अत एव षष्ठे "उदङ्मुखो भूत्वा मूत्रं कुर्यादि"ति स्मार्तनियमाः । अग्न्यसाध्या अनुपनीतस्यापि इति प्राप्तेः "उपनयनादिनियम" इति वचनवलादेव "उपनयनप्रभृति स्युः" इति उक्तमिति । तस्मिंस्तु शिष्यमाणानि [6]जनने प्रवर्तेरन्नपि [7]वादे तुल्यत्वात् तुल्यत्वात् [8]उपनयने प्रवर्तेरन्निति पूर्वोत्तरपक्षसूत्राभ्यामिति शेषः। स्पष्टो वाक्यार्थः ।।छ।।

**सर्वशक्तिनये अन्धादेराज्यावेक्षेणाद्यङ्गहानेन स्ववाक्योपसंहारेण नित्यकर्माधिकारोऽङ्गीकृत इति** । "यावज्जीवमग्निहोत्रं जुहोति", "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत", "वसन्ते वसन्ते ज्योतिषा यजेते"त्यादौ किं सर्वाङ्गोपसंहारशक्ताना-मेवाधिकारः

---

1 -त्वात् विद्वत्वाच्च स्नात्वा भार्याधिगमः (क, ख, ग, घ, ङ)

2 आधानाग्निं (क, ङ)

3 अपकारकृतं (क)

4 आवसेदिति (क)

5 विधानाभावात् (क)

6 हनने (क),

7 अविवादे (क)

8 उपाये न (क), उपायेन (ख, ग)

उत यथाशक्त्यङ्गोपसंहारेणेति संशये, सर्वेषां अङ्गानां समुच्चयेत्थंभाव-सम्वन्धात् सर्वाङ्गोपेतमेव कर्मफलसाधनम् । न चाफलसाधनेऽधिकारोऽस्ति । अतः न हीनाङ्गानुष्ठानमिति पूर्वपक्षं प्रापय्य, [1]यूपशब्दोपबृंहितं जीवनं यागानुरक्तां भावनां प्रति निमित्तत्वेनावगम्यते। दर्शपूर्णमासशब्दविशेषितश्च [2]यजिः कालयोगिनामेव आग्नेयादीनां एव वाचको नाङ्गानाम् । निमित्तस्य चैतद्रूपं यस्मिन् सति नैमित्तिकमवश्यं कर्तव्यमिति । [3]अतः प्रधानानुरक्ता भावना[4]वाक्यश्रुतनिमित्तस्ववशप्राप्ता आवश्यकत्वानुसारेण यथासंभवमङ्गानि गृह्णाति । अतो यथाशक्ति प्रयोग इति सिद्धान्तितमधिकारलक्षणे तृतीयपादे "सर्वसिद्धशक्तौ प्रवृत्ति स्यात्, तथाभूत [5]*उपदेशेऽपी"ति प्रथमाधिकरणे ।।छ।। ।।छ।।

काम्ये सर्वाङ्गोपसंहरावश्यकत्वेऽपि उक्तन्यायेन नित्ये यथाशक्त्यंग** उपसंहारस्य स्वीकृतत्वात् तत्र शूद्रस्याधिकारो दुर्वारः । अध्ययनस्य पिण्डपितृयज्ञादेरिव स्वर्गार्थत्वेन पुरुषार्थतया स्वाध्यायसंस्कारत्वाभावात् इति । अनिर्दिष्टफलानां कर्मणां स्वर्गफलकत्वस्य "सः स्वर्गः स्यादि"ति विश्वजिदधिकरणे दर्शितत्वात्, पिण्डपितृयज्ञस्येवाध्ययनस्यापि पुरुषार्थतया संस्कारकर्मत्वाभावादित्यर्थः । न चैवं पूर्वतन्त्रस्थापशूद्राधिकरणेन गतार्थतेति । अपशूद्राधिकरणमनुक्रान्तम् । तत्र अग्निराहित्यस्यैव शूद्रानधिकारे हेतुत्वेनोपन्यस्ततया, विद्याराहित्यस्यानुपन्यस्ततया च न तेन गतार्थतेत्यर्थः। तत्र "अवैद्यत्वाभावः कर्मणि स्यादि"ति शूद्रावैद्यत्वग्रहणेन शूद्रस्य विद्याभावोक्तेः इति। विद्यावान् वैद्यः। सः न भवतीत्यवैद्यः। तत्वात् कर्मणि अधिकाराभाव इति सूत्रार्थः। पूर्वतन्त्रे प्रथमसूत्र एवाध्ययनस्य दृष्टार्थतया

---

[1] यावच्छब्दो- (क)

[2] यजेः (क, ख, ग, घ)

[3] अतः प्रधानानुरक्ताभावात् न वाक्यश्रुतिनिमित्तवश- (ख, ग, घ, ङ)

[4] स्ववाक्यवगतनिमित्त्वत्ताप्राप्तावश्यक- (क)

[5] * ....... ** omitted (क)

उक्तत्वेन गतार्थत्वस्य. न परिहार इति । "अथातो धर्मजिज्ञासे"ति प्रथमसूत्रे अध्ययनविधौ फलाश्रवणात् विश्वजिन्न्यायेन स्वर्गः कल्पनीयः इति पूर्वपक्षं प्रापय्य, दृष्टे संभवत्यदृष्टकल्पनायाः अन्याय्यत्वादर्थज्ञानं फलमिति सिद्धान्तितत्वात् न गतार्थत्वस्य परिहार इत्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां अपशूद्राधिकरणन्यायमालासंग्रहः समाप्तः।**

## ।। ओं कम्पनात् ओं ।।

**यथा "यदष्टाकपाल" इत्याद्यर्थवादादेरवान्तरसङ्गतिवशादर्थवाद-पादादिरूपस्वस्थानातिक्रम** इति । यथा वैश्वानरवाक्ये श्रुतस्य "यदष्टाकपालो भवती"त्यादेः [1]अर्थवादविचारत्वस्यार्थवादपादे सङ्गत्या नामधेयत्वादि प्रस्तावरूपा-वान्तरसङ्गतिवशात् स्वस्थानातिक्रमेण नामधेयपादे निवेशः । तथा प्रकृतेऽपीत्यर्थः ।।

**यथा "व्रीहीनवहन्ति तण्डुलान्पिनष्टी"त्यादौ "व्रीहीन् प्रोक्षती"त्यादाविव द्वितीयाश्रुत्यैव गुणकर्मत्वसिद्धेः पुनर्विचारवैयर्थ्यपरिहाराय द्वितीयामतन्त्रीकृत्य गुणकर्मत्वप्रधानकर्मत्वचिन्तेति** । "व्रीहीन् प्रोक्षति स्रुचः सम्मार्ष्टि" इत्यादौ गुणकर्मत्वमुत प्रधानकर्मत्वमिति संशये, "[2]सक्तून् जुहोती"ति [3]वचनव्यभिचारात् न साध्यत्वं द्वितीययोच्यते । साधनत्वं तु "कटं करोती"त्यादावपि द्वितीया स्मरणात्, तदादीनां बुद्धिस्थत्वेन क्रिया हेतुत्वादस्त्येव तदव्यभिचारात् द्वितीयार्थः । अतो व्रीह्यादि

---

[1] विचारस्यार्थवादपादे सङ्गतावपि (क), विचारस्यार्थवादे सङ्गत्या (ख, ग, घ)

[2] "वल्वजान् शिखंडकान् कुर्वि"ति लोके, "सक्तून् जुहोती"ति च वेदे व्यभिचारात् (क), "वल्वजान् शिखंडकान् कुर्वि"ति लोके (ख, ग, घ, ङ)

[3] वचनमव्यभिचारात् (ख, ग, घ)

[1]साधानप्रोक्षणादिविधानात् प्रधानकर्मत्वमिति पूर्वपक्षं प्रापय्य, "कर्तुरीप्सिततमं कर्म तथायुक्तं चानीप्सितं" इति ईप्सितानीप्सितानु[2]वृत्तिसाध्यत्वमात्रद्वितीया स्मरणात् तत्राव्यभिचारात् बलीयस्त्वात् कर्मत्वमेव द्वितीयार्थः इति । अतो गुणकर्मत्वमिति सिद्धान्तितं भेदलक्षणे धर्ममात्रे तु कर्म स्यादनिवृत्तेः प्रयाजवदिति प्रथमपादीय चतुर्थाधिकरणे । अनेन न्यायेन प्रोक्षणादाविव [3]आहवनीयादावपि श्रुत्या गुणकर्मत्वे सिद्धेऽपि पुनः [4]विचारावैय्यर्थ्याय द्वितीया अनादरेण, तानि द्वैधमित्यत्र यथा प्रवृत्तिता तथा प्रकृतेऽपीत्यर्थः ।।

एतेन आज्यादिशब्दप्रतिबन्दी निरस्ता । तत्र "यदाजिमीयुः तदा आज्यानामाज्यत्वमि"ति श्रुतावेव यागोक्तेरिति अधिकरण[5]वाक्यशेषो दर्शितः ।।

"यदाजिमीयुरि"त्यादि निर्वचनं "अश्वस्य पदे जुहोती"ति अश्वमेधप्रकरण-विहितपरं यथा तत्रत्येन होमविशेषेणान्वेति तथा यदाजिमीयुरित्यादि निर्वचनमपि ज्योतिष्टोमस्तोत्रप्रकरणविशेषाम्नातं तत्रत्येन [6]न्यायेन वाक्येनान्वेति । यथा अनारभ्य-विहित आहवनीयहोममात्रेणान्वेति, तथा वज्रशब्दनिर्वचनमपि योग्यवैदिकशब्द-मात्रेणान्वेति इत्यर्थः । "प्रजापतिः वरुणया अश्वमनयदि"ति वाक्यार्थः प्राग्वर्णितः ।।

---

[1] प्रधानक (क)

[2] -तांनुवृत्त (क), तानि वृत्ति (ख, ग, घ), तानुवर्ति (ङ)

[3] अवहननादावपि (क, ङ), आहवनादावपि (ख, ग, घ)

[4] पुनः चिन्ता पुनः विचारवैय्यर्थ्याय (क, ख, ग, घ, ङ)

[5] वाक्यशेषौ द्वौ प्राक् प्रदर्शितौ (क)

[6] स्तोत्रवाक्येन (क, ख, ग, घ, ङ)

उपक्रममात्रानुसरणे कर्तव्ये उपक्रमोपसंहारमध्यपरामर्शानुसरणं कर्तव्यमित्यत्र [1]किं वक्तव्यमित्यर्थः ।। छ ।।

**इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां कम्पनाधिकरणन्यायमालासंग्रहः समाप्तः।**

## ।। ओं पत्यादिशब्देभ्यः ओं ।।

**"व्रीहिभिर्यजेत यवैर्यजेते"त्यादि । [2]उभयाबाधाय विरुद्धयोः अभेदस्वीकारे व्रीहि[3]यवादौ विकल्पो वा [4]धेन्वादौ क्येये समुच्चयश्च न स्यादित्यर्थः ।** "यदाहवनीये जुहोती"ति सामान्यविहितस्य आहवनीयस्य "पदे जुहोति", "गार्हपत्ये पत्नीसंयाजान् जुहोती"ति विशेषविहितैः पदादिभिः किं विकल्पः किं वा बाधः इति संशये [5]लिङ्गात् विकल्पस्य शीघ्रशास्त्रेण कल्पना [6]विरोधोऽपि उक्तः । तथा अतिदेशस्य आनुमानिकत्वात् प्रत्यक्षेण विरोधे सति तद्विषयं परिहृत्य विषयान्तरं परिकल्प्यापि उक्तो बाधः । कुशानां सामान्यशास्त्रं क्लृप्तं प्रत्यक्षश्रुतं च [7]विशेषशास्त्रवदिति तुल्यबलवत्वात् विकल्प एवेति पूर्वपक्षं प्रापय्य, पत्नीसंयाजादिषु होमसामान्ये श्रुतस्य आहवनीयस्य लक्षणया प्राप्तिः । गार्हपत्यादि तु श्रुत्यैव होमविशेषे विधीयते । तेनैवास्मिन् विशेषे श्रुत्या शीघ्रप्राप्तं गार्हपत्यादिकं लक्षणया मन्थरप्रवृत्तिकं आहवनीयादिकं निरुणद्धीति भाव इति

---

[1] किमु (क, ख,ग, घ, ङ)

[2] उभयबाधाय (ख, ग, घ)

[3] व्रीहियवादौ यागे वि- (क, ङ), व्रीहिरित्यादौ यागावि- (ख, ग, घ)

[4] वासो धेन्वादौ (क)

[5] लिङ्गादिकल्पस्य शास्त्रस्य (क, ख, ग, घ)

[6] अभिधोऽपि (क)

[7] विशेष आश्रयेदिति (क)

सिद्धान्तितं बाधलक्षणे "अविशेषेण यच्छास्त्रं अन्यायत्वात् विकल्पः स्यात् तत्सन्दिग्धमानात् विशेषविशिष्टं स्यादिति अष्टमपादीयाष्टमाधिकरणे ।। छ ।।

इति श्रीविजयीन्द्रार्यकृतचन्द्रिकान्यायमालायां
प्रथमाध्यायस्य तृतीयः पादः ।।

## ।। ओं ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ओं ।।

**स्वाध्यायोऽध्येतव्य इति वाक्यवच्चास्य विनियोक्तृत्वविनियोज्यत्वे न विरुद्धे इति ।** अस्य वाक्यस्य विध्यर्थवादमन्त्राणां फलवदर्थावबोधे विनियोक्तृत्वं, स्वाध्यायशब्दार्थतया विनियोज्यत्वं यथा न विरुद्धं, तथा प्रकृतेऽपीत्यर्थः ।।छ।।

**अग्निर्मूर्धेति मन्त्रस्य श्रौत आग्नेययाग इत्यादि ।** [1]मूर्धनि पुरोऽनुवाक्येन भवतीत्यादि वाक्ये विनियोगानुसारेण तत्तदर्थप्रकाशनाय, तत्तन्मन्त्राणां [2]अनेकार्थस्वीकाराच्च इत्यर्थः । तदुक्तं शाबरभाष्ये -

परार्था हि वेदा यदनेन कर्तुं शक्यं तस्यैव समाम्नाय इति । अध्ययनविधिवशादेव [3]पुरुषार्थपर्यवसायि वेदसामर्थ्यानुसारेण सर्वत्र विनियोक्तव्य इति भाष्यार्थः ।।

"तेजो वै घृतं प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्ती"त्यादौ **प्राशस्त्यपरार्थवादपदान्तरैः सह प्राशस्त्यलक्षकाणामपि घृतादिशब्दानां स्वार्थभूतघृतादिपरत्वस्यापि दर्शनाच्चेति ।** [4]अशक्ताधिकरणरात्रसत्राधिकरणे प्रागनुक्रान्ते ।

---

[1] मूर्धन्वती पुरोऽनुवाक्या (क), मूर्धस्विति पुरोऽनुवाक्ये (ख, ग, घ, ङ)

[2] अनेकार्थत्वस्वी- (क, ख, ग, घ)

[3] पुरुषार्थपर्यवसादेव- (क, ख, ग)

[4] अत्राधिकरणरात्रि- (ख, ग, घ, ङ), अक्ताधिकरण- (क)

तत्रत्येन न्यायेन घृतप्रतिष्ठादि शब्दानां उभयपरत्वदर्शनाच्चेत्यर्थः । तेजशब्दस्य प्राशस्त्यपरत्वेऽपि घृतशब्दस्य तदाश्रयपरतया न तत्परत्वमित्याशङ्का वारणाय प्राशस्त्यपरार्थवादपदान्तरैः सहेत्युक्तम् ।।

"अभि त्वा शूर नोनुम" इत्यादि । ज्योतिष्ठोमे बृहद्रथंतरे बृहत्योः उत्पन्ने "अभित्वा शूर नोनुमस्त्वामिद्धि हवामह" इति तयोः पंक्ती, उत्तरे "न त्वा वां अन्यो दिव्यो न पार्थिवः", "स त्वं नः चित्रे"ति । तत्र श्रूयते "न वै बृहद्रथंतरं एक [1]छन्दो पत्तयोः पूर्वबृहती ककुभौ उत्तरे" इति । तत्र किं पंक्ती परित्यज्य द्वे ककुभौ आनेतव्यौ उत योनिमुत्तरां च [2]प्रग्रथ्य द्वे ककुभौ उत्तरे संपादनीये इति संशये, [3]प्रग्रथनेन मुख्यककुप् गुणसंपत्यभावादक्षरसामान्यमात्रेण गौणत्वापत्तेः। तृचगानस्य त्रयमन्तरेणा-सामञ्जस्यात्, अन्ययोः ककुभोः आनयनमिति पूर्वपक्षं प्रापय्य, प्र[4]गाथस्मरणात्, प्रगाथसमाख्यानात् पंक्तेश्च उत्तरत्वेन पाठस्य [5]अत्यन्त आनर्थक्यापातात् पादं पुनरारभत इति दर्शनात् [6]तृचगानस्य सामान्येन विहितस्यात्र [7]पृथक् गानादत्यन्तदोषाभावात् [8]प्रग्रथनमिति सिद्धान्तितं ऊहलक्षणे द्वितीयपादीय "प्रागाथिकं "प्रागाथिकं त्वि"ति षष्ठाधिकरणे ।।

---

[1] छन्दोरुत्तरयोः (ख, ग, घ, ङ)

[2] प्रगृह्य (ख, ग, घ)

[3] प्रागाधनेन मुख्यकरपुटसं- (क, ख, ग, घ, ङ)

[4] प्रागाथस्मरणात् (ख, ग, घ),

[5] आद्यन्त आनर्थक्यात् पादात् पादं (क, ख, ग, घ, ङ)

[6] पादगानस्य (क), पञ्चगानस्य (ख, ग, घ, ङ)

[7] प्रगाथेऽत्यन्ता (क, ख, ग, घ)

[8] प्रग्रहमिति (ख, ग, घ), प्रगाथं (क)

अत्र उत्तराग्रन्थे रथन्तरस्य प्रगाथाम्नानात् तृचगाननिर्वाहाय ऋगन्तरापेक्षायां न वै बृहद्रथंतरमेकछन्दस्तयोः "पूर्वा बृहती", "ककुभावुत्तरे" इति वचनबलात् उक्तरीत्या [1]प्रग्रथनेन [2]ककुप् द्वयं सम्पादनीयम् । तत्र प्रथमऋगन्वितस्यापि तत्पादस्य द्वितीया[3]यामपि अन्यदर्शनाच्चेत्यर्थः ।

यद्यप्यत्र प्रागाथनसंपादनाय ऋचो नार्थपरत्वेन मुख्यं ककुप्त्वम् । किन्तु षष्ठी स्त्रीषु भामाध्यन्दिनं [4]पवनमितिवत् वर्णसंख्या [5]साम्यमात्रेण गौणम् । तथापि एकत्रान्वितस्यान्यत्रापि अन्वितत्वमात्रेण दृष्टान्तः । तदुक्तं शाबरभाष्ये - किं हि वचनं न कुर्यात्, वर्णसंख्यासामान्यमात्रेण गौणम् । तथापि एकत्र [6]ऋत्विः प्रचरन्तीत्यादाविव न्यायमुल्लंघ्यादिवचनं प्रवर्तत इत्यर्थः ।

---

[1] प्रगाधेन (क)

[2] ककुभोर्द्वयं (क, ख, ग, घ, ङ)

[3] -यायामपि ऋचि अन्व- (क)

[4] सवनं (ख,ग)

[5] समान्यमात्रेण (क)

[6] ऋत्विजः (क, ख, ग, घ, ङ)

Ending portion of GOML Mss. (क)-

तात्पर्यचन्द्रिकायां ये न्यायाः पूर्वतन्त्रपरिगणिताः ।
विषयाद्यङ्गसमेता विजयीन्द्रेण व्यधायि तन्माला ।।

श्रीमद्रामार्यपादाब्जभ्रमरयितचेतसा ।
कमनीयन्यायमाला कामाप्त्यै लिखिता मया ।

यत्कीर्तिर्जगतीतलेऽतिविशदा यत्ख्याति राज्ञानुगा
यत्स्फूर्तिस्सकलप्रमेयविषया यद् दृष्टिरिष्टार्थदा ।

यद्युत्पत्तिरशेषशास्त्रविषया यत्संसृतिर्बुद्धिदा

सर्वतन्त्र स्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
चन्द्रिकोदाहृतन्यायाः विवृताः बालसंविदे ।। छ ।।

**इति श्रीमद्विजयीन्द्रभिक्षुविरचितं चन्द्रिकोदाहृतन्यायमालाविवरणं समाप्तम् ।। छ ।।**

**।। श्रीकृष्णार्पणमस्तु ।।**

************

---

यद्भक्तिः प्रविविक्ततत्त्वविषया यद्भक्तिरुक्तार्थदा ।।
तान्धूमार्यगुरून्नमामि सततं सत्कामकल्पद्रुमान्
केयं व्यासविधूदिता शुभधियां सच्चन्द्रिकासौख्यदाम् ।
सेयं शीतकरा सतां हि कुधियां या तन्त्रिकागुंफिता
क्वाहं मन्दमतिस्तदीयनयगा माला गुरोरार्जिता
वाहन्ति प्रबला कृपा गुरुकृता मां पण्डितानां सभाम् ।।

श्रीः ।। श्रीः ।। श्रीः ।।

श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः

# ओङ्कारार्थवादः

सम्पादकः
डा. व्यासनकेरे प्रभञ्जनाचार्यः

।। श्रीः ।।

## श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः

# ओङ्कारार्थवादः

।। श्रीगुरुभ्यो नमः ।।

।। श्रीवेदव्यासाय नमः ।। हरिः ॐ ।।

ननु भगवत्पादैरेवानुव्याख्याने -

'तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते ।
सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः ।।'[१]

इति 'अथातो ब्रह्मजिज्ञासा'[२] इति सूत्रस्य तारशब्दितोङ्कारमूलत्वमुक्तम् । यथाऽथशब्दमूलत्वं [३]त्वत्रैव तारशब्दितोङ्कारः 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्'[४] इति व्याख्यातश्च ।

तत्र तारस्य मूलत्वं नाम न अथशब्दादिवत् सूत्रकृता सूत्रशरीरप्रविष्टतयोच्चरितत्वम् । मानाभावात् । प्रत्युत 'अथातो ब्रह्मजिज्ञासा' इत्येतावन्मात्रमेव [५]सूत्रशरीरमिति प्रसिद्धेः । तदविरोधेनापि न तस्य तथात्वं वाच्यम् । न च सूत्रकृतः कर्तव्यपदवदध्याहार्यत्वेन तात्पर्यविषयत्वं वा तदर्थनिरूपितसंसर्गप्रतीत्यविषयत्वं[६] वा । मानाभावादेव । न च सूत्राणां [७]वेदप्रवचनरूपत्वात् प्रवचनेनोङ्कारोच्चारणस्य 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'[८] इति श्रुति-

---

१ अनुव्याख्याने (१/१/८)

२ ब्रह्मसूत्रम् (१/१/१)

३ तत्रैव (पा.)

४ अनुव्याख्याने (१/१/९)

५ प्रथमसूत्रशरीरमिति (पा.)

६ ...प्रतीच्छाविषयत्वं (पा.)

७ वेदवचनरूपत्वात् (पा.)

८ तैत्तिरीयोपनिषत् (१/१९)

सिद्धत्वात् प्रमाणाभावोऽसिद्ध इति वाच्यम् । एवमप्यथशब्दादिवदोङ्कारस्य सूत्रशरीरप्रविष्टत्वेन सम्भूयैकार्थप्रतिपादनेच्छया सूत्रकृदुच्चरितत्वे मानस्यानुपन्यासात् । उदाहृतश्रुत्या दृष्टार्थत्वे तदुच्चारणस्यावेदनेन 'अथ'शब्दादितुल्यतया सम्भूयैकार्थप्रतिपादनेच्छयोच्चरितत्वे 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते'[९] इति श्रुतिस्तत्रमानमिति[१०] प्रत्यूढम् । एतेनैव 'अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः'[११] इति भाष्योदाहृतस्मृतिस्तत्र मानम् । कुतः ? पूर्वमिति जिज्ञासायां भाष्योदाहृतपूर्वोत्तरस्मृतिवाक्यपर्यालोचनया सूत्रेभ्यः पूर्वमिति तद्वाक्यार्थलाभादित्यपास्तम् । तत्स्मृतेरप्यदृष्टार्थतयैव सूत्रात् पूर्वमुच्चारणकर्तव्यतापरतया ओङ्कारस्योक्तविधोच्चारणविषयत्वे [१२]तूदासीनत्वात् । सूत्राणामविशेषेण तासु स्मृतिषु प्रस्तुतत्वेन मीमांसाशास्त्रप्रथमसूत्रात् ब्रह्ममीमांसाशास्त्रप्रथमसूत्रादेव वा पूर्वमेव तेषां तथोच्चारणीयत्वे[१३] भाष्योदाहृतस्मृतेरप्रमाणत्वाच्च । जैमिन्यादिसूत्रेष्वदर्शनादसम्प्रतिपत्तेश्च । अपि च,

"[१४]अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि ।

---

९ भगवद्गीतातात्पर्योदाहृत(१७/२७)श्रुतिः ।
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति ।। - इति मनुस्मृतिवचनम्

१० प्रमाणमिति (पा.)

११ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१२ उदासीनत्वात् (पा.)

१३ तथोच्चारणीयतया (पा.)

१४ ननु "अथातश्शब्दपूर्वाणि सूत्राणि निखिलान्यपी"ति भाष्योदाहृतस्मृतौ अथातः शब्दयोरेव प्राथम्यं सिद्धवत्कृत्य "कश्चार्थश्च तयोर्विद्ध"न्नित्यादिना तयोरेव प्रश्नपरिहारयोः प्रवृत्तेः "सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जत" इत्यवधारणेनोङ्कारव्यवच्छेदपूर्वं तयोरेवादित्वोपसंहाराच्च कथमोङ्कारस्यादित्वमुपेत्यानुव्याख्याने व्याख्यातमिति चेन्न । उपक्रमादिना तयोः सूत्रावयवत्वस्यैव सिद्ध्या ओङ्कारस्याव्यवच्छेदादोङ्कारस्य माङ्गलिकत्वादिनाऽऽदित्वं "ओङ्कारश्चाथशब्दश्च, सिसृक्षोः परमाद्विष्णोः, "स्रवत्यनोङ्कृतं ब्रह्मे"त्याद्यनेकमानसिद्धमिति निश्चिन्वता अथातश्शब्दमात्रविषयकप्रश्ने कृते तत्रैव परिहार इत्युपपत्तेः । अत एव टीकायां मङ्गलोक्त्यादेः शब्दान्तरेण सम्भवादित्युक्तम् । तावेवादावित्युपसंहारस्थावधारणस्यापि ब्रह्मशब्दादिव्यवच्छेदकत्वोपपत्तेः । ब्रह्मशब्दाद्यपेक्षया तावेवेति तावादौ प्रयुञ्जत एवेति वा भिन्नक्रमेणाप्युपपत्तेः । विरोधाधिकरणन्यायेनोक्तश्रुतिविरोधेन तावेवेत्युपसंहारस्योक्तार्थानुसरणावश्यंभावाच्च । ओङ्कारव्यवच्छेदभ्रान्तिनिरासायैव सिसृक्षोरिति स्मृत्योङ्कारस्य मुख्यादित्वमथातःशब्दयोरमुख्यादित्वं चाभिधाय अतश्च पूर्वमुच्चार्या इति पूर्वोच्चारणविधानाच्च ।
- इति श्रीराघवेन्द्रतीर्थ-श्रीचरणकृततात्पर्यचन्द्रिकाप्रकाशे ।

प्रारभन्ते नियत्यैव तत् किमत्र नियामकम् ।।'[१५]

इत्यादि भाष्योदाहृतस्मृतिषु विद्यमानस्य सूत्रशब्दस्य किं वेदाङ्गभूतव्याकरणसूत्रमीमांसा-सूत्रादिसाधारणसूत्रमात्रमर्थः, किं वा मीमांसासूत्रमेव । अथवा तत्रापि ब्रह्मसूत्रमात्रमेव वा । नाद्यः । 'अ इ उण्', 'वृद्धिरादैच्' इत्यादिव्याकरणसूत्रेषु अथातःशब्दपूर्वकत्वाभावेन प्रश्नप्रतिवचनयोस्तत्साधारणसूत्राणामुदाहृतस्मृतिगतसूत्रशब्दविषयत्वायोगात् । न द्वितीयः । 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि' इति प्रश्नरूपोपक्रमे बहुवचनान्तसूत्रशब्दस्य [१६]निखिलशब्दस्यापिशब्दस्य चायोगात् । 'सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जते' इत्युप-संहारेऽपि बहुवचनान्तसूत्रशब्दायोगाच्च । किञ्चोदाहृतस्मृतिगतसूत्रशब्दस्य न पूर्वो-त्तरमीमांसासूत्रसाधारणसूत्रमात्रमर्थो भवितुमर्हति । तत्रत्यनिखिलसूत्राणां 'अथातः'-शब्दपूर्वकत्वस्यादर्शनात् । तत्रत्यद्वितीयतृतीयतुरीयादिसूत्रेषु तत्पूर्वकत्वानुपलब्धेः । बाधितार्थत्वात् । न चोदाहृतस्मृतिगतनिखिलशब्दबहुवचनान्तसूत्रशब्दाभ्यां पूर्वोत्तर-मीमांसादिसूत्ररूपतद्विशेषाणां विवक्षितत्वाददोष इति वाच्यम् । एवमपि बहुवचनान्त-'सूत्र'-शब्द'निखिल'शब्दयोरर्थाभावेन वैयर्थ्यापरिहारात् । न हि यथावदर्थं विना एतत् सार्थकमुपपद्यते । अथातःशब्दपूर्वकदेवमीमांसादिकमप्यादावतदवैयर्थ्येऽपि तत्र तादृशसूत्रसद्भाव एव माना-भावात् । तद्वैयर्थ्यशङ्कानिस्तारात् । न चोदाहृतस्मृतिगतबहुवचनान्तसूत्रशब्द'निखिल'-शब्दान्यथानुपपत्त्या देवमीमांसादिमसूत्रस्यापि अथातःशब्दपूर्वकत्वं कल्प्यत इति वाच्यम् । तयोः 'अथातो धर्मजिज्ञासा'[१७], [१८]'अथातः शेषलक्षणम्', [१९]'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इत्यादितत्तदध्यायादिमसूत्राण्यप्यध्यायादावुपपत्त्या देवमीमांसादिमसूत्रस्याथातःशब्दपूर्व-कत्वे प्रमाणत्वायोगात् ।

किञ्चैवं भाष्योदाहृतस्मृतिगतबहुवचनान्तसूत्रशब्दनिखिलशब्दयोरवैयर्थ्यप्रतिपादन-मयुक्तम् ।

१५ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१६ निखिलशब्दस्य तथा अपिशब्दस्यायोगात् (पा.)

१७ पूर्वमीमांसासूत्रम् (१/१/१)

१८ पूर्वमीमांसासूत्रम् (३/१/१)

१९ पूर्वमीमांसासूत्रम् (४/१/१)

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित् तदन्यथाजातं त्रेतायां द्वापरेऽखिलम् ।
गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ।
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ।
चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ।
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ।
सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेषु निर्णयाः समुदीरिताः ।
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ।[२०]

---

२० ब्रह्मसूत्रभाष्योदाहृत(१/१/१)स्कान्दवचनम् ।

[21]इत्यादि ब्रह्मसूत्रमात्रमुख्यत्वे सूत्रत्वप्रतिपादकतन्मुख्यसूत्रत्वोपपादकरूपप्रतिपादकभाष्योदाहृतस्कान्दपुराणवचनविरोधात् । लौकिकनिरुपपदतच्छब्देन प्रतिपाद्यस्य [22]मुख्यत्वव्यवहारभाक्त्वदर्शनात् । भाष्योदाहृतस्मृतिष्वपि 'सूत्राणि निखिलान्यपि' इति निरुपपदसूत्रशब्दसत्वादिति।

किञ्चैवं सति न केवलं ब्रह्मसूत्रमात्रमुख्यसूत्रत्वप्रतिपादकभाष्योदाहृतस्कान्दपुराणवचनमात्रविरोधः, [23]अपि च -

'नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।।'[24]

इति भाष्यकारीयाद्यपद्यगतप्रतिज्ञाभागव्याख्यानार्थं प्रवृत्तेन ''अत्र निरुपपदसूत्रशब्देन ब्रह्मसूत्रमुच्यते । तस्य मुख्यार्थाभिधायकत्वात् । तेषां च तादृशत्वात्''[25] इति [26]टीकावचनेन [27]च विरोधः । न चौत्सर्गिकतात्पर्यविषयत्वरूपमुख्यत्वमादाय टीकावचनप्रवृत्तिसम्भवात् न चैतद्विरोध इति वाच्यम् । तथा सति तेषां च तादृशत्वादिति ब्रह्मसूत्राणामेव मुख्यत्वप्रतिपादनपरावधारणार्थक-'च'शब्दसमभिव्याहृतटीकावाक्यविरोधात् । तत्र 'च'शब्दस्य 'अपि'शब्दार्थपरत्वाङ्गीकारे च सूत्रान्तराणामपि मुख्यत्वप्रसङ्गः स्यात् । न चेष्टापत्तिः । औत्सर्गिकतात्पर्यविषयत्वरूपमुख्यत्वस्य ब्रह्मसूत्रेष्विव सूत्रान्तरेष्वपि सत्वाविशेषादिति वाच्यम् । तादृशमुख्यत्वस्य [28]सूत्रशब्दवाच्यमात्रे सत्वेनाविशेषे ब्रह्मसूत्राणि पुरस्कृत्य

'चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।'

२१ 'नारायणाद्विनिष्पन्नम्' इत्यारभ्य 'ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः' इति पर्यन्तं ब्रह्मसूत्रमात्रमुख्यसूत्रप्रतिपादकभाष्योदाहृतस्कान्दपुराणवचनविरोधात् । (पा.)

२२ मुख्यसूत्रत्व... (पा.)

२३ अपि तु (पा.)

२४ ब्रह्मसूत्रभाष्यमङ्गलश्लोकः

२५ इति तत्त्वप्रकाशिकायां भाष्यमङ्गलपद्यव्याख्यानावसरे ।

२६ टीकाकारवचनेन (पा.)

२७ क.पाठे 'च' इति नास्ति ।

२८ सूत्रशब्दमात्रे (पा.)

इत्यादिना भाष्योदाहृतस्कान्दपुराणवचनेन तेषामेव सूत्रशब्दमुख्यार्थत्वे तदुपपादकवर्णन-वैयर्थ्यात् । तादृशमुख्यसूत्रशब्दार्थत्वस्य सूत्रान्तरेष्विव ब्रह्मसूत्रेष्वपि सर्वसम्प्रतिपन्नत्वेन विप्रतिपत्त्यभावात् । [२९]तथा चेतरसूत्रस्याव्यावृतमेव ब्रह्मसूत्रेष्वमुख्यमात्रत्वं वाच्यम् । एवं च सति, कथमुक्तरीत्याश्रयणे भाष्योदाहृतब्रह्मसूत्रमात्रमुख्यसूत्रत्वावेदकस्कान्दवचनविरोधो न स्यात्? न च सोऽर्थवाद इति शक्यमभ्युपगन्तव्यम् । [३०]भाष्योदाहृतस्कान्दवचनानाम् अर्थवादत्वाश्रयणायोगात् । इतरसूत्रेष्विव ज्ञानार्थं ब्रह्मसूत्रेष्वप्यर्थवादं विनाऽपि प्रेक्षावत्प्रवृत्तिसम्भवेन तद्वैयर्थ्यतादवस्थ्यात् ।

नन्वस्य शब्दस्यायं मुख्यार्थ इत्यत्र प्रवृत्तिनिमित्ताक्रान्तत्वमेव तन्त्रम् । [३१]नान्यदिति । सूत्रशब्दप्रवृत्तिनिमित्तं च यावदक्षरतां विना विवक्षितार्थासिद्धिः । तद्रूपाल्पाक्षरत्वे सति । एवं च भवितुमर्हतीति वचनमसन्दिग्धत्वे सति विशिष्टार्थत्वरूपसारवत्वे सति बहुशाखाप्रतिपाद्यनिर्णयहेतुत्वरूपविश्वतोमुखत्वे सति [३२]व्यर्थाक्षररहितत्वरूपास्तोभत्वे सति अपशब्दादिविधुरत्वरूपमनवद्यत्वमेव । तच्चेतरसूत्रसाधारणमिति विशेषाभावे निर्णीते स्कान्द-वचनानामर्थवादतयाऽस्य सूत्रापेक्षया अव्यवधानेन मोक्षोपायिकतया प्राशस्त्यसमर्पकत्व-मेवोपयोगोऽकामेनापि स्वीकार्यः । प्रस्तारान्तरासम्भवात् । न च प्रवृत्तिनिमित्तबाहुल्यमेवात्र मुख्यत्वेन तत्र सम्भवतीति वाच्यम् । स्वरूपसतस्तद्बाहुल्यस्य मुख्यत्वे अतन्त्रत्वात् । अन्यथा बहुपङ्कजस्यैव [३३]पङ्कजशब्दमुख्यार्थत्वोपपत्तिः । तस्यापि सूत्रशब्दनिरूपितशक्तिगोचरत्वेन नानार्थत्वप्रसङ्गात् । प्रमाणं विना नानार्थताश्रयणस्यान्याय्यत्वात् । अन्याय्यश्चानेकार्थत्वमिति न्यायात् । तस्मात् प्रवृत्तिनिमित्ताक्रान्तत्वमेव मुख्यत्वं ब्रह्मसूत्रेषु वाच्यम्, नान्यत् । तच्चेतरसूत्रेष्ववशिष्टमिति [३४]घट्टकुट्टिप्रभातवृत्तान्तोऽयं सञ्जात इति मैवम् । अर्थवादभावासम्भव-

---

२९ तथा चेतरसूत्रव्यावृत्तमेव ब्रह्मसूत्रेषु मुख्यसूत्रत्वं वाच्यम् (पा.)

३० भाष्योदाहृतवचनानाम् (पा.)

३१ नान्यत् (पा.)

३२ व्यर्थाक्षरराहित्यत्व (पा.)

३३ पङ्कजपदमुख्यार्थतापत्तेः (पा.)

३४ शुल्कदानभिया विपथेन रात्रौ पलायमानस्य चौरवणिजः घट्टस्थकुटीसमीपे प्रभाते यथाऽभीष्टसिद्ध्यभावः, एवं विपथेन धावमानस्य तद्दोपतादवस्थ्यरूपो हि न्यायभेदः तथाभूतः - तदिदं घट्टकुट्टीप्रभातवृत्तान्तमनुसरति ।
- इति वाचस्पत्ये ।

स्योक्तत्वात् । तथात्वाश्रयणे वैयर्थ्यतादवस्थ्याच्चेति ।

एतेन योगरूढिभ्यां येन शब्देन योऽर्थः प्रतिपाद्यते तस्य शब्दस्य सोऽर्थो मुख्यः । यथा [३५]ब्रह्मेन्द्रादिशब्दस्य परमात्मा रूढिमात्रेण प्रतिपाद्यस्त्वमुख्य [३६]इष्यत इति तद्विवेक इति निरस्तम् । तथा सति स्थलपद्मे पङ्कजशब्दस्यामुख्यत्वप्रसङ्गात् । तथा मण्टपशब्दस्य गृहविशेषे मुख्यार्थो न स्यात् । स्थलपद्मे पङ्कजनिकर्तृत्वशक्तिरूपावयवशक्तिरूपयोगार्थाभावात् । गृहविशेषे मण्टपानकर्तृत्व(?)रूपतथाविधार्थाभावाच्च ।

किञ्च रूढ्यर्थस्यैव योगार्थापेक्षया प्रथमोपस्थितिसम्भवेन तस्यैव [३७]मुख्यार्थत्वाश्रयणं युक्तम् । मुखे भवं हि मुख्यम् । [३८]तच्चार्थनियमवशत्वात् । प्रथमोपस्थितत्वमेव नान्यदिति । तथा च सूत्रमात्रस्यापि सूत्रशब्दमुख्यार्थत्वं दुर्वारम् । किञ्च ब्रह्मसूत्रेष्विवेतरसूत्रेष्वपि सूत्रशब्दस्य मुख्यरूढिरस्तीत्यविवादम् । अत एव **चन्द्रिकायां** बहुशाखानिर्णायकत्वरूपविश्वतोमुखत्वस्य सूत्रशब्दप्रवृत्तिनिमित्तशरीरप्रविष्टस्य [३९]विशेषणस्य च व्याकरणसूत्रेष्वसत्वादव्याप्तिरित्याशङ्क्य साऽव्याप्तिः परिहृता[४०] ।

विश्वतोमुखत्वं हि बहुशाखानिर्णायकत्वम्, तदपि न बहुशाखारूपवाक्यार्थमात्रनिर्णायकत्वमिह विवक्षितम् । येन [४१]तदभावाद्व्याकरणसूत्रादिष्वव्याप्तिः स्यात् । किन्तु बहुशाखाप्रतिपाद्यनिर्णयप्रयोजकत्वमेव । तच्च व्याकरणसूत्रेषु सुरुहम् । वाक्यार्थस्यैव पदार्थस्यापि प्रतिपाद्यत्वेन तन्निर्णयप्रयोजकत्वात् । न हि व्याकरणसूत्राणि बहुशाखाप्रतिपाद्यपदार्थनिर्णायकान्यपि न भवन्तीत्यस्ति । एवं सूत्रशब्दस्य [४२]सूत्रमात्रे योगोऽप्यस्यैव बह्वर्थवाचकत्वात् । सूत्रमित्यभियुक्त-

---

३५ ब्रह्मात्मेन्द्रादिशब्दस्य... (पा.)

३६ क.पाठे 'इष्यते' इति नास्ति ।

३७ मुख्यत्वाश्रयणं (पा.)

३८ तच्चार्थनियमतः शब्दात् (पा.)

३९ विशेषणस्य सव्याकरण... (पा.)

४० बहुशाखानिर्णायकत्वमिति - सव्याकरणसूत्रादेरपि बहुशाखागतपदार्थनिर्णायकत्वान्नाव्याप्तिरिति ज्ञेयम् । - इति श्रीव्यासतीर्थकृततात्पर्यचन्द्रिकायाम् ।

४१ तदभावात् सव्याकरण... (पा.)

४२ सूत्रमात्रयोगस्यैव (पा.)

व्यवहारसद्भावात् । तथा च ब्रह्मसूत्रवदितरेषामपि सूत्राणां सूत्रशब्दमुख्यार्थत्वं दुर्निरस्यम् । तथा च 'अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः' इति स्मृत्या 'ओम् अथातः'शब्दानां तुल्यब्रह्मसूत्रमात्रादेवापूर्वत्वमापतितम् । ननु मीमांसासूत्रमात्राद्वा ब्रह्ममीमांसासूत्राद्वेति न तस्य विवक्षितार्थे प्रमाणाभाव उपपद्यते च तथेति ।

एतेनैव महायोगविद्वद्रूढिभ्यां येन शब्देन योऽर्थः प्रतीयते, तस्य शब्दस्य स मुख्यार्थः । इतरस्तु तस्यामुख्यार्थ इति विवेकः । अत एव ब्रह्मात्मेन्द्रादिशब्दानां परमात्मैव मुख्यार्थः, तत्रैव तेषां महायोगविद्वद्रूढ्योः सत्वादिति वदन्तीति निरस्तम् । योगस्यावयवशक्तिरूपस्य महत्वमुत्कृष्टार्थत्वविषयत्वमेव, न त्वतिरिक्तं दुर्वचत्वात् । तथा च सर्वरूपेणोत्कृष्टार्थ-विषयत्वं तथाव्यवहाररहितेऽप्यस्तीति प्रतीतिद्वारा तद्विषयत्वमेव शब्दमुख्यार्थत्वे तन्त्रमिति स्वीकार्यम् ।

तच्च स्वीकर्तुमशक्यम् । तथा सत्यनेकार्थत्वप्रसङ्गात् । प्रमाणं विनाऽनेकार्थत्वाश्रयण-स्यान्याय्यत्वात् । अन्याय्यश्चानेकार्थत्वमिति न्यायादित्युक्तम् । न हि [४३]तादृशमहत्त्वप्रकारकतदुप स्थित्यनुकूलत्वे रूपान्तरेण च तदुपस्थित्यनुकूलत्वे स्वीक्रियमाणे नानेकार्थत्वमापततीत्यस्ति । अ नेकशक्यतावच्छेदकप्रकारकप्रतीतिजनकत्वस्यैवानेकार्थत्वात् । न हि सैन्धवाक्षादिशब्देष्वितोऽ-तिरिक्तमनेकार्थत्वं नामास्ति । यद्यपीदं रूपं सर्वनामस्वप्यविशिष्टं, तथाऽप्युक्तरूपपुरस्कारेण तेषामपि नानार्थत्वमिष्टमेव । एवं पुष्पवन्तशब्दादिष्वपि ।

किञ्चार्यप्रसिद्धिरेव विद्वद्रूढिः । न त्वन्या मानाभावात् । आर्याश्च म्लेच्छादिव्यतिरिक्ता एवेति वेदप्रामाण्यानभ्युपगन्तृमात्रसिद्धशाब्दशक्तिरेव विद्वद्रूढिपदेन व्यावर्तनीयत्वात् ।

एवं च सूत्रशब्दस्य सर्वसूत्रेषु तादृशी प्रसिद्धिरस्तीति ब्रह्मसूत्रवदितरसूत्राण्यपि न कथं सूत्रशब्दस्य मुख्यार्थ इति न विद्मः । अपि च 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि' इति भाष्योदाहृतस्मृतिषु सूत्रशब्दः मीमांसासूत्रमात्रपरः । तथा सति पूर्वोत्तरमीमांसासूत्रतो-ऽन्यसूत्रादावथातःशब्दयोरप्रयोगप्रसङ्गात् । उदाहृतस्मृतीनां तत्रैवादौ प्रयोगे प्रमाणाभावात् । नहि [४४]ततोऽन्यसूत्रादावप्यथातःशब्दयोरप्रयोग इत्यस्ति । न वा तत्र 'अपि'प्रयोगे मानान्तरम् ।

४३ तादृशमहत्त्वत उपस्थित्यनुकूलत्वे (पा.)

४४ ततोऽन्यत्रादा... (पा.)

एवं च 'अतश्च पूर्वमुच्चार्याः सर्वे एते सतां मताः' इति वचनम् अथातःशब्दतुल्यतयोङ्कार-स्यापि[४५] विशेषेण सूत्रमात्रात् पूर्वत्वमाहेत्यापतितम् । न चैवं क्वचित् सूत्रे अथातःशब्दयोः सत्वेऽपि ओङ्कारस्य व्यतिरेकनिश्चयात् । क्वचिद्व्याकरणसूत्रगौतमसूत्रेष्वथातःशब्दयोरपि व्यतिरेकनिश्च-याच्च । तस्मात् तद्वचनोक्तं प्रथमसूत्रादौ ओमथातःशब्दानां उच्चारणे न नियामकमिति स्थितम्।

अत एव 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'[४६] इति विधिवलान्मीमांसादिसूत्रादिमोङ्कारस्य निश्चितोऽन्वयः । अथातःशब्दयोः प्रमाणाभावेन तथात्वमिति निश्चित्य 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि' इत्यादिना तयोरेव प्रश्नः । तथा तयोरेव नियामकोक्तिपूर्वकं प्रतिवचनं भाष्योदाहृतस्मृतिष्विति निरस्तम् । अदृष्टार्थमोङ्कारोच्चारणस्य सर्वसम्प्रतिपन्नत्वात् ।

किञ्च पाणिनीयादिसूत्राद् गौतमीयादिसूत्राच्च [४७]पूर्वमदर्शनेन अथातःशब्दयोरुच्चारणे नियामकत्वेन स्मृत्युक्तं नियामकत्वमेव नेत्युन्नीयते । न हि पाणिनिः गौतमो वा नियामकत्वमुल्लङ्घ्य शास्त्रादिमसूत्रं निर्ममे इति शक्यमभ्युपगन्तुम् । अत एव न तृतीयः । न ह्युदाहृतस्मृतिगतः 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि' इति सूत्रशब्दः ब्रह्मसूत्रमात्रपर इति शक्यमभ्युप-गन्तुम् । 'अथातो दर्शपूर्णमासौ व्याख्यास्यामः' इत्यादिमसूत्रेष्वेतयोर्दर्शनादिति ।

केचित् तु – अस्तु वा तथा । तथाऽप्योङ्कारस्य प्रथमसूत्रेपूच्चारणकर्तव्यता अदृष्टार्थतयैव स्मृतिगोचरः न तु [४८]सम्भूयातःशब्दादिवदेकार्थप्रतीतीच्छया । अन्यथा

'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि ।
प्रारभन्ते नियत्यैव तत्किमत्र नियामकम् ।'

इत्यादि भाष्योदाहृतानेकस्मृतिविरोधः । तत्र हि उपक्रमे अथातःशब्दावेवोपक्रम्य 'कश्चार्थश्च तयोर्विद्वन् कथमुत्तमता तयोः'[४९] इत्यादिना तावेव मध्ये परामृश्य 'सूत्रेषु तु महाप्राज्ञा-

---

४५ क.पाठे 'अपि' इति नास्ति ।

४६ तैत्तिरीयोपनिषत् (१/१९)

४७ पूर्वमदर्शनात् (पा.)

४८ सम्भूयाथातःशब्दयोरेकार्थ... (पा.)

४९ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

स्तावेवादौ प्रयुञ्जते' इति सावधारणमोङ्कारस्य व्यवच्छेदेनाथातःशब्दावेवोपसंहृतौ । उपसंहारस्योपक्रमव्याख्यानरूपतया[50] बलीयस्त्वमङ्गीकुर्वता त्वया तदनुसारेणैवोपक्रमस्योपसंहृतार्थपरत्वमवश्यमेपितव्यम् । एवं चानुव्याख्यानमपि भाष्यविरोधादोङ्कारस्य प्रथमसूत्रावयवत्वप्रतिपादनपरं नेत्यस्तु । एवं सति ''ओङ्कारस्तु पृथगुच्चरितो वेदितव्यः । न अथशब्दवत् सूत्रोपनिबद्धः'' इत्योङ्कारस्य प्रथमसूत्रात् सार्थक्यप्रतिपादक**सन्न्यायरत्नावली**वाक्यमप्यनुकूलं[51] भवति । अन्यथा तद्विरोधोऽपि स्यात् । अत एवानुव्याख्याने 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' इत्योङ्कारार्थवर्णनं प्रकृतानौपयिकं कथञ्चिद्वर्णनस्योपयोगसत्त्वेऽपि सूत्रार्थवर्णनावसरे तदुपयुक्तसूत्रे तत्र पदार्थवर्णनस्य बोधितत्वेन ओङ्कारार्थवर्णनस्य पदार्थत्वं तदवस्थात् । न हि ओम्पदं सूत्रे पदमित्यथापि निश्चितम्, येन एतदर्थवर्णनमपि प्रकृतोपयुक्तो न स्यादित्याहुः ।

किञ्चोङ्कारस्योतत्ववाचित्वेन निगमनिरुक्तव्याकरणकोपकारस्मरणादिरूपं प्रमाणं पश्यामः । किञ्चोङ्कारश्चावतेष्टिलोपश्चेत्युणादिसूत्रात् 'अव रक्षणे' इति धातुनिष्पन्नत्वावगतेः रक्षकवाचकत्वमेवावधार्यते । किञ्चोङ्कारस्योतत्वे अतः ओङ्कारं पक्षयित्वा, विमतः ओङ्कारः, अथातो ब्रह्मजिज्ञासेति सूत्रावयवत्वेन व्यवहर्तव्यः । तत्सूत्रार्थभूतसंसर्गप्रतियोग्युपस्थापकत्वात् । यः शब्दो यद्वाक्यार्थभूतसंसर्गप्रतियोग्युपस्थापकः । तत्तद्वाक्यावयवत्वे स व्यवह्रियते ।। यथा 'पर्वतोऽग्निमान्' इति प्रतिज्ञावाक्यार्थभूतसंसर्गप्रतियोग्युपस्थापकोऽग्निमानिति शब्दः तद्वाक्यावयवः । इति व्यवह्रियते, इत्यनुमानादोङ्कारस्य ब्रह्मसूत्रावयवत्वं सेत्स्यतीति प्रत्यूढम् । तात्पर्यविषयीभूतसंसर्गप्रतियोग्युपस्थापकत्वं सिद्धम् ।

---

५० ...व्याख्यानतया (पा.)

५१ यत्त्वध्ययनोपक्रमादावुच्चार्यमाणस्याप्योङ्कारस्य तदवयवत्वं सुधायामेवोक्तं तदपि तदुच्चारणस्यार्थानुसन्धानद्वारैवाङ्गत्वमभिप्रेत्य । सन्न्यायरत्नावल्यां तु ओङ्कारस्तु पृथगुच्चरितो वेदितव्यः। नाथशब्दवत्सूत्रोपनिबद्ध' इति सूत्रार्थात्पार्थक्यमेवोक्तम् । तत्रानुव्याख्याने ओतत्ववाचीत्यादिना तदर्थकथनं सर्ववेदव्याख्येनोङ्कारार्थवाचकश्रीनारायणपदवाच्यस्य सर्ववेदार्थत्वाच्छास्त्रविपयत्वमित्यभिप्रेत्य । न तु सूत्रार्थतया । अन्यथा भर्गादिपदानामपि सूत्रावयवत्वं स्यात् । स एव भर्गशब्दार्थ इति तदर्थस्यापि कथनादिति भावः । - इति तात्पर्यचन्द्रिकायाम् ।

ओङ्कारे यथाकथञ्चित् संसर्गप्रतियोग्युपस्थापकत्वं च 'अहो विमलम्' । 'नद्याः कच्छे महिपश्चरति' इत्यादिवाक्येपु - नदीसंसर्गप्रतियोग्युपस्थापकत्वमहो विमलं जलं नद्या इति वाक्यानवयवे कच्छपदेऽप्यस्तीति दोपग्रस्तत्वेन तस्यानुमानस्य विवक्षितार्थसाधकत्वासम्भवात् । सत्यां पदार्थनिरूपितसंसर्गो भगवतः सूत्रकारस्यतात्पर्यगोचरः, इत्यत्र प्रमाणमस्तीति यो सोङ्कारे तात्पर्यगोचरसंसर्गप्रतियोग्युपस्थापकरूपजिज्ञासासूत्रावयवत्वसाधको हेतुरसिद्धो न स्यात् ।

एतेन प्रतिसूत्रं ब्रह्मविद्यात्वेनाद्यन्तयोरोङ्कारस्योहः कार्यः । "[52]न चोह्यमानं वाक्यात् पृथगमन्त्रेष्वप्यूह्यमानस्य तदवयत्वप्रसङ्गात् । तथा च मन्त्रेपूह्यमानशब्दन्यायेनैव प्रकृतेऽप्यूह्यमानस्यापि सूत्रावयवत्वं सेत्स्यतीति"[53] सुधायां यदुक्तं तदप्ययुक्तम् । सूत्राणां विद्यात्वे ब्रह्मविद्यात्वे च मानाभावेन प्रतिसूत्रं तथात्वे सुतरां मानाभावात् । "[54]सूर्यायेत्यूह्यम् प्रति अग्नय

५२ न चोह्यमानं वाक्यात् पृथगिति । यद्यपि अनाम्नातेप्वमन्त्रत्वमिति मन्त्रादावूह्यमानस्य तदनवयवत्वमिष्टमेव । अत एव 'सूर्याय जुष्टं निर्वपामि' इत्यूहिते सूर्यपदे 'इपे त्वा' इत्यादावध्याहृते 'छिनद्मि' इत्यादिपदे च वर्णस्वरलोपे मन्त्रभ्रेपप्रयुक्तं प्रायश्चित्तं नास्ति, किन्त्वपशब्दाद्युच्चारणप्रयुक्तमेव । तथाऽप्यत्रावयवशब्देन सम्भूयैकार्थकारित्वमभिप्रेतम् । तच्च प्रकृते मन्त्रादिस्थेऽध्याहारे चाक्षतमिति मन्तव्यम् । मन्त्रादावूह्यमानस्याध्याह्रियमाणस्य वा सम्भूयैकार्थप्रतिपत्तिरूपकार्यकारित्वात् । प्रकृते चाद्यसूत्रे ओङ्कारस्य वाक्यार्थान्वयित्वेन सम्भूयार्थप्रतिपादकत्वेऽपि द्वितीयादिसूत्रेपु स्रवणविशरणपरिहारमात्रत्वेन केवलादृष्टार्थस्य वाक्यार्थप्रतीतिस्थिरीकरणहेतुत्वेन तदेककार्यकारित्वात् । प्रथमसूत्रं तु स्विष्टकृदुत्तमप्रयाजवद् दृष्टादृष्टोभयार्थमिति बोध्यम् । अनुपङ्गपक्षे तु न कोऽपि शङ्काशूकः । 'या ते अग्ने हराशया' इत्यादौ तनूर्वर्पिष्ठेत्यादेरनुपज्यमानस्य मन्त्रावयवतायाः सिद्धान्तितत्वात् । सर्वं चैतदनुपदमेव सूत्रवाक्यार्थनिरूपणावसरे सपरिकरं प्रपञ्चयिप्यामः ।।

- इति श्रीविजयीन्द्रतीर्थकृतन्यायसुधाबिन्दौ

५३ "सुधावाक्यानां विक्षिप्तानां संङ्ग्रहेण क्वचिच्छब्दतः कचिदर्थतोऽनुवादोऽयम्"

- इति तात्पर्यचन्द्रिकाप्रकाशोक्तिरत्राप्यनुसन्धेया ।

५४ सूर्यायेति ।। नवमे "प्रकृतौ यथोत्पत्तिवचनमर्थाना"मिति तृतीयपादाद्याधिकरणे दर्शपूर्णमासयोः श्रुतोऽ"ग्नयेजुष्टं निर्वपामी"ति मन्त्रः "सौर्यं चरुं निर्वपे"दिति विकृतौ चोदकप्राप्तः । तत्राग्निपदस्थाने सूर्यपदप्रक्षेपेणोहितव्यमुत नेति संदेहे यथावस्थितस्वरूपस्यैव मन्त्रस्य चोदकेन प्रापितत्वादग्निपदेनैन्द्रीवत् गुणवृत्त्या सूर्यप्रकाशनसम्भवान्नोह इति प्राप्ते प्रकृतावग्निशब्दो न स्वरूपविवक्षयाऽऽम्नातः । अदृष्टार्थत्वापत्तेः । किन्तु देवतापदविवक्षया । दृष्टार्थतालाभात् । अतस्तेनैव रूपेण विकृतौ चोदकेन प्रापणादग्निपदस्य वैकृतदेवतापरत्वाभावात्तदुद्धारेण सूर्यपदप्रक्षेपेण चोहितव्यो मन्त्रः । ऐन्द्री तु स्वरूपेण गार्हपत्ये विनियुक्तेति वैपम्यमिति सिद्धान्तितम् । तत्र यथा सौर्ययागे सूर्यपदस्य चोदकेन प्राप्ते "देवस्यत्वे"ति मन्त्रेऽग्नय इति पदं स्थानिरूपं विद्यते न तथा प्रतिसूत्रमोङ्कारोहस्य स्थान्यस्तीत्यर्थः । इत्यादेरित्यादिपदेन नीवाराणामित्यूहं प्रति "व्रीहीणां मेधसुमनस्यमान" इति मन्त्रे व्रीहीणामित्यस्येवेति ग्राह्यम् ।।

- इति तात्पर्यचन्द्रिकाप्रकाशे

स्तावेवादौ प्रयुञ्जते' इति सावधारणमोङ्कारस्य व्यवच्छेदेनाथातःशब्दावेवोपसंहृतौ । उपसंहारस्योपक्रमव्याख्यानरूपतया[50] बलीयस्त्वमङ्गीकुर्वता त्वया तदनुसारेणैवोपक्रमस्योपसंहृतार्थपरत्वमवश्यमेपितव्यम् । एवं चानुव्याख्यानमपि भाष्यविरोधादोङ्कारस्य प्रथमसूत्रावयवत्वप्रतिपादनपरं नेत्यस्तु । एवं सति ''ओङ्कारस्तु पृथगुच्चरितो वेदितव्यः । न अथशब्दवत् सूत्रोपनिबद्धः'' इत्योङ्कारस्य प्रथमसूत्रात् सार्थक्यप्रतिपादक**सन्न्यायरत्नावली**वाक्यमप्यनुकूलं[51] भवति । अन्यथा तद्विरोधोऽपि स्यात् । अत एवानुव्याख्याने 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' इत्योङ्कारार्थवर्णनं प्रकृतानौपयिकं कथञ्चिद्वर्णनस्योपयोगसत्वेऽपि सूत्रार्थवर्णनावसरे तदुपयुक्तसूत्रे तत्र पदार्थवर्णनस्य बोधितत्वेन ओङ्कारार्थवर्णनस्य पदार्थत्वं तदवस्थात् । न हि ओम्पदं सूत्रे पदमित्यथापि निश्चितम्, येन एतदर्थवर्णनमपि प्रकृतोपयुक्तो न स्यादित्याहुः ।

किञ्चोङ्कारस्योतत्ववाचित्वेन निगमनिरुक्तव्याकरणकोषकारस्मरणादिरूपं प्रमाणं पश्यामः । किञ्चोङ्कारश्चावतेष्टिलोपश्चेत्युणादिसूत्रात् 'अव रक्षणे' इति धातुनिष्पन्नत्वावगतेः रक्षकवाचकत्वमेवावधार्यते । किञ्चोङ्कारस्योतत्वे अतः ओङ्कारं पक्षयित्वा, विमतः ओङ्कारः, अथातो ब्रह्मजिज्ञासेति सूत्रावयवत्वेन व्यवहर्तव्यः । तत्सूत्रार्थभूतसंसर्गप्रतियोग्युपस्थापकत्वात् । यः शब्दो यद्वाक्यार्थभूतसंसर्गप्रतियोग्युपस्थापकः । तत्तद्वाक्यावयवत्वे स व्यवह्रियते ।। यथा 'पर्वतोऽग्निमान्' इति प्रतिज्ञावाक्यार्थभूतसंसर्गप्रतियोग्युपस्थापकोऽग्निमानिति शब्दः तद्वाक्यावयवः । इति व्यवह्रियते, इत्यनुमानादोङ्कारस्य ब्रह्मसूत्रावयवत्वं सेत्स्यतीति प्रत्यूढम् । तात्पर्यविषयीभूतसंसर्गप्रतियोग्युपस्थापकत्वं सिद्धम् ।

---

५० ...व्याख्यानतया (पा.)

५१ यत्त्वध्ययनोपक्रमादावुच्चार्यमाणस्याप्योङ्कारस्य तदवयवत्वं सुधायामेवोक्तं तदपि तदुच्चारणस्यार्थानुसन्धानद्वारैवाङ्गत्वमभिप्रेत्य । सन्न्यायरत्नावल्यां तु ओङ्कारस्तु पृथगुच्चरितो वेदितव्यः। नाथशब्दवत्सूत्रोपनिबद्ध' इति सूत्रार्थात्पार्थक्यमेवोक्तम् । तत्रानुव्याख्याने ओतत्ववाचीत्यादिना तदर्थकथनं सर्ववेदव्याख्येनोङ्कारार्थवाचकश्रीनारायणपदवाच्यस्य सर्ववेदार्थत्वाच्छास्त्रविषयत्वमित्यभिप्रेत्य । न तु सूत्रार्थतया । अन्यथा भर्गादिपदानामपि सूत्रावयवत्वं स्यात् । स एव भर्गशब्दार्थ इति तदर्थस्यापि कथनादिति भावः । - इति तात्पर्यचन्द्रिकायाम् ।

ओङ्कारे यथाकथञ्चित् संसर्गप्रतियोग्युपस्थापकत्वं च 'अहो विमलम्' । 'नद्याः कच्छे महिषश्चरति' इत्यादिवाक्येषु - नदीसंसर्गप्रतियोग्युपस्थापकत्वमहो विमलं जलं नद्या इति वाक्यानवयवे कच्छपदेऽप्यस्तीति दोषग्रस्तत्वेन तस्यानुमानस्य विवक्षितार्थसाधकत्वासम्भवात् । सत्यां पदार्थनिरूपितसंसर्गो भगवतः सूत्रकारस्यतात्पर्यगोचरः, इत्यत्र प्रमाणमस्तीति यो सोङ्कारे तात्पर्यगोचरसंसर्गप्रतियोग्युपस्थापकरूपजिज्ञासासूत्रावयवत्वसाधको हेतुरसिद्धो न स्यात् ।

एतेन प्रतिसूत्रं ब्रह्मविद्यात्वेनाद्यन्तयोरोङ्कारस्योहः कार्यः । "[52]न चोह्यमानं वाक्यात् पृथगमन्त्रेष्वप्यूह्यमानस्य तदवयत्वप्रसङ्गात् । तथा च मन्त्रेपूह्यमानशब्दन्यायेनैव प्रकृतेऽप्यूह्यमानस्यापि सूत्रावयवत्वं सेत्स्यतीति"[53] **सुधायां** यदुक्तं तदप्ययुक्तम् । सूत्राणां विद्यात्वे ब्रह्मविद्यात्वे च मानाभावेन प्रतिसूत्रं तथात्वे सुतरां मानाभावात् । "[54]सूर्यायेत्यूह्यम् प्रति अग्नय

५२ न चोह्यमानं वाक्यात् पृथगिति । यद्यपि अनाम्नातेष्वमन्त्रत्वमिति मन्त्रादावूह्यमानस्य तदनवयवत्वमिष्टमेव । अत एव 'सूर्याय जुष्टं निर्वपामि' इत्यूहिते सूर्यपदे 'इषे त्वा' इत्यादावध्याहृते 'छिनद्मि' इत्यादिपदे च वर्णस्वरलोपे मन्त्रभ्रेषप्रयुक्तं प्रायश्चित्तं नास्ति, किन्त्वपशब्दाद्युच्चारणप्रयुक्तमेव । तथाऽप्यत्रावयवशब्देन सम्भूयैकार्थकारित्वमभिप्रेतम् । तच्च प्रकृते मन्त्रादिस्थेऽध्याहारे चाक्षतमिति मन्तव्यम् । मन्त्रादावूह्यमानस्याध्याह्रियमाणस्य वा सम्भूयैकार्थप्रतिपत्तिरूपकार्यकारित्वात् । प्रकृते चाद्यसूत्रे ओङ्कारस्य वाक्यार्थान्वयित्वेन सम्भूयार्थप्रतिपादकत्वेऽपि द्वितीयादिसूत्रेषु स्रवणविशरणपरिहारमात्रत्वेन केवलादृष्टार्थस्य वाक्यार्थप्रतीतिस्थिरीकरणहेतुत्वेन तदेककार्यकारित्वात् । प्रथमसूत्रं तु स्विष्टकृदुत्तमप्रयाजवद् दृष्टादृष्टोभयार्थमिति बोध्यम् । अनुषङ्गपक्षे तु न कोऽपि शङ्काशूकः । 'या ते अग्ने हराशया' इत्यादौ तनूर्वर्षिष्ठेत्यादेरनुषज्यमानस्य मन्त्रावयवतायाः सिद्धान्तितत्वात् । सर्वं चैतदनुपदमेव सूत्रवाक्यार्थनिरूपणावसरे सपरिकरं प्रपञ्चयिष्यामः ।।

- इति श्रीविजयीन्द्रतीर्थकृतन्यायसुधाबिन्दौ

५३ "सुधावाक्यानां विक्षिप्तानां संङ्ग्रहेण क्वचिच्छब्दतः क्वचिदर्थतोऽनुवादोऽयम्"

- इति तात्पर्यचन्द्रिकाप्रकाशोक्तिरत्राप्यनुसन्धेया ।

५४ सूर्यायेति ।। नवमे "प्रकृतौ यथोत्पत्तिवचनमर्थाना"मिति तृतीयपादाद्याधिकरणे दर्शपूर्णमासयोः श्रुतोऽ"ग्नयेजुष्टं निर्वपामी"ति मन्त्रः "सौर्यं चरुं निर्वपे"दिति विकृतौ चोदकप्राप्तः । तत्राग्निपदस्थाने सूर्यपदप्रक्षेपेणोहितव्यमुत नेति संदेहे यथावस्थितस्वरूपस्यैव मन्त्रस्य चोदकेन प्रापितत्वादग्निपदेनैन्द्रीवत् गुणवृत्त्या सूर्यप्रकाशनसम्भवान्नोह इति प्राप्ते प्रकृतावग्निशब्दो न स्वरूपविवक्षयाऽऽम्नातः । अदृष्टार्थत्वापत्तेः । किन्तु देवतापदविवक्षया । दृष्टार्थतालाभात् । अतस्तेनैव रूपेण विकृतौ चोदकेन प्रापणादग्निपदस्य वैकृतदेवतापरत्वाभावात्तदुद्धारेण सूर्यपदप्रक्षेपेण चोहितव्यो मन्त्रः । ऐन्द्री तु स्वरूपेण गार्हपत्ये विनियुक्तेति वैषम्यमिति सिद्धान्तितम् । तत्र यथा सौर्ययागे सूर्यपदस्य चोदकेन प्राप्ते "देवस्यत्वे"ति मन्त्रेऽग्नय इति पदं स्थानिरूपं विद्यते न तथा प्रतिसूत्रमोङ्कारोहस्य स्थान्यस्तीत्यर्थः । इत्यादेरित्यादिपदेन नीवाराणामित्यूहं प्रति "व्रीहीणां मेधसुमनस्यमान" इति मन्त्रे व्रीहीणामित्यस्येवेति ग्राह्यम् ।।

- इति तात्पर्यचन्द्रिकाप्रकाशे

इत्यादेरिव प्रकृते स्थानिनो भावेनेह शब्दार्थस्यैवासम्भवाच्च । तदाहुः -

"प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगो विकृतः ऊह्यमानतयोदितः ।।"[५५] इति ।

न चोहशब्देनाध्याहारोऽभिप्रेतः । [५६]'अध्याहारस्तर्क ऊहः' इति [५७]कोशकारस्मरणात् । तथा नोक्तदोषावकाश इति वाच्यम् । जिज्ञासासूत्रे ओङ्कारस्याध्याहारे मानाभावात् । [५८]'सं यज्ञपति-राशिषा', 'इषे त्वा'[५९] इत्यादाविव साकाङ्क्षत्वाभावेन तदध्याहारायोगात् । अध्याहारे

५५ तन्त्रवार्तिके इति भावः । - इति तात्पर्यचन्द्रिकाप्रकाशे
जैमिनीयन्यायमालायामपि (९/१/१) ।

५६ । अत एव टुप्टीकायां नवमे 'ऊहो नाम तर्कणा । सा चैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणे'त्यादिना तर्क एव एव मुख्य ऊहः । तद्विषयत्वान्मन्त्रादेरन्यथात्वमप्यूह इत्युक्तम् । तत्र च स्रवत्यनोङ्कृतमिति श्रुतिरेव मानम् । यद्यप्यत्र स्रवणविशरणपरिहाररूपादृष्टफलार्थत्वं श्रुतम् । तथापि दृष्टस्यापेक्षितस्यार्थप्रत्ययस्यापि फलत्वसम्भवान्न तत्त्यागः । एवञ्च स्विष्टकृदादिवदोङ्कारोच्चारणमुभयार्थम् । अत एव नान्ते प्रयोगवैयर्थ्यम् । नाप्युत्तरसूत्रे ओङ्कारार्थस्यानन्वय-दोषः। तत्र दृष्टासम्भवेन केवलादृष्टार्थत्वोपपत्तेः। न चैकस्यैकत्रोच्चारणे दृष्टार्थे अन्यत्रापि तथात्वनियमः । - इति तात्पर्यचन्द्रिकायाम् ।

५७ अमरकोशः

५८ न चोहशब्देनाध्याहारो लक्ष्यत इति वाच्यम् । 'सं यज्ञपतिराशिषा इषे त्वे'त्यादाविव साकाङ्क्षत्वाभावात् । किञ्च मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्वमिष्टमेव । ऊहप्रवरनाममन्त्रस्य द्वितीये सिद्धान्तितत्वात् । अपि च ओतत्वस्य न वाक्यार्थेऽन्वयः ब्रह्मणः शब्दत उपसर्जनस्य पदान्तरोपात्तौ तत्वान्वयानुपपत्तेः । अपि चार्थप्रतीत्यर्थत्वे आदवेव प्रयोगेण चरितार्थत्वादन्ते प्रयोगवैयर्थ्यम् । - इति तात्पर्यचन्द्रिकायाम्

द्वितीये "व्यवायान्नानुपज्येत" इत्याद्यपादीयांतिमाधिकरणे "सं ते प्राणो वायुना गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषे"ति मन्त्रेषु गच्छतामित्यस्य संयजत्रैरङ्गानीत्यत्र वचनभेदादननुषङ्गे संयज्ञपतिराशिषेत्यत्रापि किं तस्यैवानुषङ्ग उताध्याहार इति सन्देहे बुद्धिविपरिवृत्तेरनुषङ्ग इति प्राप्ते संयजत्रैरङ्गानीत्यत्रासम्बन्धेन बुद्धिविपरि-वृत्तिभङ्गादनुषङ्गायोगे साकाङ्क्षत्वादध्याहार इति सिद्धान्तितम् ।

- इति तात्पर्यचन्द्रिकाप्रकाशे

५९ तथा तत्रैवाद्यपादे "समेषु वाक्यभेदः स्या"दिति षोडशोऽधिकरणे "इषे त्वे"त्यादिषु किमेकमन्त्रत्वमुत मन्त्रभेद इति संशये अनुष्ठेयार्थप्रकाशनात् अदृष्टार्थत्वे चानेकादृष्टकल्पनापत्तेर्मन्त्रैक्यमिति प्राप्ते "इषेत्वेति च्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टी" त्यादिना शाखाच्छेदनादिषु करणत्वेन विनियोगादर्थप्रकाशनरूपक्रियानिर्वर्तनेनैव करणत्वस्य निर्वाह्यत्वेन च्छेदनादिकं प्रति साकाङ्क्ष-त्वाच्छिनद्मीत्याद्यध्याहारेण वाक्यं पूरणीयमिति मन्त्रभेद इति सिद्धान्तितम् । - इति तात्पर्यचन्द्रिकाप्रकाशे

आकाङ्क्षाया हेतुत्वेन तदभावे तदयोगात् ।

किन्तु मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्वमिष्टमेव । [६०]ऊहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तित्वात् । अत एवोङ्कारार्थस्य प्रथमसूत्रार्थे [६१]समन्वयेनावयवत्वं निश्चीयते । ओमाङोश्चेत्यादाविव [६२]अत्रोङ्कारस्य संहिततया निर्देशाभावस्तु सर्वसूत्रेष्वनुगतिसूचनार्थ इति च सुधायामुक्तम् । तदप्ययुक्तम् । यतः ओतत्वस्य ओङ्कारार्थस्य वाक्यार्थसमन्वयो न युज्यते । ब्रह्मणः शब्दतः [६३]तदुपसर्जनस्य पदान्तरोपात्तत्वेनान्वयानुपपत्तेः । अपि चार्थप्रतीत्यर्थत्वे ओङ्कार-स्यादावेव प्रयोगेण चरितार्थत्वात् [६४]तस्यान्ते प्रयोगो व्यर्थः । न च 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते' इत्यन्तेऽप्यनोङ्कृतं ब्रह्मविद्यायाः प्रत्यवायापादकत्वश्रवणात् तत्परिहारार्थतया अन्तेऽपि तत्प्रयोगो न व्यर्थ इति वाच्यम् । सूत्राणां ब्रह्मविद्यात्वे हि अन्ते तत्प्रयोगस्य प्रत्यवायपरिहारार्थत्वे सा वैयर्थ्यमपि तत्र तत्प्रयोगप्रयोजकब्रह्मविद्यात्व एव मानाभावात् इत्युक्तत्वात् ।

'द्वे विद्ये वेदितव्ये'[६५] इत्यादि श्रुतौ 'परा चैवापरा च' इति विद्याद्वैविध्यमुक्त्वा तत्र ऋग्वेदादीनां अन्यपरत्वे अपरविद्यात्वमुक्त्वा तेषामेव 'अथ परा यया तदक्षरमधिगम्यते'[६६] इति अक्षरशब्दित-ब्रह्मविद्यात्वे [६७]परविद्यात्ववर्णनात् । सूत्राणामनुपात्तत्वेन ऋगादीनामिव तेषामपरविद्यात्वेऽपि

६० ऊहेत्यादि ।। उक्त ऊहः । प्रवरः त्र्यार्षेयादिः । नामधेयं देवदत्तादि ।। - इति तात्पर्यचन्द्रिकाप्रकाशे

६१ यदप्युक्तं "ओङ्कारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेने"त्यादि तदपि नेत्याह ।। अपि चेति ।। अधिकारा-नन्तरं फलवत्त्वाद् ब्रह्मविचारः कार्य इति वाक्यार्थे ओतत्वस्यान्वयाप्रतीतेरित्यर्थः । ननु वाक्यार्थे प्रतियोगि-समर्पकत्वेनान्वयायोगेऽपि ओतं यद्ब्रह्म तद्विचार इति ब्रह्मविशेषणत्वं स्यादित्यत आह ।। ब्रह्मणः शब्दत इति ।। उपसर्जनस्य जिज्ञासाविशेषणस्य । यदि ॐ ब्रह्मजिज्ञासेति समस्तं स्याद्यदि वा ब्रह्मणो जिज्ञासेति ब्रह्मपदं व्यस्तं स्यात् तदा ओतत्वस्य कथंचिद् ब्रह्मपदार्थान्वयः स्यात् न चैवमस्तीति भावः । - इति तात्पर्यचन्द्रिकाप्रकाशे

६२ क.पाठे अत्रेति नास्ति ।

६३ क.पाठे तदिति नास्ति ।

६४ क.पाठे तस्येति नास्ति ।

६५ आथर्वणोपनिषत् (१/४)

६६ आथर्वणोपनिषत् (१/५)

६७ परत्वाम्नानात् (पा.)

इत्यादेरिव प्रकृते स्थानिनो भावेनेह शब्दार्थस्यैवासम्भवाच्च । तदाहुः -

"प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगो विकृतः ऊह्यमानतयोदितः ।।"[५५] इति ।

न चोहशब्देनाध्याहारोऽभिप्रेतः । [५६]'अध्याहारस्तर्क ऊहः' इति [५७]कोशकारस्मरणात् । तथा नोक्तदोषावकाश इति वाच्यम् । जिज्ञासासूत्रे ओङ्कारस्याध्याहारे मानाभावात् । [५८]'सं यज्ञपति-राशिषा', 'इषे त्वा'[५९] इत्यादाविव साकाङ्क्षत्वाभावेन तदध्याहारायोगात् । अध्याहारे

---

५५ तन्त्रवार्तिके इति भावः । - इति तात्पर्यचन्द्रिकाप्रकाशे
जैमिनीयन्यायमालायामपि (९/१/१) ।

५६ । अत एव टुप्टीकायां नवमे 'ऊहो नाम तर्कणा । सा चैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणे'त्यादिना तर्क एव एव मुख्य ऊहः । तद्विषयत्वान्मन्त्रादेरन्यथात्वमप्यूह इत्युक्तम् । तत्र च स्रवत्यनोङ्कृतमिति श्रुतिरेव मानम् । यद्यप्यत्र स्रवणविशरणपरिहाररूपादृष्टफलार्थत्वं श्रुतम् । तथापि दृष्टस्यापेक्षितस्यार्थप्रत्ययस्यापि फलत्वसम्भवान्न तत्त्यागः । एवञ्च स्विष्टकृदादिवदोङ्कारोच्चारणमुभयार्थम् । अत एव नान्ते प्रयोगवैयर्थ्यम् । नाप्युत्तरसूत्रे ओङ्कारार्थस्यानन्वय-दोषः। तत्र दृष्टासम्भवेन केवलादृष्टार्थत्वोपपत्तेः। न चैकस्यैकत्रोच्चारणे दृष्टार्थे अन्यत्रापि तथात्वनियमः ।
- इति तात्पर्यचन्द्रिकायाम् ।

५७ अमरकोशः

५८ न चोहशब्देनाध्याहारो लक्ष्यत इति वाच्यम् । 'सं यज्ञपतिराशिषा इषे त्वे'त्यादाविव साकाङ्क्षत्वाभावात् । किञ्च मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्वमिष्टमेव । ऊहप्रवरनाममन्त्रस्य द्वितीये सिद्धान्तितत्वात् । अपि च ओंतत्त्वस्य न वाक्यार्थेऽन्वयः ब्रह्मणः शब्दत उपसर्जनस्य पदान्तरोपात्तौ तत्वान्वयानुपपत्तेः । अपि चार्थप्रतीत्यर्थत्वे आदवेव प्रयोगेण चरितार्थत्वादन्ते प्रयोगवैयर्थ्यम् । - इति तात्पर्यचन्द्रिकायाम्

द्वितीये "व्यवायान्नानुपज्येत" इत्याद्यपादीयांतिमाधिकरणे "सं ते प्राणो वायुना गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषे"ति मन्त्रेषु गच्छतामित्यस्य संयजत्रैरङ्गानीत्यत्र वचनभेदादननुषङ्गे संयज्ञपतिराशिषेत्यत्रापि किं तस्यैवानुषङ्ग उताध्याहार इति सन्देहे बुद्धिविपरिवृत्तेरनुषङ्ग इति प्राप्ते संयजत्रैरङ्गानीत्यत्रासम्बन्धेन बुद्धिविपरि-वृत्तिभङ्गादनुषङ्गायोगे साकाङ्क्षत्वादध्याहार इति सिद्धान्तितम् ।
- इति तात्पर्यचन्द्रिकाप्रकाशे

५९ तथा तत्रैवाद्यपादे "समेषु वाक्यभेदः स्या"दिति षोडशेऽधिकरणे "इषे त्वे"त्यादिषु किमेकमन्त्रत्वमुत मन्त्रभेद इति संशये अनुष्ठेयार्थप्रकाशनात् अदृष्टार्थत्वे चानेकादृष्टकल्पनापत्तेर्मन्त्रैक्यमिति प्राप्ते "इषेत्वेति च्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टी" त्यादिना शाखाच्छेदनादिषु करणत्वेन विनियोगादर्थप्रकाशनरूपक्रियानिर्वर्तनेनैव करणत्वस्य निर्वाह्यत्वेन च्छेदनादिकं प्रति साकाङ्क्ष-त्वाच्छिनद्मीत्याद्यध्याहारेण वाक्यं पूरणीयमिति मन्त्रभेद इति सिद्धान्तितम् । - इति तात्पर्यचन्द्रिकाप्रकाशे

आकाङ्क्षाया हेतुत्वेन तदभावे तदयोगात् ।

किन्तु मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्वमिष्टमेव । [६०]ऊहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तित्वात् । अत एवोङ्कारार्थस्य प्रथमसूत्रार्थे [६१]समन्वयेनावयवत्वं निश्चीयते । ओमाङोश्चेत्यादाविव [६२]अत्रोङ्कारस्य संहिततया निर्देशाभावस्तु सर्वसूत्रेष्वनुगतिसूचनार्थ इति च सुधायामुक्तम् । तदप्ययुक्तम् । यतः ओतत्वस्य ओङ्कारार्थस्य वाक्यार्थसमन्वयो न युज्यते । ब्रह्मणः शब्दतः [६३]तदुपसर्जनस्य पदान्तरोपात्तत्वेनान्वयानुपपत्तेः । अपि चार्थप्रतीत्यर्थत्वे ओङ्कार-स्यादावेव प्रयोगेण चरितार्थत्वात् [६४]तस्यान्ते प्रयोगो व्यर्थः । न च 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते' इत्यन्तेऽप्यनोङ्कृतं ब्रह्मविद्यायाः प्रत्यवायापादकत्वश्रवणात् तत्परिहारार्थतया अन्तेऽपि तत्प्रयोगो न व्यर्थ इति वाच्यम् । सूत्राणां ब्रह्मविद्यात्वे हि अन्ते तत्प्रयोगस्य प्रत्यवायपरिहारार्थत्वे सा वैयर्थ्यमपि तत्र तत्प्रयोगप्रयोजकब्रह्मविद्यात्व एव मानाभावात् इत्युक्तत्वात् ।

'द्वे विद्ये वेदितव्ये'[६५] इत्यादि श्रुतौ 'परा चैवापरा च' इति विद्याद्वैविध्यमुक्त्वा तत्र ऋग्वेदादीनां अन्यपरत्वे अपरविद्यात्वमुक्त्वा तेषामेव 'अथ परा यया तदक्षरमधिगम्यते'[६६] इति अक्षरशब्दित-ब्रह्मविद्यात्वे [६७]परविद्यात्ववर्णनात् । सूत्राणामनुपात्तत्वेन ऋगादीनामिव तेषामपरविद्यात्वेऽपि

---

६० ऊहेत्यादि ।। उक्त ऊहः । प्रवरः त्र्यार्षेयादिः । नामधेयं देवदत्तादि ।। - इति तात्पर्यचन्द्रिकाप्रकाशे

६१ यदप्युक्तं "ओङ्कारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेने"त्यादि तदपि नेत्याह ।। अपि चेति ।। अधिकारा-नन्तरं फलवत्त्वाद् ब्रह्मविचारः कार्य इति वाक्यार्थे ओतत्वस्यान्वयाप्रतीतेरित्यर्थः । ननु वाक्यार्थे प्रतियोगि-समर्पकत्वेनान्वयायोगेऽपि ओतं यद्ब्रह्म तद्विचार इति ब्रह्मविशेषणत्वं स्यादित्यत आह ।। ब्रह्मणः शब्दत इति ।। उपसर्जनस्य जिज्ञासाविशेषणस्य । यदि ॐ ब्रह्मजिज्ञासेति समस्तं स्याद्यदि वा ब्रह्मणो जिज्ञासेति ब्रह्मपदं व्यस्तं स्यात् तदा ओतत्वस्य कथंचिद् ब्रह्मपदार्थान्वयः स्यात् न चैवमस्तीति भावः । - इति तात्पर्यचन्द्रिकाप्रकाशे

६२ क.पाठे अत्रेति नास्ति ।

६३ क.पाठे तदिति नास्ति ।

६४ क.पाठे तस्येति नास्ति ।

६५ आथर्वणोपनिषत् (१/४)

६६ आथर्वणोपनिषत् (१/५)

६७ परत्वाम्नानात् (पा.)

तत्स्मृतेरप्रमाणत्वात्[६८] । ऋगादीनामेव परमात्मपरत्वोपस्कारेण तयैव श्रुत्या परविद्यात्ववर्णनेन सूत्राणां परविद्यात्वेऽपि तच्छ्रुतेरप्रमाणत्वात् । यद्यपि,

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश[६९] ॥'

इति मीमांसासूत्रसन्दर्भात्मकशास्त्रस्यापि विद्यात्वं स्मर्यते । तथापि मीमांसासूत्राणां न्यायनिबन्धनात्मकत्वे तदधिगतिमभिप्रेत्यैव हेतुत्वेन अक्षराधिगतिहेतुत्वाभावेन ब्रह्मविद्यात्वमसिद्धमेव । 'यया तदक्षरमधिगम्यते' इत्यक्षराधिगमकरणस्यैव परविद्यापरनामकपरविद्यात्वावेदनात् । न चाध्यायग्रथनात्मकसूत्राणामक्षराधिगतिं प्रति करणत्वे मानमस्ति । यद्यपि ऋगादिरूपे परविद्येतिकर्तव्यतारूपतयाऽनुसन्धानहेतुत्वं सूत्राणामस्ति । तथापि तदनुसन्धानसन्धानमक्षराधिगतिरिति तेषां तत्प्रयोजकत्वमेव । न तु तत्करणत्वम् ।

किञ्च 'स्रवत्यनोङ्कृतं ब्रह्म' इति श्रुतेः ब्रह्मशब्दस्य ब्रह्मविद्यापरत्वे मानाभावः । तथा च ब्रह्ममीमांसासूत्राणां ब्रह्मविद्यात्वेऽपि आद्यन्तयोरोङ्कारस्य न तया श्रुत्योच्चारणं सिद्ध्यति । ब्रह्मपदं 'तेने ब्रह्म हृदा य आदिकवये'[७०] इत्यभियुक्तबहुप्रयोगदर्शनेन तस्य वेदवादित्वमेव । न तु तदन्यवाचित्वमपि । तत्र मानाभावात् । एवं च 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः'[७१] इति श्रुतिरप्यनुकूलिता भवति ।

यद्यपि 'शब्दब्रह्मणि निष्णातः'[७२] इत्यादौ 'बृह जातिजीवकमलासनशब्दराशिषु' इत्यभियुक्तव्याख्यानादौ च शब्दमात्रस्यापि ब्रह्मशब्दार्थत्वं प्रतीयते । तथाऽपि न तावदेष्टसिद्धः । तथा सति ओङ्कारमात्रप्रयोगेऽप्याद्यन्तयोरुच्चारणप्रसङ्गात् । 'स्रवत्यनोङ्कृतं ब्रह्म'[७३] इति श्रुतेरप्यस्मिन् पक्षे ओङ्कारस्य अतीतप्रयोगपदप्रमाणत्वपर्यवसानात् ।

---

६८ ...रप्रमाणत्वाच्च (पा.)

६९ महाभारते (१२/१२२/३१); विष्णुपुराणेऽपि (३/६/२८)

७० श्रीमद्भागवते (१/१/१)

७१ तैत्तिरीयारण्यके (१०/१२/३/७)

७२ श्रीमद्भागवते (१/१/१)

७३ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

एतेन, अथातो ब्रह्मजिज्ञासेति सूत्रे यद्यप्यथादिशब्दवदोङ्कारो नावयवः । किन्तु कर्तव्येति पदवत् सूत्रकृदभिप्रायविपयत्वात् । तथैवावयवः । न च कर्तव्येति पदवत् तस्य तदभिप्रायविपयत्वे मानाभावः ।

'सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिःसृतौ ।
ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात् ।
तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः' इति[७४] ।

ओङ्कारस्य प्रथमयोगे कारणत्वमुक्त्वा अथातः शब्दस्य तदनन्तरं प्रयोगे कारणत्वमुक्त्वा, 'अतश्च पूर्वमुच्चार्याः सर्व एव सतां मताः'[७५] इति उक्त एव प्रयोजकमादाय सर्वापेक्षयोङ्कारस्य प्रथमप्रयोगविधिरेव तत्र मानत्वात् ।

एवं च,

'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ'[७६] इति ।

स्मृत्युक्तमङ्गलार्थोङ्कारस्य प्रथमप्रयोगविधिरेव प्रदर्शिता भवति । अत एव कर्तव्यपदाध्याहारः तद्विजिज्ञासस्व, मन्तव्य इत्यादिविधिमूलत्वात् जिज्ञासासूत्रस्य सूत्रान्ते तत्प्रमाणाभावात् भवति । ओंशब्दाध्याहारस्तु निष्प्रमाणक इति शङ्का परास्ता । एवं च जिज्ञासासूत्रे प्रमाणवलेनाध्याहार्यतया कर्तव्यपदवत् प्रमाणप्रतिपन्नस्योङ्कारस्य तत्सूत्रान्ते उत्तरत्र चानुपङ्गोऽपि सेत्स्यतीति 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते'[७७] इति प्रमाणसद्भावात् । प्रतिसूत्रं ब्रह्मविद्यात्वादिति परास्तम् । निरस्तत्वात् । [७८]किञ्चोङ्कारस्य प्रथमसूत्रे अध्याहृतस्य तदन्ते उत्तरत्र

---

७४ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

७५ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

७६ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

७७ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

७८ किञ्च ओङ्कारस्योत्तरत्रानुपङ्गे अनुपक्तस्य 'ङ्याप्प्रातिपदिकात्' इत्यादेः 'अच्छिद्रेण पवित्रेण' इत्यादेः 'तनूर्वर्पिष्ठ' इत्यादेश्च तत्र तत्रार्थान्वयदर्शनात् प्रकृतेऽप्योङ्कारार्थस्य जन्मादिसूत्रेष्वन्वयो वाच्यः । स चाशक्य इति । - इति तात्पर्यचन्द्रिकायाम्

चानुषङ्गेन अनुक्तस्य तस्य [७९]'ङ्याप्प्रातिपदिकात्'[८०] इत्यादेः [८१]'अच्छिद्रेण पवित्रेण'[८२] इत्यादेः, 'तनूर्वर्षिष्ठ'[८३] इत्यादेश्च तत्र तत्रान्वयदर्शनात् । अनुषङ्गस्य सर्वत्रान्वयार्थत्वेनैवापेक्षादर्शनात् । केवलादृष्टार्थत्वेन क्वाप्यनुषङ्गार्थत्वदर्शनाच्च । प्रकृतेऽप्योतत्वस्य गुणपूर्णत्वरूपस्योङ्का-

---

७९. पा.सू. (४.१.१.)

८० किञ्च ओङ्कारस्योत्तरत्रानुषङ्गे अनुषक्तस्य 'ङ्याप्प्रतिपदिकात्' इत्यादेः अच्छिद्रेण पवित्रेणेत्यादेः तनूर्वर्षिष्ठेत्यादेश्च तत्र तत्रार्थान्वयदर्शनात्प्रकृतेऽप्योङ्कारार्थस्य जन्मादिसूत्रेष्वन्वयो वाच्यः । स चाशक्य इति । उच्यते । नात्रोहशब्दो मन्त्रसामसंस्कारोह इत्यादावि कर्मव्युत्पत्या विकारपरः । - इति तात्पर्यचन्द्रिकायाम् ।

ङ्याप्प्रातिपदिकादित्यादेरिति ।। व्याकरणे तुर्याध्याये ''स्वौजसमौट्छस्टाभ्यांभिसि''त्याद्युत्तरसूत्रेऽनुवृत्तस्य ङ्याप्प्रातिपदिकादित्यस्य ङ्यंतादावन्तात्प्रातिपदिकाच्च स्वादयः प्रत्यया भवन्तीत्यर्थो यथा दृश्यत इत्यर्थः ।। - इति तात्पर्यचन्द्रिकाप्रकाशे

८१ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण **पवित्रेण** सूर्यस्य रश्मिभिः ।
देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिं सुधातुं यज्ञपतिं देवयुवम् ।।
- यजुर्वेदे (१.१२)

८२ अच्छिद्रेणेति ।। द्वितीयाद्यपादे ''सर्वेषु'' इत्युपांत्याधिकरणे ''चित्पतिस्त्वापुनातु वाक्पतिस्त्वा पुनातु देवस्त्वासवितापुनातु'' इति मन्त्रत्रयानन्तरमाम्नातः । ''अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः''इत्ययं शेषः किं पूर्वयोरनुषज्यते किं वा परस्यैव शेष इति संशये शेषस्यानन्तरसम्बन्धमात्रेण नैराकाङ्क्ष्यात् पूर्वयोश्च स्वत एवाकाङ्क्षाविरहान्नानुषङ्ग इति प्राप्ते पुनातुशब्दैकवाक्यतापन्नस्याच्छिद्रादेस्तत्करणद्वारेण पवनक्रिया प्रकाशनार्थत्वात् तस्य एव पूर्वमन्त्राभ्यामपि प्रकाश्यत्वात् प्रधानवशेनानुकर्षस्य न्याय्यत्वादनुषङ्ग इति सिद्धान्तितम् । तथा तत्रैव ''अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात्''इति सप्तदशोऽधिकरणे ''याते अग्नेऽयाशयातनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषंवचो अपावधीं स्वाहा । याते अग्नेरजाशया याते अग्नेहराशये''ति ज्योतिष्टोमे श्रुतं मन्त्रत्रयमुदाहृत्य तत्रोत्तरयोर्लौकिकः शेषोऽध्याहार्यः किं वा पूर्वमन्त्रानन्तरपठितस्तनूर्वर्षिष्ठेत्यादिरनुषञ्जनीय इति संशये समाम्नायेन पूर्वत्रैव निबद्धस्य शेषस्यान्यत्र नयनायोगात् सकृदाम्नातस्य सर्वार्थत्वानुपपत्तेरानन्तर्यदेशविशेषाभ्यां विशेषग्रहणेन पूर्वशेषत्वावसायादनुषङ्गायोगे लौकिकस्य क्वाप्यनिबद्धत्वेन सर्वार्थत्वादध्याहार इति प्राप्ते सर्वानन्तर्येण सकृत्पठितुमशक्यो बुद्धिविपरिवृत्तिमात्रेण साकाङ्क्षैः सर्वैः सम्बन्धसिद्धेः पुनः पुनरनाम्नातोऽयं शेषः सर्वार्थेनैवाम्नात इत्यवगमादनुषङ्गो न लौकिकस्याध्याहार इति सिद्धान्तितम् ।
- इति तात्पर्यचन्द्रिकाप्रकाशे

अत्र यथा ''अच्छिद्रेण पवित्रेणे''त्यादेः पूर्वत्रानुषक्तस्य ''चित्पतिस्त्वा पुनात्वि''ति पवनक्रियायां पवित्ररूपकरणसमर्पकतया तनूर्वर्षिष्ठेत्यादेश्च पश्चादनुषक्तस्य राजाशयाहराशयाशब्दितयोः रजतमयत्वहिरण्मयत्वविशेषणयोः तनूलक्षणविशेष्यार्पकतयाऽन्वयो दृष्टः तथा ''जन्माद्यस्ये''त्यादि सूत्रेष्वोङ्कारस्यान्वयो वाच्य इत्यर्थः ।
- इति तात्पर्यचन्द्रिकाप्रकाशे

८३ मैत्रायणीसंहिता (१/२/७)

रार्थस्य जन्मादिसूत्रेष्वप्यन्वयत्वाच्च । स चाशक्य इति ओङ्कारः अनवयव एव । किन्तु 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'[८४] इति श्रुतिबलात् प्रथमसूत्रे प्रथममुच्चार्यतः सन् अदृष्टद्वारोपकुर्वत इति।

अत्र ब्रूमः । अलौकिकवाक्ये यथार्थनिरूपितः संसर्गो वाक्यनिर्मातृ-तात्पर्यगोचरस्तदर्थोप-स्थापकः शब्दः। तद्वाक्यावयवत्वेन न व्यवहृत इत्यविवादम् । इदं च वाक्ये विद्यमानावश्याध्या-हर्तव्यशब्दसाधारणमितिकर्तव्यशब्दपदोङ्कारोऽप्यवश्यमध्याहर्तव्यतया सूत्रकृताऽभिप्रेत इति प्रथमसूत्रे कर्तव्यपदवत् 'ओम्'पदमपि अवयवो भवत्येतद्वाक्यावयवत्वे लाघवात् तात्पर्यगोचर-तद्वाक्यार्थभूतसंसर्गप्रतियोग्युपस्थापकत्वमेव तन्त्रम् । स तु तद्वाक्यगतपदान्तरतुल्यतया तद्वाक्यप्रणेतृचरितत्वविषयत्वं तत् । गौरवात् । इदं च कर्तव्यपदपदोङ्कारेऽप्यक्षतमिति । तस्य प्रथमसूत्रावयवत्वं दुर्निरस्तम्[८५] । न चैवमाह प्रवरनामधेयानामपि मन्त्रावयवत्वनिरस्तत्वेन तात्पर्यविषये संसर्गप्रतियोग्युपस्थापकत्वरूपमन्त्रावयवस्यापि निरासेन तद्विरोधानवकाशात् ।

न चैवमप्योङ्कारस्य सूत्रकृत्तात्पर्यगोचरसंसर्गप्रतियोग्युपस्थापक एव मानाभाव इति वाच्यम् । 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते'[८६], 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'[८७], 'अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः'[८८], 'तस्मान्माङ्गलिकावुभौ'[८९] इति श्रुतिस्मृतीनामेव मानानां

---

८४ तैत्तिरीयोपनिषत् (१/१९)

८५ ननु च ओङ्कारस्य सूत्रावयवत्वे सूत्रव्याख्यार्थं प्रवृत्तो भगवान् भाष्यकारः किमित्योङ्कारं हित्वाऽथादिपदान्येव व्याचख्याविति चेदत्राहुः । उत्तरप्रस्थाने व्याकरिष्यमाणत्वादिह त्यक्तम् । अत एवेहानुक्तमपि वर्णकान्तरं सूत्राणां तत्रोच्यत इति वा ओङ्कारार्थस्य च्छान्दोग्याद्युपनिषद्भाष्योदाहृतवचनैः व्याख्यातत्वान्नेह व्याख्यायत इति वेति । यद्वा पूर्वपक्षप्रापकाधिकार्याद्यभावरूपहेतुचतुष्टयनिरासस्य अथादिपदैरेव करणात् तेषामेवेह व्याख्यानम् । तावत एवोपयोगात् । ओङ्कारस्य त्वदृष्टार्थतयाऽवश्यकस्य दृष्टार्थोऽपि सम्भवतीत्यभिप्रेत्यानुव्याख्याने व्याख्यानमिति । अथशब्दादिवैलक्षण्यज्ञापनायेह अव्याख्यानमित्यप्याहुः । यदत्र केनचित्प्रलपितं ओङ्कारस्यादित्वे सूत्रावयवत्वे गुणपूर्त्यर्थत्वे ''स्रवत्यनोङ्कृतं ब्रह्मे''त्यत्र ब्रह्मपदेन सूत्रग्रहणे च मानं नेत्यादि तत्सर्वस्य खण्डनं गुरुपादकृतन्यायमौक्तिकमालायां द्रष्टव्यम् । -इति तात्पर्यचन्द्रिकाप्रकाशे ।

८६ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

८७ तैत्तिरीयोपनिषत् (१/१९)

८८ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

८९ ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ।। - बृहन्नारदीयपुराणवचनम् (५१/१०)

सत्वात् । स चादृष्टार्थतया ओङ्कारोच्चारणकर्तव्यतापरतयाऽन्यथासिद्धान्तत्वादुदाहृतश्रुत्यादीनां नोक्तार्थे प्रमाणाभाव इति वाच्यम् । अदृष्टार्थस्य श्रुतत्वेऽपि आतश्चानुभवसिद्धादृष्टार्थत्वाविघातित्वात् । दृष्टस्यापेक्षितश्चार्थप्रत्ययस्यापि तत्फलत्वसम्भवात् । सति सम्भवे त्यागायोग्या ।

अत एव सम्भवमात्रेण तात्पर्यविषयसंसर्गप्रतियोग्युपस्थापकत्वं परिकल्प्य वाक्यावयवत्वस्वीकारे अतिप्रसङ्ग इति परास्तम् । प्रमाणसद्भावस्यैवातिप्रसञ्जकत्वात् । ओङ्कारस्याध्याहारे प्रमाणस्योदाहृतत्वात् । न चोच्चारणमात्रम् । नाध्याहारः अनुषङ्गो वा अतिप्रसङ्गात् । किन्तु तत्पदार्थघटितसंसर्गप्रतीतीच्छायाः तत्पदोच्चारणं तत्राध्याहारोऽनुषङ्गो वेति वाच्यम् । न हि तथाविधोच्चारणे मानमस्तीति वाच्यम् । जिज्ञास्यत्वेन सूत्रेऽपि ब्रह्मशब्दार्थगुणपूर्णं जिज्ञास्यम् । तद्ब्रह्म किं देवतारूपमिति जिज्ञासायां देवतान्तरव्युदासपूर्वकं तन्निर्धारणाय जिज्ञास्ये ओमित्येतदक्षरमुद्गीथमुपासीतेति ओङ्कारश्रवणात् । तस्य 'अव रक्षणे' इति धातुनिष्पन्नस्यावयतेष्टिलोपश्चेति व्याकरणस्मृतिसिद्धत्वात् । 'तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'[९०] इति श्रुतावपि तथात्वावेदनाच्च । रक्षणस्य च पालनापरनामकस्य च साधारणधर्मत्वे विवादाभावात् ।

'सत्वं रजस्तम इति प्रकृतेर्गुणाः स्युः'[९१],
'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्'[९२]

इत्यादि पुराणवचनेच्छया 'पालने विमलसत्त्ववृत्तये'[९३] इत्यादौ चतुर्थैव दर्शनात् । जिज्ञास्यब्रह्मविष्णुरूपमेव देवतान्तररूपमिति सूचनस्यावश्यकत्वात् ।

भगवतो सूत्रकृतस्तु तात्पर्यगोचरसंसर्गप्रतियोग्युपस्थित्यर्थमपि जिज्ञासासूत्रे ओङ्कारस्याभिप्रेतत्वकल्पनात् । अत एव श्वेताश्वतरादिश्रुतिष्वपि (१९)

'किं कारणं ब्रह्म कुतः स्म जाता
जीवाम केन क्व च सम्प्रतिष्ठा ।

---

९० इति महानारायणोपनिषत् (१२/१७)

९१ भागवते (१.२.२३)

९२ विष्णुपुराणम् (१-२-६६)

९३ **पालने विमलसत्त्ववृत्तये** जन्मकर्मणि रजोजुषे लये ।
तामसाय जगतः पराकृतद्वैतजालवपुषे नमः सते ।। - इति विवरणे (१.१.१.१)

अधिष्ठिता केन सुखेतरेषु
वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥'[९४]

इति 'कारणं ब्रह्म किं देवतारूपम्' इति प्रश्नानन्तरं

'संयुक्तमेतत् क्षरमक्षरं च
व्यक्ताव्यक्तं भरते विश्वमीशः ।'[९५]

इति तरणतुर्विष्णोरेव निरूपणम् । तथोत्तरत्र तत्रैव

'क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देव एकः'[९६]

इति क्षराक्षरे उक्त्वा तन्नियामकत्वाभिधानं

'तदेव ब्रह्म परमं कवीनाम्'[९७]

इत्यादि श्रुत्या च ब्रह्मशब्दार्थो न देवतान्तरं, किन्तु विष्णुरेवेति निर्धारणाय तल्लिङ्गोक्तिपूर्वकं सावधारणमार्यप्रसिद्ध्यावेदनं कृतम् । अत एव 'अथ कस्मादुच्यते ब्रह्मेति'[९८], 'तस्मादुच्यते परं ब्रह्म'[९९] इत्यादि श्रुत्याऽपि पालनार्थक-'पॄ'धातुनिष्पन्नपरशब्देन देवतान्तरस्य ब्रह्मत्व-व्यवच्छेदः क्रियते ।

तथा च श्रुतिरीतिमनुसृतवतः सूत्रकारस्य स्वीयसूत्रेऽपि देवतान्तरं न ब्रह्मशब्दमुख्यार्थं किन्तु विष्णुरेवेति सूचनमभिप्रेतमिति तदर्थं सूत्रेऽवयवत्वेनोक्तरीत्या विष्णुवाचकोङ्कारोऽभिप्रेत

---

९४ श्वेताश्वतरोपनिषत् (१.१)

९५ श्वेताश्वतरोपनिषत् (१.८)

९६ श्वेताश्वतरोपनिषत् (१.१०)

९७ महानारायणोपनिषत् (१.६)

९८ ब्रह्मसूत्रभाष्योदाहृत(२/४/२१)आग्निवेश्यश्रुतिः ।

९९ अथर्वशिरोपनिषदि

सत्वात् । स चादृष्टार्थतया ओङ्कारोच्चारणकर्तव्यतापरतयाऽन्यथासिद्धान्तत्वादुदाहृतश्रुत्यादीनां नोक्तार्थे प्रमाणाभाव इति वाच्यम् । अदृष्टार्थस्य श्रुतत्वेऽपि आतश्चानुभवसिद्धादृष्टार्थत्वाविघातित्वात् । दृष्टस्यापेक्षितश्चार्थप्रत्ययस्यापि तत्फलत्वसम्भवात् । सति सम्भवे त्यागायोग्या ।

अत एव सम्भवमात्रेण तात्पर्यविपयसंसर्गप्रतियोग्युपस्थापकत्वं परिकल्प्य वाक्यात्वयवत्वस्वीकारे अतिप्रसङ्ग इति परास्तम् । प्रमाणसद्भावस्यैवातिप्रसञ्जकत्वात् । ओङ्कारस्याध्याहारे प्रमाणस्योदाहृतत्वात् । न चोच्चारणमात्रम् । नाध्याहारः अनुपङ्गो वा अतिप्रसङ्गात् । किन्तु तत्पदार्थघटितसंसर्गप्रतीतीच्छायाः तत्पदोच्चारणं तत्राध्याहारोऽनुषङ्गो वेति वाच्यम् । न हि तथाविधोच्चारणे मानमस्तीति वाच्यम् । जिज्ञास्यत्वेन सूत्रेऽपि ब्रह्मशब्दार्थगुणपूर्णं जिज्ञास्यम् । तद्ब्रह्म किं देवतारूपमिति जिज्ञासायां देवतान्तरव्युदासपूर्वकं तन्निर्धारणाय जिज्ञास्ये ओमित्येतदक्षरमुद्गीथमुपासीतेति ओङ्कारश्रवणात् । तस्य 'अव रक्षणे' इति धातुनिष्पन्नस्यावयतेष्टिलोपश्चेति व्याकरणस्मृतिसिद्धत्वात् । 'तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'[९०] इति श्रुतावपि तथात्वावेदनाच्च । रक्षणस्य च पालनापरनामकस्य च साधारणधर्मत्वे विवादाभावात् ।

'सत्वं रजस्तम इति प्रकृतेर्गुणाः स्युः'[९१],

'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्'[९२]

इत्यादि पुराणवचनेच्छया 'पालने विमलसत्त्ववृत्तये'[९३] इत्यादौ चतुर्थैव दर्शनात् । जिज्ञास्यब्रह्मविष्णुरूपमेव देवतान्तररूपमिति सूचनस्यावश्यकत्वात् ।

भगवतो सूत्रकृतस्तु तात्पर्यगोचरसंसर्गप्रतियोग्युपस्थित्यर्थमपि जिज्ञासासूत्रे ओङ्कारस्याभिप्रेतत्वकल्पनात् । अत एव श्वेताश्वतरादिश्रुतिष्वपि (१९)

'किं कारणं ब्रह्म कुतः स्म जाता
जीवाम केन क च सम्प्रतिष्ठा ।

---

९० इति महानारायणोपनिषत् (१२/१७)

९१ भागवते (१.२.२३)

९२ विष्णुपुराणम् (१-२-६६)

९३ **पालने विमलसत्त्ववृत्तये** जन्मकर्मणि रजोजुपे लये ।
तामसाय जगतः पराकृतद्वैतजालवपुपे नमः सते ।। - इति विवरणे (१.१.१.१)

अधिष्ठिता केन सुखेतरेषु
वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥'[९४]

इति 'कारणं ब्रह्म किं देवतारूपम्' इति प्रश्नानन्तरं

'संयुक्तमेतत् क्षरमक्षरं च
व्यक्ताव्यक्तं भरते विश्वमीशः ।'[९५]

इति तरणतुर्विष्णोरेव निरूपणम् । तथोत्तरत्र तत्रैव

'क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देव एकः'[९६]

इति क्षराक्षरे उक्त्वा तन्नियामकत्वाभिधानं

'तदेव ब्रह्म परमं कवीनाम्'[९७]

इत्यादि श्रुत्या च ब्रह्मशब्दार्थो न देवतान्तरं, किन्तु विष्णुरेवेति निर्धारणाय तल्लिङ्गोक्तिपूर्वकं सावधारणमार्यप्रसिद्ध्यावेदनं कृतम् । अत एव 'अथ कस्मादुच्यते ब्रह्मेति'[९८], 'तस्मादुच्यते परं ब्रह्म'[९९] इत्यादि श्रुत्याऽपि पालनार्थक-'पृ'धातुनिष्पन्नपरशब्देन देवतान्तरस्य ब्रह्मत्व-व्यवच्छेदः क्रियते ।

तथा च श्रुतिरीतिमनुसृतवतः सूत्रकारस्य स्वीयसूत्रेऽपि देवतान्तरं न ब्रह्मशब्दमुख्यार्थं किन्तु विष्णुरेवेति सूचनमभिप्रेतमिति तदर्थं सूत्रेऽवयवत्वेनोक्तरीत्या विष्णुवाचकोङ्कारोऽभिप्रेत

---

९४ श्वेताश्वतरोपनिषत् (१.१)

९५ श्वेताश्वतरोपनिषत् (१.८)

९६ श्वेताश्वतरोपनिषत् (१.१०)

९७ महानारायणोपनिषत् (१.६)

९८ ब्रह्मसूत्रभाष्योदाहृत(२/४/२१)आग्निवेश्यश्रुतिः ।

९९ अथर्वशिरोपनिषदि

इति निश्चिनुम । अत एव श्रीभागवताद्यपद्ये 'परं धीमहि'[१००] इति सूत्रकृतैव विष्णु-परपरशब्दोपादानं तदर्थमेव कृतमुपपद्यते । अत एव 'ब्रह्मशब्दश्च विष्णावेव'[१०१] इति भाष्यमपि तथैव प्रवृत्तं दृश्यते । तथाऽन्यत्रापि 'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते'[१०२] इत्येवञ्जातीयकान्यनेकानि प्रवृत्तानि दृश्यन्ते । तथा च अथातो ब्रह्मजिज्ञासा कर्तव्या । तद्ब्रह्म ओमिति सूत्रार्थो भवति ।

नन्वेवं सूत्रार्थवर्णनमनुव्याख्यानविरुद्धम् । तत्र 'ओतत्ववाची ह्योङ्कारः'[१०३] इति 'ओम्'पदार्थवर्णनात् । किञ्चैवं सूत्रार्थवर्णने न केवलमनुव्याख्यानविरोधः । किन्तु तद्व्याख्यानार्थं प्रवृत्तसुधाविरोधोऽपि । तत्र ह्यवतेष्टिलोपश्चेति सूत्रपदोङ्कारस्य गत्यर्थकप्रवेशार्थ-कावतिधातुनिष्पन्नत्वमङ्गीकृत्य गुणान् गतस्य गुणैर्गतस्य वा उभयथाऽपि तस्य गुणपूर्णत्व-मर्थ इति स्वीकारात् । 'ओमिति ब्रह्म'[१०४] इति श्रुतावपि ओङ्कारस्य ब्रह्मशब्दपर्यायत्वाङ्गीकार-प्रतीतेश्च । ब्रह्मशब्दस्य च 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः'[१०५] इति श्रुत्यैव गुणपूर्तिवाचकत्वावेदनात् । अत एव [१०६]सुधायामपि ओङ्कारस्यावतिधातुनिष्पन्नत्वाङ्गीकारे 'वक्त्यसौ तद्गुणोतताम्'[१०७] इत्यनुव्याख्याने गुणानुपपत्त्या 'वृद्धिरेचि' इति वृद्धेरेव भाव्यत्वात् इत्याशङ्क्य गुणोततामित्यत्रौतशब्देन न गुणशब्दस्य समासः । किन्तु 'भुजोऽनवने'[१०८],

---

१०० भागवते (१/१/१)

१०१ ब्रह्मसूत्रभाष्ये (१/१/१)

१०२ ब्रह्मसूत्रभाष्योद्धृतप्रमाणवचनम् (१/१/१२)

१०३ अनुव्याख्याने (१/२/१)

१०४ तैत्तिरीयोपनिषत् (१/१९)

१०५ न्यायविवरणोदाहृतश्रुतिवचनम् ।

१०६ ननु 'गुणोतताम्' इति कथम्? 'वृद्धिरेचि' इति भवितव्यम् । मैवम् । 'ओमाङोश्च' इति चशब्देनान्यत्रापि पररूपत्वानुशासनात् । अथवा ऊयते रूपमेतत् । नन्वसौ तन्तुसन्ताने पठ्यते । अनेकार्थत्वाद्धातूनामित्यदोषः । कथं तर्ह्योतत्ववाचीति गुणः । तत्रावतिरूपाङ्गीकारात् । वैचित्र्यं तु धातुद्वयजत्वसूचनार्थम् ।

- इति न्यायसुधोक्तिः

१०७ 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' - इत्यनुव्याख्याने (१/१/९)

१०८ पा.सू. (१/३/६६)

'पश्यार्थैश्चानालोचने'[१०९] इत्यादि ज्ञापनात् 'वेञ् तन्तुसन्ताने'[११०] इति धातुनिष्पन्नः ओतशब्द एवायं विवक्षितार्थपर इत्युक्तमिति चेत्, न । ओङ्कारस्य ब्रह्मशब्दपर्यायत्वेन मुख्यतो विष्णु-वाचकत्वेऽपि प्रकृते उक्तशङ्कानिरासाय तद्वाच्यैकदेशभूतनिरतिशयलोकप्रसिद्धविष्ण्वैकनिष्ठ-जगद्रक्षकत्वरूपगुणत्वमात्रपरत्वाश्रयणेऽप्युक्तानुव्याख्यानतव्याख्यानरूपसुधाविरोधानव-काशात् । गुणपूर्तिवाचकत्वत्याग एव तद्विरोधात् तस्मान्न किञ्चिदनुपपन्नमिति ।

एतावांस्तु विशेषः । अन्यस्य कस्यचिच्छब्दस्य तदेकदेशे शक्तस्य तत्समुदाये लक्षणा । तथा तत्समुदायशक्तस्य तदेकदेशे लक्षणा प्रकृते ओङ्कारस्य गुणपूर्तिलक्षणगुणसमुदाये शक्तस्यैव तदेकदेशरूपे जगद्रक्षकत्वरूपगुणे शक्तिरस्तीति। तथाच क्व विरोधशङ्केति न जानीम इति 'जन्माद्यस्य यतः'[१११] इत्यत्र सङ्कोचनाभावेनास्येत्यनेनैव स्थित्यादेरपि ग्रहणसम्भवात् तत्साफल्यस्यापि व्याख्याना-न्तरस्यापि पूर्वं देवतान्तरव्यावर्तकतयोपात्तत्वेऽपि गुणपूर्त्युपपादकत्वेन विशेषाकारेण जन्मादिसूत्रे तेषां पुनरुपादानमिति चेत्, तर्हि पालक इह वाऽत्रापि (?) व्याख्याने सम्भवाच्च ।

न चैवं जिज्ञासासूत्रार्थविज्ञाने जन्मादिसूत्रपालकतांशे अनुवादः स्यादिति वाच्यम् । ओङ्कारस्य गुणपूर्त्यर्थकत्वेऽपि जन्मादिसूत्रस्यानुवादित्वं स्यात् । ननु गुणत्वसामान्यपुरस्कारेण जन्मादीनां पूर्वमुपात्तत्वेऽपि गुणपूर्त्युपपादकत्वेन विशेषाकारेण जन्मादिसूत्रे पुनरुपादानमिति चेत् तर्हि पालकत्वजन्मादिसूत्रे पुनरुपादानमित्यस्तु । न च ब्रह्मजिज्ञासा कर्तव्या, तच्च ब्रह्म ओंरक्षकमिति वाक्यार्थद्वयाश्रयणे वाक्यभेदप्रसङ्ग इति वाच्यम् । परैरपि श्रौतार्थार्थिनाऽर्थभेदेना-स्यैव जिज्ञासामात्रस्यानेनार्थपरत्वाश्रयणात् । [११२]'ईक्षतेर्नाशब्दम्'[११३] इत्यादावीक्षतेरीक्षणात् ब्रह्म जगत्कारणं, प्रधानं जगत्कारणं न । अशब्दं हि तदिति श्रौतार्थभेदस्याप्याश्रयणाच्च ।

---

१०९ पा.सू. (८/१/२५)

११० पाणिनीयधातुपाठे (१/११६१)

१११ ब्रह्मसूत्रम् (१/१/२)

११२ ब्रह्मसूत्रम् (१/१/५)

११३ 'ईक्षतेर्नाशब्दम्' इत्यत्र त्वत्पक्षेऽशब्दमितिवच्च मङ्गलत्वात् कर्तव्येति हेतुत्वेनान्वयोपपत्तेः । एतेन ब्रह्मजिज्ञासायां मङ्गलत्वं प्रसिद्धतरत्वान्नैव वक्तव्यमिति निरस्तम् । प्रसिद्धस्यैव हेतूकर्तव्यत्वात् ।
- इति तात्पर्यचन्द्रिकायाम् (१७)

न चाशब्दशब्देन प्रधानस्य विवक्षितत्वात् । प्रधानं जगत्कारणं न । कुतः? ईक्षतेरिति योजनाया-मेकार्थत्वमेवेति वाच्यम् । जगत्कारणत्वाभावे साध्ये ईक्षणे हेतुत्वस्यैवायोगेनोक्तयोजनाया एवायोगात् । प्रत्युतेक्षणस्य जगत्कारणत्व एव हेतुत्वस्य सम्भवात् ।

केचित् तु जन्म आद्यस्य ब्रह्मणश्चतुर्मुखस्य यत इति सूत्रार्थवर्णनपक्षे पौनरुक्तशङ्कैव नास्ति । न चात्र योजनायां मानाभावः । 'यो ब्रह्माणं विदधाति पूर्वम्'[११४] इत्यादि श्रुतेरेव मानत्वादिति वदन्ति । सूत्रस्य विश्वतोमुखत्वेनानेकार्थस्यालङ्कारतयाऽनुव्याख्यानोक्तार्थस्योक्तार्थाविरुद्ध-त्वाच्चान्यश्चानेकार्थत्वमिति न्यायस्य सूत्रव्यतिरिक्तविषयत्वेन तद्विरोधानवकाशात् । सूत्रस्य,

'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः'[११५] इति ।

अनेकार्थत्वेनैव प्रसिद्धत्वात् । न चैवं प्रसिद्धसूत्रस्थोङ्कारेणैव जगत्पालकत्ववर्णने जन्मादिसूत्रे पुनस्तद्वर्णनं न स्यादिति वाच्यम् । गुणपूर्णं ब्रह्म विष्णुरूपमेव, न देवतान्तररूप-मित्यर्थसाधनायोङ्कारस्य तत्परत्वस्वीकारेऽपि प्रकृत इव रक्षकत्वस्य लक्षणत्वेनास्वीकारात् । यत् तु ओङ्कारस्य ओतत्ववाचित्व एव मानाभाव इति चेन्न । भगवत्पादैरुपनिषद्भाष्येषु ओङ्कारस्योतत्ववाचित्वे प्रमाणानामनेकस्थले उपन्यासात् । ओङ्कारस्य ओतत्ववाचित्वे अवतेष्टिलोपश्चेति व्यक्तिमणिस्मरणवत् 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'[११६] इति श्रुतिवच्च, तं वा एतमात्मानं परमं ब्रह्मोङ्कारं तुरीयोङ्कारोग्रविद्योतमनुष्टुभा नत्वा प्रसाद्योमिति संहृत्याहमित्यनुसन्दध्यात्'[११७] इति तापनीय-श्रुतेः । मानत्वाच्च तदोतत्वं गुणैरित्यत्र 'अहमेकोऽखिलगुणो वाचकः प्रणवो मम'[११८] इति तन्त्रसारोदाहृतस्मृत्यनुसारिण्या योग्यतायां मानत्वात् । ओङ्कारस्य ब्रह्मशब्दपर्यायत्वे 'ओमिति

---

११४ श्वेताश्वतरोपनिषत् (६/१८)

११५ ब्रह्मसूत्रभाष्योद्धृत(१/१/१)स्कान्दपुराणवचनम् ।

११६ महानारायणोपनिषत् (१२/१७)

११७ तापनीयश्रुतिः (खं - ४)

११८ तन्त्रसारसङ्ग्रहे (१/२)

ब्रह्म''[११९] इति श्रुतेरेव मानत्वाच्च ।

नन्वत्र पक्षे ओं ब्रह्मवेदयोः पर्यायत्वात् तयोरन्यतरणैव विषयसूचनसिद्धेरन्यतरवैयर्थ्यमिति चेन्न । उक्तरीत्या शास्त्रविषयभूतब्रह्मशब्दार्थस्य देवतान्तरपरत्वनिरासार्थत्वेनोङ्कारस्यापि सफलत्वात् ।

**अस्मद्गुरुचरणास्तु** - ''अत्र ब्रह्मशब्देनैव विषयसूचनादोङ्कारवैयर्थ्यमिति शङ्का न कार्या । कुतः न केवलं जिज्ञास्ये 'तद्विजिज्ञासस्व तद्ब्रह्म'[१२०] इत्यादौ ब्रह्मपदश्रवणात् तस्य जीवाद्भिन्नत्वेनाजिज्ञास्यता । किन्तु ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादौ जीवेष्वसम्भावितगुणपूर्तिवाचकोङ्कारादिश्रवणादपीति युक्त्यन्तरसूचकत्वेन वैयर्थ्याभावात्''[१२१] इत्याहुः ।

किञ्चादृष्टार्थमादाववश्यं प्रयोक्तव्यस्य कथं वैयर्थ्यमिति न विद्मः । अत ओङ्कारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयाभावप्रयुक्तानवयवत्वशङ्का परास्ता । उक्तरीत्या वाक्यार्थे समन्वयत्वात् । तथा च [१२२]स्विष्टकृदादिवदोङ्कारोच्चारणमुभयार्थमिति स्थिते तस्य सूत्रान्तेऽपि प्रयोगो

---

१११९ तैत्तिरीयोपनिषत् (१/१९)

१२० तैत्तिरीयोपनिषत् (१/१)

१२१ 'न च ब्रह्मशब्देनैव विषयसूचनादोङ्कारवैयर्थ्यम् । न केवलं जिज्ञास्ये तद्विजिज्ञासस्व तद्ब्रह्मेत्यादौ ब्रह्मपदाश्रवणात् तस्य जीवाद्भिन्नत्वेन जिज्ञास्यता । किन्तु ओमित्यक्षरमुद्गीथमुपासीतेत्यादौ जीवेष्वसम्भावितगुणपूर्तिवाचकोङ्कारादिश्रवणादपीति युक्त्यन्तरसूचकत्वात् । अदृष्टार्थमादाववश्यं प्रयोक्तव्यत्वाच्च ।' - इति तात्पर्यचन्द्रिकायाम् ।

१२२ ननु स्विष्टकृदादौ प्रक्षेपत्यागाद्यवच्छेदकभेदेनोभयार्थत्वं दृष्टम् । नैवमोङ्कारोच्चारणेऽवच्छेदकभेदः सम्भवति । येनोभयार्थत्वं स्यात् । किञ्च यत्रादृष्टार्थत्वं कल्प्यं तत्र दृष्टार्थत्वे सम्भवति नादृष्टार्थत्वमिष्यते । यथा स्वाध्यायोऽध्येतव्य इत्यादौ । यत्र मानांतरवशाददृष्टार्थत्वमावश्यकं तत्र सम्भवदपेक्षितमपि नदृष्टार्थत्वमाद्रियते । यथा ''स्तौति शंसती''त्यादौ। अत एव द्वितीयाद्यपादे ''स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वा''दिति षष्ठेऽधिकरणे तथैवोक्तम् । तथाच प्रकृते ''स्रवत्यनोङ्कृतमि''ति श्रुत्याऽदृष्टार्थत्वे आवश्यके प्रत्यायनार्थत्वानवकाशः । अतः कथमोङ्कारोच्चारणस्योभयार्थत्वमिति चेदुच्यते । ''स्तौति शंसती''त्यादौ देवताप्रकाशनरूपदृष्टप्रयोजनस्वीकारे गुणसम्बन्धाभिधानलक्षणस्तुतिरूपं विहन्यत इति श्रुतिबाधः स्यात् । अतस्तद्बलाददृष्टार्थत्वं युक्तम् । उक्तं च ''सत्यं दृष्टार्थता युक्ता श्रुतिश्चेन्न विरुद्ध्यते । देवतास्मरणार्थत्वे स्तुतिरूपं विहन्यत'' इति । प्रकृते तु दृष्टार्थत्वाभ्युपगमे न काचित् श्रुतिर्बाध्यत इति । न च सामर्थ्यस्य दौर्बल्यमिति युक्तम् । न हि सूत्रेष्वाद्यन्तयोरोङ्कारमुच्चारयेदिति प्रत्यक्षो विधिरस्ति येन दौर्बल्यं सामर्थ्यस्य स्यात् । किं त्वनुच्चारणे निन्दाश्रवणान्यथानुपपत्त्योङ्कारोच्चारणविधिरुन्नेयः । सामर्थ्यं तु प्रत्यक्षम् । अतः श्रुतिसामर्थ्ययो-

न व्यर्थः । तस्य दृष्टार्थत्वासम्भवेऽपि केवलादृष्टार्थत्वासम्भवात् । 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते'[१२३] इति श्रवणादित्युक्तम् । न चैकत्रोच्चारणे दृष्टार्थे अन्यत्रापि तथात्वनियमः । [१२४]मन्त्राणां प्रयोगकाले उच्चारणस्य दृष्टार्थत्वेऽपि जपकाले तस्य केवलादृष्टार्थत्वदर्शनात् । [१२५]अन्वेनं [१२६]मातेत्यादावेकवचनस्यैकदृष्टार्थत्वेऽपि [१२७]बहुपशुके तस्यादृष्टार्थत्वदर्शनाच्च । तथाचोङ्कारस्य

---

स्तुल्यबलत्वादविरोधाच्चोभयार्थत्वम् । स्विष्टकृदाद्युदाहरणं तूभयार्थत्वसम्भवमात्र इति न कोऽपि दोषः ।
- इति तात्पर्यचन्द्रिकाप्रकाशे

१२३ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

१२४ मन्त्राणामिति ।। प्रथमे "तदर्थशास्त्रा"दिति द्वितीयपादीयान्तिमाधिकरणे क्रत्वङ्गभूतानां मन्त्राणां किमर्थप्रकाशनं दृष्टद्वारमुतादृष्टद्वारमिति संशये । उपायान्तरेणापि प्रयोगवेलायामर्थप्रकाशनसम्भवात् तादर्थ्ये मन्त्राणां नित्यवदाम्नानानर्थक्यापत्तेः । मन्त्रप्रत्यायनादृष्टकल्पनायामुच्चारण एवैतत्कल्पनौचित्यात् पुरुषव्यापारगोचरत्वेन तत्रैव फलाकाङ्क्षायाः सत्त्वाददृष्टार्था मन्त्रा इति प्राप्ते मन्त्रोच्चारणादनुष्ठेयस्मरणं तत्स्मरणात् प्रयोगः तस्मात् फलमित्येवं दृष्टप्रयोजनलाभान्नादृष्टकल्पनावसरः । यस्तु मन्त्रेणैव स्मर्तव्यमिति नियमस्तस्य न दृष्टं किंचित् फलमित्यदृष्टं कल्प्यते । उच्चारणस्य तु दृष्टमेव फलम् । जपादौ विनियुक्तानां मन्त्राणामर्थप्रत्यायनानपेक्षतयाऽदृष्टार्थमुच्चारणमस्त्विति सिद्धांतितम् । अत्र यथा कर्मणि विनियुक्तानां मन्त्राणामुच्चारणस्य तदनुष्ठानकाले दृष्टार्थत्वं "त्रिभिरनश्नन् पारायणैः पूतो भवती"त्यादिना पारायणादिषु नियुक्तानां तेषामेवोच्चारणस्यादृष्टार्थत्वं एवमोङ्कारोच्चारणस्यापि श्रुतिबलाददृष्टार्थत्वमित्यर्थः ।।
- इति तात्पर्यचन्द्रिकाप्रकाशे

१२५ अन्वेनं मातेति ।। मन्त्राधिकरण एव ऊह इति गुणसूत्रेणाग्नीषो मीयाचोदकेन पशुगणं प्राप्ते "अन्वेनं माता मन्यतामनुपितानुभ्राते"त्यध्रिगुप्रैषगतमात्रादिपदानामूहप्रतिषेधपरमेकवचनान्तं मात्रादिपदं न बहुवचनान्तरूपवृद्धिमाप्नुयादित्यर्थकं "न माता वर्धत" इति वचनमन्यत्रोहास्तित्वावगमकतया मन्त्राणामर्थविवक्षायां लिङ्गमुपन्यस्तम् । अत्र यथा पशुगणे मात्रादिपदानामेकवचनान्तानामसमवेतार्थतयोच्चारणमदृष्टार्थमेवैकस्मिन् पशौ दृष्टार्थमित्येकस्यैव प्रयोगभेदेनोभयार्थत्वं तथा प्रकृतेऽपीत्यर्थः । - इति तात्पर्यचन्द्रिकाप्रकाशे

१२६ न चैकस्यैकत्रोच्चारणे दृष्टार्थेऽन्यत्रापि तथात्वनियमः । मन्त्राणां प्रयोगकाले उच्चरणस्य दृष्टार्थत्वेऽपि जपकाले तस्यादृष्टार्थत्वदर्शनात् । अन्वेनं मातेत्यादावेकत्वस्यैकपशुके दृष्टार्थत्वेऽपि बहुपशुकेऽदृष्टार्थत्वदर्शनाच्च । 'न माता वर्धत' इति श्रुत्या मात्रादिशब्दे ऊहनिषेधात् । अध्याह्रियमाणस्यापादितमन्त्रावयवत्वं च मन्त्रेण सहैककार्यकारित्वाभाव इति नेष्टापत्तिः । जिज्ञासान्विततया प्रथमं प्रतीतस्यौतत्वस्य तत्रासम्भवेन सप्तदशारत्निर्वाजपेयस्य यूप' इत्यादाविवाङ्गावतारन्यायेन तदुपसर्जनब्रह्मान्वयसम्भवाच्च । अर्थवादार्थ(स्य)प्राशस्त्यस्य यजेतेत्यत्रोपसर्जनूभूतयागविशेषणत्वदर्शनाच्च । दण्डी प्रैषानन्वाहेत्यादौ दण्डस्योपसर्जनस्य विध्यन्वयदर्शनाच्च । उक्तं च वार्तिके - 'विशेषणपरत्वं च दण्डीत्यादिषु दर्शितम्' इति ।
- इति तात्पर्यचन्द्रिकायाम् ।

१२७ ननु बयपशुके अन्वेनान्मातरो मन्यन्तामिति बहुवचनान्ततयोह सति नादृष्टार्थत्वमित्यत आह ।। नमातेति ।।

'अव रक्षणे' इति धातुनिष्पन्नत्वपक्षे न काप्यनुपपत्तिरिति स्थिते संयज्ञपतिराशिपेत्यादाविव साकाङ्क्षत्वस्याप्युक्तरीत्या सत्वात् । अध्याहारकल्पकसत्वात् सूत्रे ओङ्कारस्य अध्याहारो नानुपपन्न इति सिद्धम् । तस्योतत्ववाचित्वपक्षेऽप्यन्वयानुपपत्तिर्निरशिष्यते । तथा 'स्रवत्यनोङ्कृतं ब्रह्म'[१२८] इत्यत्र ब्रह्मशब्देन वेदमात्रस्य ग्रहणात् । तत्सूत्राणां ग्रहणमित्यत्र प्रमाणाभावात् । 'स्रवत्यनोङ्कृतं ब्रह्म' इति सूत्राणामाद्यन्तयोरोङ्कारोच्चारणस्य कर्तव्यतायां समानमिति शङ्का च निरसिष्यते ।

ननु 'ओतं वा एतमात्मानम्' इति उदाहृतश्रुतिर्नोङ्कारस्योतत्ववाचित्वे मानम् । तस्यापदार्थत्वादवाक्यार्थत्वाच्चेति चेत्, सत्यम् । श्रुतार्थापत्तेरेव तत्र मानत्वात् । तथाहि - 'ओतं वा एतमात्मानम्'[१२९] इति श्रुत्या गुणपूर्णे प्रकृते परमात्मनि नृसिंहे ओतत्वप्रकारानुसन्धानमोङ्कारेण कुर्यादिति बोध्यत इति सामर्थ्यादेवोङ्कारस्योतत्ववाचित्वं सेत्स्यति । न ह्योतत्ववाचकत्वाभावे ओङ्कारस्य तत्प्रकारकानुसन्धानं प्रति साधनत्वमुपपद्यते । न चावतेष्टिलोपश्चेत्यभियुक्तस्मृत्योङ्कारस्य 'अव रक्षणे'[१३०] इति धातुनिष्पन्नत्वावगमात् तस्य ओतत्ववाचित्वं कथमिति वाच्यम् ? 'ओतं वा एतमात्मानम्' इति श्रुतार्थानुपपत्त्याऽवतेरेवोतत्ववाचित्वस्य कल्पनात् अभियुक्तव्याख्यानवत् श्रुतार्थापत्तेरपि प्रमाणत्वादिति । अत एवान्यायश्चानेकार्थत्वमिति न्यायविरोधस्याप्यनवकाशः ।

---

एकवचनान्तो मातेति शब्दो मातर इति बहुवचनान्ततया न वर्धत इति श्रुत्यर्थः । अत एव महाभाष्ये "बहुगणवतुडतिसङ्ख्ये"त्यत्र संज्ञार्थकोऽपि सङ्ख्यशब्दः "ष्णान्तापडि"त्यत्रानुपक्तः संज्ञिपर इत्युक्तम् । अत ओङ्कारस्योभयार्थत्वं युक्तमिति । यच्चोक्तमूह्यमानस्य तदनवयवत्वमिष्टमेवेति तदुद्धरति ।। अध्याह्रियमाणस्येति ।। वाक्यार्थ प्रतीतिरूपैककार्यकारित्वाभावो वाऽदृष्टरूपैकार्यकारित्वाभावो वेत्यर्थः । अन्यथा "संयज्ञपतिराशिपे"त्यादावध्याहृतस्य गच्छतामित्यस्य तेन सहैककार्यकारित्वं न स्यादिति भावः । एतेन मन्त्रेपूह्यमानस्य "संयज्ञपतिरि"त्यादावध्याह्रियमाणस्य तदनवयवत्वप्रसङ्गात् तेन सहैककार्यकारित्वाभावप्रसङ्गादिति सुधावाक्यार्थ उक्तो भवति । यद्यपि सुधायां मन्त्रानवयवत्वमात्रमापादितं नामन्त्रत्वमितीष्टापादनं सुपरिहरं तथाप्यापादनस्यामन्त्रत्वपर्यन्तत्वेऽपि नानुपपत्तिरिति प्रौढ्या परिहारान्तरमवोचदिति ध्येयम् । - इति तात्पर्यचन्द्रिकाप्रकाशे

१२८ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

१२९ तापानीयश्रुतिः (खं- ४)

१३० 'अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु' । - इति पाणिनीयधातुपाठः ।

ननूदाहृतोङ्कारस्योतत्वप्रकारकानुसन्धानकारणत्वमेव कथम् ? येन तस्य ओतत्ववाचित्वं कल्पनीयमिति चेत्, इत्थम् । 'एतमात्मानं परं ब्रह्म'[131] ओतं वै ओतमेव, ''तुरीयोङ्काराग्रविद्योतम्''[132]इति हेतुगर्भं विशेषणं तुरीयोङ्काराग्रविद्योतत्वात् । तादृशमनुष्टुभा नत्वा प्रसाद्याहमित्युपसंहृत्यानुसन्दध्यादिति वाक्यार्थप्रतीतेः । अहमित्युपसंहृत्यानुसन्दध्यामिति मदन्तर्यामीत्युपसंहृत्यानुसन्दध्यादित्यर्थः । शब्दस्यान्तर्यामिपरत्वम्, अहं मनुरभवं सूर्यश्चा इत्यादौ सुप्रसिद्धम् । तथा चोङ्कारजन्यज्ञानस्योतत्वप्रकारकानुसन्धानोपयोगकथनात् । तयोः समानप्रकारकत्वं समानविषयत्वावश्यम्भावात् । अस्मदुक्तार्थपरत्वं सिद्ध्यति । अनुसन्धानं हि स्मरणं भवति । स्मरणं चानुभवसमानप्रकारकं तत्र मानविषयकं चेत्, सर्वसिद्धं प्रागुक्तमनुसन्धेयमित्यादावनुसन्धानशब्दं स्मृतिपरो दृष्ट इति न तत्र विदितव्यम् । तस्मादोङ्कारस्योतत्ववाचित्वे प्रमाणाभावो असिद्धः ।

ननु 'अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः'[133] इति भाष्योदाहृतस्मृतिश्चोङ्कारस्य ब्रह्मसूत्राद्यवयवत्वे मानमिति वाच्यम् । यदुक्तं तदनुपपन्नम् । तथाहि - भवेदेवं मनोरथस्तदा । यदि तत् स्मृतिगतस्य 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि'[134] इत्यादिसूत्रशब्दस्य ब्रह्मसूत्रमात्रपरत्वं स्यात् । तदेव कथं सूत्रशब्दस्य सूत्रमात्रपरत्वात् अन्यसूत्राणामप्युक्तरीत्या सूत्रशब्दमुख्यार्थत्वाच्च । ब्रह्मसूत्राब्रह्मसूत्राणामेव सूत्रशब्दमुख्यार्थत्वे प्रमाणाभावाच्च । अभियुक्तव्यवहारादीनां तत्प्रमाणानां साधारणत्वात् । एवं क्रमानुसारेणैव 'अतश्च पूर्वमुच्चार्याः'[135] इत्यादि तदनन्तरवाक्यानाममेयत्वात् । उपसंहारस्यापि तथैवनेतत्वाच्च । अन्यथा ब्रह्मसूत्रवदितरसूत्राणामपि अथातःशब्दपूर्वकत्वे उदाहृतश्रुतीनां प्रमाणत्वाभावेन तत्पूर्वत्वासिद्ध्यभावप्रसङ्गात् । प्रत्युत ब्रह्मसूत्रात्पूर्वकस्यैव तयोः सिद्धिप्रसङ्गात् ।

न चैवं तथाऽनुपलब्धे इतरसूत्राणामपि तत्पूर्वकत्वोपलब्धेश्च । एवं चोङ्कारपूर्वकत्वं इतरसूत्रस्यापि स्यात् । अन्यथेतरसूत्रवत् ब्रह्मसूत्रस्यापि तत्पूर्वकत्वं न स्यात् । साधकप्रमाण-

१३१ तापानीयश्रुतिः (खं- ४)

१३२ तापानीयश्रुतिः (खं- ४)

१३३ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१३४ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१३५ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

स्याविशेषादिति । यद्यपि सर्वसूत्राणामथातःशब्दपूर्वकत्वेन भाष्योदाहृतस्मृत्युक्तमेव नियामकमिति न शक्यमभ्युपगन्तुं, तथात्वे प्रमाणप्रमेयेत्यादिमसूत्रस्यापि तत्पूर्वकत्वप्रसङ्गात् । 'अ-इ-उण्'[१३६] इत्यादिसूत्रस्य, तथा 'वृद्धिरादैच्'[१३७] इत्यादिसूत्रस्यापि तत्पूर्वकत्वप्रसङ्गाच्च । न ह्येतत् स्मृत्युक्तम् । प्रयोजकं पाणिनिगौतमादयः सूत्रकाराः न जानत इत्यस्ति । न वा स्वकृतादिमसूत्रात् पूर्वं अथातःशब्दयोः प्रयोगे अभ्युदयोऽस्तीत्येतन्न जानत इत्यस्ति । न वा तत्स्मृतिस्तान् प्रत्यप्रमाणमित्यस्ति ।

तथा च नियामकसत्वात् उदाहृतसूत्रात् पूर्वमपि अथातःशब्दयोस्तैरपि सूत्रकारैः करणप्रसङ्गः । तथा च तत्र तैस्तदकरणात् तत्स्मृत्युक्तम् । तयोः पूर्वं प्रयोक्तव्यत्वे नियामकमेव नेति शक्यमभ्युपगन्तुमिति ।

किञ्च नियामकसत्वात् 'अतश्च पूर्वमुच्चार्याः'[१३८] इति विध्यविशेषाच्च । अथातःशब्दवदेव सर्वशास्त्रादिमसूत्रेभ्यः पूर्वमोङ्कारस्यापि तत्तत्सूत्रकारैः प्रयोगप्रसङ्गः । अन्यथोङ्कारवदथातःशब्दयोरप्यप्रयोगप्रसङ्गः । विशेषहेत्वभावात् । न चैवमनभ्युपगमात् । न हि 'अथातो ब्रह्मजिज्ञासा'[१३९] इति ब्रह्ममीमांसादिमसूत्रात् तस्येवेतरसूत्रादिमसूत्रस्योङ्कारआद्यावयवः कर्तव्यपदं वदति । केनाभ्युपेयत इति ।

तथाऽपि नोक्तवाधकात् स्मृत्युक्तनियामकमिति शक्यं वक्तुम् । स्मृतौ सूत्रशब्दस्य 'पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि'[१४०] इत्यादिवाक्यपर्यालोचनया सामर्थ्यलक्षणलिङ्गेन भवेदवाक्यार्थनिर्णयो सयुक्तिकन्यायग्रथनात्मकसूत्रविशेषपरत्वावसायेन तादृशसूत्रसन्दर्भात्मकशास्त्रादिमसूत्रेऽन्य एव अथातःशब्दयोः पूर्वकत्वं भाष्योदाहृतस्मृत्यावेद्यत इत्यवसायेनोक्तातिप्रसङ्गानवकाशात् । तथा च स्मृत्युक्तं नियामकं तादृशसूत्रविषयमेव न त्वविशेषणसर्वसूत्रविषयमिति न किञ्चिदनुपपन्नम् । एवं चाभ्युदयेऽपि पूर्वं तदुच्चारणकृतस्तत्रैव भवति, नान्यत्रेत्यप्यवसीयते ।

---

१३६ प्रत्याहारसूत्रम् ।

१३७ पा.सू. (१/१/१)

१३८ ब्रह्मसूत्रभाष्ये (१/१/१)

१३९ ब्रह्मसूत्रम् (१/१/१)

१४० ब्रह्मसूत्रभाष्ये (१/१/१)

ततोऽन्यत्राथात:शब्दयोरुदाहरणं भोजनादिवदैच्छिकमेव विधिगोचर इति तत्र तत्प्रयोगस्याभ्युदयादिहेतुत्वेऽपि न तात्पर्यमुदाहृतस्मृतेरिति नाप्यनुपपत्तिः ।

एतेन 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि'[१४१] इति स्मृतौ निखिलशब्दोऽपि शब्दसमभिव्याहृतिवहुवचनान्तसूत्रशब्दस्यानिर्वाहशङ्का निरस्ता । उक्तरीत्या वा कर्मब्रह्मदेवताकाण्डार्थनिर्णायकसूत्रसन्दर्भरूपशास्त्रादिमानेकसूत्राण्यादाय वा तन्निर्वाहसम्भवात् । न च देवतामीमांसासूत्राणामेवानुपलम्भात् कथं तन्निर्णय इति शङ्क्यम् । इदानीं तेपामनुपलम्भेऽपि प्रामाणिकसिद्ध्या तत्सत्वे सिद्धे मीमांसाशास्त्रादिमसूत्रत्वेनाथातःशब्दपूर्वकत्वानुमानात् । तावताऽपि तथाविधसूत्रशब्दनिर्वाहात् । एवं च ओङ्कारपूर्वकत्वमपीतरसूत्राणां किं न स्यादिति चेन्मैवम् । इष्टापादनात् । 'स्रवत्यनोङ्कृतं ब्रह्म'[१४२], 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'[१४३] अतश्च स्वीकारेण शङ्कानवकाशात् ।

न च 'स्रवत्यनोङ्कृतं ब्रह्म' इति श्रुतिर्मीमांसासूत्रविपया, किन्तु देवतामात्रविपयेति वाच्यम् । तथाऽपि मीमांसासूत्रमात्रविपयता अप्यक्षतेः । तथाहि - ब्रह्मवेदशब्दो न केवलं डित्थादिशब्दवद्रूढः । किन्तु 'वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः'[१४४] इति श्रुत्या यौगिकेनापि तत्रत्याविरोधात् । नहि योगार्थक इति कर्तृतारूपमीमांसां विना युज्यते । बृंहयत्युपबृंहयति इत्यवयवार्थप्रतीतेरुपबृंहयितृत्वस्य निर्णायकत्वपर्यवसितत्वात् ।

न चैवं वेदस्योपबृंहणायत्तत्वं न स्यादिति वाच्यम् । तस्योपबृंहणीयत्वेऽप्युपबृंहत्वादेव पूर्वमुचार्या इत्युदाहृत इत्यादिवलात् । ब्रह्ममीमांसासूत्रस्येव इतरमीमांसासूत्रस्यापि ओमथातशब्दोच्चारणपूर्वकत्वानुसारेण वेदशब्दवत् अतस्तद्विशिष्ट एव मन्त्रे ब्रह्मणः समुदायात्मकग्रन्थविशेपो वेदशब्दार्थो वाच्यः । एवं च विशेषीभूतमीमांसाया अपि ओङ्कारोच्चरणपूर्वकत्वेऽपि भवत्येव । भवत्येव साऽपि श्रुतिः प्रमाणमिति वक्ष्यमाणरीत्या तत्रत्यब्रह्मशब्दो ब्रह्मविद्यापरो यदि । तदा स्यादोङ्कारोच्चारणपूर्वकत्वसिद्धिस्तेपामविकला ।

---

१४१ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१४२ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

१४३ तैत्तिरीयोपनिपत् (१/१८)

१४४ विष्णुतत्त्वविनिर्णयोदाहृतपिप्पलादश्रुतिः

तथाहि 'यया तदक्षरमधिगम्यते'[१४५] इति श्रुत्युपगतब्रह्माधिगमकरणत्वस्य कर्तव्यतां विना वेदमात्रेण सम्भवेन तद्विशिष्ट एव तत्र तस्य वक्तव्यत्वात् । तदितिकर्तव्यतारूपमीमांसारूपैव नान्यरूपेत्यविवादम् ।

'सर्वे वेदा यत्पदमामनन्ति'[१४६]
'सर्वे वेदा यत्रैकं भवन्ति'[१४७]
'वेदैरनेकैरहमेव वेद्यः'
'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः'[१४८]
'ततो वेदास्तत्पराः सर्व एव'[१४९]
'शास्त्रयोनित्वात्'[१५०], 'तत्तु समन्वयात्'[१५१], 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्'[१५२], 'गतिसामान्यात्'[१५३]
'वेदैश्च सर्वैरहमेव वेद्यः'[१५४]

इत्यादिश्रुतिसूत्रस्मृतिपर्यालोचनया तात्पर्यतो वेदमात्रस्य ब्रह्मबोधकत्वावसायात् । इतिकर्तव्यतारहितस्य तस्य तदयोगात् । तद्विशिष्टस्यैव तस्य तदुपेयमिति वेदवत् तदितिकर्तव्यतारूपमीमांसाया अपि ब्रह्मबोधकत्वावश्यंभावेन ब्रह्मविद्यात्वमिति तस्या आवश्यकमिति वक्ष्यते ।

---

१४५ आथर्वणोपनिषत् (१/५)

१४६ सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ।। - काठकोपनिषत् (१/२/१)

१४७ तैत्तिरीयारण्यके (३/११/१)

१४८ ब्रह्मसूत्रभाष्योदाहृत(३/३/५)चतुर्वेदशिखावचनम् ।

१४९ न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव ।। इति सौपर्णश्रुतिः ।
- इति विष्णुतत्त्वविनिर्णये

१५० ब्रह्मसूत्रम् (१/१/३)

१५१ ब्रह्मसूत्रम् (१/१/४)

१५२ ब्रह्मसूत्रम् (३/३/१)

१५३ ब्रह्मसूत्रम् (१/१/१०)

१५४ गीता (१५/१५)

तस्मात् 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते'[१५५] इति श्रुतिरपि मीमांसादिमसूत्राणां ओङ्कारोच्चारणपूर्वकत्वे प्रमाणमिति न किञ्चिदनुपपन्नम् ।

एतावांस्तु विशेषः । स चोङ्कारः प्रचारितो ब्रह्ममीमांसासूत्रात् पूर्वं तदवयवो भवतीत्युक्तरीत्या तत्सूत्रवाक्यार्थे समन्वयसत्वादितरमीमांसादिमसूत्रात् पूर्वं विधिवलादुच्चरितोऽपि न तत्सूत्रावयवो भवति । अतथात्वादिति पूर्वमुच्चारित ओङ्कारस्तर्हि तस्य किं कुरुत इति चेत्, उदाहृतश्रुतिवलात् अदृष्टद्वाराङ्गत्वं भजन् मङ्गलतया प्रारिप्सितसमाप्तिप्रतिवन्धकविघ्नविघातं कुरुत इति गृहाण ।

एतेन भाष्योदाहृतस्मृतिषु ब्रह्मसूत्राणामेव मुख्यसूत्रत्ववर्णनात् तत्र सूत्रशब्देन ब्रह्मसूत्राणामेव ग्रहणं स्यात् । 'मुख्यामुख्ययोर्मुख्ये कार्या संप्रतिपत्तिः' इति न्यायात् । किमतो यद्येवमिति चेत्, न । सूत्रशब्देन ब्रह्मसूत्रमात्रग्रहणे 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि'[१५६] इत्यादिभाष्योदाहृतस्मृतिषु बहुसूत्रविषयकप्रश्नप्रतिवचनानुपपत्तिः । तथा 'निखिलान्यपि' इति बहुवचनान्तनिखिलशब्दापिशब्दयोरयोगश्च । नह्यथातःशब्दपूर्वाण्यनेकानि ब्रह्मसूत्राणि सन्ति । येनोदाहृतस्मृतौ प्रश्नप्रतिवचनयोस्तदालम्बनतयोपपन्नता स्यात् ।

न चात्र सूत्रमात्रमेव सूत्रशब्देन गृह्यते, सूत्रमात्रस्यापि सूत्रशब्दमुख्यार्थत्वात् । ब्रह्मसूत्राणामेव तत्वे प्रमाणाभावादिति वाच्यम् । भाष्योदाहृतस्मृतीनामेव तत्र मानत्वात् । न च सूत्रशब्दवाच्यत्वाविशेषे ब्रह्मसूत्राणामेव सूत्रशब्दमुख्यार्थत्वं नेतरेषामिति शक्यं वक्तुमिति वाच्यम् । भावानवबोधात् । अस्ति सर्वनामातिरिक्तशब्दानां मुख्यामुख्यवृत्तिभेदेन वृत्तिद्वयी । तत्र मुख्यवृत्तिरपि रूढियोगयोगरूढिभेदेन त्रयी । तत्रापि रूढिर्द्वयी । आर्यानार्यप्रसिद्धिभेदेन तत्रार्यप्रसिद्धिरपि द्वयी । श्रुत्यादिषु तत्प्रसिद्धत्वे न कीर्तिता । तथा अकीर्तिता चेति । एवं योगोऽपि द्विविधः । महायोगोऽमहायोगश्चेति ।

अत्रापि महायोगो नाम श्रुत्यादिषु सङ्कुचितावयवशक्तिमत्त्वेन कीर्तिता । अन्यस्त्वतथाविधः । एवममुख्यवृत्तिरपि द्वयी । लक्षणागौणीभेदात् । अत एव लक्षणादिकस्याप्यनेकविधत्वम् । निरूढादिभेदात् । तथाच मुख्यशब्देन स एवात्रार्थो विवक्षितः । यो ह्यनार्यप्रसिद्धिविषय इति वेदविदः प्राहुरित्याद्युदाहृतस्मृतिषु ब्रह्मसूत्राणामेवानार्यसिद्धिविषयत्वेन कीर्तनदर्शनात् ।

---

१५५ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

१५६ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

तेषामेव सूत्रशब्दमुख्यार्थत्वेन मदुक्तिरिति किमनुपपन्नम् ।

तथाच प्रकृते मुख्यसूत्रग्रहणे भाष्योदाहृतस्मृतिवाक्यार्थयोगतादवस्थ्यमिति परास्तम् । भाष्योदाहृतस्मृतौ सूत्रशब्दमुख्यार्थप्रतिपादकायां 'निर्विशेषितसूत्रत्व'[१५७] शब्देन केवलसूत्रशब्दस्योक्तत्वेन 'सूत्राणि निखिलान्यपि'[१५८] इत्यत्र निखिल-अपिशब्दसमभिव्याहारशब्दसत्वेन तस्य सूत्रशब्दस्य केवलत्वाभावेन तेन सूत्रमात्रग्रहणोपपत्तेः ।

तथा च न काऽप्यनुपपत्तिरिति । एतेनैव 'सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जते'[१५९] इत्यस्योपसंहारत्वात् । उपसंहारस्योपक्रमव्याख्यानरूपतया परत्वेन च वलवत्वात् । तदनुरोधेनैवानयनावश्यम्भावे उपसंहारे च केवलसूत्रशब्दस्यैव श्रवणात् । तस्य स्वमुखार्थप्रत्यायनकारित्वस्वभावत्वात् । पदान्तरसमभिव्याहृतोपक्रमस्यापि मुख्यसूत्रोपस्थापकत्वं दुर्वारम् ।

एवं च स्मृतिरसम्वन्धार्थो सति विवक्षितार्थसिद्धौ प्रमाणाभावेन भज्येदेवेति परास्तम् । सूत्रेष्वित्युपसंहारोऽपि विशेषोपस्थापक तुशब्दादिसमभिव्याहारस्य सत्वेनोपसंहारगतसूत्रशब्दस्यापि निर्विशेषणसूत्रशब्दराहित्येनोपक्रमगतसूत्रशब्दवत् (३२) सूत्रविशेषनिष्ठत्वावश्यंभावेनोपक्रमैकवाक्यतया विवक्षितवाक्यार्थसमर्पकत्वानपायात् । तथा चोपक्रमोपसंहारयोर्विरुद्धत्वाभावेन 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि'[१६०] इत्यादिभाष्योदाहृतस्मृतीनां प्रामाण्यस्योपपंन्नत्वेन तदुक्तार्थसिद्ध्यवैकल्यम् ।

किञ्चोदाहृतस्मृतीनामाप्तवाक्यत्वेन यथाश्रुतार्थानुपपत्तौ लक्षणया वाधितान्यार्थपरत्वमाश्रित्य तत्र तासां प्रामाण्याभ्युपगम एव युक्तः, न तु यथाश्रुतार्थस्यानुपपन्नत्वमस्तीति कृत्वा अप्रामाण्याद्युपगमायुक्तिः । उदाहृतस्मृतीनामवाधितार्थ एव आप्तत्वेन तासां प्रामाण्याभ्युपगम एव युक्त इत्युच्यत इति चेत्, उच्यते । अथातःशब्दपूर्वकत्वं केषुचिदेव सूत्रेषूपलभ्यते, न सर्वसूत्रेष्वित्यादिवादं गौतमपाणिनिसूत्रेषु तददर्शनं च सर्वानुभवसिद्धम् । तथा च यत्र तदुपलम्भः सर्वसम्प्रतिपन्नः तत्र अथातःशब्दोच्चारणकर्तव्यतायां नियामकताऽभिहिता । स्मृतिभिः

---

१५७ ब्रह्मसूत्रभाष्ये (१/१/१)

१५८ ब्रह्मसूत्रभाष्ये (१/१/१)

१५९ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१६० ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

प्रतिपाद्यत इत्येव स्वीकार्यम् । तस्यैवार्थस्यावाधे तत्वसम्भवात् ।

एवं च पूर्वपक्षावसरे यानि दूषणान्युक्तानि तानि सर्वाण्युपलग्नानीति सर्वमवदातम् । यद्यपि सर्वमपिपदं प्रथमं मुख्यमेवार्थं स्मारयतीति, न त्वमुख्यम् । तथा च वाधकं विना शब्दे वोधे स एव प्रथममन्वयप्रतियोगितया भासते, न त्वन्यशब्दः स्वयम् । यथा यथा गृहीतासङ्गतिर्भवति तथैवार्थं प्रत्याययति । यथा वैयाकरणानां वृद्धिनद्यादिशब्दः । अत एव कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य-संप्रत्यय इति तेषामेव न्यायोऽपि ।

अत एव वेदादिषु गृहीतसङ्गतिभिः शब्दैः तथैवार्थप्रत्ययः प्रथममुदेति । यथा ब्रह्मशब्देन परात्मन एव प्रत्ययः । यथा वा वेदशब्देन ऋग्वेदादीनामेव प्रत्ययः । तत्र तथैव ब्रह्मादिपदानां योगरूढिरूपमुख्यवृत्तिग्राहकसत्वात् । एतच्च लोकवेदसाधारणम् । तथा सङ्गतिग्रहवतां तत्त-च्छब्दैस्तथैवशब्दार्थप्रत्ययस्य सर्वानुभवसिद्धत्वादिति । तथाऽपि प्रकृते नानुपपत्तिः । ब्रह्मादि-शब्दवत् सूत्रशब्देनापि भाष्योदाहृतस्मृत्यामुख्यत्वेन ब्रह्मसूत्रेष्वेव सूत्रशब्दसङ्गतिग्रहवतः प्रति प्रथमं तत्प्रत्यायनेऽपि तन्मात्रान्वयवोधाधानवतारे सति उक्तरीत्या सर्वस्यापि सूत्रशब्दार्थस्य भवत्येवेति । अत एव लोकवेदयोः यो यथा यथा पदतत्समूहभूतवाक्यार्थयोर्व्युत्पन्नो भवति स तयोस्तथैव तत्तदर्थं प्रत्येति, नान्यथा । न हि स्वरितेनाधिकार इति शास्त्रं वैयाकरण इत्येवमजानतः प्रति तस्य शब्दस्य तत्राधिकारं न प्रत्याययति । एतावता तच्छास्त्रमेव न भवतीत्यस्ति ।

एवं सूत्रशब्दोऽपि व्युत्पन्नान् प्रति ब्रह्मसूत्रेष्वेव मुख्यो भवति, नान्यत्रेति । स तानेव प्रत्याययतीति कृत्वा अन्यान् प्रति तु सूत्रमपि तत्त्वेन प्रत्याययति सूत्रशब्दः साधारणो भवति भाष्योदाहृतस्मृत्युक्तप्रकारेण । अन्यान् प्रति तु सूत्रव्युत्पन्नान् प्रति तु ब्रह्मसूत्रमात्रप्रत्यायकतया असाधारणो भवति । यथा पञ्चदशान्याज्यानि भवन्तीत्यादावाज्यादिशब्दः । अत एव 'वेदे यदाजिमीयुस्तदाज्यानामाज्यत्वम्' इति आज्यशब्दव्युत्पादनम् ।

तस्मात् स्मृतिगतसूत्रशब्दस्य मुख्यतो ब्रह्मसूत्रमात्रार्थकत्वेऽपि 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि'[१६१] इत्यादिस्मृतौ तस्योक्तरीत्या निखिलसूत्रपरत्वावश्यम्भावात् । निखिलादिमसूत्रेभ्यः पूर्वमथातःशब्दानामुच्चारणे साऽपि स्मृतिः प्रमाणमिति सिद्धम् ।

---

१६१ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

ननु तथाऽपि न । 'स्रवत्यनोङ्कृतं ब्रह्म'[१६२] इति ब्रह्मसूत्रश्रुतीनां ब्रह्मविद्यात्वसमर्थनं सूत्राण ामद्यन्तयोरोङ्कारस्योच्चारणकर्तव्यतायां मानम् । तत्रत्यब्रह्मशब्दस्य वेदरूपविद्यापरत्वेन तस्यैव ब्र ह्मविद्यापरपर्यायपरविद्यात्वेन सूत्राणां चातथात्वेन तत्र तथोच्चारणे मानत्वायोगादिति चेन्न ।

'ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ।।'[१६३]
'अथ परा यया तदक्षरमधिगम्यते'[१६४]
'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै'[१६५]
'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति'[१६६]

इत्यादि श्रुतिस्मृतिपर्यालोचनया ।

नावेदविन्मनुते तं बृहन्तं सर्वानुभूमात्मानं साम्पराये ।

'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः'[१६७] इति ।
'अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाऽहम्'[१६८] ।
'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्'[१६९] ।
इत्यादिश्रुतिस्मृतिपर्यालोचनया
'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' ।

---

१६२ गीतातात्पर्योदाहृत(१७/२७)श्रुतिवचनम् ।
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति ।। - इति मनुस्मृतिवचनम्

१६३ आथर्वणोपनिषत् (१/१)

१६४ आथर्वणोपनिषत् (१/५)

१६५ श्वेताश्वतरोपनिषत् (६/१८)

१६६ भागवतम् (१/१/१)

१६७ विष्णुतत्त्वविनिर्णयोदाहृतपिप्पलादश्रुतिः

१६८ कैवल्योपनिषत् (१/२१)

१६९ गीता (१५/१५)

'यदिच्छन्तो ब्रह्मचर्यं चरन्ति...'[१७०] ।

'ततो वेदास्तत्परा सर्व एव'[१७१] ।

'सर्वे वेदा यत्रैकं भवन्ति'[१७२]

इति श्रुतिपर्यालोचनया च वेदानामेव ब्रह्मविद्यापरपर्यायपरविद्यात्वं सर्वेणाप्यङ्गीकार्यम् । नान्येषाम् ।

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ । अमृतस्यैष सेतुः'[१७३],

'तमेवं विद्वानमृत इह भवति नान्यः पन्था ...'[१७४]

इत्यादिश्रुत्या अन्यस्य मुक्त्युपायत्वं प्रतिषिध्य ब्रह्मज्ञानमेव मुक्त्युपायत्वेनावेदितमित्यविवादम् । तच्च ब्रह्मज्ञानेन 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्'[१७५] इत्यादि श्रुतिपर्यालोचनया सम्यग्ज्ञातमेव नान्यत् ।

'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।।'[१७६]

'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः'[१७७]

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'[१७८]

---

१७० यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति** तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये ।। - गीता (८/११)

१७१ न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव ।। इति सौपर्णश्रुतिः ।
- इति विष्णुतत्त्वविनिर्णये

१७२ तैत्तिरीयारण्यके (३/११/१)

१७३ यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ।। - आथर्वणोपनिषत् (२/६)

१७४ तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । - तैत्तिरीयारण्यकम्

१७५ आथर्वणोपनिषत् (३/५)

१७६ आथर्वणोपनिषत् (३/८)

१७७ ब्रह्मसूत्रभाष्योदाहृत(३/३/५)चतुर्वेदशिखावचनम् ।

१७८ बृहदारण्यकोपनिषत् (४/४/२२)

कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते'[179]

इत्यादिश्रुतिस्मृतिपर्यालोचनयाऽपि नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।

'ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ।
अभ्यासाच्च कचिद् ज्ञानकैवल्यं लभते नरः ।।'

'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'[180]

- इत्यादि श्रुत्या न तु यत्नसाध्यत्वावगमादपि समीचीनज्ञानमेव मुक्तिसाधनमिति पर्यवस्यति । अन्यथा तदर्थमेतद्विधानवैयर्थ्यात् । 'विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः'[181] इति तदर्थं विचारविधिवैयर्थ्याच्च । आपातज्ञानेन वेदजन्येन मोक्षसम्भवात् । तथा च 'यया तदक्षर-मधिगम्यते'[182] इति तृतीयया वेदरूपब्रह्मविद्यापरनामकपरविद्याया मोक्षहेतुसम(?)ज्ञानं प्रति करणत्वमवसीयत इति वाच्यम् । करणत्वं च 'साधकतमं करणम्'[183] इति पाणिनि-स्मरणात् । प्रसाधकतमत्वं च क्रियायोगव्यवच्छिन्नत्वमेव । यस्मिन् सत्यग्रिमक्षणे क्रियावश्यम्भावः । स एव क्रियायोगव्यवच्छेदो नाम ।

एवं च मीमांसारूपेतिकर्तव्यतासम्पात एव वेदस्तथाविधब्रह्माधिगमं प्रति करणत्वं लभन्ते नान्यथेति स्थिते विशिष्टे करणत्वमागच्छत् । विशेषणभूतेतिकर्तव्यतारूपमीमांसायामपि बलादागच्छतीति वेदवद्ब्रह्ममीमांसासूत्राणामपि ब्रह्मविद्यापरपर्यायपरविद्यात्वं दुस्त्यजमिति सर्वैरप्यङ्गीकर्तव्यत्वात् । तथा च 'स्रवत्यनोङ्कृतं ब्रह्म' इत्यादिश्रुतौ विद्यमानस्य ब्रह्मशब्दस्येति-कर्तव्यतारूपमीमांसाविशिष्टवेदपरत्वावश्यम्भावेन ब्रह्मसूत्राणामाद्यन्तयोः 'स्रवत्यनोङ्कृतं ब्रह्म' इति श्रुतित एव ओङ्कारोच्चारणस्य कर्तव्यता सिद्ध्यतीति किमनुपपन्नम् ।

ननु मीमांसा न्यायानुसन्धानरूपा न वेतिकर्तव्यतात्वं भजते । किन्तु तद्भिन्नतात्पर्यावधारणमेव

१७९ महाभारतम् (शान्ति. २७६/३५)

१८० गीता (४/३३)

१८१ ब्रह्मसूत्रभाष्योदाहृत(३/३/५)चतुर्वेदशिखावचनम् ।

१८२ आथर्वणोपनिषत् (१/५)

१८३ पा.सू. (१/४/४२)

समाहृत्य तात्पर्यमेव वेदार्थो भवति । येन तदवधारणमेव वेदजन्यं फलं स्यात् । तथाच तात्पर्यावधारणरूपेतिकर्तव्यतोपेतवेदानां मोक्षहेतुब्रह्माधिगमकरणत्वं न तु तात्पर्यावधारणस्य वा तदवधारणहेतुन्यायानुसन्धानस्य वा तद्धेतुन्यायग्रथनात्मकसूत्राणां वा तदिति चेन्न ।

एवं हि वेदानामपि ब्रह्मविद्यात्वाभावप्राङ्गात् । तथाहि - 'यया तदक्षरमधिगम्यते'[१८४] इति यदक्षराधिगमं परोक्षं प्रति वेदानां करणत्वमुच्यते । तादृशवेदानां परविद्यात्वप्रतिपादनवैयर्थ्यात् । आपातप्रतीतिसाधारणाक्षराधिगमं प्रति करणत्वबोधने स ब्रह्मविद्यात्ववर्णने फलाभावात् । तथा सति भ्रमरूपतदधिगमकरणत्वरूपपुरस्कारेणापि वेदानां ब्रह्मविद्यात्वप्रसङ्गात् ।

न च मोक्षरूपकरणसमीचीनाक्षराधिगमहेतुत्वस्यासम्भवात् । तत्पुरस्कारेणैव वेदानां परविद्यात्वमत्रोच्यते इति वाच्यम् । अपरोक्षज्ञानं विना तादृशपरोक्षज्ञानेन मोक्षाभावेन तथापि त्वदुक्तरूपाभावेन वेदानां परविद्यात्वाभावप्रसङ्गतादवस्थ्यात् । तादृशपरोक्षज्ञानमपि मोक्षसाधनपरमप्रसादहेतुपरम् । तत् किं कारणसाक्षात्कारणहेतुनिदिध्यासनोपयोगीति चेत्, तथाऽपि परोक्षसम्यज्ज्ञानस्य वेदजन्यस्य साक्षान्मोक्षहेतुत्वासमर्थनात् । परम्परया मोक्षोपयोगिज्ञानहेतुत्वस्य वेदेष्वेव परार्थानुमानरूपेपु सूत्रेष्वपि सत्वेन वेदानामिव सूत्राणामपि परविद्यात्वसत्वात् ।

न च सूत्राणां वेदापेक्षयाऽनेकव्यवधानेन मोक्षसाधनज्ञानोपयोगित्वात् । न वेदवत् परविद्यात्वावश्यम्भावेन सम्भवतीति वाच्यम् । मोक्षसाधनपरोक्षज्ञाने जनयितव्ये यादृशोऽक्षरनिर्णयोऽपेक्षितः तदुपयोगिज्ञानकत्वाविशेपे वेदानामिव सूत्राणामपि परविद्यात्वावश्यम्भावेन वेदापेक्षयाऽनेकव्यवधानस्य तदविघटकत्वात् । अन्यथा लाघवाद्व्यवधानमात्रस्य तद्विघटकत्व-प्रसङ्गात् । एवं च वेदा अपि परविद्या न स्यात् ।

न चैवं सूत्रवद्भाष्यविद्यानामपि परविद्यात्वप्रसङ्गः । यथा कथञ्चित् तेपामपि परम्परया तदुपयोगिज्ञानजन्यत्वसत्वादिति वाच्यम् । सूत्रवद्भाष्यादीनां विद्यात्वाभावेनोक्तातिप्रसङ्गा-नवकाशात् । 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः'[१८५] इति स्मृत्या वेदवन्मीमांसा-सूत्राणामपि विद्यात्ववर्णनात् ।

न चैवं जैमिनिसूत्राणामपि तत्र विद्यात्ववर्णनेन ब्रह्ममीमांसासूत्राणामिव मीमांसा-

१८४ आथर्वणोपनिपत् (१/५)

१८५ महावारते (१२/१२२-३१; विप्णुपुराणेपि (३/६/२८)

सूत्रत्वाविशेषात् परविद्यात्वप्रसङ्ग इति वाच्यम् । तेषां कर्माधिगमहेतुत्वेन अक्षराधिगमहेतुत्वाभावेन 'यया तदक्षरमधिगम्यते'[१८६] इति श्रुत्या विद्यात्वे सत्यक्षराधिगमसाधनत्वम् । यत् तत्पुरस्कारेणैव परविद्यात्ववर्णनेन तेषां तदभावादेव परविद्यात्वाभावसिद्धेः । अत एव 'द्वे विद्ये वेदितव्ये'[१८७] इति प्रमाणसिद्धत्वमनूद्य तादृशी विद्या यद्यक्षराधिगमसाधनं तदेव 'यया तदक्षरमधिगम्यते सा परा'[१८८] इति विद्यात्वे सति अक्षराधिगमसाधनत्वमेव परविद्यात्वे प्रयोजकमुच्यते ।

तथा च तद्ब्रह्मसूत्राणामपि वेदवत् साक्षादक्षराधिगमं प्रति हेतुत्वादुक्तरीत्यादिविद्यात्वरूपपरविद्यात्वे प्रयोजकत्वसत्वात् परविद्यात्वं दुर्निवारमिति तेषामाद्यन्तयोरोङ्कारोच्चारणकर्तव्यतासिद्धिरविकला । एवमाद्यसूत्रे अदृष्टार्थं तदुच्चारणान्यावश्यकत्वे सूत्राणां वेदप्रवचनरूपत्वेन 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'[१८९] इति श्रुत्या 'तस्मान्माङ्गलिकावुभौ'[१९०] इति स्मृत्या अथशब्दादपि प्राथमिकत्वेन मुख्यमङ्गलत्वसिद्ध्या च सूत्रादौ ओमित्युच्चारणस्यावश्यकत्वे तस्योक्तरीत्या अदृष्टार्थस्यापि संसर्गप्रतियोग्युपस्थापकतया दृष्टार्थत्वेन तस्य जिज्ञासासूत्रावयववत्वमकामेनापि स्वीकार्यम् ।

न चैवं 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि' इति भाष्योदाहृतानेकस्मृतिविरोधः । तत्र तयोरेवोपक्रमात् । मध्ये द्वयोरेव परामर्शात् । 'सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जते'[१९१] इति सावधारणं तयोरेवोपसंहाराच्चेति वाच्यम् । उपक्रमपरामर्शाभ्यां तयोः सूत्रावयवत्वं सिद्ध्यति । न त्वोङ्कारस्य तदभावः । तत्प्रति तयोरुदासीनत्वात् । ओङ्कारस्योक्तरीत्या सूत्रावयवत्वं निश्चिन्वता अथातःशब्दयोरेव तदवयवत्वमनिश्चिन्वताऽपि तथा प्रश्नसम्भवेन प्रतिवचनस्यापि प्रश्नानुसारितया प्रतत्यौ इत्यनेन तयोरपि ओङ्कारावयवत्वव्यवच्छेदकत्वाभावात् । 'तावेवादौ

---

१८६ आथर्वणोपनिषत् (१/५)

१८७ आथर्वणोपनिषत् (१/४)

१८८ आथर्वणोपनिषत् (१/५)

१८९ तैत्तिरीयोपनिषत् (१/१९)

१९० ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ - बृहन्नारदीयपुराणवचनम् (५१/१०)

१९१ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

प्रयुञ्जते'[१०२] इति सावधारणोपसंहारस्यापि अथातःशब्दयोरुभयोरपि वाचः क्रमभावित्वेन मुख्योदित्वासम्भवेन विरुद्धार्थतया अनिर्धारितार्थस्य चोङ्कारावयवत्वव्यवच्छेदकत्वाभावात् ।

'सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिःसृतौ ।
ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात् ।
तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ।'

[१०३]इति ओङ्काराथशब्दयोर्मुख्यामुख्यप्रथमत्वमुक्त्वा अतःशब्दस्य ओङ्कारापेक्षया अथशब्दस्य मुख्यद्वितीयत्वमुक्त्वा तदेव प्रयोजनकृत्यं 'अतश्च पूर्वमुच्चार्याः सर्वे एते सतां मताः'[१०४] इति तथैव पूर्वमुच्चार्यत्वविधानेन ओङ्कारस्य अथातःशब्दापेक्षया सूत्राद्यवयवत्वं निश्चिन्वत एवायं प्रश्न इति निश्चयसत्वेनोपसंहारगतावधारणस्य 'तावेवादौ प्रयुञ्जते'[१०५] इति भिन्नक्रमस्याश्रयणीयत्वात् । विरोधाधिकरणन्यायेनोदाहृतश्रुतिविरोधेन भाष्योदाहृतस्मृतेः यथाश्रुतार्थपरत्वस्य त्यक्ततया जीवधारणस्य भिन्नक्रमत्वावश्यम्भावाच्च । 'स्रवत्यनोङ्कृतं ब्रह्म'[१०६], 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'[१०७] इति श्रुत्या सूत्रादौ ओङ्कारस्योच्चारणे प्रमाणाभावस्य समर्थनाच्च । अदृष्टार्थस्यापि तस्यान्वयप्रतियोग्युपस्थापकतया तात्पर्यविषयान्वयप्रतियोग्युपस्थापकतया सूत्रे मुख्याद्यावयवत्वस्य व्यवस्थानाच्च ।

तस्माद्विरोधाधिकरणन्यायेन भाष्योदाहृतस्मृतिर्न यथाश्रुतार्थपरेति क्व तद्विरोधावकाश इति विद्मः । तदेतत्सर्वमभिप्रेत्योक्तं सुधाकारैः[१०८] - 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च

---

१०२ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१०३ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१०४ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१०५ ब्रह्मसूत्रभाष्योदाहृत(१/१/१)गारुडवचनम् ।

१०६ गीतातात्पर्योदाहृत(१७/२७)श्रुतिः

१०७ तैत्तिरीयोपनिषत् (१/१०)

१०८ नन्वत्रानुव्याख्याने 'तत्र ताराथमूलत्व'मित्योङ्कारस्य सूत्रादित्वमुक्त्वा 'ओतत्वाच्ची ह्योङ्कार' इति स व्याख्यातः । सुधायां च 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत' इति श्रुतिवलात्प्रतिसूत्रं ब्रह्मविद्यात्वादाद्यन्तयोरोङ्कारस्योहः कार्यः । न चोह्यमानं वाक्यात्पृथक् । मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्वप्रसङ्गात् । ओङ्कारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेनावयवत्वनिश्चयाच्च । असंहिततया निर्देशस्तु सर्वसूत्रेष्वनुगति-

विशीर्यते' इति श्रुतिवलात् । प्रतिसूत्र ब्रह्मविद्यात्वादाद्यन्तयोरोङ्कारस्योहः कार्यः । न चोह्यमानं वाक्यात् पृथङ्मन्त्रेष्वपि ऊह्यमानस्य तदवयवत्वप्रसङ्गात् । ओङ्कारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेनावयवत्वनिश्चयात् । असंहिततया निर्देशस्तु सर्वसूत्रेष्वनुगतिसूचनार्थ इति । अत्रोहशब्देन मन्त्राणामसंस्कारोह इत्यादाविव कर्मव्युत्पत्तौ न विकारपरः येनोक्तरीत्या दोषावकाशः स्यात् । किन्तु 'अध्याहारस्तर्क ऊहः'[१९९] इति प्रसिद्धे भावव्युत्पत्त्याऽध्याहारपरः । तत एव टीकायां नवमे ऊहो नाम तर्कणा । सा चैकरूपमन्त्रसामसंस्कारेषु क्रियमाणेत्यादिना तर्क एव मुख्य ऊहः । तद्विषयत्वान्मन्त्रादेरन्यथात्वमप्यूह इत्युक्तम् । न चाध्याहारे मानाभावः । तत्र 'स्रवत्यनोङ्कृतम्' इति श्रुतिरेव मानमित्युक्तत्वात् । न चैवमध्याहृतस्य मन्त्रादिषु तदनवयवत्ववदध्याहृतस्योङ्कारस्यापि सूत्रे अनवयवत्वप्रसङ्ग इति वाच्यम् । [२००]'न माता वर्धते'[२०१] इति श्रुत्या मात्रादिशब्देषु ऊहनिषेधादध्याहृष्यमाणस्यापादित-

सूचनार्थ इत्युक्तम् । तत्कथम् ? सूर्यायेत्यूहं प्रति अग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावात् । यथोक्तम् - प्राकृतस्थानपतितपदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृत ऊह्यमानतयोदित इति ।।

- इति तात्पर्यचन्द्रिकायाम् ।

१९९ अमरकोशः

२०० मन्त्राणां प्रयोगकाले उच्चारणस्य दृष्टार्थत्वेऽपि वहुपशुकेऽदृष्टार्थत्वदर्शनाच्च । 'न माता वर्धत' इति श्रुत्या मात्रादिशब्दे ऊहनिषेधात् । अध्याह्रियमाणस्यापादित मन्त्रावयवत्वं च मन्त्रेण सहैककार्यकारित्वाभाव इति नेष्टापत्तिः । जिज्ञा सान्विततया प्रथमं प्रतीतस्यौतत्त्वस्य तत्रासम्भवेन सप्तदशारत्निर्वाजपेयस्य यूप इत्यादाविवाङ्गावतारन्यायेन तदुपसर्जनब्रह्मान्वयसम्भवाच्च । अर्थवादार्थ(स्य) प्राशस्त्यस्य यजेतेत्यत्रोपसर्जनीभूतयागविशेषणत्वदर्शनाच्च । दण्डी प्रैषानन्वाहेत्यादौ दण्डस्योपसर्जनस्य विध्यन्वयदर्शनाच्च । उक्तं च वार्तिके 'विशेषणपरत्वं च दण्डीत्यादिषु दर्शित'मिति । न च ब्रह्मशब्देनैव विषयसूचनादोङ्कारवैयर्थ्यम् । न केवलं जिज्ञास्ये तद्विजिज्ञासस्व तद्ब्रह्मेत्यादौ ब्रह्मपदाश्रवणात्तस्य जीवाद्भिन्नत्वेन जिज्ञास्यता । किन्तु 'ओमित्यक्षरमुद्गीथमुपासीतेत्यादौ जीवेष्वसम्भावितगुणपूर्तिवाचकोङ्कारादिश्रवणादपीति युक्त्यन्तरसूचकत्वात् । अदृष्टार्थमादाववश्यं प्रयोक्तव्यत्वाच्च' ।। - इति तात्पर्यचन्द्रिकायाम्

२०१ अत्र यत्कश्चिदाह । पशुगणे मात्रादिपदानामेकवचनान्तानामसमवेतार्थत्वे स्यात् तदुच्चारणमदृष्टार्थम् । नत्वेतदस्ति । तेषां पशुपरेणैनमितिशब्देन सहान्वयाभावात् । किं त्वनुमन्यतामित्यनेनान्वयः । स च तत्तत्प्रतिसम्बन्धित्वाभिप्रायेण ''ये मानवा विगतरागपरापरज्ञा नारायणं सुरगुरुं सततं स्मरन्ति । ध्यानेन तेन हतकिल्विषचेतनास्ते मातुः पयोधररसं न पुनः पिवन्ती''ति श्लोक इवैकवचनान्तत्वेऽप्यविरुद्धः । अतोऽर्थसमवायान्नतदुच्चारणमदृष्टार्थम् । ''न माता वर्धत'' इति वचनं न्यायप्राप्तानूहानुवादमात्रं न प्राप्तोहप्रतिषेधार्थम् । उक्तं च राणके ''एकमात्रादिसम्बन्धे पशुभेदेऽपि मात्रादिशब्दोहस्यानाशङ्क्यत्वात् मात्रादिभेदेप्येकपशुसम्बन्धाभावात् सम्बन्धिभेदादेव तद्भेदसिद्धेर्न्यायादेवानूहावगते''रिति । अतो वचनवलादप्यदृष्टार्थ-

मन्त्रत्वं यदि मन्त्रादिषु गतपदान्तरवत् अदृष्टसम्पादने मन्त्रशरीरप्रविष्टत्वमविवक्षितम् । तदेष्टापत्तेः । यदि च मन्त्रशरीरप्रविष्टपदान्तरवत् तात्पर्यविषयीभूतसंसर्गप्रतियोग्युपस्थापकत्वरूपं यत् तदभावरूपं तदा नेष्टापत्तिः । तस्य मयाऽनभ्युपगमात् ।

न चैवं **सन्न्यायरत्नावली**विरोधः[२०२] । तत्र "ओङ्कारस्तु पृथगुच्चरितो वेदितव्यः । न अथशब्दवत् सूत्रोपनिबद्धः" इति सूत्रात् तस्य पार्थक्यकथनादिति वाच्यम् । अध्ययनोपक्रमे उच्चरितो य ओङ्कारो दृष्टमात्रार्थः । तद्विषयतया सन्न्यायरत्नावलिवाक्यं दृष्टादृष्टोभयार्थतया तात्पर्यगोचरप्रकृतोङ्कारविषयत्वाभावेन तदविरोधोपपत्तेः । अथादिशब्दवत् संहिततया निर्देशो नास्तीत्येवमर्थप्रतिपादनपरतयाऽप्युपपत्तेश्च । अत एव सूत्रावयवतया ओङ्कारस्य निश्चितस्यानुव्याख्याने 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्'[२०३] इत्यर्थवर्णनमपि सङ्गच्छते ।

---

त्वासम्भवात् कथमयं दृष्टान्त इति । तत्र ब्रूमः । साक्षात्पशुपरेदंशब्दान्वयाभावेऽपि बहुत्वेनावगततत्कर्मिकायामनुमतिक्रियायामेकस्य मात्रादेरन्वयासम्भवात् तदन्वयघटनाय बहुवचनान्तत्वेन तेषां पदानामूहावश्यंभावात् । "मातुः पयोधररसमि"त्यादिकं तु गौणतयाप्युपपन्नम् । नेह तदाश्रयणे प्रमाणमस्ति । एवं चात्र वचनबलादेवानूहोऽङ्गीकार्यः । तस्मादेकवचनान्तानां तेषामुच्चारणं पशुगणेऽदृष्टार्थमित्यकामेनाप्याश्रयणीयमिति नादृष्टार्थानुपपत्तिरिति । राणकोक्तिस्त्वभ्युपगमवादादिना कथंचिन्नेया ।- इति तात्पर्यचन्द्रिकाप्रकाशे

२०२ यद्वा मास्तु 'स्रवत्यनोङ्कृतम्' इत्यनेन साधारणोङ्कारस्याद्यसूत्रावयवता । तथाऽपि -

'ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात् ।
तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ।
अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः ।।'

इति भाष्योदाहृतस्मृत्याऽथातःशब्दातुल्यतयाऽऽद्यसूत्रावयवतया उक्तत्वात् अनुव्याख्याने तत्र ताराथमूलत्वमित्यथशब्दतुल्यतयोङ्कारस्याद्यसूत्रावयवत्वोक्तिर्युक्ता । एवं च सन्न्यायरत्नावली स्रवतीत्यादिश्रुतिप्रपितसाधारणोङ्कारविषया, सुधा तु ओङ्कारश्चेत्यादिस्मृतिप्रापितासाधारणोङ्कारविषयेति द्रष्टव्यम् । यद्वा, सन्न्यायरत्नावल्युक्तं पृथक्त्वमूह्यमानत्वं न तु वाक्येऽनन्वय इत्यविरोध इत्यादि द्रष्टव्यम् ।

- इति तात्पर्यचन्द्रिकायाम् ।

२०३ एवं सुधोक्तमवयवत्वं समर्थ्य प्राचीनानुव्याख्यानटीकाशयमाह ।। सन्न्यायरत्नावल्यां त्विति ।। तुशब्दसूचितं सुधातो विशेषमाह ।। ओङ्कारस्त्विति ।। पृथगोङ्क्रियते इत्यस्यार्थः पृथगुच्चारितो वेदितव्य इति । ननु सूत्रानवयवत्वे ओतत्ववाची ह्योङ्कार इत्योङ्कारार्थोक्तिरसङ्गतेत्यत आह ।। तत्रेति ।। एतन्मत इत्यर्थः । वेदव्याख्येयो ह्योङ्कारः प्रसिद्धः । ओङ्कारेणैव सर्वा वाक् सन्तृण्णेत्यादेः । तस्य च योऽयं गुणौतत्वरूपोऽर्थः तस्य वाचको नारायणशब्दः । तदर्थस्य सर्ववेदार्थत्वान्नारायणस्यैव शास्त्रविषयत्वमिति भावेनेत्यर्थः ।। अन्यथेति ।। सूत्रावयवस्यैवार्थकथने । ननु तर्हि वचनद्वयस्य प्रामाण्यादेकस्यैवावयवत्वानवयवत्वे कथं

न चैवं भर्गादिपदानामपि 'स एव भर्गशब्दार्थः'[२०४] इत्यादिनाऽर्थवर्णनात् । अर्थवर्णनाविशेपात् । तेपामप्योङ्कारवत् सूत्रावयवत्वं स्यादिति शङ्क्यम् । ओङ्कारस्येव तेषां सूत्रावयवत्वे मानाभावात् । तदर्थवर्णनस्य सर्ववेदव्याख्येयोङ्कारार्थवाचकनारायणपदवाच्यस्य सर्ववेदार्थत्वात् । शास्त्रविपयत्वमित्यभिप्रायेण प्रवृत्तत्वात् । यद्यप्योङ्कारार्थवर्णनमप्येवमेवेति शक्यते वक्तुम् । तथाऽपि तस्य सूत्रावयवत्वसमर्थनात् । सूत्रार्थनिरूपणार्थत्वमपि सम्भवति । तत ओङ्कारस्य विशेपोऽस्तीति न काऽप्यनुपपत्तिः ।

एतेन जिज्ञासासूत्रे ओङ्कारस्यार्थत्वेन साक्षादेव प्रयोगेण चरितार्थत्वादन्ते च प्रयोगवैयर्थ्यम् । किञ्चोङ्कारस्योत्तरत्रानुपङ्गे अनुपक्तस्य [२०५]'ङ्याप्प्रातिपदिकात्'[२०६] इत्यादेः, ''अच्छिद्रेण पवित्रेण''इत्यादेश्च तत्र तत्रान्वयप्रदर्शनात् । प्रकृतेऽप्योङ्कारार्थस्य जन्मादिसूत्रेऽप्यन्वयो वाच्यः । स चाशक्यः इति परास्तम् । सति सम्भवे त्यागायोगात् । उक्तरीत्या ओङ्कारार्थनिरूपितसंसर्गस्य सूत्रे तात्पर्याविपयत्वम्भावाच्च । प्रथमसूत्रादौ दृष्टादृष्टोभयार्थत्वसम्भवात् । उत्तरत्रोभयार्थत्वे मानाभावेन केवलादृष्टार्थत्वस्यैव तत्रोपगमात् । सहचारदर्शनमात्रस्य किञ्चित्करत्वे नोत्तरत्रोङ्कारार्थस्यानुक्तावप्यक्षतेश्च । तत्रोच्चारणस्य 'स्रवत्यनोङ्कृतं ब्रह्म' इति श्रुतिप्रापितत्वेन केवलादृष्टार्थतयैव करणसम्भवाच्चेति न किञ्चिदनुपपन्नम् ।

---

स्याताम् । न च व्रीहियववद्विकल्पः । वस्तुनि विकल्पायोगात् । न च ''विप्रतिपेधे परं'' इति परस्य प्रावल्यम् । पूर्वस्यापि नुटो नुमचिरतृज्वद्भावेभ्यः प्रावल्यदर्शनादित्याशङ्क्य भिन्नविपयतया न विरोध इत्याह ।। यद्वेति ।। अयमर्थः । यथा ह्यष्टाक्षरादावेक ओङ्कारस्तदवयवः अन्यौ च द्वावदृष्टार्थौ एवमाद्यसूत्रेप्येकस्तदवयवः अन्यौ चाद्यन्तयोरदृष्टार्थाविति त्रय ओङ्काराः । तत्राद्यस्यादृष्टार्थस्य तदनवयवत्वं अन्यस्य त्वोतत्वरूपार्थाववोधनेन तदवयवत्वमिति । अत्रादृष्टार्थकोङ्कारसत्त्वे मानमाह ।। स्रवतीति ।। दृष्टार्थकतत्सत्त्वे मानमाह ।। ओङ्कारश्चेति ।। ननु श्रुतिप्रापितोङ्कारस्य स्मृतिविपयत्वसम्भवान्नोङ्कारद्वयं कल्प्यमिति भावेनैकविपयत्वेऽप्यविरोधमाह ।। यद्वेति ।। पृथगुच्चारितो वेदितव्य इत्यस्य सर्वसूत्रेपूहनीयः नत्वेतत्सूत्रमात्रसम्बद्ध इत्यर्थः । नत्वेतत्सूत्रेऽन्वयप्रतियोगिसमर्पको नेत्यर्थः । एवं चानुव्याख्याने ओतत्वरूपार्थोक्तिरपि सङ्गच्छत इति भावः । - इति तात्पर्यचन्द्रिकाप्रकाशे

२०४ इत्यनुव्याख्याने (१/१/१०)

२०५ पा. सू. (४.१.१)

२०६ ङ्याप्प्रातिपदिकादित्यादेरिति ।। व्याकरणे तुर्याध्याये ''स्वौजसमौट्छष्टाभ्यांभिसि''त्याद्युत्तरसूत्रेऽनुवृत्तस्य ङ्याप्प्रातिपदिकादित्यस्य ङ्यंतादावन्तात्प्रातिपदिकाच्च स्वादयः प्रत्यया भवन्तीत्यर्थो यथा दृश्यत इत्यर्थः ।। - इति तात्पर्यचन्द्रिकाप्रकाशे

यद्यप्यध्ययनोपक्रमादावुच्चार्यमाणस्याप्योङ्कारस्य तदवयवत्वं सुधायामेवोक्तम् । तथाऽपि तदुच्चारणस्यार्थानुसन्धानद्वारैवाङ्गत्वमभिप्रेत्येति न तद्विरोध इति सर्वमवदातम् ।

नन्वोङ्कारस्य 'अव रक्षण'धातुनिष्पन्नत्वपक्षे उक्तरीत्या सूत्रार्थे समन्वयसत्वेन तस्य सूत्रावयत्वसम्भवेऽपि गुणोतत्ववाचित्वपक्षे ब्रह्मशब्दपर्यायतया तदर्थस्य वाक्यार्थे समन्वयाभावेन सूत्रावयवत्वमसम्भवि । तथाहि – न तावदर्थस्य गुणोतत्वस्य जिज्ञासोपसर्जनब्रह्मशब्दार्थे नाभेदान्वयो युज्यते । ओङ्कारस्य गुणोतत्ववाचित्वे गुणोतत्वं ब्रह्मेत्यभेदान्वयानुपपत्तेः । गुणोतत्वस्य ब्रह्मधर्मत्वेनैव अनुभवात् । नापि 'स्वर्गकामो यजेत' इत्यादौ यागेष्टसाधनत्वस्यैव ब्रह्मणि गुणोतत्वस्याधेयतयैवान्वयः । ब्रह्मसूत्रार्थस्य जिज्ञासावरुद्धतया निराकाङ्क्षत्वात् । न ह्यन्यान्विततया निराकाङ्क्षमन्येन पदार्थेन अन्वयमर्हति । न च जिज्ञासायां पूर्णगुणत्वरूपोङ्कारार्थभूतोतत्वस्य तथाऽन्वयः सम्भवति । तस्य ब्रह्ममात्रधर्मत्वेन तत्र बाधात् ।

किञ्चोङ्कारस्य गुणतार्थकत्वेऽपि ओंब्रह्मशब्दार्थयोरन्वयो न सम्भवति । गुणपूर्णत्वकस्यैव ओंब्रह्मशब्दनिमित्तत्वे तु भिन्नरूपेणोपस्थित्यभावात् । न हि "घटः करीरः" इत्यन्वयः सम्भवति । यद्यपि घटाभावे घटो नास्तीत्यादौ प्रमेयत्वे प्रमेयत्वमित्यादौ चान्वयतावच्छेदकवृत्तिनिमित्ताभेदाभावेऽन्वयो दृश्यते । तथाऽप्यभेदान्वयः प्रवृत्तिनिमित्तभेदाभावे पदाभ्यामेकेनैव प्रकारेण पदार्थोपस्थित्याकाङ्क्षाविरहादसम्भवि । न हि घटः करीर इत्यन्वयः सम्भवति । आकाशशब्दाश्रय इत्यादावप्याकाशशब्देन अष्टद्रव्यातिरिक्तद्रव्यत्वेनाकाशपदार्थस्य उपस्थितेरभेदान्वयप्रयोजकाकाङ्क्षासम्पत्तिरविकलेति । पिकः कोकिल इत्यादावपि प्रसिद्धपदसामानाधिकरण्यात् । वाच्यत्वमेव विधेयमिति तत्रापि प्रवृत्तिनिवृत्तिभेदोऽस्त्येवेति न व्यभिचारः।

न च परिच्छेदसामान्याभावो ब्रह्मशब्दनिमित्तम् । देशतः कालतः गुणतश्च परिच्छेदाभाव इत्यभावत्रय इत्योङ्कारप्रवृत्तिनिवृत्तिरिति वाच्यम् । लाघवाद्विनिगमनविरहाच्च उभयत्राप्येकस्य परिच्छेदसामान्याभावस्यैव प्रवृत्तिनिमित्तत्वात्। 'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः'[२०७] इत्यादिनोङ्कारस्य ब्रह्मशब्दपर्यायत्वाच्चेति चेत्, उच्यते । पाणिपादं चलतीत्यत्रैव परम्परासम्बन्धेन जिज्ञासायामेव गुणोतत्वाभ्युपगमात् । साक्षात्सम्बन्धेन लोहितत्वोष्णत्वशीतत्वबाधे परम्परासम्बन्धेन लोहितः स्फटिकः उष्णं जलम्, शीतो वायुरित्यादिवाक्यार्थाभावात् । साक्षादोङ्कारार्थभूतगुणोतत्वबाधेऽपि परम्परासम्बन्धेन जिज्ञासायां तदन्वयः स्यादेव । तेन ब्रह्मजिज्ञासा ओतेतिव्याक्यार्थः पर्यवस्यति । न चात्र नैराकाङ्क्षम् । जिज्ञासायां प्राधान्येन उपस्थिततया

२०७ गीतासु (१७/२३)

समानाधिकरणपदान्तरार्थाकाङ्क्षाया अविकलत्वादिति सम्प्रदायः ।

**अस्मद्गुरुचरणास्तु** - 'उपसर्जने प्रकृते ब्रह्मपदार्थे नान्वेतीति मतं न क्वापीति वा । आद्ये ब्रह्मणः गुणोतत्वं नास्तीति चाविद्यमानमपिशब्देन बोधयितुं न शक्यते । नैराकाङ्क्षादिति वा । नाद्यः । बाधात् । 'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः । अथ कस्मादुच्यते परं ब्रह्म' इति श्रुत्या ब्रह्मणः गुणपूर्णत्वस्य प्रमितत्वात् । द्वितीये त्विष्टापत्तिः । जिज्ञासायामेव तदन्वयाङ्गीकारात् । यद्यपि तत्र तदन्वयो बाधितः । तथाऽपिशब्दतः उपसर्जने ब्रह्मणि नाबाधित एव । तथा च स्वाश्रयोपसर्जकत्वरूपसम्बन्धेन जिज्ञासायामेवोतत्वस्य बोधनसम्भवात् । न कोऽपि दोषः । यजेतेत्यादौ भावनाविशेषभूतयोगे अर्थवादार्पितप्रशस्तस्य दण्डी प्रैषानन्वाहेत्यादौ[२०८] पुरुषोपसर्जनदण्डे अनुवचनाङ्गत्वस्य अन्वयात्' - इति **चन्द्रिकायां** वर्णयाम्बभूवुः ।

ननु जिज्ञासान्विततया प्रथमं प्रतीतस्योतत्वस्य तत्रासम्भवेन सप्तदशारत्निर्वाजपेयस्य रूप इत्यादाविवाङ्गावतारन्यायेन तदुपसर्जनब्रह्मान्वयसम्भवाचेति चन्द्रिकायामुक्तत्वात् । कथमोतत्वस्योक्तरीत्या जिज्ञासायामन्वयोऽभ्युपगमे तद्विरोधो न स्यादिति चेन्न । औत्सर्गिक प्रधानान्वयबलप्रसक्तजिज्ञासारूपप्रधानान्वयबाधबुद्धेरवश्यापेक्षणीयतया विशेष्यबाधपुरःसरोपसर्जनान्वयत्वमात्रेण साधर्म्यवत्वादङ्गावतारन्यायेनेत्युक्तिसम्भवेन तदविरोधः ।

**गुरुचरणै**रप्येतदेवाभिप्रेत्य प्रकृतेऽङ्गावतारन्यायोपन्यासात् । अन्यथा प्रकृतेऽङ्गावतारन्यायस्यैवानवतारात् । तद्दृष्टान्तेनान्वयोपपादनमसङ्गतमेव स्यात् । तत्र हि -

'आनन्तर्यं प्रधानं स्यात् तथा प्रसरणाद्भृतेः ।
वाजपेयेन सम्बन्धः साक्षान्न पशुना सह ।।' इत्युक्तत्वात् ।

श्रुतौ वाजपेयस्येति षष्ठी साक्षात्सम्बन्धवाचिनी । एवं च यागविशेषे वाजपेये

---

२०८ दण्डी प्रैषानिति ।। मैत्रावरुणो दण्डी भूत्वामन्त्रविशेषाननुवदेदित्यर्थः । अत्र दण्डमैत्रावरुणसम्बन्धस्य प्रैषानुवदनसम्बन्धस्य च प्रतीयमानस्य ''क्रीते सोमे मैत्रावरुणाय दण्डं प्रायच्छति मैत्रावरुणः प्रेष्यति चानुचाहे''ति वाक्याभ्यां प्राप्तत्वेनाविधेयत्वात् स्थित्वोचैर्गनवानं प्रैषानुवचनं कुर्वतो मैत्रावरुणस्यावलंबनापेक्षायां मैत्रावरुणार्थत्वेनावगतस्य दण्डस्य तदुपकारद्वाराऽपेक्षायाः सत्वाच ''लोहितोष्णीषा ऋत्विजः प्रचरन्ती''त्यत्रेव प्रकृत्यर्थत्वेनोपसर्जनीभूते दण्डे प्रैषानुवचनसम्बन्धित्वेन विध्यन्वयदर्शनाचेत्यर्थः । विशेषणपरत्वं विधेरिति शेषः ।। - इति तात्पर्यचन्द्रिकाप्रकाशे ।

पशुप्रयुक्तयूपस्य पश्वभावेन वाधितत्वात् । षोडशस्याश्वोध्वगात्रे [२०९]सप्तदशारत्नीत्वसम्भवात् । त्रयीपदस्यागत्यालक्षणेति पूर्वपक्षयित्वाऽऽनर्थक्यात् तदङ्गेष्विति सूत्रे साक्षात्परम्परासाधारणसम्वन्धवाचिनी षष्ठी । अन्यथा चैत्रस्य सप्तेत्यादौ षष्ठ्यभावप्रसङ्गात् ।।[२१०] ..............

## ।। इति श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः [२११]ओङ्कारवादार्थः ।।

।। श्रीकृष्णार्पणमस्तु ।।

.....

२०९. तृतीये ''आनर्थक्यात् तदङ्गे''ष्वित्याद्यपादीयाष्टमाधिकरणे ''सप्तदशारत्निर्वाजपेयस्य यूप'' इत्यत्रारत्निसाप्तदश्यं किमूर्ध्वपात्रद्वारा वाजपेयाङ्गमुत यूपद्वारा पशुयागाङ्गमिति संशये अव्यवधानात् प्रधानत्वात् प्रकरणानुग्रहाच्च वाजपेयस्याङ्गम् । परिमाणस्य साक्षात्कर्मण्यनन्वयेऽपि तत्साधनीभूतोर्ध्वपात्रद्वारा तन्निर्वाहः । यूपशब्दोऽपि सादृश्यादूर्ध्वपात्रमात्रपर इति प्राप्ते देवदत्तस्य नप्तेतिवत् परंपरासम्बन्धेऽपि षष्ठ्युपपत्त्या वाजपेयशब्देन पशुयागलक्षणानाश्रयणेऽपि ''वाजपेयस्य यूप'' इति व्यपदेशसम्भवात् श्रुतिसम्भवे यूपशब्दे ऊर्ध्वपात्रमात्रलक्षणाया अन्याय्यत्वाच्च श्रुत्यनुग्रहायाव्यवहितसम्वन्धादित्रयमनादृत्य यूपद्वारा पश्वङ्गत्वमेवाङ्गीकर्तुं युक्तमिति सिद्धान्तितम् । अत्र यथाऽरत्निसाप्तदश्यस्य प्रधानभूतवाजपेयाङ्गत्वेन प्रतीयमानस्यापि तत्रान्वयासम्भवात् तदुपसर्जनीभूते पशुयागेऽन्वयः । एवमोतत्वस्यापि जिज्ञासाविशेषणतया प्रतीतस्यापि तत्रान्वयायोगेन तदुपसर्जनब्रह्मान्वय इत्यर्थः । - इति तात्पर्यचन्द्रिकाप्रकाशे ।

२१० अवशिष्टभागो नोपलब्धः ।

२११ इत्योङ्कारसुवादार्थः विजयीन्द्रार्यनिर्मितः ।
सम्पादितो मया ह्यत्र राघवेन्द्रप्रसादतः ।।
सुवुधेन्द्रसुतीर्थानामाज्ञयाऽनुग्रहेण च ।
मध्वमाधवसम्प्रीत्यै प्रभञ्जनसुनामिना ।।
समर्पितो मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ।।

श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः

# भूगोळसङ्ग्रहः

सम्पादकः

डा. व्यासनकेरे प्रभञ्जनाचार्यः

पशुप्रयुक्तयूपस्य पश्वभावेन बाधितत्वात् । षोडशस्याश्वोध्वगात्रे [२०९]सप्तदशारत्नीत्वसम्भवात् । त्रयीपदस्यागत्यालक्षणेति पूर्वपक्षयित्वाऽऽनर्थक्यात् तदङ्गेष्विति सूत्रे साक्षात्परम्परासाधारणसम्बन्धवाचिनी षष्ठी । अन्यथा चैत्रस्य सप्तेत्यादौ षष्ठ्यभावप्रसङ्गात् ।।[२१०] ..............

## ।। इति श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः [२११]ओङ्कारवादार्थः ।।

।। श्रीकृष्णार्पणमस्तु ।।

.....

---

२०९ तृतीये ''आनर्थक्यात् तदङ्गे''ष्वित्याद्यपादीयाष्टमाधिकरणे ''सप्तदशारत्निर्वाजपेयस्य यूप'' इत्यत्रारत्निसाप्तदश्यं किमूर्ध्वपात्रद्वारा वाजपेयाङ्गमुत यूपद्वारा पशुयागाङ्गमिति संशये अव्यवधानात् प्रधानत्वात् प्रकरणानुग्रहाच्च वाजपेयस्याङ्गम् । परिमाणस्य साक्षात्कर्मण्यनन्वयेऽपि तत्साधनीभूतोर्ध्वपात्रद्वारा तन्निर्वाहः । यूपशब्दोऽपि सादृश्यादूर्ध्वपात्रमात्रपर इति प्राप्ते देवदत्तस्य नप्तेतिवत् परंपरासम्बन्धेऽपि षष्ठ्युपपत्त्या वाजपेयशब्देन पशुयागलक्षणानाश्रयणेऽपि ''वाजपेयस्य यूप'' इति व्यपदेशसम्भवात् श्रुतिसम्भवे यूपशब्दे ऊर्ध्वपात्रमात्रलक्षणाया अन्याय्यत्वाच्च श्रुत्यनुग्रहायाव्यवहितसम्बन्धादित्रयमनादृत्य यूपद्वारा पश्वङ्गत्वमेवाङ्गीकर्तुं युक्तमिति सिद्धान्तितम् । अत्र यथाऽरत्निसाप्तदश्यस्य प्रधानभूतवाजपेयाङ्गत्वेन प्रतीयमानस्यापि तत्रान्वयासम्भवात् तदुपसर्जनीभूते पशुयागेऽन्वयः । एवमोतत्वस्यापि जिज्ञासाविशेषणतया प्रतीतस्यापि तत्रान्वयायोगेन तदुपसर्जनब्रह्मान्वय इत्यर्थः । - इति तात्पर्यचन्द्रिकाप्रकाशे ।

२१० अवशिष्टभागो नोपलब्धः ।

२११ इत्योङ्कारसुवादार्थः विजयीन्द्रार्यनिर्मितः ।
सम्पादितो मया ह्यत्र राघवेन्द्रप्रसादतः ।।
सुबुधेन्द्रसुतीर्थानामाज्ञयाऽनुग्रहेण च ।
मध्वमाधवसम्प्रीत्यै प्रभञ्जनसुनामिना ।।
समर्पितो मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ।।

श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः

# भूगोळसङ्ग्रहः

सम्पादकः

डा. व्यासनकेरे प्रभञ्जनाचार्यः

॥ श्रीः ॥

## श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः

# भूगोळसङ्ग्रहः[1]

.................................

.................................

भूमण्डलप्रमाणं तु सम्यगुक्तं मयाऽनघ ।
भूमेरुपरि लोकानां परिमाणमथोच्यते ॥ १ ॥

भूमेरुपरि येशेन्तु(देशे तु?) शतयोजनसम्मिते ।
मेघानां मण्डलं प्रोक्तं तदधस्तात् तु पक्षिणः ॥ २ ॥

हंसश्येनसुपर्णाद्याः सञ्चरन्ति स्वयोग्यतः ।
आमेघमण्डलाद्वायुसञ्चारो नोत्तरत्र हि ॥ ३ ॥

मेघादुपरि भागे तु दशसाहस्रयोजनात् ।
सिद्धचारणगन्धर्वपूर्वाणां सदनं स्मृतम् ॥ ४ ॥

भूमेर्नवतिसाहस्रयोजनं शन्दु(चेन्दु?)मण्डलम् ।
भूमेर्योजनलक्षे तु सूर्यमण्डलमुच्यते ॥ ५ ॥

आरभ्य भूमेर्लक्षं तु भुवर्लोक इतीर्यते ।
सूर्यमण्डलतो लक्षाचन्द्रमण्डलमुच्यते ॥ ६ ॥

---

१ पत्रद्वयात्मकोऽयमध्यायद्वयात्मको ग्रंथः। प्रथमपत्रं नोपलब्धम् ॥

।। श्रीः ।।

## श्रीविजयीन्द्रतीर्थश्रीचरणविरचितः

# भूगोळसङ्ग्रहः[1]

....................................

....................................

भूमण्डलप्रमाणं तु सम्यगुक्तं मयाऽनघ ।
भूमेरुपरि लोकानां परिमाणमथोच्यते ।। १ ।।

भूमेरुपरि येशेन्तु(देशे तु?) शतयोजनसम्मिते ।
मेघानां मण्डलं प्रोक्तं तदधस्तात् तु पक्षिणः ।। २ ।।

हंसश्येनसुपर्णाद्याः सञ्चरन्ति स्वयोग्यतः ।
आमेघमण्डलाद्वायुसञ्चारो नोत्तरत्र हि ।। ३ ।।

मेघादुपरि भागे तु दशसाहस्रयोजनात् ।
सिद्धचारणगन्धर्वपूर्वाणां सदनं स्मृतम् ।। ४ ।।

भूमेर्नवतिसाहस्रयोजनं शन्दु(चेन्दु?)मण्डलम् ।
भूमेर्योजनलक्षे तु सूर्यमण्डलमुच्यते ।। ५ ।।

आरभ्य भूमेर्लक्षं तु भुवर्लोक इतीर्यते ।
सूर्यमण्डलतो लक्षाचन्द्रमण्डलमुच्यते ।। ६ ।।

---

१ पत्रद्वयात्मकोऽयमध्यायद्वयात्मको ग्रंथः। प्रथमपत्रं नोपलब्धम् ।।

ततस्तु लक्षतस्तूर्ध्वं स्मृतं नक्षत्रमण्डलम् ।
नक्षत्रान्नवलक्षे तु मङ्गलस्यापि मण्डलम् ॥ ७ ॥

नक्षत्राच्च द्विलक्षे तु बुधमण्डलमीर्यते ।
तदेकादशलक्षे तु गुरोर्मण्डलमिष्यते ॥ ८ ॥

ततो द्विलक्षदेशे तु स्मृतं शुक्रस्य मण्डलम् ।
ततस्त्रयोदशे लक्षे शनिमण्डलमुच्यते ॥ ९ ॥

चतुर्विंशतिलक्षे तु भूमेः सप्तर्षिमण्डलम् ।
ध्रुवस्य मण्डलं सप्तत्रिंशल्लक्षं तु भूमितः ॥ १० ॥

ततस्त्रयोदशे लक्षे उपस्वर्ग इतीर्यते ।
अर्धकोट्युच्छ्रितो देशो मुख्यस्वर्ग इतीर्यते ॥ ११ ॥

पञ्चसप्ततिलक्षे च महर्लोक इतीर्यते ।
सार्धद्वादशलक्षे तु कोटियोजनको जनः ॥ १२ ॥

सार्धकोटिस्तपोलोकस्तथाऽष्टादशलक्षकैः ।
पुनः पादोनलक्षेण संयुक्तः परिकीर्तितः ॥ १३ ॥

सत्याख्यो ब्रह्मणो लोकः चतुष्कोटिप्रकीर्तितः ।
पञ्चविंशत्सहस्रेतषड्लक्षोऽपि प्रकीर्तितः ।
सार्धद्वादशलक्षैश्च वैकुण्ठश्चाष्टकोटिभिः ॥ १४ ॥

अथ दलपरिमाणम् –

स्वर्गलोकदलं पञ्चाशत्साहस्रं प्रकीर्तितम् ।
महर्दलं चैककोटिपञ्चविंशतिलक्षवत् ॥ १ ॥

जनलोकदलं सार्धकोटिकोट्यर्ध उन्नतम् ।
तपोलोकदलं सार्धकोटिकोट्यर्ध उन्नतम् ॥ २ ॥

सत्यलोकदलं चापि कोटिकोट्यर्ध उन्नतम् ।
दलं वैकुण्ठलोकस्य द्विकोटि परिकीर्तितम् ।
अर्धलक्षोनकोटीतं पुनश्च परिकीर्तितम् ।। ३ ।।

भूगोलस्य तु विस्तारो विदुषा परमेण तु ।
विजयीन्द्राख्ययतिना निर्मितो रामतुष्टये ।। ४ ।।

।। इति श्रीमत्सर्वतन्त्रस्वतन्त्रव्यासतीर्थपूज्यपादशिष्येण विरचिते भूगोलसङ्ग्रहे द्वितीयोऽध्यायः ।।

## ।। इति श्रीमत्सर्वतन्त्रस्वतन्त्रव्यासतीर्थपूज्यपादशिष्येण विरचितो भूगोळसङ्ग्रहः[२] ।।

।। श्रीकृष्णार्पणमस्तु ।।

२ भूगोळसङ्ग्रहाख्यस्य विजयीन्द्रार्यसत्कृतेः ।
सम्पादनं मयाऽकारि राघवेन्द्रप्रसादतः ।।
सुधुधेन्द्रसुतीर्थानामाज्ञयाऽनुग्रहेण च ।
मध्वमाधवसम्प्रीत्यै प्रभञ्जनसुनामिना ।।
समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ।।

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्विजयीन्द्रभिक्षुविरचिता

# चक्रमीमांसा

क्रोधोदग्रैः सटाग्रैः शिथिलितविगलत्तारकाहारहारी
नक्षत्रस्वच्छमुक्तावलिवलितविधुच्छत्रसच्छायकायः ।
रक्षोवक्षोविनिर्यत्क्षतजनिघुसृणालेपजातावलेपः
सोऽव्यान्नो व्याजसिंहो मिलितजयरवो वीरशृङ्गारधारी ॥ १ ॥

यदङ्कनं द्विजातीनां श्रुतिस्मृत्यादिचोदितम् ।
अनुष्ठितं सदा सद्भिः तद्धरेरायुधं नुमः ॥ २ ॥

उर्व्यां सत्कर्णतां यान्ति यद्गुणाकर्णने रताः ।
अर्णवं गुणरत्नानां पूर्णबोधं तमाश्रये ॥ ३ ॥

मध्वशास्त्रमहाचापमनुद्धार्यमपीतरैः ।
उद्धृत्य कीर्तिं यो लेभे तं जयार्यं सदा भजे ॥ ४ ॥

रमावरास्याम्बुजराजहंसोल्लसत्कथाश्रोत्र[1]कलापदो यः ।
कुवादिराट्कुञ्जरशीर्षभेदे हरिं भजे व्यासमुनिं मुनीशम् ॥ ५ ॥

मूकोऽपि वावदूकाग्र्यो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ नत्वा गिरं भजे ॥ ६ ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
[2]तन्यते चक्रमीमांसा वैष्णवोल्लासकारिणी ॥ ७ ॥

---

१. 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः २. क्रियते

यद्यपि तप्तचक्रादिधारणं श्रुतिस्मृतीतिहासपुराणसदाचारसिद्धमिति तत्कर्तव्यतायां संशयाभावेन न विचारावसरोऽस्ति । तथापि प्रत्यक्षश्रुतीनां तत्परत्वे अन्यवाचकानां (तप्तचक्रादिधारणपर)श्रुतित्वे केषाञ्चित्तदाचारस्य सदाचारत्वे च विवादात् स्मृतिपुराणादौ विधिवन्निषेधस्यापि दर्शनाच्च संशय-सत्त्वादस्ति विचारावकाशः । तत्र तावत् तप्तचक्रादिधारणस्य प्रमाणमिदमिदञ्चेति विशिष्य निरूपयितुं धर्मप्रमाणभूतानि विद्यास्थानानि निरूप्यन्ते । तत्राष्टादशप्रकाराणि विद्यास्थानानि । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदो शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं छन्दोविवृतिः मीमांसा न्यायविस्तरो धर्मशास्त्रं पुराणमायुर्वेदो धनुर्वेदो गान्धर्वोऽर्थशास्त्रञ्चेति । तथाच स्मृतिः—

**अङ्गानि वेदश्चत्वारो मीमांसा न्यायविस्तरः ।**
**पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥**
**आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् ।**
**अर्थशास्त्रं परं तस्मात् विद्या ह्यष्टादश स्मृताः ॥ इति ॥**

तत्र वेदानां साक्षाद्धर्मप्रमिति[१]जनकत्वेन प्राधान्यम्, इतरेषां तत्सहकारित्वम्, तच्चोत्तरत्र स्पष्टी-भविष्यति । स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी, त्रयो वेदा असृज्यन्त इत्यादिश्रुतिषु त्रित्वोक्ति-रथर्ववेदस्य त्रिष्वन्तर्भावापेक्षया । तत्र च एकैकोऽप्यनेकशाखात्मकः । सहस्रं सामशाखाः एकशतं यजुश्शाखाः, चतुर्विंशतिः ऋक्शाखाः इत्यादिवचनात् । देशविशेषे पठ्यमाना एवेति नोत्सन्नाः[२] नवा नित्यानुमेयाः । अस्मदाद्यर्वाचीनाध्ययनाभावमात्रेण तासां खिलत्वव्यपदेशः । अत एव सहस्रशाखा-ध्यायिनो भट्टपादप्रभृतय इति वदन्ति । ते पुनः द्विविधाः कर्मभागाः ब्रह्मभागश्चेति । गर्भाधानादिकर्म-प्रतिपादकाः कर्मभागाः ब्रह्म तदुपासनतत्फलतदुपासकादिस्वरूपप्रतिपादकाः उपनिषदो ब्रह्मभागाः । यद्यपि कर्माण्यपि ब्रह्मोपासनानि, तत्प्रतिपादकवाक्यान्यपि ब्रह्मपराणि । तथापि तेषां तथात्वं न सार्वत्रिकमिति द्वैविध्योक्तिः । उपनिषदोऽप्यनेकप्रकाराः ऐतरेयकं तैत्तिरीयकं, छान्दोग्यं, माण्डूकं, मुण्डकं[३] बृहदारण्यकं, तलवकारं, श्वेताश्वतरं, ब्रह्मबिन्दुः, तापनीयं, मैत्रेयं, जाबालं, सौबालं, कालाग्नि-रुद्रं, कठवल्ली, कौषीतकी, अथर्वशिखा, अथर्वशिरः, महोपनिषत्, नारायणोपनिषत्, आत्मबोधो-पनिषत्, मन्त्रोपनिषत्, ब्रह्मोपनिषत्, आरण्योपनिषत्, परमहंसोपनिषत्, हंसोपनिषत्, गारुडोपनिषत्, रामोपनिषत्, गर्गोपनिषत्, शारीरोपनिषत्, शतपथब्राह्मणं ईशावास्यं षट्प्रश्नोपनिषच्चेति । एवं खिलोपनिषदोऽप्यनेकप्रकाराः । शिक्षादीनि षडपि वेदाङ्गानि । तत्र स्वरवर्णादिस्वरूपप्रतिपादिका शिक्षा । अनेकशाखाविक्षिप्तकर्मानुष्ठानोपपादकानि कल्पसूत्राणि । तानि च बहुप्रकाराणि । आश्वलायनं,

---

१. प्रतीति  २. नोच्छिन्नाः  ३. आथर्वणम्

आपस्तम्बं, बोधायनं, भारद्वाजं, वैखानसं, सत्याषाढं, औशीनसं,[1] दाक्षायणं, कात्यायनं चेति । तत्राश्वलायनं ऋक्शाखासम्बन्धि । आपस्तम्बादीनि षडपि सूत्राणि तैत्तिरीयशाखासम्बन्धीनि । दाक्षायणं सामशाखासम्बन्धि । कात्यायनं काण्वशाखासम्बन्धि । शब्दसाधुत्वप्रतिपादकं शास्त्रं व्याकरणम् । वैदिकपदव्युत्पादकं निरुक्तं, कर्मानुष्ठानोपयोगितत्तत्कालप्रतिपादकं ज्योतिःशास्त्रम् । कर्मसमवेतार्थप्रकाशकगायत्र्यादिछन्दः[2]प्रतिपादिका छन्दोविवृतिः । वेदार्थनिर्णयेतिकर्तव्यताभूत-विचारप्रतिपादकं शास्त्रं मीमांसा । सा त्रिविधा कर्ममीमांसा, दैवमीमांसा, ब्रह्ममीमांसा चेति । प्रमाणप्रतिपादकं शास्त्रं न्यायविस्तारः । वेदार्थविशदीकरणाय प्रवृत्तं धर्मशास्त्रम्, सैव स्मृतिरित्युच्यते । सा द्विविधा— प्रधानस्मृतिरुपस्मृतिश्चेति । तत्र प्रधानस्मृतिः अष्टादशप्रकारा । मानवम्, याज्ञवल्क्यम्, आत्रेयम्, दाक्षम्, कात्यायनम्, वैष्णवम्, वासिष्ठम्, हारीतम्, व्यासम्, पाराशरम्, भारद्वाजम्, काश्यपम्, गौतमम्, बार्हस्पत्यम्, सांवर्तम्, यामम्, शाङ्खम्, औशनसञ्चेति । उपस्मृतिरप्यष्टादशप्रकारा । शाता-तपम्, शाण्डिल्यम्, लिखितम्, शौनकम्, पैठीनसम्, वृद्धहारीतम्, पाराशरम्[3], वृद्धमनुः, वृद्धवासिष्ठम्, जाबालम्, आङ्गीरसम्, ज्ञानबार्हस्पत्यम्, दत्तात्रेयम्, क्रतुः, दाल्भ्यम्, प्राजापत्यम्, बोधायनम्, सनकञ्चेति ।

**मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः ।**
**यमापस्तम्बसंवर्ताः कायायनबृहस्पती ॥**

**पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।**
**शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥**

इति याज्ञवल्कीयवचनमन्योपलक्षणार्थम् । अन्यथा स्मृतिसङ्ग्रहकारैः तत्तद्वचनोदाहरणं न स्यात् । स्मृतिषु अष्टादशत्वस्य याज्ञवल्क्य एव भञ्जितत्वाच्च[4] ।

वेदोपबृंहणभूतं पुराणम् । तद् द्विविधम् । प्रधानपुराणमुपपुराणं चेति ।

प्रधानपुराणमष्टादशविधम्— १. नारदीयम्, २. वैष्णवम्, ३. भागवतम्, ४. गारुडम्, ५. पाद्मम्, ६. वाराहम्, ७. ब्रह्माण्डम्, ८. ब्रह्मवैवर्तम्, ९. मार्कण्डेयम्, १०. भविष्यम्, ११. वामनम्, १२. ब्राह्मम्, १३. मात्स्यम्, १४. कौर्मम्, १५. लैङ्गम्, १६. शैवम्, १७. स्कान्दम्, १८. आग्नेयम् चेति ॥

१. औखीयम्, २. शब्दस्वरूपप्रतिपादिका छन्दोविचितिः, ३. आपस्तम्बम्,
४. याज्ञवल्क्यस्मृतिः आचाराध्यायः उपोद्घातः ४-५.

उपपुराणं चाष्टादशप्रकारम्— १. वायव्यम्, २. भार्गवम्, ३. सौमम्, ४. ब्रह्माण्डम्, ५. कौशिकम्, ६. पाराशरम्, ७. नारदीयम्, ८. नारसिंहम् ९. कापिलम्, १०. वासिष्ठम्, ११. शिवधर्मः, १२. मारीचम्, १३. मानवम्, १४. स्कान्दम्, १५. दुर्वासम्, १६. आदित्यम्, १७. वारुणम्, १८. शाम्बरम् चेति ॥

इतिहाससदागमानां च धर्मशास्त्रेषु पुराणेषु वा अन्तर्भावान्न तेषां विद्यास्थानाद्बहिर्भावः। अत एव भारतपञ्चरात्रवचनानि तत्र तत्रार्थे प्रमाणत्वेनोदाहरन्ति वृद्धाः।

आयुर्वेदो वैद्यशास्त्रम्। शस्त्रास्त्रप्रयोगोपसंहारहेतुमन्त्रप्रयोगप्रदर्शकं शास्त्रं धनुर्वेदः। गानतद्धर्मादि-स्वरूपप्रतिपादको गान्धर्वः। अर्थार्जनोपायभूतं नीतिशास्त्रमर्थशास्त्रम्।

उदाहृतानि धर्मशास्त्राणि पुराणानि च त्रिविधानि। सात्त्विकानि राजसानि तामसानि चेति।

**वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा।**
**भारद्वाजं काश्यपं च सात्त्विका मुक्तिदायिनः ॥**

**मानवं याज्ञवल्क्यं च आत्रेयं (ह्यात्रेयं) दाक्षमेव च।**
**कात्यायनं वैष्णवं च राजसाः स्वर्गदायिनः ॥**

**बार्हस्पत्यं[1] गौतमं च सांवर्तं च यमस्मृतिः।**
**शाङ्खं चौशनसं देवि[2] तामसा निरयप्रदाः ॥**

इति वचनानुसारात्।

**वैष्णवं नारदीयं च तथा भागवतं शुभम्।**
**गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥**

**षडेतानि पुराणानि सात्त्विकानि मतानि वै।**
**ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च।**
**भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे ॥**

**मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च।**
**आग्नेयं च षडेतानि तामसानि मतानि वै ॥**

---

१. गौतमं बार्हस्पत्यं च, २. चेति.

इत्यादिवचनानुसाराच्च । तेषां तत्र तत्र परस्परविरोधे सात्त्विकोक्तमेव ग्राह्यम् । एवमष्टादशविद्या-स्थानान्यपि साक्षात्परम्परया च धर्मं प्रत्युपयुक्ततया धर्मप्रमाणानीति । तत्र श्रुत्यादिकमेव धर्म-प्रमाणतयोदाहर्तव्यमिति ।

*॥ इति विद्यास्थाननिरूपणम् ॥*

नन्वेतावता तप्तचक्रादिधारणं धर्म इत्यत्र किं प्रमाणमुपन्यस्तम् । न तावत् प्रत्यक्षम् । धर्मे तस्य प्रमाणत्वानभ्युपगमात् । अत एव नानुमानम् । नापि श्रुत्यादिकम् । तत्प्रतिपादकश्रुतेरदर्शनात् इति चेत् उच्यते—

**पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।**
**अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहंतस्तत्समाशत ॥**

इति त्रिष्वपि वेदेषु पठ्यमाना श्रुतिस्तत्र मानम् ।

अस्याः श्रुतेरयमर्थः । ब्रह्मणो वेदस्य चतुर्मुखस्य ब्राह्मणजातेरुक्तानां सर्वेषां वा पते रक्षक इति विष्णुसम्बोधनम् । प्रभुस्त्वं विश्वतो विश्वेषां गात्राणि पर्येषि व्याप्नोषि । अन्तर्यामिरूपेण वर्तसे । तादृशस्य ते तव पवित्रं सुदर्शनम् । पवित्रमिति सुदर्शनस्य संज्ञा । पुवः[1] संज्ञायाम् (पा.सू. ३-२-१८५) कर्तरि चर्षिदेवतयोरिति (पा. सू. ३-२-१८६) देवतासंज्ञायां कर्तरि करणे च त्रप्रत्यय-विधानात् । 'सुदर्शने च दर्भे च पवित्रं शणसूत्रके' इति वेदनिघण्टौ, 'सुदर्शनं सहस्रारं पवित्रं चरणं पविः' इति निरुक्ते[2], 'पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् । पर्यायवाचका ह्येते चक्रस्य परमा-त्मनः ॥' इति श्रीशास्त्रे[3] । पवित्रं चरणं नेमिररिश्चक्रं सुदर्शनम् । सहस्रारं प्राकृतघ्नं लोकद्वारं महौ-जसम् ॥ नामानि विष्णुचक्रस्य पर्यायेण निबोध मे ।' इति पाद्मे च सुदर्शनशब्दपर्यायत्वकथनाच्च । अन्वर्थसंज्ञा चेयम् । पुनाति च त्रायते चेत्यतः पवित्रमित्येकायनब्राह्मणे निरुक्तत्वात् । यद्वा पविं वज्रं त्रायते इति पवित्रम् । 'कुलिशं भिदुरं पविः' इत्यभिधानात् । तं विततं भुवनेषु विशिष्टेषु विष्णु-भक्तेषु वा व्याप्तम् । एवंविधेन अग्नितप्तेन चक्रेण अतप्ततनूः असंस्कृतशरीरः । अत्र कप्प्रत्ययाभावः समासान्तविधेरनित्यत्वात् । आमः अदग्धपापः तत् ब्रह्म नाश्नुते न प्राप्नोति । तच्छब्दस्य ब्रह्मनामत्वं च, 'तदिति वा एतस्य महतो भूतस्य नाम भवति', 'ॐ तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः'

---

१. पुवः इत्रः स्यात्, ऋषौ करणे देवतायां कर्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् । येन आज्यमुत्पूयते यच्चानामिकावेष्टनम् । देवतायां तु अग्निः पवित्रं स मा पुनातु ॥,

२. निघण्ट्वन्तरे निघण्टौ, ३. श्रीपञ्चरात्रशास्त्रे.

उपपुराणं चाष्टादशप्रकारम्— १. वायव्यम्, २. भार्गवम्, ३. सौमम्, ४. ब्रह्माण्डम्, ५. कौशिकम्, ६. पाराशरम्, ७. नारदीयम्, ८. नारसिंहम् ९. कापिलम्, १०. वासिष्ठम्, ११. शिवधर्मः, १२. मारीचम्, १३. मानवम्, १४. स्कान्दम्, १५. दुर्वासम्, १६. आदित्यम्, १७. वारुणम्, १८. शाम्बरम् चेति ॥

इतिहाससदागमानां च धर्मशास्त्रेषु पुराणेषु वा अन्तर्भावान्न तेषां विद्यास्थानाद्बहिर्भावः । अत एव भारतपञ्चरात्रवचनानि तत्र तत्रार्थे प्रमाणत्वेनोदाहरन्ति वृद्धाः ।

आयुर्वेदो वैद्यशास्त्रम् । शस्त्रास्त्रप्रयोगोपसंहारहेतुमन्त्रप्रयोगप्रदर्शकं शास्त्रं धनुर्वेदः । गानतद्धर्मादि-स्वरूपप्रतिपादको गान्धर्वः । अर्थार्जनोपायभूतं नीतिशास्त्रमर्थशास्त्रम् ।

उदाहृतानि धर्मशास्त्राणि पुराणानि च त्रिविधानि । सात्त्विकानि राजसानि तामसानि चेति ।

**वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा ।**
**भारद्वाजं काश्यपं च सात्त्विका मुक्तिदायिनः ॥**

**मानवं याज्ञवल्क्यं च आत्रेयं (ह्यात्रेयं) दाक्षमेव च ।**
**कात्यायनं वैष्णवं च राजसाः स्वर्गदायिनः ॥**

**बार्हस्पत्यं[1] गौतमं च सांवर्तं च यमस्मृतिः ।**
**शाङ्खं चौशनसं देवि[2] तामसा निरयप्रदाः ॥**

इति वचनानुसारात् ।

**वैष्णवं नारदीयं च तथा भागवतं शुभम् ।**
**गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥**

**षडेतानि पुराणानि सात्त्विकानि मतानि वै ।**
**ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।**
**भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे ॥**

**मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ।**
**आग्नेयं च षडेतानि तामसानि मतानि वै ॥**

१. गौतमं बार्हस्पत्यं च, २. चेति.

इत्यादिवचनानुसाराच्च । तेषां तत्र तत्र परस्परविरोधे सात्त्विकोक्तमेव ग्राह्यम् । एवमष्टादशविद्यास्थानान्यपि साक्षात्परम्परया च धर्मं प्रत्युपयुक्ततया धर्मप्रमाणानीति । तत्र श्रुत्यादिकमेव धर्मप्रमाणतयोदाहर्तव्यमिति ।

*॥ इति विद्यास्थाननिरूपणम् ॥*

नन्वेतावता तप्तचक्रादिधारणं धर्म इत्यत्र किं प्रमाणमुपन्यस्तम् । न तावत् प्रत्यक्षम् । धर्मे तस्य प्रमाणत्वानभ्युपगमात् । अत एव नानुमानम् । नापि श्रुत्यादिकम् । तत्प्रतिपादकश्रुतेरदर्शनात् इति चेत् उच्यते—

**पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।**
**अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहंतस्तत्समाशत ॥**

इति त्रिष्वपि वेदेषु षठ्यमाना श्रुतिस्तत्र मानम् ।

अस्याः श्रुतेरयमर्थः । ब्रह्मणो वेदस्य चतुर्मुखस्य ब्राह्मणजातेरुक्तानां सर्वेषां वा पते रक्षक इति विष्णुसम्बोधनम् । प्रभुस्त्वं विश्वतो विश्वेषां गात्राणि पर्येषि व्याप्नोषि । अन्तर्यामिरूपेण वर्तसे । तादृशस्य ते तव पवित्रं सुदर्शनम् । पवित्रमिति सुदर्शनस्य संज्ञा । पुवः[1] संज्ञायाम् (पा.सू. ३-२-१८५) कर्तरि चर्षिदेवतयोरिति (पा. सू. ३-२-१८६) देवतासंज्ञायां कर्तरि करणे च त्रप्रत्ययविधानात् । 'सुदर्शने च दर्भे च पवित्रं शणसूत्रके' इति वेदनिघण्टौ, 'सुदर्शनं सहस्रारं पवित्रं चरणं पविः' इति निरुक्ते[2], 'पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् । पर्यायवाचका ह्येते चक्रस्य परमात्मनः ॥' इति श्रीशास्त्रे[3] । पवित्रं चरणं नेमिररिश्चक्रं सुदर्शनम् । सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् ॥ नामानि विष्णुचक्रस्य पर्यायेण निबोध मे ।' इति पाद्मे च सुदर्शनशब्दपर्यायत्वकथनाच्च । अन्वर्थसंज्ञा चेयम् । पुनाति च त्रायते चेत्यतः पवित्रमित्येकायनब्राह्मणे निरुक्तत्वात् । यद्वा पविं वज्रं त्रायते इति पवित्रम् । 'कुलिशं भिदुरं पविः' इत्यभिधानात् । तं विततं भुवनेषु विशिष्टेषु विष्णुभक्तेषु वा व्याप्तम् । एवंविधेन अग्नितप्तेन चक्रेण अतप्ततनूः असंस्कृतशरीरः । अत्र कप्प्रत्ययाभावः समासान्तविधेरनित्यत्वात् । आमः अदग्धपापः तत् ब्रह्म नाश्नुते न प्राप्नोति । तच्छब्दस्य ब्रह्मनामत्वं च, 'तदिति वा एतस्य महतो भूतस्य नाम भवति', 'ॐ तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः'

---

१. पुवः इत्रः स्यात्, ऋषौ करणे देवतायां कर्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् । येन आज्यमुत्पूयते यच्चानामिकावेष्टनम् । देवतायां तु अग्निः पवित्रं स मा पुनातु ॥.

२. निघण्ड्वन्तरे निघण्टौ, ३. श्रीपञ्चरात्रशास्त्रे.

इति श्रुतिस्मृतिप्रसिद्धम् । शृतासः संस्कृतवह्नियुक्तेन सुदर्शनेन तप्ताः श्रा पाके इति धातोः । न केवलमेकवारं चक्रतप्ताः तत्समाशत किन्तु वहन्त इत् वहन्तः गोपीचन्दनादिना नित्यं वहन्तः एव । तदुक्तं पाद्मे—

**गोपीचन्दनतो नित्यं लाञ्छितो यस्य विग्रहः ।**
**शङ्खचक्रगदापद्मैः देहे तस्य सदा हरिः ॥** इति ॥

तत्रैवान्यत्र[1]

**कृष्णायुधाङ्कितं पुण्यं गोपीचन्दनमृत्स्नया ।**
**प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ॥** इति ॥

तादृशा एव तद् ब्रह्म समाशत प्राप्नुवन्निति ।

केचित्तु ब्रह्मणो ब्राह्मणस्य रक्षक इति सुदर्शनसम्बोधनम् । अमः लोपाभावस्तु छान्दसः । ते इति तृतीयार्थे षष्ठी । तच्च अतप्ततनूरित्यनेन सम्बध्यते इत्याहुः ।

तथा—

**"चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ।**
**तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥"**
**"लोकस्य द्वारमर्चिष्मत्पवित्रं ज्योतिष्मद् भ्राजमानं महस्वत् ।**
**अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु ॥"**

इति तैत्तिरीयश्रुतिरपि तत्र प्रमाणम् ।

तस्याः अयमर्थः— येन चरणेन चक्राङ्कनेन पूतः शुद्धः । अतप्ततनूरित्यनेनैकार्थ्यात् । दुष्कृतानि पापानि तरति विततं विस्तृतं पुराणं पुरातनं तत् चरणं सुदर्शनं पवित्रं पावनकरणं कर्तृ च इति योजना । चरणपवित्रशब्दयोः पर्यायत्वेऽपि तत्र अवयवार्थविशेषमादाय अपौनरुक्त्यम् । पवित्रशब्दस्य अवयवार्थः उक्तः । चरणशब्दस्तु चर्यते उत्कृष्यते सदाचारेण विषयीक्रियते इति कर्मव्युत्पत्त्या सदाचारेण सेव्यपरः । चर्यते सुगतिः साध्यतेऽनेनेति करणव्युत्पत्त्या सुगतिसाधनपरो वा । चर्यते भक्ष्यतेऽनेन पापसङ्घातः तथैव व्युत्पत्त्या पापदाहकपरो वा । एवं च अन्येषामपि स्वसम्बन्धेन पावित्र्यापादकस्य स्वतःपावित्र्यं किं वक्तव्यमिति कैमुतिकन्यायः सूचितः । एवं सर्व-

१. तथैवान्यत्र.

साधारण्येनाभिहितमर्थं स्वात्मन्याशास्ते तेनेति । शुद्धेन अस्पष्टदोषगन्धेन पवित्रेण स्वसम्बन्धिनामपि दुष्कृततरणहेतुना तेन चरणेन पूताः तदङ्कनेन संस्कृतगात्राः पाप्मानमरातिं पापरूपशत्रुं अतितरेम अतिक्रम्य वर्तामहे ।

लोकस्य जनस्य द्वारं पुरुषार्थप्राप्त्युपायभूतम्, अर्चिष्मत् ज्वालावत्, ज्योतिष्मत् किरणवत्, महस्वत् प्रकाशवत् तच्च स्वतो देदीप्यमानतया तद्धारणदशायां तप्ततया च उपपद्यते । अत एव भ्राजमानं शोभमानं अमृतस्य मोक्षस्य धाराः अनुभवविशेषान् बहुधा नानोपायैः दोहमानं स्वयमेव दुहानं चरणं कर्तृ नोऽस्मान् लोके इह परत्र च सुधितान् सुप्रतिष्ठितान् दधातु करोतु । अत्रापि मन्त्रान्तरानुगुण्यात् स्वदेहे धृतं तप्तचक्रं एवं करोतीति वाक्यार्थो लभ्यत इति । तथा च—

**"चमूषच्छ्येनः शकुनो बिभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।**
**अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥"** इति ।

ऋक्सामयोः पठ्यमाना (ऋ. मं. ९ सू. ९६ मं. १९) (साम. ११७७) श्रुतिरपि तत्र प्रमाणम् ।

अस्या अयमर्थः— गाः वागादीनि विन्दति लभत इति गोविन्दः । गवादिषु विन्देः संज्ञायाम् (वा.) इति शप्रत्ययः । यद्यपि विद्लृ लाभे इति धातोः अनिदित्वात् इदितो नुम्धातोरिति नुम् न प्राप्नोति । तथापि शे मुचादीनामिति सूत्रान्तरेण नुमत्रेति द्रष्टव्यम् । गोविन्दशब्दस्य तृज्वद्भावः छान्दसः । गोविन्दुः गोविन्दस्येत्यर्थः । तस्यायुधानि चक्रादीनि बिभ्रत् पुमान्, चमूषत् षद्लृ विशरणार्थः पापसमूहविशरणकारणीभूतः (समर्थः) श्येनः शंसनीयस्य गन्ता शंसनीयां[1] गच्छतीति निरुक्तत्वात् । शकुनः आत्मोन्नयनसमर्थः । शक्नोत्युन्नेतुमात्मानं इति निरुक्तत्वात् । बिभृत्वा स्वसम्बन्धिनामपि भरणसमर्थः । डुभृञ् धारणपोषणयोः इति धातोः । अन्येभ्योऽपि दृश्यन्ते इति क्वनिप् । किंरूपः द्रप्सः आदित्यसमः । असावादित्यो द्रप्स इति वाजसनेयके श्रवणात्, समुद्रं समुद्रिक्तम् । अपां अप्शब्देनात्र गर्भस्थापो विवक्ष्यन्ते तासामूर्मिं पुञ्जं ऊर्मिरूपं संसारमित्यर्थः । तत्र सचमानः स्वच्छन्देन सञ्चरणशीलः षच समवाये इत्यस्माद्धातोः ताच्छील्ये चानश्प्रत्ययः । महिषः[2] पूजितः अविम[3]ह्योष्टिषच् । एवं चमूषदित्यादिसप्तपदनिरुक्तगुणयुक्तः सन् तुरीयं धाम वासुदेवाख्यं तेजो विवक्ति भजते प्राप्नोतीति यावत् । एवं च संसारनिवृत्तिपूर्वकं तुरीयं धाम प्राप्तुकामो गोविन्दस्य तप्तचक्राद्यायुधानि बाहुमूलादिषु बिभृयादित्यर्थः ।

---

१. शसनीयान् शसनीयम्, नि. अ. ४-२४. २. अनुपसर्गाल्लिम्पविन्द इति सूत्रे (३-१-१३८) वार्तिकमेतत् ।
३. अविमह्योष्टिषच् उणादि प्र. पा. सूत्रं ४५.

अथ बृहदारण्यकविशेषे श्रूयते—

निचिक्षेप सुषणं भिद्यमानं
मध्येबाहुमदधत्सुदर्शनम् ।
विष्णोरिदं भूरिदं भूरितेजः प्रधर्षति
दिवानक्तं बिभृयुस्तज्जनासः ॥ इति ।

तदर्थस्तु— मध्येबाहु बाह्वोः मध्ये वक्षसीत्यर्थः । तत्रापि बाहुमध्यत्वस्य सुप्रसिद्धत्वात् । एतदर्थपरत्वेऽपि द्वयोरपि विकल्पेन समुच्चयेन वा सुदर्शनधारणस्थानत्वे विरोधाभावात् । तथैव केषाञ्चिन् महात्मनामनुष्ठानदर्शनात् । सुदर्शनं चक्रं यः अदधत् स चक्रधारी भिद्यमानमनेकप्रकारेण विभज्यमानं नानाविधमिति यावत् । भिद्यमानं जनान् भिन्दानमिव, कर्मणि प्रयोगः छान्दसः । सुषणं अन्तकरं पापमि(स्ये)ति सामर्थ्याल्लभ्यते । षोऽन्तकर्मणीत्यस्य ल्युटि रूपं, निचिक्षेप अतिशयेन निक्षिप्तवान् यतो भूरिदं बहुफलदं विष्णोरिदं विष्णुसम्बन्धि सुदर्शनं, भूरितेजः बहलं[1] वैष्णवशत्रुसामर्थ्यं प्रधर्षति परिभवति अन्तःपापं नाशयतीत्यर्थः । तस्माज्जनासो जनाः आज्जसेरसुक् इति असुगागमः । दिवानक्तं सदा बिभृयुः धारयेयुः । एवञ्च अनिष्टनिवृत्तिकामः तप्तचक्रं बाहुमूले भुजमध्ये वक्षसि वा सदा बिभृयात् इति निष्कर्षः इति ।

तथा ऋचि बाष्कलशाखायां श्रूयते—

प्रते विष्णो अब्जचक्रे पवित्रे
जन्माम्भोधिं तर्तवे चर्षणीन्द्राः ।
मूले बाह्वोः दधते पुराणा
लिङ्गान्यङ्गे तावकान्यर्पयन्ति ॥

एतदर्थस्तु— हे विष्णो ! पवित्रे परिशुद्धे चर्षणीन्द्राः ज्ञानवन्तः बाह्वोर्मूले ते तव अब्जचक्रे शङ्खचक्रे प्रदधते प्रकर्षेण धारयन्ति । व्यवहिताश्चेत्यनुशासनात्[2] प्रेत्युपसर्गस्य व्यवधानेन प्रयोगेऽपि क्रियया सम्बन्धः । एवं च शङ्खचक्रे केचित् विधारयन्ति अन्ये पुराणाः पुरातनाः महर्षयः तावकानि लिङ्गानि पञ्चायुधान्यपि अङ्गे भुजयुगले ललाटमूर्धहृदयेषु अवयवेषु अर्पयन्ति बिभ्रति इति ।

१. बहुविधं, २. पा. सू. १-४-८२.

तथा आथर्वणमहोपनिषदि ब्रह्मसूक्ते श्रूयते—

**दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।**
**सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥** इति ।

अत्र मासान् विप्रोऽर्ध[1]पञ्चमान् इत्यादाविव विप्रशब्दो न क्षत्रियादि व्यवच्छेदार्थः । सर्वेषां शङ्खचक्रादिधारणस्य, बिभृयुस्तज्जनासः, ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः इत्यादिश्रुतिस्मृतिसिद्धत्वात् । विप्रस्य तु प्रकृष्टाधिकारित्वेन अकरणे प्रत्यवायभूयस्त्वप्रदर्शनार्थः । तुरवधारणे । दक्षिण एव भुजे सुदर्शनं सव्य एव भुजे शङ्खं बिभृयात् । भुजांशे विशेषद्योतनार्थो वा । ब्रह्मविदो विदुरित्यनेन वेदवित्सिद्धान्तप्रसिद्धिरुपपादिता ।

तथा कठशाखायां श्रूयते—

**धृतोर्ध्वपुण्ड्रः शृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।**
**स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम् ॥**

अयमर्थः— यो महात्मा शमदमादिगुणसम्पन्नः सदा हृदि स्थितं हृदये निवसन्तं परात्परं ब्रह्मादिभ्य उत्कृष्टं महतः पृथुभ्यः महान्तं पृथुतरं महतो महीयानिति श्रुतेः । विष्णुं स्वरेण प्रणवेन यो वेदादौ स्वरः प्रोक्तः इति श्रुतेः । यत् यदा परं निरन्तरं ध्यायति स तदा धृतोर्ध्वपुण्ड्रः शृ(कृ)तचक्रधारी च भवेदित्यर्थः ।

तथा ऋग्वेदखिले श्रूयते—

**चक्रं बिभर्ति वपुषाऽभितप्तं बलं देवानाममृतस्य विष्णोः ।**
**स एति नाकं दुरितं विधूय प्रयान्ति यद्यतयो वीतरागाः ॥** इति ।

अस्याः श्रुतेरयमर्थः— योऽधिकारी देवानां बलं रक्षाकारणम् । अमृतस्य मृतिरहितस्य विष्णोः सम्बन्धि चक्रं वपुषा भुजशिखर[2]रूपावयवेन धत्ते स दुरितं पापानि विधूय वीतरागाः ऐहिकामुष्मिकभोगेषु विरक्ताः यतयो यं नाकं दुःखरहितं मोक्षं ब्रह्म वा प्रयान्ति तं नाकमेति प्राप्नोति ।

१. श्रावण्यां प्रोष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥ —मनु. अ. ४, श्लो. ९५.

२. स्कन्धो भुजशिरोंऽसोऽस्त्री —अमरः । भुजरूपावयवेन इत्यर्थः ।

**'परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति'** इति श्रुतेरिति ।

तथाऽथर्वणे श्रूयते—

**एभिर्वयमुरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवेम ।**
**तद्विष्णोः परमं पदं येऽनुगच्छन्ति लाञ्छिताः ॥**

ये यादृशतादृशा अपि उरुक्रमस्य उरुः प्रभूतः क्रमः पादविक्षेपः यस्य सः तथोक्तः तस्य त्रिविक्रमस्येति यावत् तस्य चिह्नैः चक्रादिचिह्नैः अङ्कितास्सन्तः तत् प्रसिद्धं परमं पदं वैकुण्ठादिरूपं तत् स्थानमनुगच्छन्ति । अतो वयमप्युरुक्रमस्य चिह्नैरङ्कितास्सन्तो लोके वैकुण्ठादिलोके सुभगा वल्लभाः भवेम इति मुमुक्षूणामिदमनुसन्धानम् ।

तथा साम्नि मैत्रायणीयशाखायां श्रूयते— पवित्रमित्यग्निः अग्निर्वै सहस्रारः सहस्रारेण नेमिना तप्ततनुः ब्रह्मणः सायुज्यं सलोकतामाप्नोतीति । अत्र नेमिना तप्ततनुरिति चक्रे तप्तत्वं विधीयते । कस्यां दशायामग्नितप्तत्वं चक्रे इति ज्ञापनाय सुदर्शने अग्निशब्दः प्रयुज्यते । नेमिशब्दश्चक्रपर्यायः । सहस्रारः पवित्रः नेमिर्वा चक्रस्य वाचकाः इति माधवाचार्येण तन्नामानुक्रमणिकायां तत्र सुदर्शन-परिगणनात् सहस्रारशब्दोऽपि सुदर्शनपर्यायः । सुदर्शनं सहस्रारमित्यभिधानादिति ब्रह्मसायुज्यादि-प्राप्तिकामश्चक्रादिना तप्ततनुर्भवेदिति विध्यर्थः । एवं श्रुत्यन्तराण्यपि उदाहर्तव्यानि ।

स्मृतयोऽपि तत्र प्रमाणम् । यथा वृद्धमनुः—

**ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते हि यः ।**
**तेन तस्याशुभं नश्येत् शुभमस्य विवर्धते ॥**

शाण्डिल्योऽपि—

**पशुपुत्रादिकं सर्वं गृहोपकरणानि च ।**
**अङ्कयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम् ॥** इति ।

शङ्खोऽपि—

**उपवीतादिवद्धार्यं शङ्खचक्रगदादिकम् ।**
**ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥** इति ।

यमोऽपि—

**उपवीती शिखी विप्रः चक्रलाञ्छनसंयुतः ।**
**चक्रलाञ्छनहीनस्य विप्रस्य विफला क्रिया ॥** इति ।

व्यासोऽपि—

**ललाटे तु गदा धार्या मूर्ध्नि चापशरौ तथा ।**
**हृन्मध्ये नन्दकश्चैव शङ्खचक्रे भुजद्वये ॥** इति ।

इतिहासोऽपि तत्र प्रमाणम् । यथा भारते भीष्मपर्वणि—

**ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।**
**अर्चनीयश्च सेव्यश्च नित्युक्तैः[1] स्वकर्मसु ॥**

अत्र लक्षणशब्देन सर्ववर्णसाधारणं तप्तचक्राद्यङ्कनमेव विवक्षितम् । तस्य चिह्नपर्यायत्वात् । चिह्नं लक्ष्म च लक्षणमित्यभिधानात् । न चैतत् सन्निधानेन शूद्रमात्रविषयमिति शङ्क्यम् । चतुर्णां समुच्चितानामविशेषेण तदन्वयप्रतीतेः । लक्षणशब्दस्य वर्णाश्रमाचारपरत्वे लक्षणापत्तेः । मुख्यार्थे सम्भवति अमुख्यार्थस्वीकारायोगात् । यज्ञोपवीतादीनां सर्वसाधारणत्वाभावात् । अन्यस्य साधारणस्य अभावाच्चेति । तथा हरिवंशे—

**चक्राङ्किताः प्रवेष्टव्याः यावदागमनं मम ।**
**नामुद्रिताः प्रवेष्टव्याः यावदागमनं मम ॥** इति ।

तथा विष्णुधर्मे यमकिङ्करसंवादे—

**भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया ।**
**विनाज्ञाभङ्गकृन्नैव भविष्यति नरः क्वचित् ॥** इति ।

इतिहाससमुच्चये पुण्डरीकाख्याने[2]—

**केचिच्छक्राङ्कितास्तत्र प्राणिनः पुण्यदर्शिनः ।**
**विचरन्ति यथाकामं पुण्यतीर्थप्रशंसिनः ॥** इति ।

सन्ति चात्र पुराणानि— यथा पाद्मे उत्तरखण्डे विंशोऽध्याये ब्रह्माणं प्रति भगवान्—

**शृणु वत्स प्रवक्ष्यामि मन्त्रदीक्षाविधिं परम् ।**
**सुदर्शनं पाञ्चजन्यं सुवर्णेन प्रकारयेत् ॥**

---

१. युक्तैश्च कर्मभिः, २. पुरस्सरीकाख्याने.

रौप्येण वापि ताम्रेण कांस्येनापि प्रकारयेत् ।
स्नाप्य पञ्चामृतैः शुद्धैरर्चयेत् पुरतो मम ॥

अर्चयेद्गन्धपुष्पाद्यैः तन्मन्त्रेण विधानतः ।
तस्मिन्नग्नौ क्षिपेच्चक्रं शङ्खं च द्विजसत्तम ॥

षडक्षरेण[1] जुहुयादाज्यं विंशतिसङ्ख्यया ।
प्रतप्तं चक्रमादाय मन्त्रेणैवाङ्कयेद्गुरुः ॥

एवमेवाङ्कनं कुर्यात् बाह्वोः दक्षिणसव्ययोः ।
ऊर्ध्वपुण्ड्रधरं शिष्यं मन्त्रमध्यापयेद्गुरुः ॥

नारदः—

एवमुक्त्वा विधातारं देवदेवो हरिः पिता ।
स्वचक्रेणाङ्कयित्वा तं तस्य मन्त्रमदात् स्वयम् ॥

सर्वलोकेश्वरो देवो ब्रह्मा मम पिता प्रभुः ।
ममापि विधिवन्मन्त्रं प्रददौ मुनिसत्तमाः ॥

तस्माद्यूयं मुनिश्रेष्ठाः धारयध्वं सुदर्शनमिति ।

तथा तत्रैव विंशोऽध्याये[2]–

चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा[3] ।
धारयित्वैव विधिवद्[4] ब्रह्मकर्म समारभेत् ॥

सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।
उपनीय विधानेन पश्चात् कर्मसु योजयेत् ॥

दद्याद्गोभूहिरण्यादि चक्राङ्कितभुजाय वै ।
वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यै विशेषतः ॥

प्रतपेत् शङ्खचक्राभ्यां हुत्वा होमं विधानतः ।
अन्यैर्न दाहयेद्गात्रं ब्राह्मणो हरिलाञ्छनात् ॥

---

१ ॐ क्लीं कृष्णाय नमः, २. त्रिंशोऽध्याये, ३. च, ४. तिलकं.

**शङ्खचक्रगदाखड्गशार्ङ्गादन्यैर्हरेरपि ।**
**न लक्षणैर्दहेदङ्गान्यदग्धो नार्हति क्रियाम् ॥**

**अचक्रधारिणं विप्रं दूरतः परिवर्जयेत् ॥** इति च ।

यद्यप्येवं पुराणान्तरेष्वपि परस्सहस्रवचनान्युपलभ्यन्ते तथापि ग्रन्थगौरवभयात् तत्र तत्र विद्यमानं किञ्चिदेव वचनं उदाह्रियते । यथा गारुडे—

**अग्निनैव तु संयुक्तं चक्रमादाय वै[1] द्विजः ।**
**दाहयेत् सर्ववर्णानां हरिसालोक्यसिद्धये ॥** इति ।

वाराहे—

**अचक्रधारिणं विप्रं यज्ञार्थे[2] भोजयिष्यति ।**
**रेतोमूत्रपुरीषादि स्वपितृभ्यः प्रयच्छति ॥** इति ।

ब्रह्माण्डे—

**शङ्खचक्राङ्कितान् भक्त्या यः पूजयति मानवः ।**
**स साक्षाद्विष्णुसामीप्यं लभते नात्र संशयः ॥** इति ।

ब्रह्मवैवर्ते—

**चक्राङ्कितभुजं मर्त्यं यो वै निन्दति मूढधीः ।**
**प्रयाति नरकं घोरं यावदाभूतसम्प्लवम् ॥** इति ।

भविष्यपुराणे—

**चक्राङ्कितभुजं दृष्ट्वा यस्तु तं नाभिवादयेत् ।**
**तिर्यग्योनिशतं प्राप्य विष्ठायां जायते क्रिमिः ॥** इति ।

मार्कण्डेये—

**चक्रादिधारणं पुंसां हरिसम्बन्धवेदनम् ।**
**पतिव्रतानिमित्तं हि वलयादिविभूषणम् ॥** इति ।

१. मे, २. यः सार्ध.

वामने—

लीलयाऽपि लिखेद्यस्तु बाहुमूले सुदर्शनम् ।
कुलकोटिं समुद्धृत्य स गच्छेद्वैष्णवं पदम् ॥ इति ।

ब्राह्मे—

शरीरं दृश्यते यस्य कृष्णचक्रेण लाञ्छितम् ।
गङ्गाजलमयं मन्ये देहं तत्पापवर्जितम् ॥ इति ।

मात्स्ये—

विष्णुचक्राङ्कितं देहं पवित्रमिति वै श्रुतिः ।
धारयेद्विष्णुभक्तस्तु चक्रं बाहौ तु दक्षिणे ॥
वामे तु शङ्खं राजन्तं वैष्णवं पदमाप्नुयात् ॥ इति ।

कौर्मे च—

चक्राङ्कितनराः केचित् केचिच्छङ्खधराः तथा ।
शङ्खचक्रधराः केचित् कुले विष्णुपरिग्रहे ॥ इति ।

लैङ्गेऽपि—

गदालाञ्छनयुक्ताश्च[१] शुक्लदन्ताः दृढव्रताः ।
अङ्किताश्चैव चक्रेण देवदेवस्य चक्रिणः ॥ इति ।

स्कान्दे—

येषां चक्राङ्कितं गात्रं शूद्रेष्वपि हि दृश्यते ।
ते वै स्वर्गस्य नेतारो ब्राह्मणा भुवि देवताः ॥ इति ।

शिवपुराणे—

श्रावकाः वासुदेवस्य तथैव नटनर्तकाः ।
अन्ये च वैष्णवास्तत्र सर्वे चक्रेण लाञ्छिताः ॥

१. निर्मलाङ्गा दयायुक्ताः.

आग्नेये—

शङ्खचक्राङ्कनं कुर्यादात्मनो बाहुमूलयोः ;
कलत्रापत्यभृत्येषु पश्वादिषु न सम्पदे ॥ इति ।

उपपुराणेषु– वायव्ये—

उपवीतादिवद्धार्याः शङ्खचक्रगदादयः ॥ इति ।

आदित्यपुराणे—

चक्रादीन् धारयेद्विप्रो ललाटे मस्तके भुजे ॥ इति ।

पञ्चरात्रागमोऽपि तत्र प्रमाणम्, तथाहि विहगेश्वरसंहितायाम्—

तद्धारणविधिं वक्ष्ये महापातकनाशनम् ।
चक्रं शङ्खं समाराध्य गन्धपुष्पादिभिः शुभैः ॥

अनवद्यं च नैवेद्यं विनिवेद्य स्वशक्तितः ।
सुदर्शन नमस्तुभ्यं पाञ्चजन्य नमोऽस्तु ते ।
इति मन्त्रं समुच्चार्य नमस्कुर्यात् पुनः पुनः ॥

ततः पावकमभ्यर्च्य जुहुयाद्वैष्णवाहुतीः ।
वेदादिभिस्तथा मन्त्रैः स्रुचैव जुहुयाद् घृतम् ॥

चक्रं च पाञ्चजन्यं च तस्मिन्नग्नौ विनिक्षिपेत् ।
अग्निनैव तु संयुक्तं चक्रमादाय मामकम् ॥

दक्षिणं बाहुमूलं च दहे[1]द्विगतसाध्वसः ।
अथवान्येन केनापि वैष्णवेन महात्मना ॥

लाञ्छनं बिभृयाच्चक्रं पाञ्चजन्यं तथैव च ।
उच्चारयन्निमं मन्त्रं हृदये मां विचिन्तयेत् ॥

सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥

---

१. स्वदेहे गतसाध्वसः.

**इति मन्त्रं समुच्चार्य दक्षिणं बाहुमङ्कयेत् ।**
**पाञ्चजन्य निजध्वान ध्वस्तपातकसञ्चय ॥**

**पाहि मां पापिनं घोरं[1] संसारार्णवतारण ।**
**इति मन्त्रं समुच्चार्य दहेत्[2] सव्यभुजं तथा ॥** इति ।

एवं परमेश्वरसनत्कुमारादिसंहितावचनान्युदाहर्तव्यानि ॥

किञ्च यद्यप्येते श्रुत्यादयो न दृश्येरन् । तथापि शिष्टाचारेण चक्रादिधारणस्य धर्मत्वं निश्चीयते । रामानुजीयैः विष्णुस्वामिसम्प्रदायप्रवर्तकैः निम्बार्कादिमतस्थैः अस्मदीयैश्चानेकदर्शनस्थैः शिष्टैरस्यानुष्ठीयमानत्वात् । केषाञ्चिदननुष्ठानस्यांधर्मत्वानापादकत्वात् । तेषामन्येषां (च) मिथो विवादादेश्च क्रियमाणत्वात् ।

शिष्टाचारप्रामाण्यस्य च— अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः ।

**वेदो[3]ऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥**

श्रुतिस्मृतिस्सदाचारः । इत्यादिश्रुतिस्मृतिसिद्धत्वात्, इति दिक् ।

*॥ इति तप्तचक्राद्यङ्कनप्रमाणानि ॥*

ननु 'पवित्रं ते विततमि'ति श्रुतिस्तावन्न तत्र प्रमाणम् । तस्या अन्यपरत्वात् । तथा हि— ब्रह्मणः चतुर्मुखस्य पते हे विष्णो ! प्रभुस्त्वं विश्वतः विश्वेषाम् । सार्वविभक्तिकस्तसिः । गात्राणि पर्येषि आप्नोषि[4] अन्तर्यामिरूपेण वर्तसे । तादृशस्य ते पवित्रं परिशुद्धं, विततं विस्तृतं, तत् प्रसिद्धं मोक्षरूपं सुखं, अतप्ततनूः तप्तं तपः भावे निष्ठा, तद्रहिता तनूर्यस्य स तथोक्तः । अत एवामः अपक्वः अक्षीणपाप इति यावत् । एवंविधः पुमान् तत् मोक्षरूपं सुखं नाश्नुते न प्राप्नोति । तत्तपः वहन्तः उद्वहन्तः इत् एव चरन्त एवेत्यर्थः । अत एव शृतासः प्रक्षीणपापाः तत्समाशत मोक्षं प्राप्नुवन्ति । तथा चान्वयव्यतिरेकाभ्यां तपसो मोक्षसाधनत्वप्रतिपादनपरत्वात् नेयं श्रुतिः तप्तचक्रादिधारणे मानम् । यद्वा तस्मिन्नुदीचीनदशं 'पवित्रं ते विततं ब्रह्मणस्पते' इति वितन्यमानं अभिमन्त्रयते यजमानः इत्याप-

---

१. घोरसंसारार्णवपातिनम्, २. देहे सव्य, ३. मनु. अ. ३, श्लो. ६, ४. व्याप्नोषि.

स्तम्बसूत्रे उद्गातृभिः द्रोणकलशोपरि वितन्यमानपवित्रानुमन्त्रणे विनियोगात् अयुक्तं तप्तचक्रधारणार्थत्वमस्याः श्रुतेः।

अथवा हे ब्रह्मणः अन्नस्य ओषधिवनस्पतिलक्षणस्य पते! स्वामिन्! हे सोम! 'ओषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादः ओषधिवनस्पतीन् हि प्राणभूतोऽदन्ति' इति श्रुतेः। तेषां पतिः स्वामी 'सोमो वा ओषधीनां राजा' इति श्रुतेः। ते त्वदर्थं त्वत्पवनार्थं इदं दशापवित्रं विततं विस्तृतम्। प्रभुर्गात्राणि पर्येषि विश्वतः। अनेन पवनेन तव स्वरूपतिरोधायकऋजीषा[1]द्यपगमेन प्रभुर्भूत्वा गात्राणि स्वरूपाणि परितः सर्वतः एषि प्राप्नोषि। अत एव अतप्ततनूः न तदामो अश्नुते। तप ऐश्वर्ये इति धातुः पवन[2]संस्कारेणानाविष्कृतेश्वरतनूः आमस्सन् होमसाधनत्वं नाश्नुते। तथा च श्रुतिः— 'तस्मात्सोमसहस्रमसवत् सहायो जनोऽभवत् तं व्यचिकित्सत् जुहवानीमानहौषमिति सोऽमन्यत यद्धोष्याम्यामं होष्यामि यन्न होष्यामि यज्ञवेशसं करिष्यामीति तमध्रियत होतुं सोऽग्निरब्रवीन्नमय्यामं होष्यसी'ति। अत एव पवनादिसंस्कारेण आविर्भूतेश्वरभावत्वादस्येश्वरात्मना स्तुतिरुपपद्यते। तथा च बह्वृचाः पठन्ति। 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः' इति। (ऋग्वेदे ९-९६-५) शृतास इद्वहन्तस्तत्समाशत। ते वयमपि शृतासः। सोमस्योत्पवनसंस्कारकरणेन संस्कृतास्ताः तं शृतं भूते अजुहोत्, इत्यादिश्रुतौ संस्कृतमात्रेऽपि अग्निपक्व इव शृतशब्दप्रयोगदर्शनात्। वहन्त इत् यज्ञकर्मनिर्वहणविचक्षणाः। तद्धोमसाधनत्वं समाशत प्राप्नुवन्निति।

तथा चरणश्रुतिरपि न तत्र मानम्। तस्य अन्यपरत्वात्। तथा हि— स्वपादाभिधासु पञ्चस्विष्टिषु चरणं पञ्चमीति श्रुत्युक्त्या या चरणेष्टिः तत् याज्यानुवाक्ये चरणं पवित्रं लोकस्य द्वारमिति ऋचौ, ....... तथा चायमर्थः। चरणं आचरणं आचारः पवित्रं पूतं विततं विस्तृतं, पुराणं अनादिसिद्धं, येन पूतः तरति दुष्कृतानि, येनाचारेण पूतः शुद्धः सर्वोऽपि दुष्कृताति तरति तेन पवित्रेण शुद्धेन पूताः वयं पाप्मानमरातिं तरेमेति पुरोनुवाक्यार्थः। याज्यार्थस्तु लोकस्य स्वर्गलोकस्य द्वारं अर्चिष्मत् प्रकाशवत् पवित्रं पूर्ववत्, ज्योतिष्मत् तेजिष्ठं भ्राजमानं दीप्यमानं महस्वत् तेजोवत् (तेजस्वत्) एभिर्विशेषणैरादित्य उच्यते। तत्प्राप्तिसाधनत्वाच्चरणस्यापि ताच्छब्द्यम्। अमृतस्य उदकस्य धाराः बहुधा बहुप्रकारेण दोहमानं उत्पादयत् यज्ञाचारस्य वृष्टिहेतुत्वात्। तदुक्तं भगवता— यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसम्भवः इति। तादृशं चरणं लोके स्वर्गादिलोके नोऽस्माकं सुधितां स्वच्छन्दतां

१. जिगीषा, २. समानसंस्कारेण अनाविर्भूतेश्वरतनुः (स्मृ.मु.).

कामचारतां दधातु। तथा च तत्रैव वाक्यशेषे श्रूयते। अनु ह वै स्वर्गं लोकं विन्दन्ति। कामचारोऽस्य स्वर्गे लोके भवति। य एताभिरिष्टिभिर्यजते।

एवं चमूषच्छ्येन इत्यस्यापि मन्त्रस्य न तप्तचक्रादिधारणपरत्वम्। तस्य सोमप्रशंसापरत्वात्। तथाच अत्रानुक्रम्यते। 'प्रसेनानीश्चतुर्विंशतिः दैवोदासिः प्रतर्दनः' इति। तस्यायमर्थः। प्रसेनानीरिति चतुर्विंशतिः इदमेकादशं सूक्तम्। दिवोदासपुत्रस्य प्रतर्दनस्य राजर्षेरिदं त्रैष्टुभं पवमानसोमदेवताकं इति सोमदेवताकत्वम्। मण्डलदेवपवमानसोमदेवताकत्वोक्त्या प्रतिपाद्यः। न चानादिष्टदेवतामन्त्रः इत्यादिना यज्ञदेवता वा मन्त्रः इत्यनेन यास्कग्रन्थेनानिरुक्तानां मन्त्राणां विष्णुदैवतत्वमित्युक्तत्वात् सुदर्शनस्य च विष्णवात्मकत्वात् तस्य तत्परत्वमिति वाच्यम्। मण्डलादावेकपवमानसोमदेवताक-त्वोक्त्या अनिरुक्तत्वाभावेन विष्णुदैवत्यत्वासिद्धेः। न हि तन्मन्त्रे एव तद्देवतावाचकपदान्वयो वक्तव्य इति नियमोऽस्ति। अन्यथाऽतिप्रसङ्गात्। किन्त्वनादेशो[1] त्विन्द्रो देवतेति अनुक्रमणिका, तथा च तद्ग्रयाकोपोऽपि स्यात्। तथा चायमर्थः— चमूषत् चमपि भक्षयन्ति अत्रेति चमूः चम्वः चमसाः तेषु सीदन्। यद्वा चमसावधिश्रवणफलके सीदन् वर्तमानः इति यावत् श्येनः शंसनीयः शकुनः शक्तः बिभृत्वा भरतेः अन्येभ्योऽपि दृश्यन्ते इति क्वनिप्। पात्रेषु विहरणशीलाः। न चायं त्त्वाप्रत्ययान्तः। तथा सति तस्य ल्यबादेशापत्तेः। समानकर्तृकर्मान्तराभावेन त्वाप्रत्ययानुपपत्तेश्च। न च विवक्तिमादाय तदुपपत्तिः, तस्याफलत्वेन क्रियासमर्थत्वात्। गोविन्दः गवालम्भकः। विंदुरिच्छुरिति[2] उप्रत्ययान्तो निपातितः। गाः विन्दतीति गोविन्दः "गवादिषु विन्देः संज्ञायाम्" (३-२-६९) (सं. ३१६९ सि. कौमुदी) इति शप्रत्ययः। 'इदितो नुम्धातोः' इति नुमागमः। तृज्वद्भावः छान्दसः। तस्य षष्ठ्येकवचनं गोविन्दुरिति, गोविन्दस्येत्यर्थः, तन्न, गोविन्दुरित्यस्य षष्ठ्यन्तत्वे प्रमाणाभावात्। न च तृज्वद्भावः छान्दसः। कल्पकाभावात् किञ्च छन्दोगतशब्दानधिकृत्य यदि तृज्वद्भावः विहितः स्यात् तदा कदा-चित् स्यादपि। न च तथा विधिरस्ति, अन्यथा तृज्वद्भावेन त्वाप्रत्ययाभावात् असंज्ञायामपि विन्देः शप्रत्ययसम्भवेन गोविन्दशब्दस्य वृषभारूढपरमेश्वरपरत्वे तदायुधत्रिशूलादेरपि धारणविधिप्रसङ्गः।

यत्तु गोविन्दुरित्यस्य इदितो नुम्धातोरिति नुमुपपादनं तदज्ञानविजृम्भितं तद्धातोः लृदित्त्वेन इदित्त्वाभावात्। न च विन्देरित्यनेन इदित्त्वसिद्धिः। तस्य इगन्तत्वेनोपपादनात्। न चैवं गोविन्द इत्यत्र नुमनुपपत्तिः। शे मुचादीनामित्यनेनैव तत्प्राप्तेः। द्रप्सः द्रवणशीलः यत्तु द्रप्सः एकदेशः परमात्मांशः 'ममैवांशो जीवलोके' इत्यादिस्मृतेः। अंशत्वं च शरीरत्वम्। यद्वा करणवत् सूक्ष्मभूतः।

---

१. किन्त्वनुद्देशो, २. :: सू. ३-२-१६७.

'वालाग्रशतभागस्य शतधाकल्पितस्य च । भागो जीवः स विज्ञेयः' इत्यादिश्रुतेः इति । तन्न, मुख्यार्थपरित्यागापत्तेः । न ह्युपपन्नेऽर्थे मुख्यार्थपरित्यागः उपपत्तिमान् । किञ्च जीवस्यांशत्वे अनित्यत्वापत्तिः । शरीरत्वानुपपत्तिश्च । न हि तदंशस्य तच्छरीरत्वमुपपद्यते । तथा जीवस्य अणुत्वे तन्निष्ठसुखदुःखकर्तृत्वभोक्तृत्वादीनामपि अणुमात्रदेशतापत्तिः ।

आयुधानि स्फ्यकपालादीनि । 'स्फ्यकपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि' इत्यादिश्रुतौ स्फ्यादीनामायुधशब्देनोपादानात् । बिभ्रत् धारयन् । अपामुदकानामूर्मिं प्रेरकं समुद्रमिति यावत् । अन्तरिक्षलोकं वा सचमानः महिषो महान् एवंविधः सोमः तुरीयं धाम पृथिव्यन्तरिक्षद्युलोकापेक्षया तुरीयं चान्द्रमसं स्थानं चान्द्रमसलोकस्य तुरीयत्वं चमसः पृथिव्या अधिपतिः सा मावत्वदितिः चन्द्रमा नक्षत्राणामधिपतिः इत्यन्यैर्मन्त्रैरवगम्यते । एतादृशं स्थानं विवक्ति सेवते इति ।

अत्रोच्यते— न तावत् 'पवित्रं ते विततमि'त्यादिश्रुतिः अन्वयव्यतिरेकाभ्यां कृच्छ्रचान्द्रायणादितपसो मोक्षसाधनत्वप्रतिपादनपरा, तस्यापातप्रतीतत्वात् । न हि शब्दस्यापातप्रतीत एवार्थः । चित्रया यजेत, आज्यैः स्तुवते आकाशादेव समुत्पद्यन्ते इत्यादेरपि चित्राद्याकाशाद्यधिकरणपूर्वपक्षरीत्या चित्रद्रव्यघृतगगनाद्यर्थः स्यात् । 'अन्धो मणिमविन्दत् । तमनङ्गुलिरावयत् अग्रीवः प्रत्यमुञ्चत्' इत्यादेरपि प्रतीतार्थपरत्वप्रसङ्गेन मीमांसावैयर्थ्यात् । 'बिभेत्यल्पश्रुताद्वेदः मामयं प्रचलिष्यति' इति स्मृतेश्च, 'कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद' इति श्रुत्यैव स्वार्थस्य गहनत्वोक्तेश्च । किन्तु मीमांसितः । न च आपातप्रतीतार्थत्यागे स्वार्थपरित्यागप्रसङ्गेन शब्द एव बाधितः स्यादिति वाच्यम् । आपातप्रतीतार्थमात्रत्यागेऽपि मीमांसितस्य स्वार्थस्यात्यागात् । आपातप्रतीतार्थत्यागे पुरुषभ्रान्तिरेव त्यक्ता भवति । तदुक्तं चन्द्रिकायाम्—

**आपातो भ्रमप्राप्तमर्थं हित्वा विमर्शतः ।**
**गगनश्रुतितात्पर्यविषयोऽन्विष्यते यतः ।**
**न हीक्षुलेहनेनैव ज्ञात इक्षुरसो भवेत् ।**
**न चेक्षुदण्डं निष्पीड्य लब्धो नेक्षुरसो भवेत् ॥**

किञ्च 'पवित्रं त' इति श्रुतेरुक्तरीत्यार्थाश्रयणे पवित्रविततशब्दयोः सन्निकृष्टयोरेव उक्तरीत्या परस्परमन्वयसम्भवे विप्रकृष्टेन तच्छब्देन अन्वये व्यवहितयोजनाप्रसङ्गः ।

अतप्ततनूरित्यत्र तनूपदवैयर्थ्यं च । अतप्त इत्यनेनैव तपोरहितस्य न मोक्ष इत्यस्य लाभात् । अस्मत्पक्षे त्ववयविवाचकस्य तनूपदस्य मूले बाह्वोरिति श्रुत्यन्तरसिद्धबाहुमूलाद्यवयवोपलक्षणतया सार्थकत्वात् ।

किञ्च निर्णीतदाहार्थकस्य शृतास इत्यस्य प्रतिसम्बन्धितया निर्दिष्टस्य अतप्ततनूरित्यस्य दाहार्थकत्वं विना कृच्छ्रचान्द्रायणाद्यर्थत्वाश्रयणमयुक्तम् । न वा अक्षीणपापार्थस्यामपदस्यैव प्रति-सम्बन्धितया शृतास इत्येतन्निर्दिश्येत । तथा च तस्य क्षीणपापार्थकत्वमेव न दाहार्थकत्वमिति वाच्यम् । श्रा(श्रै)षाके इति धातोरुत्पन्नस्य पाके शक्तस्य शृतपदस्य तत्परत्वे लक्षणाप्रसङ्गात् । किञ्चैवं वहन्त इत्यस्याचरणे लक्षणाप्रसङ्गः । तस्माच्चान्द्रायणाद्यर्थत्वमापातप्रतीतिसिद्धिं न तदर्थ इति स्थितम् ।

यत्तु आपस्तम्बसूत्रे 'पवित्रं ते विततमि'त्यस्य उद्गातृभिर्द्रोणकलशोपरि वितन्यमानपवित्रानु-मन्त्रणे विनियोगान्न तत्परत्वमिति । (तत्) तथैव । न हि वयं तस्य प्रमाणसिद्धार्थपरत्वं व्यासेधामः[१]

**विष्णोर्नुकेति मन्त्रेण तापयित्वा सुदर्शनम् ।**
**चरणं पवित्रमिति तद्वाभ्यामभिमन्त्रयेत् ॥**

**पवित्रं ते विततमिति मुद्रयेद्दक्षिणे भुजे ।**
**ज्ञानं वैराग्यमास्तिक्यं श्रद्धा ह्यस्याभिवर्धते ॥**

इति महर्षिणा सनकेन विनियुक्तत्वात् तत्परत्वमाश्रयामः ।

किञ्च पाद्मे—

**सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः ।**
**विधिना वैष्णवं चक्रं धार्यं हि श्रुतिचोदनात् ॥**

इति श्रुतिचोदितत्वेन तप्तचक्रधारणं विधाय श्रुतिविशेषाकाङ्क्षायाम्—

**दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।**
**सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥**

**एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् ।**
**तथैव साम्नि यजुषि ऋचि प्रोक्तं शुभानने ॥**

१. निषेधामः.

इत्यादिना श्रुतिविशेषोदाहरणपूर्वकमतिदेशेन तस्य देवत्रयविहितत्वस्योक्तत्वेन ऋगादिगतस्य 'पवित्रन्त' इत्यादिमन्त्रस्य तत्परत्वं युक्तम्, एवं 'चरणं पवित्रमि'ति ऋचः काठकपरिपठितायाः अपि, इष्टिषु या पञ्चमी चरणेष्टिः तत्र याज्यापुरोनुवाक्यत्वे उदाहृतसनकस्मृत्या सुदर्शनाभिमन्त्रणे विनियुक्तत्वात् तत्परत्वमित्यङ्गीकरणीयम् ।

किञ्च पाद्मे—

**चरणं पवित्रं विततं पुराणं वाङ्मयं शुभम् ।**
**तेन चक्रेण सन्तप्तास्तरेयुः पातकाम्बुधिम् ॥**

**पवित्रं ब्रह्मणस्पत्यं जगद्व्यामं हरेस्सदा ।**
**तेन तप्ततनुर्येषां ते तु यान्ति हरेः पदम् ॥**

**तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ।**
**प्राजापत्यं पवित्रं ...शतोद्यामं हिरण्मयम् ॥**

**तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ।**

**"सनेमि चक्रमजरं चक्षुरस्य महात्मनः ।**
**तस्मिन्नपवृते देहे महोन्नतिपदं ययुः ॥**

**यत्ते पवित्रमर्चिष्यग्ने तेन पुनीहि नः ।**
**इत्येवं श्रुतयः सर्वाः श्रावयन्ति वरानने ॥**

**तस्माद्वै विधिवद्धार्याः शङ्खचक्रादिहेतयः ॥"**

इत्यादिना तप्तचक्रादिधारणश्रुतेः श्रुत्यन्तराणां च अर्थतः पाठाच्च प्रमाणत्वेन उपबृंहणानुसारिवेदार्थस्यैव तस्यास्तासां च तत्परत्वमपि युक्तम् । तथाच स्मृतिः—

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥** इति ।

यत्तु चरणश्रुतेराचारपरत्वमुक्तम्, तदयुक्तम् । तस्मिन्प्रकरणे "[1]तच्चरणमब्रवीत् प्रजापते चरणेन वै श्राम्यसि अहं वै चरणमस्मीति" वक्तृत्वलिङ्गाच्चरणशब्दार्थस्य चेतनत्वम्, अहं वै चरणमस्मीत्यनेन चरणशब्दस्य तन्नामधेयत्वम्, माऽनुयजस्व इति नियोगात् तस्य देवतात्वं च स्पष्टमुच्यते । अत

१. तं चरण.

एव भट्टभास्करेण ज्ञानयज्ञाख्ये भाष्ये तत्प्रकरणव्याख्यानसमये 'चरणमधिदेवता' इति तदनुगुणमेव व्याख्यातम् । भाष्यान्तरे च ''करणसाधनश्चरणशब्दः सुदर्शनाभिधायीति देवताविशेषः सुदर्शनमिति'' स्पष्टीकृतम् । अभियुक्तव्याख्यानस्याप्यर्थविशेषनिर्णये प्रमाणत्वात् । न च चरणशब्दस्याचेतनाचार-परत्वेऽपि तं चरणमब्रवीदित्यादिकं मृदब्रवीत्, शृणोत ग्रावाणो विदुषोऽनु, तत्तेज ऐक्षत इत्यादिवत् गौणमिति वाच्यम् । तत्राप्यभिमान्यधिकरणन्यायेन देवतापरत्वस्वीकारेण दृष्टान्तासम्प्रतिपत्तेः । न च चरणादिशब्दस्य सुदर्शनदेवतावाचित्वस्याभ्युपगमात् विष्णुचक्रवाचित्वस्य चाभ्युपगमात् ताभ्यां च अर्वाचीनैस्तापयितुमशक्यत्वात् तेन विष्णुचक्रप्रतिकृतिलोहमुद्रा लक्षणीयेति लक्षणादोषप्रसङ्ग इति वाच्यम् । ''रथस्थं केशवं दृष्ट्वा'' इत्यादाविव लक्षणायाः सह्यत्वात् । तत्रापि केशवादिशब्दमुख्यार्थ-प्रदर्शनस्य कर्तुमशक्यत्वात् । अमुख्यार्थतत्प्रतिकृतिदर्शनस्यैव विधानाच्च । उदाहृतसनकादिस्मृतेरेव तल्लक्षणाकल्पकत्वात्, न विधौ परश्शब्दार्थः इत्यादेर्यत्रामुख्यार्थस्वीकारेऽनन्यथासिद्धं प्रमाणं नास्ति (तत्रैव) । 'अन्यथा सोमेन यजेत, अर्धमन्तर्वेदिः' इत्यादावपि लक्षणानङ्गीकारप्रसङ्गात् । अत एव—

**अग्निर्मूर्धा दिव इति मन्त्रं भौमाय कीर्तयेत् ।**
**उद्बुध्यस्वाग्न इत्येवं मन्त्रं सोमसुताय वै ।**
**अन्नात् परिसृतो रसः शुक्रस्यापि (हि) विद्यते ।**
**शनैश्चराय तनुवः सन्नो देवीति होमयेत् ।**
**कयानश्चित्र आभुवदिति राहोरुदीरयेत् ॥**

इत्यादिविनियोगबलेन अन्यत्र विनियुक्तानामपि 'अग्निर्मूर्धे'त्यादिमन्त्राणां दृष्टार्थतापरिहाराय अग्निपदस्य योगवृत्त्या गौण्या वा, उद्बुध्यस्वेत्यस्मिन्पदे शुक्रमिति पदस्य नपुंसकत्वेऽपि नामसाम्यात् शन्न इत्यस्य वर्णद्वयस्य सादृश्येन शनिनामस्मारकत्वात् चित्रपदस्य चित्रात्मकराहुशिरोलक्षकत्वात् यथाकथञ्चित् तदर्थप्रकाशकत्वमभ्युपगम्यते । अत एव पुरुषसूक्तादीनां ब्रह्मपराणामपि सतां नियुक्तत्वात्, पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेन अभिष्टौति ''सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्'' इत्येतेन षोडशर्चेन षोडशकलं वा इदं सर्वं सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै इति शतपथब्राह्मणे उपाकृता दक्षिणत उपस्थाय ब्रह्मा सहस्रशीर्षा पुरुष इति नारायणेन परामनुशंसतीति आपस्तम्बसूत्रे च पुरुषमेधे पशुत्वेन नियुक्तानां पुरुषाणां स्तवने विनियोगविधानबलात् तत्परत्वमित्यङ्गीक्रियते । तथा पुरस्तात् प्रतीचीं पुरुषाकृतिं चिनोति पुरुषशिरोऽस्याः शिरो भवतीति महाग्नौ पुरुषाकृत्युपधानं विधाय सहस्रशीर्षा पुरुष इति उपधानं विधाय सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते इत्यापस्तम्बसूत्रे तदुपस्थाने विनियोगविधानात् तत्परत्वमित्यङ्गीक्रियते । तथा—

**यजेत्पुरुषसूक्तेन वरुणं विश्वरूपिणम् ।**
**यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम् ॥**

इत्यादिशातातपस्मृतिषु वरुणधनदादियजने विनियुक्तत्वात् तत्परत्वं च अङ्गीक्रियते । अत एव च राणके चित्राज्याधिकरणे एकत्र विनियुक्तानां मन्त्राणामन्यत्रविनियोगो न दोषायेत्यत्र—

**कुशादर्व्यादयो मन्त्राः ब्राह्मणाश्च बहुश्रुताः ।**
**न ते निर्माल्यतां यान्ति विनियोगः पुनः पुनः ॥**

इति स्मृतिरुदाहृता । तथाच स्मृत्यन्तरम्—

**मन्त्राः कृष्णाजिनं दर्भा ब्राह्मणा हविरग्नयः ।**
**अयातयामान्येतानि योज्यानि स्युः पुनः पुनः ॥** इति ।

तथा च उदाहृतविनियोजकसनकस्मृत्यनुसारेण चरणं पवित्रमित्यादिमन्त्राणां सुदर्शनपरत्वमपि दुर्निरसमिति ।

वस्तुतस्तु पवित्रचरणादिशब्दानां चक्रादिशब्दानामिव अर्वाचीनतोपयोग्य(ज्य)विष्णुचक्र-समानाकारलोहमुद्रापि योगरूढिभ्यां मुख्योऽर्थः । तत्राप्यविगीतवृद्धव्यवहारदर्शनात् । न च दृष्टान्ता-सिद्धिः । रथाङ्गे सालग्रामचक्रे द्वारकाचक्रादौ च अविगानेन अनादिवृद्धानां चक्रशब्दप्रयोगदर्शनात् । न च विष्णवायुधं चक्रशब्दमुख्योऽर्थः, अन्यत्तु रथाङ्गादिकं तल्लक्ष्यमिति वाच्यम् । तस्येव रथाङ्गादेरपि अविगीतानादिवृद्धव्यवहारविषयत्वेन चक्रशब्दमुख्यार्थत्वौचित्यात् । अन्यथा वैपरीत्यापत्तेः । न च तत्सादृश्यात् रथाङ्गादौ चक्रशब्दस्य गौणी वृत्तिः । तथा सति नमस्कार(री)मुखाश्वकर्णादिशब्दानामपि नानार्थत्वाभावप्रसङ्गात् । तत्रापि केनचिद्रूपेण अस्मदादिसादृश्यस्य सुवचत्वात् । विनिगमनाविरहात् । अविगीतानादिवृद्धव्यवहाराच्च मुखादिशब्दस्य मनुष्यगजतुरगादिमुखादिषु शक्तौ चक्रशब्दस्यापि तन्न्यायेनैव नानार्थतासाम्यस्यावश्याङ्गीकर्तव्यत्वात् ।

नचैवमन्यायश्चानेकार्थत्वमिति न्यायविरोधः । अविगीतानादिवृद्धव्यवहाररहितस्यैव तन्न्याय-विषयत्वेन प्रकृते च तत्सत्त्वेन तन्न्यायाविषयत्वात् । अन्यथा ग्रामाक्षादिशब्दानामपि नानार्थत्वा-भावप्रसङ्गात् । नचेष्टापत्तिः । ग्रामशब्दोऽयं बह्वर्थ इत्यादिमहाभाष्यवचनविरोधादिति ।

एवं चमूषच्छ्येन इति मन्त्रस्यानुक्रमणिकानुसारेण सोमदेवतापरत्वेऽपि 'तत्तत्स्थापनकाले तु तत्तत्संज्ञामनुं जपेत्', 'विद्यां गतमित्याद्यं यत् पाठयेत् तद्वियोजनात्' चमूषच्छ्येन इति च प्रते विष्णो

इति ऋचौ पाठयेत् । बह्वृचान् पश्चाच्छाकुनसूक्तमेव च । धृतोर्ध्वपुण्ड्रः श्रृतचक्रेतिमन्त्रं ततः परम् । पवित्रं यजुर्मयम् । क्षुरो हरेति सामज्ञात्(न्) । पवित्रमित्यग्निरित्यपि । एभिर्वयमुरुक्रमस्येत्याथर्वणान् द्विजान् । एवं संस्थाप्य विधिवन्नवभिः कलशैस्ततः । स्नापयेद्ब्रह्मसूक्तस्थमन्त्रैरष्टाभिरेव च ॥' इति पञ्चरात्रे परमेश्वरसंहितायां तस्याः चक्रप्रतिष्ठायां विनियुक्तत्वेन सुदर्शनप्राप्तौ सुदर्शनादिसाधारणपरत्व-स्याप्यभ्युपगन्तव्यत्वात् ।

न च धर्मशास्त्रविनियोगबलादेव मन्त्राणां तत्परत्वम् । पौराणिकविनियोगमात्रोच्छेदापत्तेः ।

न च विद्यास्थानान्तर्भूतवचनात् विनियोगबलात् तत्परत्वम् । न हि पञ्चरात्रस्थविद्यास्थानेषु परिगणनमिति वाच्यम् । भारतेतिहासवचनविनियोगमात्रोच्छेदप्रसङ्गात् । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् इति स्मृतिबलात् श्रुत्यविरुद्धत्वात् सकलविशिष्टपरिग्रहाच्च पुराणेष्वेवेतिहासस्यान्त-र्भावात् न तद्विनियोगोच्छेद इति चेत् । समं प्रकृतेऽपि । यथा च श्रुत्यविरोधेनैव पञ्चरात्रस्य प्रामाण्यं तथोत्तरत्र प्रतिपादयिष्यते ।

एवञ्च गोविन्दुरित्यस्य छान्दसतृज्वद्भावाश्रयणेन वा, सुपां सुलुगित्यादिना षष्ठ्येकवचनस्य प्रथमैकवचनमादेश इत्याश्रयणेन वा गोविन्दस्येत्यर्थोऽवश्यमाश्रयणीयः ।

केचित्तु गोविन्दशब्दाकारस्य उकारादेशः छान्दसः । यथा यत्सोममिन्द्र विष्णवि (ऋ. सं. ८-१२-१६) इत्यत्र विष्णुशब्दोकारस्य अवादेशः गुणो वा तथेत्याहुः ।

एवं द्रप्सशब्दस्यापि "पादोऽस्य विश्वा भूतानि" इतिवत् एकदेशपरत्वमप्याश्रयणीयम् । तथा आयुधसामान्यवाचिनः आयुधशब्दस्यापि तद्विशेषचक्रादिपरत्वमेव युक्तम् ।

यत्तु असंज्ञायामपि विदेः शप्रत्ययसम्भवेन गोविन्दशब्दस्य वृषभारूढपरमेश्वरपरत्वे तदायुध-त्रिशूलादेरपि विधिप्रसङ्गात् इति ।

तत्तदा स्यात् यद्येतन्मन्त्रस्य सौदर्शनपरत्वे प्रमाणं न स्यात् त्वदुक्तार्थपरत्वे च प्रमाणं स्यात् । न हि तथा त्वद्रीत्या अर्थवर्णने किञ्चित्प्रमाणं दृश्यते येनातिप्रसङ्गाभिधानात् सुदर्शनपरत्वं त्यज्येत । त्वदुक्तार्थपरत्वं चाश्रीयेत इति दिक् ।

यत्त्वत्र केनचिदुक्तम्— पवित्रचरणश्रुत्योः तप्तलिङ्गमुद्राधारणपरत्वमेव । तथाहि—

**ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः ।**
**पवित्रं तद्धि विख्यातं तत्सम्पर्कात्ततः शुचिः ॥**

**ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते ।**
**तस्मात् पवित्रं लिङ्गाख्यं धार्यं शैवमनामयम् ।।**

तेन अतप्ततनू रुद्रः इत्यादिना "दीक्षया सहितस्साक्षादाप्नुयाल्लिङ्गमुत्तमम्" इत्यन्तेन अगस्त्यं प्रति रेणुकेन पवित्रश्रुतिः लिङ्गधारणपरतया व्याख्याता । तथा चायमर्थः— ब्रह्मणस्पते लिङ्गस्याधिष्ठातः । पुराणागमादिषु ब्रह्मशब्दस्य लिङ्गार्थकत्वकथनात् । यद्वा ब्रह्मणो वेदस्य पते तत्प्रतिपाद्येति यावत् । यद्वा ब्रह्मणश्चतुर्मुखस्य नायकः, यद्वा ब्रह्मणः ब्राह्मणजातेः पते ब्रह्मण्यदेवेति यावत् । प्रभुः प्रभोः समर्थस्य, विभक्तिव्यत्ययः छान्दसः । ते तव विततं तत्र तत्र विस्तृतं पवित्रं लिङ्गं, पुवः संज्ञायां, कर्तरि चर्षिदेवतयोः इत्यत्र प्रत्ययविधानात् उदाहृतवचनाच्च विश्वतो विश्वेषां गात्राणि शरीराणि पर्येषि व्याप्नोषि । पुरुषव्यत्ययः छान्दसः । लिङ्गस्य व्यापकत्वं च विष्ण्वादिभिः धृतत्वात् । तदुक्तं— 'ब्रह्मविष्ण्वादयो देवाः मुनयो गौतमादयः । धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः ।। लक्ष्म्यादि-सहितास्सर्वाः शिवशक्तिविभाविताः । धारयन्त्यलकाग्रेषु शिवलिङ्गमहर्निशम्' इति । नन्वधृतत्वात् कथं सर्वशरीराणि लिङ्गं व्याप्नोतीत्यत आह— अतप्ततनूरिति । शैवदीक्षादितपसा अक्लेशिता तनूर्येन सोऽतप्ततनूः । यद्वा लिङ्गधारणप्रतिबन्धकीभूतान्तःकरणसमाश्रितपापनिवर्तकपूर्वजन्मोपार्जितपुण्य-पुञ्जरहितातनुर्यस्य स तथोक्तः । अत एवामः अपक्वान्तःकरणः तल्लिङ्गमनाश्रितः । एतादृशेन लिङ्ग-स्याधृतत्वेऽपि पूर्वजन्मोपार्जितपुण्यपुञ्जवद्भिर्लिङ्गमवश्यं धार्यमिति भावः ।

ननु शैवानामपि न लिङ्गधारणे फलमस्तीत्यत आह— **शृतास इति** । शृताः पक्वान्तःकरणाः शिवदीक्षासंस्कारसंस्कृताः वहन्तः लिङ्गं समाशत प्राप्तवन्तः ।

यद्वा ब्रह्मणस्पते परमेश्वर ! त्वं प्रभुः समर्थः सर्वेषां गात्राणि व्याप्नोषि सर्वशरीरे व्यापकतया तिष्ठसीति यावत्, तस्य ते तव यद्विततं पवित्रं लिङ्गं तेनातप्ततनूः तप्तलिङ्गमुद्रया अलाञ्छितः अत एवापक्वः तल्लिङ्गं न प्राप्नोति, लिङ्गसायुज्यं न गच्छतीत्यर्थः । शृतासः तप्तलिङ्गमुद्राधारणेन संस्कृताः तल्लिङ्गं वहन्त एव तल्लिङ्गसायुज्यं परमसुखं वा प्राप्तवन्तः । एवं च लिङ्गसायुज्यकामाः निरतिशय-सुखकामा वा शिवलिङ्गं बिभृयुः इति मन्त्रस्य फलितोऽर्थः ।

एवं चरणश्रुतिरपि तप्तलिङ्गमुद्राधारणपरतया व्याख्येया । तथाहि— चरत्यनेनेति चरणं करणे ल्युट्, सर्वेषां स्वानुरूपचरणसाधनञ्चेति, साधनसमर्थः, चरगतिभक्षणयोरिति धातोः । पवित्रं लिङ्गं, पवित्रशब्दस्य लिङ्गवाचित्वे प्रमाणस्योक्तत्वात्, विततं सर्वैर्धृतत्वेन विस्तीर्णं पुराणं पुरातनं अनादी-त्यर्थः । तेन पूतः येन धृतेन लिङ्गेन पूतः सन् दुष्कृतानि तरति तेन पापनिवर्तनशक्तिमता अनेन पवित्रेण,

पवित्रशब्दस्य द्विरुक्तिरादरार्था । पूता वयमपि अरातिं शत्रुं पाप्मानम् अतितरेम पापशून्या भवेम इति प्रार्थनम् । पापनिवृत्तिरूपफलमुक्त्वा निरतिशयसुखफलकत्वमाह **लोकस्येति** । कैलासलोकस्य द्वारवत् द्वारं साधनमित्यर्थः, अर्चिष्मत् दिव्यतेजःपुञ्जवत् ज्योतिष्मत् निरतिशयनिरावारणविज्ञानवत् । अत्रायं पुरुषः स्वयंज्योतिः इत्यादौ ज्ञाने ज्योतिःशब्दप्रयोगदर्शनात् । भ्राजमानं स्वयं देदीप्यमानं महस्वत् सकलपापनिवर्तकशक्तियुक्तम् । अत्र तस्य मोक्षसाधनीभूततत्त्वज्ञानस्य धाराः प्रवाहान् बहुधा नानाप्रकारान् दोहमानं चरणं चरणदेवतासंज्ञकं पवित्रं लिङ्गं नो अस्मान् लोके परमात्मनि 'एतमेव प्रव्राजिनो लोकमिच्छन्ति' इति श्रुतेः, तत्र सुधितान् प्राप्तान् आत्मारामान् शक्तानिति यावत् । दधातु करोतु, प्रार्थनायां लोट्, पापनिवृत्तिकामः कैलासादिलोकप्राप्तिकामो मोक्षकामो वा लिङ्गं बिभृयात् तप्तलिङ्गमुद्रां[1] बिभृयादिति निष्कृष्टोऽर्थः ।

एवं "यत्ते पवित्रमर्चिष्यग्ने विततमन्तरे"त्यादयः पवित्रपदयुक्ताः ये मन्त्राः तेऽपि तत्परतया व्याख्येया इति ।

तन्न । विनियोजकस्मृत्यनुसारेण उपबृंहणस्मृत्यनुसारेण वा श्रुत्यर्थस्य वर्णनीयत्वात्, अन्यथा अतिप्रसङ्गात् । पवित्रश्रुतेः सुदर्शनधारणपरत्व इव तप्तलिङ्गमुद्राधारणपरत्वेऽनन्यथासिद्धस्य विनियोजकस्य उपबृंहणस्य वाऽदर्शनात् । ब्रह्मेति लिङ्गमाख्यातमित्यादेः त्वदुदाहृतोपबृंहणस्य च तस्याः सुदर्शनपरत्वाविघातित्वात् । तथाहि ब्रह्मेतिशब्दादेव लिङ्गं भगवद्धर्मभूतं सुदर्शनमाख्यातम् । आकाशस्तल्लिङ्गादित्यादौ धर्मेऽपि लिङ्गशब्दप्रयोगात् । ब्रह्मणः एवम्भूतसुदर्शनस्येश्वरो नारायणः पतिः नियन्ता असङ्कुचितैश्वर्यस्यान्यत्रासम्भवात् । पतिं विश्वस्यात्मेश्वरमिति, रूपाधीश्वरत्वं तु वासुदेवे प्रतिष्ठितमित्यादिश्रुतिस्मृतिभ्यः, तत्पवित्रं सुदर्शनं व्याख्यातं हि प्रसिद्धम् । तत्सम्पर्कात् सुदर्शनसम्पर्कात् तनुः शुचिरिति "पवित्रं ते विततं ब्रह्मणस्पते" इति ऋगाहेति योजनात् । तस्मात् यस्मात् तत्सम्पर्कात् तनुः शुचिरिति ऋगाह तस्मादित्यर्थः । लिङ्गाख्यं चिह्नाख्यं शैवं शिवं मङ्गलं, स्वार्थिकोऽण् श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभमित्यभिधानात् । शिवस्य नारायणस्य इदमिति वा शैवं शाश्वतं शिवमच्युतमित्यादौ नारायणेऽपि शिवशब्दप्रयोगदर्शनात् । तेन विष्णुचक्रेण अतप्ततनूः आमः सः विशेषाज्ञ इत्यर्थः । दीक्षया तापादिपञ्चसंस्काररूपया सहितोऽधिकारी भगवच्चक्रादिचिह्नं सारूप्यमिति यावत् आप्नुयात् प्राप्नोतीति । यदि लिङ्गशब्दोऽत्र शिवलिङ्गपरः स्यात् तदा उपबृंहणानुसारेण तप्तलिङ्गधारणं श्रुतिविहितमिति तप्तलिङ्गं वैदिकैर्धार्यं स्यात् । न हि वैदिकेषु केनापि तद्धार्यते । न च तत्र व्यवस्थापकं दृश्यते येन पवित्रश्रुतिरुपबृंहणानुसारेण वैदिकं तदितरद्वा अधिकृत्य तत्परा स्यात् ।

१. वा

यद्यपि प्रकरणार्थपर्यालोचनायां चरणशब्दस्य न सुदर्शनाभिधायकत्वम् । तथाहि— देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् इत्युपक्रम्य तं तपोऽब्रवीत् तं श्रद्धाऽब्रवीत्, तत्सत्यमब्रवीत्, तं मनोऽब्रवीत्, इत्यादिवाक्यसमुदायेन चातुर्होत्रप्रधानाङ्गभूता अपव्याख्याः पञ्चेष्टीः आधाय ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः अपाया अनुविकयो नाम तपः प्रथमं रक्षति श्रद्धा द्वितीयं सत्यं तृतीयं मनश्चतुर्थं चरणं पञ्चमी इत्युक्त्वा कामचारोऽस्य स्वर्गे लोके भवति इत्युपसंहृतम् । तत्र मनसोऽप्रायात्[1] ? अतस्तद्वदिन्द्रियमेव चरणशब्देन गृह्यते । नान्यदिति "विशये[2] प्रायदर्शनात् "जै.सू. अ. २, पा. ३, सू. १६. अधि. ६ इत्यत्र प्रायदर्शनस्यैव नियामकत्वोक्तेः । तथा चरणं पञ्चमीति ब्राह्मणवाक्योपात्तं चरणमेव चरणं पवित्रमिति मन्त्राभ्यामधीयते । मन्त्रब्राह्मणयोरैकार्थ्यात् । किञ्च तत्प्रकरण एव चरणदेवतायोगे कृते सत्यं चरणं भविष्यतीति प्रजापतिचरणस्य सत्यत्वरूपं फलं प्रतिपाद्यते । तद्यागे कृते सत्यं चरणमभवदिति तस्य चरणसत्यत्वरूपं फलं जातमिति परकृतिन्यायेनोक्त्वा प्ररोचनया तद्यष्टुः सत्यं चरणं भवतीति प्रतिपादितम् । तच्चरणशब्दस्य सुदर्शनपरत्वे अनुपपन्नम् । न हि सुदर्शनस्य सत्यत्वासत्यत्वे स्तः । नापि प्रजापतिसम्बन्धः । न वा यष्ट्रा सम्बन्धः येन चरणयागे कृते सत्यं चरणं भविष्यतीति चरणस्य सत्यत्वं प्रजापतिसम्बन्धः, तद्यष्टुः सत्यं चरणं फलं चोच्येत । चरणेन्द्रियाद्यर्थत्वे तु तत्सर्वं उपपद्यते । एतदेवाभिप्रेत्य भगवता भाष्यकारेण विद्यारण्यमुनीन्द्रेण चरण पवित्रमिति मन्त्रः एतत्परतया व्याख्यातः । एवं च सुदर्शनस्य चरणादिशब्दमुख्यार्थत्वेऽपि तस्य वाक्यार्थे समन्वयाभावात् तन्मुख्यार्थप्रतिकृतिलोहमुद्रा लक्षणीया । तथा च चरणेन्द्रियापेक्षया विलम्बितोपस्थितिकत्वान्न तयोर्मन्त्रयोः तदर्थप्रतिपत्तिर्युक्ता । चरत्यनेनेति चरणं पादेन्द्रियं करणे ल्युट्, पदङ्घ्रिश्चरणोऽस्त्रियामित्यभिधानात् तदर्थकत्वमेव युक्तमिति ।

तदपि न । पादेन्द्रियस्याचेतनतया तं चरणमब्रवीदित्यादिवक्तृत्वादिधर्माणां तत्रायोगेन तत्परत्वायोगात् । पादेन्द्रियाधिष्ठातृदेवतायाः तद्योगेऽपि तस्य चरणेष्टिदेवतोपस्थापकत्वात्, विनियोजकप्रमाणानुसारेण चरणादिशब्दस्य लक्षणया विष्णुचक्रप्रतिकृतिलोहादिमुद्रोपस्थापकत्वस्यापि वक्तव्यत्वात् । चरणे[3]देवताप्रकाशकत्वे एव मन्त्रब्राह्मणयोरैकार्थ्यस्य वक्तव्यतया सुदर्शनप्रतिकृतिमुद्रोपस्थापकत्वे तस्यावक्तव्यतया च तत्र वक्तृत्वादिधर्मानुपपत्तेः ।

एतेन चरणश्रुतेः तप्तमुद्राधारणपरत्वे येन पूत इत्यत्र येनाङ्कितेन धृतेन वेति पदाध्याहारप्रसङ्गः । न च अतप्ततनूरित्यादिश्रुत्यन्तरानुसारात् तथाध्याहारः । अन्यथा येन पूत इत्यनयोरनन्यथापत्तेरिति

१. ऽपाठात् इति भाव्यमिति भाति, २. विशये 'वत्समालभेत' इत्यनेन यागविधिरुपसंस्कारमात्रविधिरिति संशये दोहादिसंस्कारप्रायदर्शनात् संस्कार एव वत्सालंभः । (भाट्टसंग्रहः पुटं ६४), ३. चरणदेवता.

वाच्यम् । यागस्यैव[1] प्रकृतत्वेन इष्टेनेत्यस्यैवाध्याहारेणातिप्रसङ्गादेवाप्रकृतधारणाध्याहारे प्रमाणाभावात् । अन्यथा अनङ्कितेन अधृतेनेत्यस्यापि अध्याहारसम्भवेनातिप्रसङ्गात् । वस्तुतस्तु येन पूत इत्यस्य चरणदेवतास्तुतित्वात् तस्याश्च अविद्यमानगुणत्वेनैवोपपत्तेः नैकान्ततः पापनिवर्तकत्वम् । येनातिप्रसङ्गभङ्गार्थं पदान्तरमध्याह्रियेत इति निरस्तम् ।

चरणेष्टिवत् सुदर्शनधारणस्याप्रकृतत्वेऽपि तद्विधायकश्रुत्यन्तरबलात् विनियोजकप्रमाणबलाच्च अध्याहारेण तत्र यागप्रत्यायकत्ववत् तत्प्रत्यायकस्यापि वक्तव्यत्वात् । अन्यथा वाक्यापर्यवसानात् । किञ्च तत्रैव स्तुतेः अविद्यमानगुणेनाप्युपपत्तिः, यत्रार्थस्य विद्यमानत्वे बाधकमस्ति । न हि तप्तचक्रधारणस्य तथाविधेष्टेर्वा पापनिवर्तकत्वे बाधकं दृश्यते, तयोर्धर्मत्वात् । धर्मस्य च पापनिवर्तकत्वस्वाभाव्यात् धर्मेण पापमपनुदति इत्यादिश्रुतेः इति दिक् ।

यदत्र केनचित्प्रलपितं पवित्रश्रुतिः तप्तमुद्राधारणनिषेधपरैव । तथाहि ब्रह्मणस्पते ब्राह्मणोत्तम ! त्वं च विहिताशेषस्वाचारकरणेन निन्दितपरित्यागेन च यद्यपि—

**"शङ्खचक्राद्यङ्कनं च नृत्तगीतादिकं तथा ।**
**एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥" इति ।**

द्विजातिमात्रं प्रति तप्तमुद्राधारणनिषेधात् ब्रह्मन्नित्येव वक्तुमुचितम् । तथापि तत्र पतितद्विजाधिकारस्य स्मृत्यादिसिद्धत्वात् तथोक्तम् । तं प्राहुः— स्वतन्त्रोऽसि । अनेन परप्रोचनयाऽपि न ते निषिद्धकर्मणि प्रवृत्तिरुचितेत्युक्तम् । पवित्रं पवित्राणि पूतानि सुपां सुलुगित्यनुशासनात्, विश्वतो गात्राणि करचरणानि[2] सर्वाङ्गानि विस्तीर्णं यथा भवति तथा पर्येषि बिभर्षि धारयसि । तदङ्गानां पवित्रत्वं च "यावतीर्वै देवतास्तास्सर्वाः वेदविदि ब्राह्मणे वसन्ति" इति श्रुतेः, "ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवसमाश्रया" इत्यादिपुराणाच्च सकलदेवाधारत्वात् । जातकर्मादिसंस्कारवत्त्वाच्चेति द्रष्टव्यम् । तस्मात् त्वया तप्तमुद्रा न धार्या इति अभिप्रेत्य परमकारुणिकी श्रुतिराह अतप्तेति[3] आय विष्णवे तप्तातनुर्येन सः तथोक्तः । अत एवामः अपक्कान्तःकरणः तत्प्रसिद्धं पदं नाश्नुते न भजते । परैरपि असत्यं विद्धि संसारमित्यादिवाक्यानां अ इति प्रोच्यते विष्णुः तत्र सत्यमिदं जगत् इत्यर्थकरणात् । येन विष्णुरूपेण चक्रेण तप्ता तनुर्यस्य सः तथोक्त इति वा विग्रहः । न केवलं तप्ताङ्गानामिष्टाभावमात्रमनिष्टमप्यस्तीत्याह शृतासः । शृतं पाकं आज्जसेरसुगिति जसोऽसुगागमः । तप्तमुद्रासन्तापं वहन्तः शरीरे धारयन्तः समाशत अश्नुवन्ति अर्थात् पाक एव कर्मत्वेन सम्बध्यते । स च योग्यत्वात् कुम्भीपाकादिरूपः । यद्वा

१. योगस्यैव, २. करचरणादि, ३. अस्य.

अतप्तेति । तप संतापे इत्यस्य लुङि आत्मनेपदं प्रथमपुरुषैकवचनं छान्दसं एकपदत्वाधायकं, भावार्थे तदनुसरणात् । वस्तुतस्तु अनुव्यचलत् इत्यादाविव सहसुपेत्यत्र सहेति योगविभागात् समासः, राजदन्तादित्वात् परनिपातः । अस्तु वा द्वैपद्यं तथाप्यदोषः । तदुक्तं महाभाष्ये 'न लक्षणं पदकाराननुवर्तते । पदकारैर्नाम लक्षणमनुवर्त्यम्' इति । यद्यपि ऋग्वेदे अस्मिन्मन्त्रे ऐकपद्येनैव वेदं पठन्ति तथापि यजुर्वेदारण्यकेऽप्येतन्मन्त्रस्य पाठात् तत्र पदकाराणामप्रवृत्तेः व्याकरणाविरुद्धपदकरणस्योचितत्वात्, अनेकपदत्वमेव तेन समर्थितम् । वस्तुतस्तु तनूः अङ्गानि नातप्तं न दग्धवान् यः स आमोऽतप्त एव ब्राह्मणोत्तमः तत्पदमश्नुते । एवं अतप्तानां फलमुक्त्वा तप्ताङ्गानामनिष्टमाह **शृतास इति** । एवं च ब्राह्मणोत्तमैः तप्तमुद्रा न धार्येति फलितोऽर्थः ।

एवं चमूषच्छ्येन इति श्रुतिरपि तप्तचक्रादिमुद्राधारणनिषेधपरा । तत्र तुरीयं धाम सचमानः अत एव चमूषच्छ्येनः शकुनो भूत्वा यो द्रप्सो गोविन्दुरायुधानि बिभ्रत् वहन्ति । स महिषो भूत्वा अपामूर्मिं समुद्रं विवक्ति इत्यन्वयः । तुरीयं "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ" इत्युक्तेः तेजस्त्रयापेक्षया तुरीयं धाम परं ब्रह्म सचमानः षच समवाये इत्यस्माद्धातोः ताच्छील्ये चानश् प्रत्ययः । तथाच पुनः पुनः अनादिसम्पत्तिवासनया परमात्मध्यानशील इत्यर्थः । अत एव चमूषत् चम्वोरोदस्योर्निषदति इति चमूषत् चम्वौ रोदसी इति वेदनिघण्टुः (अ. ३.३०) तथाच परमात्मध्यानवशात् इहलोकपरलोकयोर्निषीदतीत्यर्थः । श्येनः शंसनीयं गच्छति (निरुक्तं अ. ४.२४) इति निरुक्तम् । तत्र तत्र प्रशस्तपदं गच्छन्नित्यर्थः । शकुनः[1] शक्नोत्यात्मानमुन्नेतुम् इति निरुक्तम् । सांसारिकलोकेषु निवसन्नपि तत्रत्यानि सुखानि अनुभवन् आत्मानं संसारादुन्नेतुं समर्थ इत्यर्थः । भिभृत्वा भर्ता । विपूर्वात् डुभृञ्धारणपोषणयोः इत्यस्माद्धातोः अन्येभ्योऽपि दृश्यन्ते (सू. ३-२-७५) इति क्वनिप् प्रत्ययात् । न केवलमीश्वरध्यानेन आत्मानमुत्तारयति किन्तु स्वसम्बन्धिनोऽपीति भावः । यो द्रप्सः परमात्मांशभूतः, ममैवांशो जीवलोके इत्यादिस्मृतेः, गोविन्दुः गां विन्दति प्राप्नोतीति गोविन्दः । गवादिषु विन्देः[2] संज्ञायामिति शप्रत्ययः । शे मुचदीनामिति मुचादित्वान्नुमागमः । ऋकारान्तः छान्दसः । तस्यायुधानि चक्रादिपञ्चायुधानि बिभ्रत् "लक्षणहेत्वोः क्रियायाः (३-२-१२६)" इति शतृप्रत्ययः । तथाच धारणक्रिया वक्ष्यमाणसंसारपतनक्रियायाः हेतुरित्यर्थः । स महिषो भूत्वा महिषादितिर्यग्योनिं गत्वा, महिषशब्दोऽत्र निकृष्टयोन्युपलक्षकः । अपामूर्मिं अपां विकारभूतं समुद्रं संसारसागरमिति यावत् । संसारस्य समुद्रत्वनिरूपणेन दुस्तरत्वदुःखहेतुत्वादिकं विवक्षितम् ।

१. शकुनिः शक्नोत्युन्नेतुमात्मानं निरुक्तम् अ. ९-३.

२. सू. २१०० अनुपसर्गाल्लिम्प ३-१-१३८ वार्तिक संख्या १९६९.

विवक्ति सेवते । विवक्ति शि(सि)षक्ति जुषते इत्यनुक्रमणिकायां विवक्तिः सेवार्थः उक्तः । तथाच संसारसागरे मग्नो भवतीत्यर्थः । एवं च परमेश्वरध्यानेन अवाप्तसकलकामोऽपि वेदनिषिद्धार्थानुष्ठानेन तिर्यग्योनिं गत्वा संसारे मग्नो भवतीत्युक्त्या केनापि पुरुषेण तप्तचक्रादिमुद्रा न धारणीयेति निषेधः फलतीति ।

तन्न । अतप्ततनूरित्यत्र आय विष्णवे एव विष्णुरूपेण चक्रेण च तप्ता तनुर्येन यस्येति वा स तथोक्त इति व्याख्याने, अग्निहोत्रं जुहुयादित्यादावपि अग्निं हन्तीति अग्निहा श्वा, तस्य उत्रं मांसं जुहुयात् हुदानादनयोः इत्यस्माद्धातोः, भक्षयेदिति श्वमांसभक्षणविधिपरतया व्याख्यानसम्भवेन न तथा व्याख्या (युक्ता) अतिप्रसक्तत्वात् । असत्यादिशब्दस्य अ इति ब्रह्मेतिश्रुत्या अ इति प्रोच्यते विष्णुः इत्यादिस्मृत्या च तथा व्याख्यातत्वेन(ऽपि)तस्यानतिप्रसञ्जकत्वेन वैषम्यात् । न हि त्वद्रीत्या पवित्रश्रुतिव्याख्याने तादृशं प्रमाणं दृश्यते । शङ्खचक्राद्यङ्कनं चेत्यादि निषेधस्मृतीनां च उत्तरत्र गतिर्वक्ष्यते । किञ्च विनियोजकसनकादिस्मृत्यनुसारेण पवित्रादिश्रुतेः तप्तचक्रादिधारणविधिपरत्वमेव वक्तव्यमित्युक्तम् ।

यत्तु अतप्तेत्यत्र लुङात्मनेपदमाश्रितम् । तन्न । एकपदत्वेनैव सर्वैरधीयमानत्वात् । तैत्तिरीयारण्यके तद्वाक्यस्य पदाध्ययनाभावेऽपि एकत्र निर्णीतः शास्त्रार्थः (परत्रापि) इति न्यायेन बाधकाभावेन च तत्राप्यैकपद्याश्रयणस्यैव न्याय्यत्वात् ।

यदपि सचमान इत्यस्य तुरीयधाम्ना अन्वयः, विवक्तेश्चोर्मिणा अन्वय इत्युक्तम् । तदपि न । व्यवहितान्वयदोषप्रसङ्गात् । सन्निहिताकाङ्क्षितान्वये बाधके सत्येव व्यवहितान्वयस्याश्रयणीयत्वात् । न हि प्रकृते तथान्वये बाधकमस्ति । प्रत्युत विनियोजकस्मृत्युपबृंहणादिकं साधकं दृश्यते । अन्यथा परीक्ष्य लोकानित्यादेरपि योऽक्षरं ब्रह्म विज्ञानार्थं गुरुमभिगच्छेत्स निर्वेदमायात् । सुकृतो लोकः कर्मणैव तस्मात्तादृशाधिकारिणे ब्रह्मविद्यां न ब्रूयादिति योजनासम्भवेन वेदान्तमार्गः सर्वोऽप्युन्मूलितः स्यात् । तस्माद्यत्किञ्चिदेतत् । तथाच गोविन्दायुधधारणात् पूर्वमपामूर्मिं सचमानो गोविन्दायुधानि बिभ्रत् तुरीयं धाम परं ब्रह्म विवक्तीत्येवान्वय इति तन्न[1] ।

तथापि चरणादिषु तप्तमुद्राधारणं न केनापि प्रकारेण विधातुं शक्यम् । चरणादिशब्दानां सुदर्शनप्रत्यायकत्वाभावात् । तथाहि— किं चरणादिशब्दानां सुदर्शने शक्तिरुत लक्षणा गौणी वा । नान्त्यौ । शक्तिप्रतिपन्नार्थेनैव मन्त्रार्थोपपत्तौ सुदर्शनतात्पर्यकल्पनायोगात् । शक्तिग्राहकस्य वृद्ध-

१. पूर्वोक्तमसाधु.

व्यवहारस्याभावात् । न हि चरणपवित्रादिशब्दाः सुदर्शने प्रयुज्यमानाः उपलभ्यन्ते । न च पुवः संज्ञायां कर्तरि चर्षिदेवतयोरिति व्याकरणे देवतायां पवित्रशब्दो व्युत्पादितः सुदर्शनस्यापि देवतात्वात्, तथा चरत्यनेनेति चरतिधातोः करणार्थे ल्युड् विहितः । तथाच व्याकरणमेव शक्तिग्राहकमिति वाच्यम् । तस्य शब्दसाधुत्वादिप्रयोजनतया एकान्ततः शक्तिग्राहकत्वाभावात् । न हि संज्ञा[1]निमित्तकेन प्रत्ययाभिहितकरणत्वं वा सुदर्शनस्यैवेति वृद्धव्यवहारनिरपेक्षेण व्याकरणेन नियन्तुं शक्यम् । अतस्तस्याप्यपेक्षायां तस्यैव स्वतन्त्रस्य शक्तिग्राहकत्वमस्तु । सोऽपि नास्तीत्युक्तम् । न च कोशसहकारेण व्याकरणस्य तद्ग्राहकत्वम् । तथाविधकोशवचनानामनुपलम्भात् ।

**सुदर्शने च दर्भे च पवित्रं शणसूत्रके ।**
**सुदर्शनं सहस्रारं पवित्रं चरणं पविः ॥**

इत्यभिधानं च कल्पितमेव । अकल्पितत्वेऽपि तेषां शक्तिग्राहकत्वाभावात् । न हि संज्ञानिमित्तकं अत्र प्रत्ययाभिहितकरणत्वं वा सुदर्शनस्यैवेति वृद्धव्यवहारनिरपेक्षेण व्याकरणेन (निर्णेतुं शक्यते) कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः । द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः । बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः इति गौणलाक्षणिकेष्वपि अभिधानदर्शनात् । एतेन पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् । पर्यायवाचका ह्येते चक्रस्य परमात्मनः इति श्रीशास्त्रबलात् पवित्रं चरणं नेमी रथचक्रं सुदर्शनम् । सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् । नामानि विष्णुचक्रस्य पर्यायेण निबोध मे । इति पाद्मवचनबलात् चरणादिशब्दानां सुदर्शने शक्तिग्रह इति निरस्तम् । पुराणादीनामपि एकान्तेन शक्तिग्रहोद्देशेन अप्रवृत्तत्वात् । तथा च पवित्रचरणादिशब्दानां दर्भग्रन्थिचरणेन्द्रियादावेव वृद्धव्यवहारादिसत्त्वात् तेषां तदर्थकत्वमेव युक्तम् । न तु सुदर्शनार्थकत्वमिति ।

मैवम् ।

**विष्णोर्नुकेतिमन्त्रेण तापयित्वा सुदर्शनम् ।**
**चरणं पवित्रमिति द्वाभ्यामेवाभिमन्त्रयेत् ॥**

**पवित्रं विततमिति मुद्रयेद्दक्षिणे भुजे ।**
**ज्ञानं वैराग्यमास्तिक्यं श्रद्धा चास्याभिवर्धते ॥**

इति सनकेन महर्षिणा चरणपवित्रश्रुत्योश्चक्रादिधारणे विनियुक्तत्वेन तयोरदृष्टार्थत्वपरिहाराय यथाकथञ्चित्तत्परत्वस्य वक्तव्यत्वादित्युक्तत्वात् । न च सनकस्मृतेः प्रसिद्धस्मृतिष्वपरिगणनं दोषः ।

---

१. संज्ञात्वादि.

तस्याः प्रधानस्मृतिष्वपरिगणनेऽपि उपस्मृतिषु परिगणनात् । अत एवोपस्मृतिषु परिगणितानां शातातपलिखितशौनकादिस्मृतिवचनानां तत्र तत्र उदाहरणं दृश्यते । किञ्च विरोधाधिकरणे औदुम्बरी सर्वा वेष्टयितव्या इति शबरस्वामिना स्मृतित्वेनोदाहृतवाक्यस्य प्रसिद्धस्मृतिष्वनुपलम्भेन अस्मृतित्वप्रसङ्गः । किञ्च वार्तिककृता

**सर्वा वेष्टयितव्येति तर्ह्येवं सूत्रकृद्वचः ।**
**परिशब्देऽपि यस्तत्र सर्वतो वेष्टनं वदेत् ॥**

इत्यादिना भाष्यभङ्गं कृतवता तादृशस्मृतिनिराकरणेन तदस्मृतित्वमिष्टमिति वाच्यम् । तथापि वार्तिकवृत्तौ[1] औदुम्बरी सर्वा वेष्टयितव्येति स्मृतेः शाट्यायनिब्राह्मणगतश्रुतिमूलत्वं दर्शयितुमुदाहृतस्यौदुम्बरीपूजाप्रकरणे च शाट्यायनिनां 'तामूर्ध्वदिशेनेत्युभयत्र वाससं दर्शयति' इति जैमिनिकृतछन्दोऽस्यानुपदाख्यसूत्रस्थवाक्यस्यादर्शनादप्रामाण्यापत्तेः ।

यत्तु व्याकरणकोशपुराणादीनां साधुशब्दव्याख्यानाद्यर्थत्वेन न एकान्ततः शक्तिग्राहकत्वमिति । तन्न । वर्तमाने लट् । अनद्यतने लङ् । परोक्षे लिट् । तस्यापत्यम् । तत्र जातः । तत्र भवः । तत्र विदितः । तेन क्रीतम् । इन्द्रो मरुत्वान् मघवा । लक्ष्मीवान् लक्ष्मणः श्रीलः ।

**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥**
**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**बृहत्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते ॥**
**आपो नारा इति प्रोक्ताः आपो वै नरसूनवः ।**
**ता यदस्यायनं पूर्वं तस्मान्नारायणः स्मृतः ॥**
**क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।**
**आवां तवाङ्गसम्भूतौ तस्मात् केशवनामवान् ॥**

इत्यादीनामपि तत्रार्थे समुदायावयवशक्तिग्राहकत्वस्य सम्प्रतिपत्तेः, अन्यथा अर्थविशेषेषु तत्तच्छब्दव्युत्पादकानां उन्मत्तप्रलापसमत्वप्रसङ्गः । आग्नेयोऽष्टाकपालः, ऐन्द्राग्नमेकादशकपालं, वैष्णवं त्रिकपालम्, इत्यादि वेदार्थनिर्णये कर्तव्ये व्याकरणार्थविशेषोपस्थितत्वेनैवाङ्गत्वस्य वक्तव्यतया शक्तिग्राहकव्युत्पत्तेरवश्याभ्युपेयत्वाच्च । अनादिवृद्धव्यवहारस्य शक्तिग्राहकत्वेऽपि व्याकरणादीनां शक्तिग्रहोपायत्वस्य सर्वसम्प्रतिपत्तेश्च । यथाहुः—

१. वार्तिककृता.

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥** इति ।

किञ्च प्रवृत्तिनिवृत्तिलक्षणवृद्धव्यवहारस्य सार्वत्रिकत्वेन यत्रैव तदसम्भवः तत्रैव व्याकरणाद्यन्यतमस्य शक्तिग्राहकत्वमकामेनाप्युपेयम् । अन्यथा इदं पदमस्य वाचकमित्याप्तवाक्येन शृङ्गग्राहिकया शक्तिग्रहाभावप्रसङ्गः । न चैवमनुभवविरोधः । न हि वर्तमाने लडित्याद्युदाहृतप्रमाणानामुदाहृताप्तवाक्यतोऽर्थकृतं कमपि विशेषं पश्यामः ।

यद्यपि पुवः संज्ञायां, कर्तरि चार्षिदेवतयोरिति पवित्रादिशब्दानां देवतासामान्य एव शक्तिः सिद्ध्यति । तथाप्युदाहृतसनकादिस्मृत्यनुसारेण सुदर्शनरूपदेवताविशेषशक्तत्वपर्यवसानमविरुद्धम् । एतावांस्तु विशेषः । यदा चरणश्रुतेश्चरणेष्टिपरत्वं तदा तद्गतचरणादिशब्दानां देवतात्वसामान्येन देवताविशेषोपस्थापकत्वम् । यदा तु सुदर्शनधारणपरत्वं तदा तेषां देवतात्वसामान्येन सुदर्शनरूपदेवताविशेषपरत्वमिति ।

यत्तु चरणादिशब्दानां सुदर्शने शक्तिग्राहकत्वाय (त्वे) नोदाहृतमभिधानं कल्पत इत्युक्तम् । तन्न । सर्वेणापि स्वस्वानभिमतार्थसाधकप्रमाणानां कल्पितत्वस्य सुवचन(न)त्वादिति । तस्माच्चरणादिशब्दानां तप्तचक्रादिधारणपरत्वमव्याहतप्रसरमिति स्थितम् । अत्राह—

**विलुप्तविधिशक्तित्वात् सिद्धत्वद्योतनादिभिः ।**
**प्राप्तत्वाच्चान्यतस्तेषां विधिशब्दाद्यभावतः ॥**

**ब्राह्मणैर्विनियुक्तत्वात् करणत्वेन कर्मणाम् ।**
**मन्त्रत्वादपि नैते स्युस्तप्तमुद्राविधायकाः ॥**

**विधायकत्वं हि मन्त्राणां तादृशशक्तिमत्त्वम् ।**

(तच्च न सम्भवति) तद्विरुद्धार्थस्यैव प्रतीतेः । तथाहि— प्रसिद्धास्तावत् विधिशक्तिविरोधायकाश्चतुर्धा । क्वचित्सिद्धत्वद्योतनाय, यथा देवांश्च याभिर्यजते ददाति च इत्यादौ । क्वचिच्च वक्त्राभिमुख्यप्रतीतेः । यथा अहे बुध्निय मन्त्रं गोपाय इत्यादौ । क्वचित्त्वात्मनि नियोगात् । यथा बर्हिर्देवसदनं दामीत्यादौ । क्वचित्तु निमित्ताभिधानात् । यथा यदि नोपाहरेयुः इत्यादौ । प्रकृते च येन पूत इत्यादौ सिद्धत्वद्योतनात्, किञ्च सर्वापवादकस्याप्राप्त्यर्थस्य विद्यमानत्वात् । न च विधिशक्तिकुत्सनम् अन्यथा यदाग्नेयोऽष्टाकपालः उपरि हि देवेभ्यो धारयति इत्यादौ का गतिरिति वाच्यम् । प्रकृते

अप्राप्त्यर्थत्वाभावेन वैषम्यात् । तथाहि किं तप्तमुद्राधारणविधारणविधायकपञ्चरात्राद्यागमतदनुसारिपुराणवचसां प्रामाण्यमभ्युपगम्यते न वा । नाद्यः तद्वचनैरेव तद्धारणस्य प्राप्ततया अप्राप्तत्वाभावात् । न च पाञ्चरात्रादीनामेव प्रबलश्रुतिविहितार्थानुवादकत्वमिति युक्तम् । विधिविभक्तिमत्त्वात्, यच्छब्दानुपघाताच्च तेषामेव तद्विधायकत्वौचित्यात् । मन्त्राणां च तद्विहितार्थसाधकत्वेन[1] अन्यथासिद्धत्वात् । तत्र विधिविहितधारणादिधात्त्वर्थवाचकपदाभावाच्च । न हि धात्वर्थवाचकपदाभावे तदुपरक्ता भावनाः तत्प्रत्येतुं ईशते । तद्वाचकपदाभावेऽपि तेषां तत्स्मारकत्वस्य "कया नश्चित्र आभुवत्", "शंनो देवीरभिष्टय" इत्यादिमन्त्राणामिव विदुदाहृतविनियोजकबलेन यथाकथञ्चित् तदुपपादनीयत्वात् । न द्वितीयः । तत्प्रामाण्यानभ्युपगमे उदाहृतमन्त्राणां तप्तमुद्राविधायकत्वाभावप्रसङ्गात् । तद्बलेनैव तेषां विधायकत्वाभ्युपगमात् । किञ्च विधेयत्वाभिमतकर्मणि करणत्वेन पवित्रं ते इत्यादिमन्त्राणां वाचनिकनियोगस्य परेणाङ्गीकारात् कथं तेषां तप्तमुद्राधारणविधायकत्वम् । न हि तत्कर्मणि करणत्वेन विनियुक्तस्य तद्विधायकत्वमस्ति । व्रीह्यादौ तथाऽदर्शनात् । तदुक्तम्——

**यस्माद्व्रीह्यादिवन्मन्त्राः करणत्वेन कर्मणाम् ।**
**ब्राह्मणेन नियुज्यन्ते तद्वत्ते न विधायकाः ।।** इति ।

एतेन सर्वविधिवाक्यानां जपपारायणनैमित्तिकाध्ययनादिषु विनियुक्तत्वात्, भट्टमते अध्ययनसंस्कृतस्वाध्यायस्य अर्थज्ञाने नियोगात्, न च विनियुक्तत्वं विधायकपरत्वं विधायिनि इति निरस्तम् । अत्र सर्वत्रापि प्रकृतकर्मकारणतया वचनाद्विनियोगाभावेन वैषम्यात् । न हि वयं यत्र क्वचित् विनियुक्तस्य यत्किञ्चिद्विधायकत्वं निराकुर्मः । येन उक्तदोषः स्यात् । किन्तु स्वयं यत्र विनियुक्तं तद्विधायकत्वमेव नास्तीति । अत एव देवांश्च याभिर्यजते ददातीत्यस्य मन्त्रस्य अनूबन्ध्यापशुपुरोडाशेन निर्वाह्यदेविकाहविर्यागे, चरुद्रव्यगोदेवत्ययागे याज्यत्वेन वाचनिकविनियोगसद्भावेऽपि याभिरिति करणत्वेन अभिधानात् सामर्थ्याच्च कर्मतया अन्वयात् गोद्रव्यकयागदानविधानमविरुद्धमित्येकदेशिमतं दूषयित्वा मन्त्राधिकरणे भट्टपादैः स्वयं पृथगेव सिद्धान्तितम् । एतेन अस्तु वाचनिकविनियोगविधायकत्वयोर्विरोधः । तथापि विधायकस्य स्वस्वशक्त्यनुरोधेन स्मारकत्वे विरोधाभावात् लौकिक एवास्तु विनियोगः । अन्यथा वसन्ताय कपिञ्जलानालभेत इत्यत्र विधायकत्वमेव न स्यात् । पञ्चमाध्यायोक्तं विधायकस्य ब्राह्मणस्य स्वशक्तिविरोधेन स्मारकत्वमित्यपास्तम् । पूर्वोक्तरीत्या विधेयत्वाभिमतं तप्तचक्रादिमुद्राधारणस्य वसन्तदेवताककपिञ्जलयागवदप्रतीतेः कल्पकं प्रमाणान्तरमपेक्षणीयम् । तथा

१. स्मारकत्वेन

सति नैतस्य विधायकत्वं स्यात्। अन्यथा ऐन्द्र्यापि इन्द्रदेवताकयागविधायकत्वलिङ्गाच्च तस्य विनियोग इत्यपि कल्पना स्यादिति ॥

अत्रोच्यते— चरणादिश्रुतीनां विधिविभक्तिरहितत्वेऽपि न विधायकत्वक्षतिः । ब्रह्मविदाप्नोति परम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ब्रह्म वेद ब्रह्मैव भवति । तदा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् इत्यादिवच्चरणादिश्रुतीनां अप्रवृत्तप्रवर्तकत्वरूपविधायकत्वासम्भवेऽपि अज्ञातज्ञापकत्वलक्षणविधित्वमविरुद्धम् । किञ्च विभक्त्यापि इष्टसाधनत्वमुखेनैव प्रवर्तकत्वं वाच्यम् । न त्वेवमेव । तच्चरणादिश्रुतिष्वप्यविशिष्टम् इति तासां प्रवृत्तप्रवर्तकत्वमप्यविरुद्धमेव । न ह्यत्र फलं तृप्तिसाधनमित्यादिवाक्यं श्रुतवतां विधिविभक्तिराहित्यापराधेन तस्मात् तृप्तिरूपेष्टसाधनत्वज्ञानं न जायत इत्यस्ति । जातेन वा तस्मिन् तादृशाम्रफले न प्रवृत्तिरित्यस्ति, अनुभवविरोधात् । तथाच वाक्यानां प्रवर्तकत्वे इष्टसाधनत्वबोधकत्वमेव तन्त्रम्, लाघवात् । न तु विधिविभक्तिमत्त्वे सति तद्बोधकत्वं गौरवात् ।

ननु नेष्टसाधनत्वमात्रं विध्यर्थः । तथात्वे तक्षकचूडामण्याहरणादौ तृप्तिरूपेष्टसाधने विषसम्पृक्तान्नभोजनेऽगम्यागमनादौ च प्रवृत्तिप्रसङ्गात् । किञ्चैवं उद्भिदा यजेतेत्यादौ साधनत्वस्य लिङाभिहितत्वात् अनभिहिताधिकारविहिता तृतीया न स्यात् । किञ्चैवं तरति ब्रह्महत्यां योऽश्वमेधेन यजते इत्यर्थवादेनैव इष्टत्वस्योपख्यापनात् तत्र विधिप्रत्ययानुमानस्वीकारो न स्यात् । किन्तु कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धीष्टसाधनत्वमेव तदर्थः । एवं चरणं पवित्रमित्यादिश्रुतौ तादृशेष्टसाधनत्वोपख्यापकविधिविभक्तिरहितानां न प्रवर्तकत्वमुपपद्यत इति चेन्न । कृतिसाध्यत्वस्य कृत्युत्तरभविष्यत्त्वरूपान्वयव्यतिरेकगम्यत्वेन अन्यलभ्यतया इष्टसाधनत्वस्यैव अनन्यलभ्यत्वेन विध्यर्थत्वौचित्यात् स्वर्गादिसाधनत्वेन शास्त्रैकबोध्ये यागादौ बलवदनिष्टाननुबन्धित्वस्याप्रसक्ततया तदननुबन्धित्वांशे शक्तेरकल्प्यत्वात् । अन्यथा अप्रसक्तप्रतिषेधत्वप्रसङ्गात् । नह्य[१]त्यन्तपरमाप्तमात्रादिवाक्यवत् नित्यनिर्दोषत्वेन परमप्रमाणतया अवधारिते समीहितार्थप्रत्यायके श्रुतिवाक्ये बलवदनिष्टानुबन्धिसमीहितसाधनत्वबोधकत्वप्रसक्तिः सम्भवति येन सोऽप्यंशः विधिप्रत्ययेन बोधनीयः स्यात् । न च एवं कृत्यसाध्यं बलवदनिष्टानुबन्धि इदमिति ज्ञानदशायामपि प्रसक्तिप्रसङ्गः । तदभावस्य प्रतिबन्धकाभावत्वेन प्रवृत्तावुपयोगसत्त्वेऽपि तयोर्विधिशक्तिविषयत्वासिद्धेः । कृत्यसाध्यस्य बलवदनिष्टानुबन्धित्वज्ञानाभावदशायां तक्षकचूडामण्यादौ प्रवृत्तेरिष्टत्वाच्च । न चैवं उद्भिदेत्यादौ तृतीयानुपपत्तिः । लिङा करणत्वापरपर्यायसाधनत्वस्य अभिधानेऽपि तद्विशेषरूपकरणत्वस्य तथाऽनभिधानात् ।

१. न ह्यभ्रान्त.

तरतीत्यादौ विधिप्रत्ययानुमानस्वीकारस्तु न प्रवर्तकज्ञानार्थः । तस्यार्थवादादेव सिद्धेः । किन्तु तद्विषयत्वस्येष्टसाधनत्वस्य विधिनियतत्वेन व्यापकानुपलब्धिरूपबाधकनिरासार्थमिति न पूर्वतन्त्र-विरोधोऽपि । तदुक्तम्—

**कार्यता च न काचित्स्यादिष्टसाधनतां विना ॥** इति ।

अतः लिङाद्यर्थस्त्विष्टसाधनत्वमेव इति कर्मनिर्णयोक्तिः । तथाच प्रवर्तकस्येष्टसाधनत्वज्ञानस्य चरणं पवित्रमित्यादिमन्त्रत एव सम्भवात् विधिविभक्त्यभावेऽपि न काप्यनुपपत्तिरिति स्थितम् ।

यद्वा विधिवत्प्रयोजिकायाः अप्राप्तेः सत्त्वेन विधिविभक्तिः कल्प्यताम् । अत एव पूर्वतन्त्रे भट्टाचार्यैः विधिविभक्तिरहितानाम् उपांशुयाजमन्तरा यजति इत्यादीनां वचनानां नित्यपूर्वत्वादिति-न्यायेन पञ्चमलकारकल्पनया विधायकत्वं समर्थितम् । यत्र तु विधिविभक्तिश्रवणेऽपि नापूर्वता, विष्णुरुपांशु यष्टव्योऽजामित्वायेत्यादौ तत्र न विधिरित्यपि समर्थितम् । अत एव न तत्क्षेपिष्ठत्वादौ विधिप्रसङ्ग इति निरस्तम् ।

यद्यप्यत्र बिभृयाद् भर्तव्यमिति विधिपदं न कल्पयितुं युक्तम् । तयोः प्रकृतवाक्यार्थेनानन्वयात्, वाक्यस्यैव कल्प्यत्वेन तस्यैव तत्र प्रमाणत्वापत्त्या मन्त्रप्रामाण्योक्ते रिक्तत्वप्रसङ्गात् । तथापि भवेयुरिति विधिपदाध्याहारे श्रुता भवेयुरिति वाक्यार्थान्वयसम्भवेन न काप्यनुपपत्तिरिति ।

यत्तु पुराणादिश्रुतीनां यच्छब्दाद्युपहतत्वेन तद्रहितपञ्चरात्राद्यागमतदनुसारिपुराणवचनविहित-तप्तमुद्राधारणे अनुवादकत्वेन प्राप्तार्थत्वात् न विधायकत्वम् । अत एव लक्षणे मृताग्निहोत्रे 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्' इति श्रुते वाक्ये किमुदगग्रता विधीयते किं वा अनूद्यते इति सन्दिह्य यथोपवीतं विधेयमेवमुदग्रत्वं विधेयम्, अपूर्वत्वात्, यद्वृत्तयोगो लिङाद्यभावश्च यदाग्नेयादिवद्द्रष्टव्य इति उदक्त्वं चापूर्वत्वादिति सूत्रेण पूर्वपक्षयित्वा, नोदगग्रत्वस्य विधिः, किन्तु प्राप्तस्यानुवादः । कुतः प्राप्तिः । अग्रवन्ति प्रागग्राण्युदगग्राणि वा अपवर्गवन्ति । प्रागपवर्गाण्युदगपवर्गाणि इति स्मृतेः । सतो वा लिङ्गदर्शनमिति सूत्रेण सिद्धान्तितम् इत्युक्तम् ।"

तदयुक्तम्, तथा सति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादि-श्रुतीनामपि यत्नाभिमुख्यप्रतीत्या

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।**
**आत्मा च सततं ध्येयः**

इत्यादितद्विहितपुराणवचनविहितश्रवणाद्यनुवादकत्वापत्तेः । तथा त्रयो धर्मस्कन्धाः एतमेव प्रव्राजिनो लोकमिच्छन्तः व्रजन्तीत्यादिश्रुतीनां

**वनेषु तु विहृत्यैवं तृतीयं भागमायुषः ।**
**चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥**

इति मन्वादिस्मृतिविहितपारिव्राज्यानुवादकत्वापत्तेश्च । न च इष्टापत्तिः । श्रोतव्य इत्यादीनां विधायकत्वस्य विवरणकारादिभिरङ्गीकारात् । त्रयो धर्मस्कन्धाः इत्यादीनां विधिविभक्त्यभावेऽपि विधिर्वा धारणवत् इति सूत्रे शाङ्करभाष्ये विधायकत्वाभ्युपगमाच्च । तत्र हि भाष्यम् 'विधिर्वाऽयमाश्रमान्तरस्य न परामर्शमात्रम् । ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत । प्रतीयते चात्रैकवाक्यता । पुण्यलोकफलाः त्रयो धर्मस्कन्धाः ब्रह्मसंस्थता त्वमृतत्वफलेति । सत्यमेतत् । सतीमपि त्वेतामेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वात् । विध्यन्तरस्यादर्शनात्, विशिष्टाच्चाश्रमान्तरप्रत्ययात् । गुणवादकल्पनया एकवाक्यत्वानुपपत्तेः, .... धारणवत् । यथा 'अधस्तात्समिधं धारयत् अनुद्रवेत् उपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामपि अधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणम्, अपूर्वत्वात् । तथाचोक्तं शेषलक्षणे 'विधिस्तु[1] धारणेऽपूर्वत्वादिति' । तद्वदिहाप्याश्रमपरामर्शश्रुतिर्विधिरेवेति कल्प्यत इति । अत एव स्मृत्यधिकरणे अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः । शिखाकर्म कर्तव्यम् । प्रपा प्रवर्तयितव्या, तटाकः खनितव्यः इत्यादिस्मृतीनां यं जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीं, तस्माच्छ्रेयांसं पापीयान् पश्चादन्वेति, यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव, इति श्रुतिरेव तत्तत्कर्मकर्तव्यतायां प्रमाणत्वेनोदाहृता । तद्वचनव्याख्यातृभिः यत्र बाणा इति श्रुतेरेव तत्रोदाहृतत्वात् अत एव माधवीये यद्यप्ययमर्थवादः तथापि मानान्तरविरोधाभावात् तत्स्वार्थे प्रमाणम् । विरोधिवचनानां मातृसपिण्डादिविषयत्वस्य वर्णितत्वात् । तस्मादविरुद्धार्थवादेन अनूदितत्वात् उपरिधारणवद्विधिः कल्प्यत[2] इत्यादिना ।

तृप्तां जहुर्मातुलस्येव योषां भागस्ते पैतृष्वसेयीमिवेति, तस्मादसमानादेव पुरुषा ... इव जायते । उत तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै इति च श्रुत्योः मन्त्रतया अर्थवादतया च मातुलसुताविवाहकरणे प्रमाणत्वमित्याशङ्क्य उपरिधारणविधिवत् अपूर्वार्थत्वेन मातुलसुतां विवहेत् इति विधिः कल्प्यते इत्युक्तम् । एतेन मृताग्निहोत्रवाक्यं व्याख्यातम् । तत्र दक्षिणाग्रताविध्यनुसारेण उदगग्रत्वस्यानुवाद्यताभ्युपगमात् । अन्यथा वाक्यभेदप्रसङ्गात्, स्मृतेरुदगग्रत्वप्रापकत्वोक्तेः तन्मूलश्रुतिप्रापक-

---

१. पू.मी. अ. ३, पा. ४, अधि. ५, सू. १५. २. कल्प्यः.

त्वाभिप्रायकत्वाच्च । एतेन विधेयत्वाभिमतकर्मणि करणत्वेन विहिते व्रीह्यादौ विहिते विधेयत्वादर्शनादिति निरस्तम् । विधेयत्वाभिमतकर्मणि लिङ्गेन करणत्वेन विनियुक्तस्य समिधो यजतीत्यादिवाक्यस्य विधायकत्ववत् वाचनिकवृत्त्या विधेयत्वाभिमतकर्मणि करणत्वेन विनियुक्तस्य पवित्रं ते इत्यादिवाक्यस्य मन्त्रत्वेऽपि विधायकत्वोपपत्तेः । न हि वाचनिकवृत्त्या विनियुक्तस्य मन्त्रस्य विधायकत्वं, लिङ्गेन विनियुक्तस्य ब्राह्मणवाक्यस्य तु विधायकत्वमित्यत्र राज्ञामाज्ञास्ति । विधायकत्वाविधायकत्वयोः अन्यस्यैव प्रयोजकत्वात् । ब्राह्मणत्वविनियुक्तमन्त्रत्वादीनां तत्राप्रयोजकत्वात् । तेन मन्त्राणां विधायकत्वे विधिमन्त्राधिकरणविरोधः स्यात् । तत्र हि देवांश्च याभिर्यजते ददाति च अग्नीदग्नीन् विहर बर्हिर्देवसदनं दामीत्यादिसोममाहरेयुरित्यादिमन्त्रब्राह्मणगतान् यच्छब्दामन्त्रणोत्तमपुरुषयदिशब्दादियुक्तान् आख्यातानुदाहृत्य किमेतेषां विधायकत्वम्, उत कर्मसमवेतार्थस्मारकत्वमिति सन्देहे आख्यातविशेषाद्विधायकत्वमेव, अभ्यासाच्च प्रकृतकर्मणो भेदः इति विधिमन्त्रयोरैकार्थ्यम् एकशब्दादितिसूत्रेण पूर्वपक्षयित्वा एते कर्मसमवेतार्थस्मारकाः यागे क्रियमाणे यागादिप्रयोग एव एतेषां सामर्थ्यात् न विधायकाः । यच्छब्दाद्यपहृतशक्तित्वादिति, 'अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात्' इति सूत्रेण सिद्धान्तितम् । तथाच कर्मचोदना ब्राह्मणानि, ब्राह्मणशेषोऽर्थवादः, निन्दा प्रशंसा परकृतिः पुराकल्पश्च । अतोऽन्ये मन्त्रा इति विध्यतिरिक्तानामेव मन्त्रत्वोक्तेः इति निरस्तम् । तयोः प्रायिकाभिप्रायकत्वात् । मन्त्रत्वपुरस्कारेणैतदधिकरणप्रवृत्तेः वार्तिककारेण दूषितत्वाच्च ।

अश्वदाः सहते सूर्येण इति मन्त्राक्षिप्ताश्वदानफलविधेः न केसरिणो ददाति इति श्रुतनिषेधानुसारेण साक्षादविहिताश्वदानविषयत्वेन व्याख्यानात् इत्यादिना मन्त्रस्य विध्याक्षेपकत्वाभ्युपगमाच्च । कपिञ्जलानालभेत इत्यादेर्वैरूप्यस्याभ्युपगमाच्च । यथाहुः—

**विधिशक्तिर्न मन्त्रस्य नियोगेनापनीयते ।**
**स्वतो विधास्यति ह्येष नियोगात् स्मारयिष्यति ॥** इति ।

ननु तथापि श्रुत्या आकाङ्क्षया अग्न्यङ्गभूतयापरयेष्ट्या अरुणकेतुककर्माभिषवदशापवित्रानुमन्त्रणमन्त्राणां दिक्षु विनियुक्तानां चरणमित्यादिमन्त्राणां स्मार्तविनियोगेन[1] कथं सुदर्शनपरत्वमिति चेत् किमिह कथम् ? किमन्यत्र विनियुक्तस्य अन्यत्र विनियोग एव न सम्भवति । उत श्रुत्यादिविनियुक्तस्य स्मृत्या विनियोगः स्मृतिविरोधात् न विहितः, अथ यत्र श्रुतिविनियोगः तदर्थपरत्वमेव मन्त्रस्य न तु स्मृतिविनियोगानुसारेण तदर्थपरत्वमिति । आद्ये किं मन्त्रस्वरूपविरोधात् विनियुक्तविनियोगो

१. नियोगादिभिरन्यत्र

न सम्भवति, अर्थप्रकाशलक्षणकार्यविरोधाद्वा । नाद्यः । मन्त्रस्यानुष्ठेयार्थं प्रति गुणत्वात् । गुणानां च [1]यावत्प्रधानमावृत्तेर्न्याय्यत्वात् । यत्र यत्रार्थे विनियोगः तत्र सर्वमन्त्रस्यावर्तमानत्वेनानेकत्र विनियोगाविरोधात् । यथा स्तोत्रे विनियुक्ताया अप्याग्नेय्याः आग्नेय्याग्नीध्रमुपतिष्ठते इत्याग्नीध्रोपस्थाने विनियोगः । यथा पुरुषसूक्तस्य प्रायश्चित्तजपविष्णवाराधनाग्न्युपस्थानयजमानोपस्थानादिषु विनियोगः । द्वितीयेऽपि किमर्थप्रकाशकस्य अर्थप्रकाशकत्वं[2] विरोधः । [3]अथ एकार्थप्रकाशकस्य तदन्यार्थप्रकाशकत्वतदभावयोर्विरोधः । उत प्रयोगान्तरेऽपि । नाद्यः । अनभ्युपगमात् । न ह्युक्तमस्माभिरपि एकस्मिन् प्रयोगे अप्रकाशकत्वतदभावयोः सद्भाव इति । नापि द्वितीयः । प्रयोगभेदादेव विरोधपरिहारात् । न च विनियोगान्तरेष्वर्थप्रकाशकत्वमेव । यथाकथञ्चिद्गौण्या लक्षणया वा वृत्त्या तदर्थपरत्वस्यापि वर्णयितुं शक्यत्वात् । नापि द्वितीयः । प्रयोगभेदादेवाविरोधात् । लोकेऽपि प्रयोगभेदेन गां दोग्धि, गाः कृषति इत्यादिषु एकस्यैव गोशब्दस्य अनेकार्थत्वं दृष्टम् । श्रुत्या विनियुक्तानामेतेषां मन्त्राणां स्मृत्या अन्यत्र विनियोगो न युक्त इति द्वितीयपक्षोऽप्यनुपपन्नः । विरोधोऽपि श्रुत्या स्मृतेर्बाधः नान्यथा । अतिप्रसङ्गात् । न च श्रुत्या अन्यत्र विनियोगस्य विषयसङ्कोचो जायते येन विरोधः स्यात् ।

ननु यदि श्रुत्या अन्यत्र विनियुक्तस्यापि मन्त्रस्य दुर्बलया स्मृत्या अन्यत्र विनियोगोऽपि न विरुध्येत (तर्हि) ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति श्रुत्या गार्हपत्योपस्थाने विनियुक्ताया अपि ऐन्द्र्या ऋचः इन्द्रेऽपि (इन्द्रियेऽपि) विनियोगः स्यात् । विरोधाभावे श्रुतेः लिङ्गबाधकत्वायोगात् । अथोच्येत सत्यं नास्ति विरोधः । तथापि लिङ्गस्य स्वतो विनियोगे प्रमाणाभावात् विनियोजकश्रुतिकल्पनाद्वारेण विलम्बितप्रमाणत्वात् श्रुत्या आग्नीध्रमन्त्रविनियोगे तत्कल्पनानुपपत्तेः, लिङ्गं विनियोजकमिति श्रुत्या बाध्यते इत्युच्यत इति ।

मैवम् । स्मृतावपि तुल्यत्वात् । स्मृतिरपि न साक्षाद्विनियोगे प्रमाणम् । किन्तु श्रुतिकल्पनाद्वारा । तत्कल्पना च प्रत्यक्षश्रुत्या शीघ्रं विनियोगे न सम्भवत्येवेति लिङ्गवत् स्मृतेरपि बाध एव स्यादिति न कश्चिद्विशेष इति चेन्न ।

वैषम्यात्, तथाहि— न हि लिङ्गबलेन अनेन मन्त्रेण उपस्थेय इति विनियोगः साक्षात् बोध्यते, किन्तु अयं मन्त्रः इन्द्राभिधायकः इत्येतावत्यवगते पश्चान्मन्त्राकाङ्क्षाबलेन तत्र विनियोगः कल्प्यते । श्रुत्या शीघ्रं गार्हपत्योपस्थाने विनियुक्ते मन्त्रे इन्द्रपदस्य गार्हपत्यप्रकाशनेन उपक्षीणत्वात् निरा-

---

१. यथावत् प्रधानम्, २. अर्थप्रकाशकत्वमिति. ३. आद्येऽपि पक्षे किं एतस्मिन् प्रयोगे अर्थप्रकाशकस्य.

काङ्क्षत्वाच्च मन्त्रस्य, न तन्मूला श्रुतिकल्पना उन्मिषति बोधकाभावेनैव विनियोगो न सम्भवतीति श्रुत्या लिङ्गं बाध्यत इत्युच्यते। स्मृतिस्तु साक्षाद्विनियोगं बोधयति न मन्त्राकाङ्क्षामपेक्षते। बोधिते विनियोगे स्वप्रामाण्यविध्यर्थमेव मूलभूतां स्मृतिमनुमापयति। अनुमानमप्याकाङ्क्षानिरपेक्षं प्रत्यक्ष-श्रुत्यविरोधे निरङ्कुशप्रसरमेवेति नात्र श्रुत्या स्मृतेर्बाधः, यथा प्रबलेनाप्युपदेशेन प्रकृतौ विनियुक्ताना-मङ्गानां दुर्बलेनाप्यतिदेशेन विकृतौ विनियोगो भवति। न च तत्र कश्चिद्विरोधः नापि दुर्बलस्य बाधः, तद्वदत्रापि दुर्बलयापि स्मृत्या मन्त्रस्य अन्यत्र विनियोगः किमिति नोपपद्यते। कति कति वा न दृश्यन्ते श्रुतिविनियुक्ता अपि मन्त्राः स्मृत्या स्मार्तेषु कर्मसु विनियुक्ताः। अन्यथा स्मार्तेषु कर्मसु मन्त्राणां प्रायशोऽभाव एव स्यात्। अतः श्रुतिविनियुक्तानामपि चरणादिश्रुतीनां स्मृतिपुराणादिभिः सौदर्शने कर्मण्यपि विनियोगो युज्यत एव। नापि तृतीयः। तत्रापि किंवा विवक्षितम्। किं श्रुत्या विनियुक्तस्य स्मार्तार्थप्रतिपादकत्वमेव न सम्भवति उत श्रौतार्थ एव मुख्यः स्मार्तार्थे मन्त्रस्य गौणी लाक्षणिकी वा वृत्तिराश्रयणीया इति वक्तव्यम्। न तु कश्चिन्नियमः शक्यते वक्तुम्। यदि च श्रौतविनियोगे सर्वत्र मुख्यार्थ इति नियमः स्यात्। सोऽपि नास्ति, ऐन्द्र्या गार्हपत्यमुपतिष्ठते इत्यत्र लक्षणादिभिः मन्त्रस्य गार्हपत्यार्थत्वस्याङ्गीकारात्। तस्मादेतेषां स्मृत्यादिभिः सौदर्शने कर्मणि विनियुक्तानां पूर्वोक्तरीत्या मुख्यवृत्त्या तत्परत्वम्। अन्यत्र श्रुतिविनियोगेऽपि मुख्यवृत्तिसम्भवे मुख्यत्वम्। तदभावे गौणी लाक्षणिकी वा वृत्तिराश्रयणीया इति।

ननु उक्तरीत्या चरणं पवित्रं, पवित्रं ते, चमूषच्छ्येन इत्यादि प्रसिद्धश्रुतीनां तप्तमुद्राधारणपरत्वे तत्र प्रामाण्येऽपि, दक्षिणे तु भुजे विप्रः, धृतोर्ध्वपुण्ड्रः, प्रते विष्णो, निचिक्षेप सुषणं, एभिर्वयमुरुक्रमस्य चिह्नैः, पवित्रमित्यग्निः इत्यादीनां प्रचरद्दृश्यशाखासु अनधीयमानतया श्रुतित्वसन्देहात् कथं तत्र प्रामाण्यम्। न च यज्ञोपवीतं, प्रसुग्मन्ता इत्यादिमन्त्राणामिव एतेषामपि श्रुतित्वमिति वाच्यम्। तेषां कल्पसूत्रकारोपात्तत्वेन श्रुतित्वस्य निश्चेतुं शक्यत्वात्। न हि त्वदुदाहृताः केनापि स्मृतिकारेणो-पात्ताः। न चैतेषां छन्दोमात्रनियतानुशासनानुशिष्टशब्दबाहुल्यात् श्रुतित्वसिद्धिरिति युक्तम्। तथैव गूढपुरुषविशेषपरिकल्पितवाक्यविशेषाणामपि श्रुतित्वप्रसङ्गादिति चेन्न,

श्रुतितया अभियुक्तोदाहृतत्वेन श्रुतित्वस्य निश्चयात्, अन्यथा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै इत्यादिशाबरभाष्योदाहृतानां, तथा विरोधाधिकरणे वार्तिककारेण औदुम्बरी सर्वा वेष्टयितव्या इत्यादिस्मृतिमूलत्वेनोदाहृतानां ऊर्ध्वदेशेन वाससा परिवेष्टयन्ति इत्यादीनां, यथा[1] ह्ययं ज्योतिरात्मा

१. यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा। शां. भा., अत एव चोपमा सूर्यकादिवत्। ३-२-५-१८.

विवस्वान् इत्यादिशङ्करभाष्योदाहृतानां, इन्द्रः शचीपतिः बलेन पीडितः दुश्च्यवनो वृषा ........ इति रामानुजभाष्योदाहृतानामपि वा यश्चण्डालः शिव इति वाचं वदेत् तेन सह संवदे(से)त् तेन सह भुञ्जीत इत्यादिश्रीकण्ठभाष्योदाहृतानां च श्रुतित्वाभावप्रसङ्गात् । न च यथा ह्ययं ज्योतिरित्यादेः श्रुतित्वं नेति युक्तम् । "अत एव चोपमा सूर्यकादिवत्" इति सूत्रे शङ्करभाष्ये 'मोक्षशास्त्रेषु श्रूयते'[1] इत्यभिधानेन तच्छ्रुतित्वस्य दुर्वारत्वात् । पूर्वोत्तरमीमांसाशास्त्रेषु "न शास्त्रपरिमाणत्वात्" । (जैमि. अ. १, पा. ३, अधि. ४, सू. ६) "शास्त्रयोनित्वात्, शास्त्रदृष्ट्या तूपदेशो वामदेववत्, कर्ता शास्त्रार्थवत्त्वात्" इत्यादौ श्रुतेरेव योगरूढिभ्यां शास्त्रशब्दमुख्यार्थत्वमभिप्रेत्य शास्त्रशब्देन श्रुतिग्रहणदर्शनाच्च । किञ्च पाद्मे

सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः ।
विधिना वैष्णवं चक्रं धार्यं हि श्रुतिचोदनात् ॥

दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥

एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् ।
तथैव साम्नि यजुषि ऋचि प्रोक्तं वरानने ॥

प्रते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तर्तवे चर्षणीन्द्राः ।
मूले बाह्वोर्दधतेऽन्ये पुराणाः लिङ्गान्यङ्गे तावकान्यर्पयन्ति ॥

चरणं पवित्रं विततं पुराणं, वाङ्मयं शुभम् ।
तेन चक्रेण सन्तमाः तरेयुः पातकाम्बुधिम् ॥

इत्यादिना,

इत्येवं श्रुतयस्सर्वाः कथयन्ति वरानने ।
तस्माद्वै विधिवद्धार्याः शङ्खचक्रादिहेतयः ॥

इत्यन्तेन महोपनिषद्गतत्वेन ऋक्शाखागतत्वेन च दक्षिणे तु भुजे विप्रो, प्रते विष्णो इति वाक्ययोः स्वविहिततप्तचक्रादिधारणप्रमाणत्वेन उदाहृतत्वात् श्रुतित्वमसन्दिग्धम् । न च कल्पसूत्रकारैरुदाहृतत्वमेव श्रुतित्वप्रयोजकं, न तु पुराणाद्युदाहृतत्वमिति युक्तम् । श्रुतिव्यतिरिक्तानां श्रुत्यर्थस्मरणपूर्वकं

---

१. अत एव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु । शां. भा., ३-२-५-१८.

अभियुक्तप्रणीतानां सर्वेषामपि व्याख्यानानां स्मृतित्वात् । अन्यथा न च स्मार्तमतद्धर्माभिलापात्, स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गादित्यादौ कापिलादिवाक्यानां, तथा, 'सर्वत्र प्रसिद्धोपदेशात्', 'अंशो नानाव्यपदेशात् .........' इत्याद्यधिकरणेषु 'स्मृतेश्च, अपिच स्मर्यते' इत्यादौ स्मृतिश्च शारीरपरमात्मनोः भेदं दर्शयति ।[1]

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥** इति ।

ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते ।[2]

**ममैवांशो जीवलोके जीवभूतः सनातनः ॥**

इति च उदाहृतानां भगवद्गीतादिवचनानां च स्मृतित्वमुक्तं न स्यात्, किञ्च परमाप्तभगवत्प्रणीत-पञ्चरात्रोदाहृतत्वेन एतेषां श्रुतित्वमङ्गीकरणीयम् । तथाहि परमेश्वरसंहितायां प्रतिष्ठाध्याये चक्र-प्रतिष्ठायाम्—

**तत्तत्स्थापनकाले तु तत्तत्संज्ञामनुं जपेत् ।**
**विद्यां गदामित्याद्यं पाठयेत् तद्विदो जनान् ॥**

**चमूषच्छ्येन इति च प्रते विष्णो इति त्वृचौ ।**
**पाठयेद्बह्वृचानन्याञ्छाकुनं सूक्तमेव च ॥**

**धृतोर्ध्वपुण्ड्रः श्रृतचक्रेतिमन्त्रं कठान् परम् ।**
**पवित्रं ते विततमित्येतन्मन्त्रं यजुर्मयम् ॥**

**क्षुरे हरेति सामज्ञान् पवित्रमित्यग्निरित्यपि ।**
**एभिर्वयमुरुक्रमस्येत्यथर्वणविदो जनान् ॥**

**एवं संस्थाप्य विधिवन्नवभिः कलशैस्ततः ॥** इति ।

अत्र '**तत्तत्स्थापनकाले तु तत्तत्संज्ञामनुं जपेत्**' इति वचनात् एतेषां सुदर्शनस्थापने विनियोगात् सुदर्शनपरत्वं स्पष्टम् । अत्रैव स्नपनकलशविनियोगावसरे—

**"धृतोर्ध्वपुण्ड्र इति यातुधानीगतेन वै ।**
**दक्षिणे तु भुजे विप्र इति प्राक्संस्थितेन तु ॥**

१. शां. भा. अ. १-२-६-१,     २. शां. भा. अ. २-३-१७-४५.

निचिक्षिप सुषणमितिवह्निगतेन तु ।
प्रते विष्णो अब्जचक्रं इति याम्यगतेन तु ।
एभिर्वयमुरुक्रमस्येति यातुधानीगतेन तु ।
धृतोर्ध्वपुण्ड्रः शृतचक्रेति पश्चिमगतेन तु ।
पवित्रमित्यग्निरिति वायुगतेन तु ।
चरणं पवित्रं विततमिति याम्यगतेन तु ।
लोकस्य द्वारमर्चिष्मत् पवित्रमिति रुद्रगतेन तु ।
मन्त्रैरेतैस्तु चाष्टाभिरन्यैस्सौदर्शनैस्तथा ।
संस्नाप्य मध्यकुम्भेन शुद्धोदैरभिषिच्य तु ॥'' इति ।

अत्र सौदर्शनत्वमेतेषां मन्त्राणां साक्षादुक्तम् ।

तथा कालोत्तरसंहितायां सुदर्शनाराधनाध्याये—

एवं प्रासादशिखरे चक्रं संस्थापयेद्बुधः ।
द्वादशारमथाष्टारं षडरं वा महामते ॥

संस्थाप्य विधिवत्कुम्भं मन्त्रैर्द्वादशभिः क्रमात् ।
दक्षिणे तु भुजे विप्र इति क्षीरेण सेचयेत् ॥

निचिक्षिप सुषणमिति दधिना स्नपयेत्ततः ।
प्रते विष्णो इत्यनेन घृतेनैवाभिषेचयेत् ।
एभिर्वयमुरुक्रमस्येति मधुना स्नपयेद्बुधः ।
धृतोर्ध्वपुण्ड्रः शृतचक्रेति सिञ्चेदिक्षुरसेन तु ।
पवित्रमित्यग्निरिति पञ्चगव्येन सेचयेत् ॥ इति ।

तथा ब्रह्मसूक्तस्यान्यत्र उपपादनं दृष्टम् । यथा श्रीविष्णुतत्त्वे—

''दिव्यान्तरिक्षभौमानामुत्पातानां प्रशान्तये ।
प्रत्यृचं जुहुयादाज्यं पुंसूक्तेन शतं शतम् ॥

सर्वस्य वशिनेत्याद्यैश्चतुर्भिश्च शतं दधि ।
दक्षिणे तु भुजेत्याद्यैश्चतुर्भिश्चापि तण्डुलैः ॥'' इति ।

**प्रत्यङ्गिरं शिखा शीर्षं ब्रह्मसूत्रं तथैव च ।**
**वैष्णवं पौरुषं चैव मान्यान् मङ्गलवाचकान् ॥** इति ।

ब्रह्मसूक्तमिति सर्वस्य वशिनेत्यादिकमष्टर्चमुच्यते । नचैतावताप्येतेषां मन्त्राणां श्रुतित्वं न सिद्ध्यति, तेषां तान्त्रिकमन्त्रत्वेनाप्युपपत्तेः तान्त्रिकमन्त्राणामपि तत्तत्कर्मसु 'अलाभे वेदकर्मणाम् । पाञ्चरात्रोदितेन (मन्त्राणाम्) वा' इत्यादिवाराहवचनेन विनियोगदर्शनात् इति वाच्यम् । तत्तद्वेद-पठितत्वेनैव तेषां तत्रोपादानात् । तत्तच्छाखाध्यायिपुरुषजप्यत्वेन विधानाच्च । किञ्चैतेषां केवलं तान्त्रिकमन्त्रत्वे पाञ्चरात्रमन्त्रेषु क्वाप्यनुष्ठानानुसारेण मन्त्रशरीरे वृथा (इता) पाठप्रसङ्ग इति ।

ननु पाञ्चरात्रिकविनियोगबलेनोदाहृतानां श्रुतित्वं तदैव सिद्ध्यति यदि पाञ्चरात्रागमः प्रमाणम् । अन्यथा बौद्धपाशुपताद्यागमा अपि प्रमाणं भवेयुरिति चेत् उच्यते । न तावत् पाञ्चरात्रस्य भ्रान्तपुरुष-प्रणीतत्वेनाप्रामाण्यम् । तत्प्रणेतुर्नारायणस्य मोहाद्यभावस्य स्वतः सार्वज्ञस्य च 'कारणरूपमेकाकारं परं ब्रह्म शोकमोहविनिर्मुक्तं विष्णुं ध्यायन् न सीदति' इति,

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥**

इत्यादिश्रुतिस्मृतिसिद्धत्वात् । न च पाञ्चरात्रं नारायणप्रणीतमित्यत्र मानाभावः ।

**पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।**

इत्यादिमोक्षधर्मवचनविरोधात् । तथा

**वासुदेवेन यत्प्रोक्तं शास्त्रं भगवता स्वयम् ।**
**तद्दिव्यं ब्रह्मरुद्राद्यैः ऋषिभिश्च तपोधनैः ॥**
**स्वयं प्रणीतं यच्छास्त्रं तद्विद्धि मुनिभाषितम् ।**

इत्यादिपञ्चरात्रवचनविरोधश्चेति वाच्यम् । नित्येऽपि वेदे काठकादिव्यवहारवत् व्यासप्रोक्त एव महा-भारते संहिताविशेषेषु वैशंपायनसंहितादिव्यवहारवच्च कात्स्र्न्येन भगवत्प्रणीत एव पाञ्चरात्रे ब्रह्मादि-प्रवर्तकत्वमादाय तत्प्रणीतत्वसम्भवेनाविरोधात् । न च तत्र भगवत्प्रणीतत्वोक्तिरेव तत्प्रवर्तकत्वा-भिप्राया ब्रह्मादिप्रणीतत्वोक्तिस्तु तत्कर्तृकत्वाभिप्रायेति वैपरीत्यमिति वाच्यम् । साङ्ख्यं योगः पाञ्चरात्रमिति पञ्चरात्रस्य साङ्ख्यादिसहपाठनिमित्तसाम्यं वारयितुं[1] भगवता बादरायणेन साङ्ख्यस्य

---

१. माभूदिति.

वक्ता कपिलः इत्यादिना साङ्ख्यादीनां सम्भावितभ्रमकपिलादिकर्तृत्वेनाप्रामाण्यमभिधाय **'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्'** इति साङ्ख्यादिभ्योऽतिशयेन प्रामाण्यसिद्ध्यौपयिकतया हि अतथाभूतभगवदभिहितत्वस्योक्ततया साङ्ख्यादौ कपिलाद्यभिहितत्वोक्तेरिव पञ्चरात्रे भगवदभिहितत्वोक्तेरपि तत्कर्तृकत्वाभिप्रायकत्वस्यैव वक्तुं युक्तत्वात्। तत्प्रवर्तकत्वमात्रेण पञ्चरात्रस्य साङ्ख्यादिभ्योऽतिशयासिद्धेः। 'तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्। स्वयं प्रणीतं यच्छास्त्रं' इति प्रेत्युपसर्गमहिम्ना ब्रह्मादीनां प्रवर्तकत्वस्यैवोक्तेश्च। प्रवर्तकत्वं व्याख्यानमेव। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमित्यादौ तेन प्रोक्तमित्यादिपाणिनिसूत्रे च प्रवचनशब्दस्य व्याख्याने प्रयोगात्। तस्मान्न[1] भ्रान्तपुरुषप्रणीतत्वेन पञ्चरात्रस्याप्रामाण्यम्। नापि पाञ्चरात्राद्यागमवत् मोहनार्थं प्रणीतत्वेन[2] पञ्चरात्रस्याप्रामाण्यम्।

**त्वमेव धृत्वा तान् लोकान् मोहयस्व जगत्त्रये॥**

**तथा पाशुपतं शास्त्रं त्वमेव कुरु सुव्रत।**
**ते कालशैवपाषण्डमहाशैवादिभेदतः।**
**अपि देवि! प्रवक्ष्यामि तमो यान्ति यथाक्रमम्॥**

**[3]येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि।**
**प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम्॥**

इत्यादिपाद्मवचनैः

**यस्मात्पशुपतिश्चाहं मत्कृताः शास्त्रविस्तराः।**
**सर्वे पाशुपता ज्ञेयाः वेदमार्गविरोधिनः॥**

इत्यादिभविष्यत्पुराणवचनैः

**कलावपि महाबुद्धे[4] मनुष्याः शङ्करप्रियाः।**
**आस्थाय मम शास्त्राणि दूषयेयुश्च सात्त्विकान्॥**

इत्यादिगारुडवचनैश्च पाशुपतागमस्य मोहनार्थं प्रवृत्तिः इत्यावेदनात्, पञ्चरात्रस्य तथा प्रवृत्तिरिति स्मृतिपुराणादिषु क्वाप्यवेदनात्।

---

१. शैवाद्यागमवत् इति पाठेन भाव्यमिति भाति। २. प्रवृत्तत्वेन. ३. तेषां, ४. महायुद्धे.

"यद्यस्माद्वेदवाक्यानां रक्षणार्थं च, पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यामो वृषध्वज ।
एवं सञ्चोदितो रुद्रो माधवेन मुरारिणा ॥

चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।
कपालं लाङ्गु(ग)लं शाक्तं भैरवं पूर्वपश्चिमम् ॥

पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥"

इत्यादिकूर्मपुराणवचनं पञ्चरात्रस्यापि मोहनार्थं प्रवृत्तिरित्यत्र प्रमाणतया कैश्चिदुदाहृतम्, तत्, भारते पञ्चरात्रप्रामाण्यस्य विस्तरेण प्रतिपादनात् नादरणीयम् । तत्र हि—

गूढं मां प्रश्नविभ्राजन् पृच्छसे त्वमिहानघ ।
न ह्येतं त्वं मया शक्यो वक्तुं वर्षशतैरपि ।
ऋते देवप्रसादाद्वै राजन् ज्ञानागमेन वा ॥

गहनं ह्येतदाख्यानमाख्यातव्यं तवारिहन् ।

इत्यादिना प्रश्नात् सत्यं परमरहस्यत्वं दुरवबोधत्वं देवप्रसादादिकं विना वक्तुमशक्यत्वमयोग्येष्ववक्तव्यत्वं च दर्शितम् । तथा तेनैव ब्रह्मन् मर्यादा लोकभाविनी इति लोकहिताय प्रवृत्तत्वं च दर्शितम् ।

तत्र प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक् समभवन् मनो दुष्टं च नाभवत् ॥

स्थिते तु नृपतौ तस्मिन् शास्त्रमेतत् सनातनम् ।
अतोऽस्य कथितं सत्यं एतद्वः कथितं मया ॥

इत्यादिना धार्मिकजनभूयिष्ठकाल एव पञ्चरात्रशास्त्रस्य प्रचारणम्, तदन्यकाले तु तदप्रचारणं च प्रतिपाद्यते । तथा—

एकाग्रमतयः शान्ताः मुनयः [1]समये रताः ।
नारायणानुषिष्टा हि तथा देवीं सरस्वतीम् ।
विवेश तान् ऋषीन् सर्वान् लोकानां हितकाम्यया ॥

---

१. समयेरणाः.

**तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ।**

इत्यादिना तच्छास्त्रप्रवर्तकमहर्षीणां भगवत्कृपालब्धसरस्वतीकत्वं तत्प्रवर्तितपञ्चरात्रशास्त्रस्य उत्तमत्वं च प्रदर्शितम् ।

**"युष्मन्मतिकृतं शास्त्रं प्रजापालो वसुस्तदा ।**
**बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमः ॥**

इति वेदैकनिष्ठशिष्याचार्यकत्वं च प्रदर्शितम् ।

**सर्वे प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमम् ।**

इत्यादिना वेदाविरुद्धसकलप्रबन्धप्रामाण्ये दृष्टान्तभूमितया पञ्चरात्रशास्त्रं प्रदर्शितम् ।

**अस्मान्प्रवक्ष्यते धर्मान् मनुः स्वायम्भुवस्तथा ।**

इत्यादिना मानवधर्मशास्त्रोपजीव्यत्वं चास्य प्रतिपादितम् ।

तथा—

**नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।**
**आरण्यकं च वेदेभ्यः ओषधीभ्यो यथाऽमृतम् ॥**

**इदं महोपनिषदं चतुर्वेदसमन्वितम् ।**
**साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥**

**इदं श्रेय इदं ब्राह्मं इदं हितमनुत्तमम् ।**
**ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ।**
**भविष्यति प्रमाणं वै एतदेवानुशासनम् ।**

इत्यादिसकलवेदसमन्वितत्वं[1] मुमुक्षूपास्यत्वादिनाऽस्य ज्ञानसिद्धिप्रामाण्यं च प्रदर्शितम् । तथा—

**यस्य यज्ञे महानासीदश्वमेधो महाजनः ।[2]**
**बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह ॥**

इत्यादिना पञ्चरात्रनिष्ठस्य उपरिचरवसोः अश्वमेधकथनात्, वेदोक्तकर्मणां पञ्चरात्रकर्मणां च कर्तव्यसामान्यं प्रदर्शितम् । एवं वाराहेऽपि पञ्चरात्रप्रामाण्यं विस्तरेण प्रतिपादितम् ।

---

१. सम्मितत्वं -पाठः, २. महासवः इति पाठेन भाव्यमिति भाति.

पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् ।
संहिताजपमास्थाय ते मां यास्यन्ति ब्राह्मणाः ॥

अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा ।
मार्गेण मां प्रपद्यन्ते ते मां पश्यन्ति मानवाः ॥

ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां न यच्छ्रोत्रपदवीमुपयास्यति ॥

एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् ।
पञ्चरात्रं सहस्राणां यदि कश्चिद् ग्रहीष्यते ॥

कर्मक्षये च मां कश्चिदिति भक्तो भविष्यति ।
तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति ॥

वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ! ।
प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज ॥

इत्यादिना अत्र वेदपञ्चरात्रयोः विकल्पाभिधानात्, वेदतुल्यत्वं वेद विकृतिज्ञैर्वर्णितत्वं शूद्राद्ययोग्यत्वं वेदपञ्चरात्रयोः समुच्चित्य मोक्षसाधनत्वं चोक्तम् । अलाभे वेदमन्त्राणामित्यत्र वेदमन्त्राधिकाराभावो न विवक्षितः । तथा सति—

ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति ॥

इति तदनन्तरश्लोकविरोधः स्यात्, किन्तु—

पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् ।

इति पूर्वश्लोकोक्तब्राह्मणान् अधिकृत्यैव वेदोक्तमार्गात् पञ्चरात्रोक्तमार्गस्य मार्गान्तरत्वं प्रतिपाद्यते । एवम्—

ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ।
मूलरामायणं चैव पुराणं चैतदात्मकम् ॥

ये चानुयायिनस्तेषां सर्वे ते न सदागमाः ।
दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः ॥

पुराणैश्चैव वेदैश्च पञ्चरात्रैस्तथैव च ।
ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति माम् ॥

इत्यादिब्रह्माण्डरामायणवचनान्युदाहर्तव्यानि । एतेन भारतस्य वाराहादिपुराणवचनानां च सिद्धे प्रामाण्ये तद्वचनबलात् पञ्चरात्रप्रामाण्यं सिद्ध्येत् । न च तत्सिद्धमिति निरस्तम् । इतिहासपुराणः पञ्चमो वेदानां वेद इति इतिहासशब्दितभारतादेः पुराणानां पञ्चमवेदत्वोपपादनेन शिक्षादिवत् विद्यान्तरस्थानान्तरापेक्षया अतिशयितप्रामाण्यस्याङ्गीकर्तव्यत्वात् । एतेन—

तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्करो वैष्णवः स्मृतः ॥ इति भागवते ।

अथांशोः सात्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतः धनुर्वेदविदां वरः ॥

स नारदस्य वचनात् वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रुतम् ॥

तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥ इति कौर्मे ।

पञ्चरात्रं भागवतं तन्त्रं वैखानसं हि यत् ।
कर्मभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥ इति साम्बपुराणे ।

पाञ्चरात्रे च कापाले तथा कालामुखेऽपि च ।
श्रद्धया दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥ इति स्कान्दे च ।

पञ्चरात्रस्य वेदानधिकारिस्त्रीशूद्रकुण्डगोलाद्युपजीव्यत्ववर्णनेन स्मृतिपुराणादिवन्न प्रामाण्यमिति निरस्तम् । उक्तरीत्या वेदाधिकारित्रैवर्णिकान्प्रति प्रवृत्तस्यापि पाञ्चरात्रस्य स्त्रीशूद्रकुण्डगोलादिविषयकत्वं तद्विषयत्वे च मोहनार्थं प्रवृत्तमिति युज्यते । एवं साम्बस्कान्दवचनमपि उदाहृतभारतादिवचनविरोधादप्रमाणमेव । एतेन—

आग्नेयं पञ्चरात्रं तु दीक्षायुक्तं च तान्त्रिकम् ।
अवैदिकत्वात् तत्तन्त्रं यथा वैखानसेन तु ॥

सौम्येन वैदिकेनैव देवदेवं समर्चयेत् ।

इति वैखानसशास्त्रवचनेन पाञ्चरात्रस्यावैदिकत्वं नाम न तावद्वेदविरुद्धत्वम् । ग्रहणाग्रहणादिशास्त्रस्य अवैदिकत्वापत्तेः । उक्तवक्ष्यमाणरीत्या तदभावाच्च, विरोधप्रतिभासमात्रस्य स्मृतिपुराणादिषु सर्वत्र सत्त्वेन तावन्मात्रेण अवैदिकत्वादर्शनात् । पाञ्चरात्रप्रामाण्ये तु नारायणस्य वेदप्रामाण्याभ्युपगन्तृत्वाच्च । नापि तथाविधपुरुषपरिगृहीतत्वम् । पाञ्चरात्रस्य बौद्धादिभिः अपरिगृहीतत्वात् तत्परिगृहीतॄणामस्मदादीनां वेदप्रामाण्याभ्युपगन्तृत्वात् । नापि वेदाविहितधर्मविधायकत्वम् । धर्मत्वे वेदविहितत्वावश्यम्भावात्, सर्वस्यापि धर्मस्य वेदविहितत्वात् । अन्यथा चोदनालक्षणोऽर्थो धर्म इति जैमिन्युक्तधर्मलक्षणव्याकोपापत्तेः ।

न च सर्वत्रापि तथात्वस्य वक्तुं शक्यत्वात् उदाहृतबहुप्रमाणैः धर्मार्थे प्रवृत्तत्वस्य धर्मलक्षणत्वे सर्वस्यापि धर्मस्य वेदमूलत्वे च इदं श्रौतम् इदं स्मार्तमिति व्यवहारो न स्यादिति वाच्यम् । अस्मदाद्यधीयमानश्रुतिविहितत्वेन श्रौतत्वव्यवहारस्य ग्रहयज्ञादिस्मार्ताचाराणां वेदमूलत्वेऽपि तेषां वेदानां सदाप्यधीयमानतया तद्विधायकस्मृतिपुराणादीनामेवानधीयमानतया च तत्र स्मार्तत्वव्यवहारस्य चोपपत्तेः । तस्मान्न वेदाविहितधर्मविधायकत्वेनावैदिकत्वम्, नापि वैदिकविद्यास्थानान्तर्गतत्वेन अवैदिकत्वम् । रामायणभारतादीनां तदर्थगतत्वेऽपि वैदिकत्वाभ्युपगमात् । नापि मोहनार्थं प्रवृत्तत्वम् । सर्वत्रापि तथात्वस्य वक्तुं शक्यत्वात्, उदाहृतबहुप्रमाणैः धर्मार्थं प्रवृत्तत्वस्यैव युक्तत्वाच्चेति ।

एतेन श्रुत्यादिविरुद्धजीवोत्पत्तिप्रतिपादकत्वात् पञ्चरात्रमप्रमाणम् । तत्र हि वासुदेवात् सङ्कर्षणो नाम जीवो जायते । सङ्कर्षणात् प्रद्युम्नसंज्ञकः, एवं मनसश्चानिरुद्धाख्योऽहङ्कारः इति जीवोत्पत्तिः प्रतिपाद्यते । सा च 'न जायते म्रियते वा' इत्यादिश्रुतिविरुद्धेति निरस्तम् । 'तोयेन जीवान् व्यससर्ज भूम्यां, सर्व एवात्मानो व्युच्चरन्ति' इत्यादिश्रुतिष्विव तत्रापि जीवोत्पत्तेरविरुद्धत्वात् । न चोदाहृतश्रुतौ जीवोत्पत्तिः शरीराद्युपाधिकेति वक्तुं शक्यम् । पाञ्चरात्रे तु न तथा, शरीरसृष्टेः मनःप्रभृतिसृष्ट्यनन्तरभावित्वेन तत्पूर्वमुच्यमानायाः जीवोत्पत्तेः स्वरूपेणैव वक्तव्यत्वादिति वाच्यम् । 'अन्नात् प्राणाः भवन्ति भूतानां, प्राणैर्मनो मनसश्च विज्ञानम्' इत्यादिश्रुतिष्विवात्राप्यर्थस्य विवक्षणीयत्वात् । (स्व)विवक्षितार्थपरिकल्पनेन अप्रामाण्योक्तेरयुक्तत्वाच्च ।

एतेनैव कर्तुर्जीवात् करणस्य मनसः उत्पत्तिर्विरुद्धा । तथाऽदर्शनात् । सर्वस्यापीश्वरजन्यत्वाच्चेति निरस्तम् । आत्मन आकाशः सम्भूतः, आकाशाद्वायुः, इत्यादौ आकाशशब्देनेव जीवादिशब्देनापि जीवादिस्थपरमात्मन एव ग्राह्यत्वाच्च, वस्तुतस्तु जीवमनोऽहङ्कारशब्दाः सङ्कर्षणप्रद्युम्नानिरुद्धशब्दसमानाधिकृताः, न प्रसिद्धजीवादिपराः । किन्तु तदधिष्ठातृभगवद्व्यूहपराः इति न काचिदनुपपत्तिः ।

यत्तु चतुर्षु वेदेषु पुरुषार्थमलभमानः शाण्डिल्य इमां विद्यामधीतवान् इति वेदानादरवचनेन वेदनिन्दावगमात् पाञ्चरात्रस्याप्रामाण्यमिति ।

(तन्न) न हि निन्दान्यायेन तदुपपत्तेः । ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं इत्यादिश्रुतिवाक्यस्य ब्रह्मविद्याप्रशंसार्थस्य ऋग्गाथा ............ यजुर्निगदो वृथा वाक् इति यजुरादिनिन्दायाः ऋग्वेद-स्तुत्यर्थत्वस्य—

**चत्वार एकतो वेदा भारतं त्वेकमेकतः ।**
**समागतैः सुरर्षिभिः तुलामारोपिताः पुरा ।**
**महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ॥**

इत्यादौ वेदनिन्दायाः महाभारतप्रशंसार्थत्वस्य च दर्शनात् । तस्मात् पञ्चरात्रप्रामाण्यं अव्याहत-प्रसरमिति । पञ्चरात्रप्रामाण्यविषयाः अन्येऽपि क्षुद्रोपद्रवाः **न्यायमौक्तिकमालायामेव** अस्माभिः निरस्ता इति नेह ते निरस्यन्ते इत्युपरम्यते ।

तस्माच्छ्रुतित्वेन अभियुक्तैः पाद्मवचनैश्चोदाहृतत्वात्, भारतवाराहादिवचनैः प्रमाणत्वेनोपात्त-पञ्चरात्रवचनविनियुक्तत्वाच्च प्रसिद्धश्रुतिभावानां खिलमन्त्राणामखिलमन्त्राणां च तप्तचक्रादिधारण-विधायकत्वात्, तन्निषेधकश्रुतिस्मृत्यादीनां गतिप्रदर्शनाच्च ब्राह्मणादीनां सर्वेषां तद्धारणमावश्यकमिति स्थितम् ।

नन्विदमयुक्तम् । श्रुतिस्मृत्यादिभिरेव तन्निषेधात् । तथाहि न लोहितं कुर्यादिति श्रुतिस्तावत् लोहितकरणं निषेधति, तप्तचक्रादिधारणे च स्यादेव लोहितमिति तदपि तद्विषयम् । तथा मनुश्च तप्तचक्राद्यङ्कनं निषेधति—

**'स्वशरीरेऽन्यदेहे वा भवेदिति कति द्विज'[1]** ॥ इति ।

विष्णुरपि—

**शङ्खचक्राद्यङ्कनं च नृत्तगीतादिकं तथा ।**
**एकजातेरयं धर्मो च जातु स्याद्द्विजन्मनः ॥**

**यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु ।**
**तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ।**

१. अत्र समीचीनः पाठः नोपलभ्यते, क्षनिर्द्विज इति ऊहितः पाठः ।

**शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।**
**स शूद्रवद् बहिष्कार्यः सर्वस्माद्विजकर्मणः ॥** इति ।

बोधायनोऽपि—

**नाङ्कनाय दहेद्देहं दहेच्चेत् कामकारतः ।**
**नाधिकुर्वन्ति दग्धाङ्गाः श्रौतस्मार्तेषु कर्मसु ॥** इति ।

शातातपोऽपि—

**अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः ।**
**दहनाल्लेखनाद्विप्रः पातित्यं याति तत्क्षणात् ॥** इति ।

हारीतोऽपि—

**रागात्सन्दग्धगात्राणां न स्यात् पारत्रिकं शुभम् ॥** इति ।

एवं पुराणेष्वप्युदाहरणानि द्रष्टव्यानि । न चात्र उत्सर्गापवादन्यायः अवतरति । विधिनिषेधयोः विषयव्यवस्थापकप्रमाणाभावस्थल एव तदवतारात् । प्रकृते च विष्णुस्मृत्याद्यनुसारेणैव तस्याङ्गी-कर्तव्यत्वात् । न चैवं

दक्षिणे तु भुजे विप्रः, ब्राह्मणैः क्षत्रियैर्वैश्यैरिति ब्राह्मणादीनामपि तद्विधायकश्रुतिविरोधः । देवा वै सत्रमासत, गावो वा एतत्सत्रमासत इत्यादिमनुष्यमात्राधिकारितया यागविद्ध्यर्थवादगतदेवगवादि-शब्दानामिव तत्रत्यद्विजातिशब्दानामपि विवक्षितार्थत्वात् । न च देवा वै सत्रमित्यादीनामर्थवादतया युक्तं तत्राविवक्षितार्थत्वम्, न तु 'दक्षिणे तु भुजे विप्रः' इत्यादीनामिति युक्तम् । स्वर्गकाम इत्यादौ पुंस्त्वादेः अविवक्षितत्वस्य मीमांसकैरेव अभ्युपगमात् । किञ्च यदि विप्रो विवक्षितः स्यात् तदा क्षत्रियादिव्यवच्छेद एव स्यात्, 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिवत् । यदि वाक्यान्तरबलात् लक्षणया विप्रशब्दस्य क्षत्रियादिपरत्वं तदा स्मृत्यनुसारेण तथा शूद्रपरत्वम् । यद्यपि ब्राह्मणादीनामपि तप्तचक्रधारणे महत्फलं प्रतिपाद्यते तथापि तस्य न ब्राह्मणादि कर्तव्यत्वं सिद्ध्यति । फलापेक्षया निषेधस्यैव प्रबलत्वात् । यथोक्तं मनुना 'श्रूयते च महत्फलं फलं तत्र परित्याज्यं दोषो हि बलवत्तरः'[1] इति । अयमर्थः— यत्कर्म फलसाधनं दोषहेतुश्चाभ्युपेयते तत्कर्म, दोषस्य अवश्यपरिहार्यत्वात्

१. महत्फलं श्रूयते च दोषोऽपि बलवत्तरः ।
फलं तत्र परित्याज्यं दोषो हि बलवत्तरः ॥ इति पाठेन भाव्यमिति भाति ।

अननुष्ठेयम्। तत्र एतेन तप्तमुद्रादिधारणं न निषेद्धुं शक्यते, रागप्राप्तस्यैव निषेधात्। न हि तादृशधारणं रागप्राप्तम्, तस्य दुःखरूपत्वात्। अतः श्रुत्या प्राप्तिः वक्तव्या, श्रुतिप्राप्तस्य च न सर्वात्मना निषेध इति, न तौ पशौ करोतीत्यादाविव विकल्प एव समाश्रयणीय इति निरस्तम्।

नात्मानमवसादयेत् इत्यादौ रागतः प्राप्त्यभावेऽपि निषेधदर्शनात्। किञ्च न रागप्राप्तस्य निषेधः। अगम्यागमनादिगतेष्टविशेषनिषेधसाधनत्वस्य प्रत्यक्षादिसिद्धतया तस्य अनिषेध्यतया [1] ....... ननेनानिष्टसाधनत्वस्यैव बोध्यत्वात्।

वस्तुतस्तु श्रुतिविशेषादिना तात्पर्यापरिज्ञानदशायां तप्तचक्रादिधारणस्य सर्वविषयत्वप्रसक्तौ कुसमयादितः तथा प्रसक्तौ वा श्रुतिविशेषादिना तन्निषेधो युक्तः। अन्यथा न तत्समश्चाभ्यधिकश्च दृश्यते इत्यादिनिषेधानुपपत्तेः। न हि पशौ तात्पर्यापरिज्ञानदशायां आज्यभागप्रापकं वाक्यान्तरं तथाविधसमये वास्ति येन तत्रेव अत्रापि तुल्यवद्विकल्पाश्रयणेन तद्धारणं सर्वविषयं स्यादिति।

किञ्च नात्र विकल्पो युज्यते, गुरुलघुनोर्विकल्पाभावात्, भावे वा तद्धारणविधायकशास्त्रस्याननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्, धारणफलस्याधारणेनापि सिद्धेः, [2]एकविधयोरेव विकल्पाश्रयणात्। यथाहुः 'विकल्पो विशिष्टफलत्वात्' इति (ब्र.सू.) न ह्यधारणेऽपि सम्भवति तत्फले तदर्थं तद्धारणे[3] कोऽप्युत्तमः प्रवर्तते इति शक्यते वक्तुम्, व्यवस्थितविकल्पाश्रयणं च विष्णुस्मृत्यनुसारेणेत्युक्तमिति।

मैवम्। उदाहृतश्रौतस्मार्तनिषेधानां तप्तचक्रादिधारणविषयत्वस्यैवासिद्धेः, तथाहि— न तावत् न लोहितं कुर्यादिति श्रुतिः तप्तमुद्राधारणं निषेधति, अपदार्थत्वात् अवाक्यार्थत्वाच्च। शस्त्रादिछेदनेनेव तप्तचक्राद्यङ्कनमात्रेण लोहितोत्पत्त्यदर्शनेन तस्य तद्विषयत्वायोगात् [4] ...... कस्यचित्कालान्तरे लोहितो भविष्यतीति चेन्न, यादृशाङ्कनेन कस्यापि न कदाचिदपि लोहितं भविष्यति तादृशाङ्कनस्यैव विधिरित्यभ्युपगमात्। तथैवाचाराच्च। अस्तु वा तत्र कालान्तरे लोहितोत्पत्तिः। न हि तावता अस्य निषेधविषयता। अन्यथा कृच्छ्रचान्द्रायणादिकमनुतिष्ठतः तदसहिष्णुतया कालान्तरे कस्यचिद्दैवान्मरणे कृच्छ्रचान्द्रायणादिधर्माणामपि न हिंस्यादिति निषेधविषयत्वापत्तेः।

ननु मरणोद्देश्यकमरणानुकूलव्यापारस्यैव हिंसात्वात् कृच्छ्रचान्द्रायणादीनां मरणोद्देश्यकत्वाभावात् न तद्विषयत्वमिति चेत् तर्हि लोहितोद्देश्यकलोहितानुकूलव्यापारस्यैव तन्निषेधविषयत्वमस्तु। लोहितानुकूलव्यापारमात्रस्य तन्निषेधविषयत्वे कण्ड्वाद्यपनोदनाय प्रवृत्ते व्यापारे लोहितोत्पत्तेः, सोऽपि तद्विषय एव स्यात्। तथाच कण्ड्वाद्यपनोदनं न केनापि क्रियेत। किञ्च मरणोद्देश्यकत्वं न हिंसा-

१. अत्र पाठः लुप्तः। २. एकविकल्पयोरेव। ३. कोऽप्यमत्तः इति पाठः। ४. अत्र पाठः लुप्तः।

शब्दार्थे प्रवेशनीयम् । द्वेषिदुःखानुभवमात्रोद्देश्यके दैवात् सद्यो द्वेषिमरणाानुकूलव्यापारे अव्याप्तेः । ऋषिपुत्रादिमरणानुद्देश्यके तन्मरणानुकूलदशरथादिव्यापारे अव्याप्तेश्च । न च तत्रापि यथाकथञ्चित् गजादिमरणोद्देश्यकत्वमस्तीति वाच्यम् । फलीभूतमरणोद्देश्यकत्वस्यैव वक्तव्यत्वात्, अन्यथा द्वेषि-मरणोद्देश्यकस्य दैवात्तन्निकटस्थपुरुषमात्रमरणानुकूलव्यापारस्यापि द्वेषिहिंसात्वापत्तेः । न चोक्त-स्थलद्वयेऽपि लक्षणाऽगमनं न दोषः । तथो अलक्ष्यत्वादिति वाच्यम् । लौकिकानां तत्रापि हन्तुत्व-व्यवहारात् । दशरथादीनां ब्राह्मणबुद्ध्या भयादृषिपुत्रनिकटोपगमनदर्शनाच्च । एतावांस्तु विशेषः । ज्ञानपूर्वे प्रत्यवायभूयस्त्वम्, अज्ञानपूर्वे तु अल्पीयस्त्वमिति । यदि गललग्नान्नेन मरणस्थले अन्य-मरणोद्देशेन क्षिप्तनाराचहतब्राह्मणमरणस्थले च तदनुकूलव्यापाररूपहिंसायां निषेधविषयत्वभिया हिंसा-शब्दार्थे मरणोद्देश्यकत्वविशेषणं प्रवेश्यते, तदा अग्नीषोमीयहिंसायामपि तदविषयत्वाय हिंसाशब्दार्थे तद्व्यावर्तकविशेषणान्तरं प्रक्षेप्तव्यं स्यात् । तथा च तत्र नोत्सर्गापवादः । तथा च तप्तचक्राद्यङ्कने कस्यचित् कदाचित् लोहितोत्पत्तावपि न तस्य तन्निषेधविषयत्वमिति स्थितम् ॥

अस्तु वा तप्तचक्राद्यङ्कनं नियमेन लोहितोत्पत्त्यनुकूलव्यापारः, तथापि तस्य न निषेधविषयत्वम्, सामान्यनिषेधस्य विशिष्य विहितेतरपरत्वात् । न हिंस्यादित्यादिसामान्यनिषेधस्य विशिष्य विहिता-ग्नीषोमीयादिहिंसातिरिक्तहिंसाविषयत्वात् । अन्यथा कर्णविधादेरपि न लोहितमित्यादिनिषेधविषयत्व-प्रसङ्गात् । तथाच कर्णविधादिकं न केनाप्यनुष्ठीयेत । अमुमेवार्थं पाद्मवचनान्यपि उपोद्बलयन्ति ।

**वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यै विशेषतः ।**
**प्रतपेच्छङ्खचक्राभ्यां हुत्वा होमं विशेषतः ॥**
**अन्यैर्न दाहयेद्गात्रं ब्राह्मणो हरिलाञ्छनात् ।**
**शङ्खचक्रगदाखड्गशार्ङ्गादन्यैर्हरेरपि ॥**
**न लक्षणैर्दहेदङ्गान्यदग्धो नार्हति क्रियाम् ।**

एतेन 'स्वशरीरेऽन्यदेहे वा दहेदिति कर्णिकद्विज'[1] इति निषेधोऽपि व्याख्यातः । अत्र हि द्विज-शब्दो ब्राह्मणपरः । तस्य त्रिकरणं निषिध्यते । त्रयश्च किणा ज्याघातायुधद्यूतनिरन्तराधिकारनिमित्ता इति तद्व्याख्यातृभिरेव व्याख्यातम् । यदि करण(किण)मात्रनिषेधपरोऽयं स्यात्तदा त्रिशब्दो निरर्थकः स्यात् । नन्वेवं पाद्मवचनानुसारेण विधिनिषेधयोः व्यवस्थितत्वे विष्णुस्मृत्युक्तव्यवस्थाविरोधः स्यात् । अस्मदुक्तव्यवस्थाङ्गीकारेणैव शूद्राणामपि भगवदायुधधारणमेव कर्तव्यम्, न त्वन्यायुध-

१. दहेन्न त्रिकरणं द्विजः इति स्यात् पाठः ।

धारणमिति पाद्मवचनेन नियम्यते इत्यङ्गीकर्तव्यमिति चेत् तथा सति बहुबाधापत्तेः। तथाहि दक्षिणे तु भुजे विप्र इत्यत्र तावत् विप्रशब्दस्य लक्षणया शूद्रपरत्वमभ्युपगन्तव्यम्।

**धृतोर्ध्वपुण्ड्रः शृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा।**
**ता(स्व)रेण मन्त्रेण सदा हृदिस्थं परात्परं यन्महतो महान्तम्॥**

इत्यादिश्रुतेस्तु न कथञ्चिदपि शूद्रविषयत्वं शक्यते वक्तुम्। अत्र हि प्रणवानुसन्धानपूर्वक-विष्णुध्यानाङ्गतया चक्रधारणादिकं विधीयते, न हि ब्रह्मविद्यायां प्रणवानुसन्धाने वा शूद्रस्याधि-कारोऽस्ति। अन्यथा अपशूद्राधिकरणविरोधापत्तेः। '**सावित्रीं प्रणवं यजुर्लक्ष्मीं शूद्राय नेच्छन्ति**' इति विरोधापत्तेश्च। तथा अतिपाप्मानमरातिं तरेम, एभिर्वयमुरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवेम इत्यादिश्रुतौ शूद्राणामेव तथानुसन्धानं च कल्प्यं स्यात्, तथा 'नित्यं धारयते द्विजः, ब्राह्मणस्य विशेषेण, विप्रश्चक्रलाञ्छनसंयुतः' इत्यादि वृद्धमनुशङ्खयमादिस्मृतिस्थद्विजब्राह्मणविप्रादिशब्दानां लक्षणया शूद्रपरत्वं कल्प्यं स्यात्। तथा '**ब्राह्मणैः क्षत्रियैः वैश्यैः शूद्रैश्च कृतलक्षणैः**' इत्यादौ '**दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धये**' (इत्यादौ) ब्राह्मणशब्दशूद्रशब्दबहुवचनान्तसर्ववर्ण-शब्दश्चानर्थकः स्यात्।

तथा—

**ब्रह्मचारी गृहस्थश्च [1]वानप्रस्थो यतिस्तथा।**
**अवश्यं धारयेच्चक्रमग्नितप्तमतन्द्रितः॥**

इत्यादौ ब्रह्मचार्यादिशब्दानामानर्थक्यं स्यात्। न हि शूद्राणामेवमाश्रमविभागोऽस्ति। किञ्च 'अन्यैर्न दाहयेद्गात्रं ब्राह्मणो हरिलाञ्छनात्' इत्यादौ उदाहृतपाद्मवचनगतब्राह्मणविषयस्य यदि शूद्रविषयत्वं स्यात्, तदा—

**उपनीय विधानेन पश्चात् कर्मसु योजयेत्।**
**ब्राह्मण्यमन्त्रसिद्ध्यै च ज्ञानसिद्ध्यै विमुक्तये॥**

इत्यादिपूर्वोत्तरानेकवचनविरोध एव स्यात्। तस्माद् बहुश्रुतिस्मृतीतिहासपुराणाद्यनुसारेणैव विष्णु-स्मृत्यादिवचनानि व्याख्येयानि। बहुबाधस्य अन्याय्यत्वात्। त्वद्विवक्षितार्थत्वस्याप्रनुत्तमालिका-करणदीपारोपणसङ्कीर्तनादिकमेकजातेः शूद्रस्य धर्मः। द्विजन्मनस्तु न जातु न केवलं एतावानेव धर्मः,

---

१. वानप्रस्थोऽथ भिक्षुकः।

अन्यदपि श्रुत्याद्युदितं यज्ञादिकमप्युभयं धर्म इति प्रथमश्लोकार्थः । गीतनृत्तयोः ब्राह्मणधर्मत्वं च हरिगीतनृत्तादिरूपो धर्मोऽयं एकजातेः शूद्रस्य[1] जातु न गृह्यम्(?) । किन्तु द्विजन्मन एव ।

यथोक्तम्—

**स्त्रियः शूद्रादयश्चापि बोधयेयुः हिताहितम् ।**
**यथार्हं माननीयाश्च नार्हन्त्याचार्यतां क्वचित् ॥** इति ।

न च प्रथमपक्षे जातुशब्दस्य केवलार्थकत्वे लक्षणा, द्वितीयपक्षे च अध्याहारो दोषः । बहुबाधापेक्षया तयोः सह्यत्वात् । द्वितीयवचनानां तु यथा चक्राङ्कित इत्यत्र अङ्काभ्यां शङ्खचक्रे स्वयमेव बिभर्ति, न तु सुवर्णादिनिर्मिताभ्यां न वा आचार्यमुखेन, तस्य धारणस्य अकृतसमत्वेन शङ्खचक्रादिधारणरहितस्येव सकलद्विजकर्मसु अनधिकारात् सः बहिष्करणयोग्यः ।

**सुदर्शनं पाञ्चजन्यं सौवर्णेन प्रकारयेत् ।**
**रौप्येण वाऽपि ताम्रेण कांस्येनापि प्रकारयेत् ॥**

**आचार्यादनभिप्राप्तः प्राप्तो वा भूरिदक्षिणम् ।**
**अङ्गोपाङ्गैश्च संयुक्तं कृतोऽपि न कृतो भवेत् ॥**

इति अन्यथैव नियमोक्तेरिति ।

**नाङ्कनाय दहेद्देहं दहेच्चेत् कामकारतः ।**
**नाधिकुर्वन्ति दग्धाङ्गाः श्रौतस्मार्तेषु कर्मसु ॥**

इति बोधायन(श्रु)स्मृतिरपि एवंपरतया व्याख्येया । तत्रैव कामकारत इत्युक्तत्वात् । 'अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः' इति शातातपस्मृतेरपि अन्यैर्न दाहयेद्गात्रं इत्यादिपाद्मवचनेन गतिरुक्तैव, हारीतस्मृतौ रागसञ्छिन्नगात्राणामिति छेद एव निषिध्यते । न तु तप्तचक्राङ्कनम् । रागसन्दग्धगात्राणामिति पाठेऽपि न दोषः । निषेधस्य रागविषयत्वस्य स्फुटत्वादिति न किञ्चिदनुपपन्नम् । एवं निषेधकपुराणवचनान्यपि अविरोधेन व्याख्येयानि ।

केचित्तु, न लोहितं कुर्यादित्यादिनिषेधानां सामान्यरूपत्वेऽपि—

**शङ्खचक्राद्यङ्कनं च नृत्तगीतादिकं तथा ।**
**एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥**

---

१. सकाशादिति अध्याहार्यम् ।

इत्यादीनाम्, दक्षिणे तु भुजे विप्रः इत्यादिश्रुतिविरुद्धानां विरोधाधिकरणन्यायेन अप्रामाण्यं स्यात् । अत्र हि औदुम्बरी सर्वा वेष्टयितव्या इत्यादिस्मृतीनां औदुम्बरीं स्पृष्ट्वा उद्गायेत् इत्यादिश्रुतिविरुद्धानामप्रामाण्यमुक्तम् । न च (न) लोहितं कुर्यादित्यादेः सामान्यरूपत्वेऽपि शाखानां विप्रकीर्णतया शङ्खचक्राद्यङ्कनं ब्राह्मणेन न कर्तव्यम् इत्येवमाकारा श्रुतिः सम्भवतीति नात्र विरोधाधिकरणन्यायावतार इति वाच्यम् । औदुम्बरी सर्वा वेष्टयितव्या इत्येवमाकारश्रुतिसम्भावनाया अपि सुलभत्वेन तेषामपि उदाहरणत्वस्य वक्तुमशक्यत्वात् । शाकलादिभिः स्वीयग्रन्थानां श्रुतिमूलतया अप्रामाण्यानभ्युपगमेन तादृशश्रुतिव्यतिरेक एव निश्चीयते इति चेन्न ।

तैस्तथाऽभ्युपगमेऽपि वैदिकानां त्वदुक्तरीत्या तन्मूलभूतश्रुतिसम्भावनायाः सुलभतया वैदिकान् प्रत्यपि तदुक्तस्य सर्वस्याप्यर्थस्य धर्मत्वप्रसङ्गात् । किञ्च विधिमात्रे सर्वत्र निषेधश्रुतिसम्भावनायाः सुलभत्वेन गुरुलघुत्वेन विकल्पायोगेन च विधिमात्रस्याननुष्ठानलक्षणाप्रामाण्यप्रसङ्गः । यदि च अत्यन्तानुपलभ्यमानतया गगनारविन्दकल्पं तादृशं श्रुतिवचनं कश्चिदाशङ्केत सोऽयं स्वजननीव्यभिचारशङ्कया स्वस्यापि ब्राह्मण्ये न विश्वसेदेव । अस्मदुदाहृताखिलश्रुतीनां तु विश्वसनीयत्वे पञ्चरात्रादिविनियोग एव हेतुरिति च कश्चिद्दोषः । अतः शङ्खचक्राद्यङ्कनञ्चेत्यादिश्रुतेः स्मृत्या बाध एवेत्याहुः ।

ननु—

> **"श्रूयते च महादोषः श्रूयते च महत्फलम् ।**
> **फलं तत्र परित्याज्यं दोषो हि बलवत्तरः ॥"**

इति मनुस्मृतौ फलसाधनत्वेन विहितस्यापि दोषहेतोः कर्मणो दोषस्य परिहार्यतया अननुष्ठेयत्वमुक्तमिति चेन्न,

तप्तचक्रादिधारणस्य तद्वचनविषयत्वाभावात् । किं विधिनिषेधयोः सामान्यविशेषरूपत्वं किंवा उभयोरपि विशेषरूपत्वम् । किंवा विधेः विशेषरूपत्वं निषेधस्य तु सामान्यरूपत्वम् । नाद्यः निषेधवाक्यस्य पर्युदासाश्रयणेन यजतिषु ये यजामहे इति मन्त्रं कुर्वन्ति इत्यादिविधिशेष एवाभ्युपगतः । न हि तत्र दोषफलयोः उभयोरपि साधनत्वम् । न द्वितीयः, अग्नीषोमीयपश्वालम्भनन्यायेन विशेषविधिबलेन सामान्यनिषेधस्य बाधिततया तादृशकर्मफलसाधनमित्येवाभ्युपगन्तव्यत्वात् । न हि प्रकृते दोषहेतुत्वं श्रूयते, न लोहितं कुर्यादित्यादिकं तु सामान्यनिषेधः इत्युक्तम् । तस्मान्मनुवचनं श्येनादिविषयमेवाङ्गीकर्तव्यम् । तत्र दोषफलयोरुभयोरपि सत्त्वात् । न हि हन्यादिति तत्र दोषश्रवणात् । तथा श्येनेनाभिचरन् यजेत इति प्रकृत्य यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते

यमभिचरति श्येनेन इति द्वेष्यवधरूपफलश्रवणात् । न चात्रापि सामान्यविशेषन्यायात् फलहेतुत्वमेव न दोषहेतुत्वमिति युक्तम् । अग्नीषोमीयवधेन हिंसायाः विधानाभावेन तद्विषयत्वायोगात् । यदा हिंस्यं तदा श्येननामकेन यागेन यजेतेति तत्र हि द्वेष्यवधरूपफलोद्देशेन श्येनयागो विधीयते साधनस्यैव विधिव्यापारविषयत्वात् न फलस्य । अतो न निषेधस्य विषयः । सामान्यनिषेधस्य विशिष्य विहितेतरपरत्वात् ।

ननु विरोधे हि सामान्यनिषेधस्य विशिष्य विहितेतरपरत्वं वाच्यम् । न चात्र विरोधोऽस्ति । तथाहि— अग्नीषोमीयं पशुमालभेत इत्यादिक्रतुशरीरनिर्वर्तकतया सन्निपत्योपकारकपश्वालम्भनं विधीयते । न हिंस्यादित्यादिना च हिंसामात्रस्य दोषहेतुत्वमावेद्यते । न हि क्रत्वङ्गत्वपापहेतुत्वयोः विरोधोऽस्ति । अन्यथा एकस्यैव दध्नः क्रत्वर्थत्वपुरुषार्थत्वाभावप्रसङ्गात् । किञ्च वाक्यद्वयानुसारेण एकस्या एव अग्नीषोमीयहिंसायाः शुभाशुभहेतुत्वम् ।

स्तुतावपि वेदप्रामाण्यानिर्वाहादिति चेत् ।

अत्र केचिदाहुः । हिंसा द्विविधा, क्रत्वर्था पुरुषार्था चेति । तत्र पुरुषार्थहिंसैव निषेधस्य विषयः, क्रत्वर्था तु विधेः, तत्र दोषस्यापि सम्भवेऽपि तुल्यायव्ययफलत्वेनाप्रवृत्त्यापत्त्या वेदाप्रामाण्यापत्तौ तत्परिहाराय एवमेव व्यवस्थायाः अभ्युपगन्तव्यत्वादिति अग्नीषोमाद्यालम्भो हिंसैव न भवति, येनायं निषेधविषयः स्यात् । प्राणवियोजनफलकव्यापारमात्रस्य हिंसात्वाभावात् । अन्यथा गललग्नान्नमरणस्थले परिवेषयितुः हिंसकत्वप्रसङ्गात् । तद्व्यावृत्त्यर्थं मरणोद्देशकत्वे सति इति विशेषणे अग्नीषोमीयादिहिंसाव्यावृत्त्यर्थं अशास्त्रीयक्रमेणेत्यपि विशेष्यताम् । गललग्नान्नमरणे परिवेषयितुः हिंसकत्वव्यवहाराभावात् तद्व्यावृत्त्यर्थं तद्विशेषणमिति चेत् तुल्यम्, न हि ज्योतिष्टोमादिकमनुतिष्ठन्तं प्रति अयं हिंसकः इति कोऽपि वैदिको व्यवहरति । लौकिकव्यवहारानुरोधेनैव शब्दार्थस्य निर्णेयत्वात् । तथा मन्त्रवर्णोऽपि '**न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः** (१-१६२-२१) हरी ते युञ्जा प्रिषति अभूतामुपास्थाद् वाजी धुरि रासभस्य ॥

**यत्र यन्ति सुकृतो नापि दुष्कृतः । तत्र त्वा देवः सविता दधातु ॥**

इति हिंसाद्यभावोक्तिपूर्वकं संज्ञपनीयपशोर्विशिष्टदोषाप्राप्तिं वदति । न चात्र विरोधोऽस्ति[1] येनायं गुणवादः स्यात् । तस्मादग्नीषोमीयपश्वालम्भनं न हिंस्यादिति निषेधविषय एव न भवति इति न किञ्चिदनुपपन्नमित्याहुः ।

---

१. विशेषोऽस्ति इति पाठः ।

तस्मान्मनुवचनस्य श्येनादिकमेव विषय इति। किञ्च प्रकृते न फलहेतुत्वमात्रं श्रूयते। दिवानक्तं बिभृयुस्तज्जनास इति नित्यत्वस्यापि श्रवणादिति सन्तप्तचक्रादिधारणस्यावश्यङ्कर्तव्यत्वमिति।

नन्विदमयुक्तम् तेन पवित्रेण शुद्धेन पूताः, गोविन्दुर्द्रप्स आयुधानि बिभ्रत्, मध्ये बाहुमदधत् सुदर्शनम्, मूले बाह्वोर्दधतेऽन्ये पुराणाः, बिभृयाद्वै सुदर्शनम्, धृतोर्ध्वपुण्ड्रः धृतचक्रधारी इत्यादिषु श्रुतिषु सुवर्णं [1]धार्यमित्यादाविव आभरणरूपेणैव [2]सुदर्शनादिधारणस्य प्रतीतेः। यथाह बृहस्पतिः—

**जातस्य तु कुमारस्य धारयेत् पञ्चमे दिने।**
**चक्रं कृत्वा सुवर्णेन षडरं मन्त्रसंयुतम्॥** इति।

शाण्डिल्योऽपि—

**कारयित्वा सुवर्णेन पञ्चायुधगणं हरेः।**
**बध्नीयात् कर्णदेशेषु बालानां सूतिकागृहे॥**

**मुक्तामणिसुवर्णाद्यैः कृत्वा चक्रादिभूषणम्।**
**यथार्हं बिभृयुः सर्वे पुमांसः स्त्रीजनोऽपि वा॥** इति।

एवं स्मृतिपुराणादिष्वपि द्रष्टव्यमिति चेन्न।

सर्वशास्त्रप्रत्ययन्यायेन सर्ववेदान्तप्रत्ययन्यायेन च एकप्रकरणपठितानां सर्वेषामपि व्याख्यानानामेकविषयत्वे सति पशुमालभेतेति पशुशब्दस्य छागवपायामिति समानप्रकरणपठितमन्त्रोपात्तछागे पर्यवसानवत् अतप्ततनुः चक्रं बिभर्ति वपुषाभितप्तम्, नेमिना तप्ततनुः, उरुक्रमस्य चिह्नैरङ्किता इत्यादि-समानप्रकरणपठितमन्त्रान्तरोपात्तविशेषेष्वेव तासामपि पर्यवसानस्योचितत्वात्। जातस्य तु कुमारस्य इत्यादिकं समानप्रकरणपठितस्य ग्रहादि (पीडादेः निवारणार्थं) धारणान्तरपरम्। तस्मादुदाहृतानां समानप्रकरणपठितानां कारणवाक्यानां छागपशुन्यायेन एकत्र विशेषे पर्यवसानाभावेन जगत्कारण-मनेकं स्यादिति।

एतेन तेन पवित्रेण शुद्धेन पूता इत्यादौ चक्रादिधारणस्थानमेव प्रतीयते। अतप्ततनूः नेमिना तप्ततनुः, चक्रं बिभर्ति वपुषाभितप्तमित्यादौ शरीरमात्रे मध्ये बाहुमित्यत्र बाहुमध्ये दक्षिणे तु भुजे विप्र इत्यादौ भुजमात्रे, मूले बाह्वोरित्यत्र बाहुमूले च तद्धारणं प्रतीयते। एवं च कथमत्र निर्णय इति निरस्तम्।

---

१. भार्यम्। २. सुदर्शनधारणस्य।

अत्रापि सामान्यविशेषन्यायेन मूले बाह्वोरित्युक्तस्थानविशेषपर्यवसानस्य युक्तत्वात् ।

तथाप्यव्यवस्था दुष्परिहरा । चरणं पवित्रं, पवित्रं ते विततं, चक्रं बिभर्ति, अदधत् सुदर्शनम्, नेमिना तप्ततनूः, भृतचक्रधारीत्यादौ चक्रधारणमात्रस्य प्रतीतेः । उरुक्रमस्य चिह्नैः, आयुधानि बिभ्रत् इत्यादौ च शङ्खचक्राद्यनेकायुधधारणस्य प्रतीतेश्च । अब्जचक्रे पवित्रे, बिभृयाद्वै सुदर्शनम्, सव्ये तु शङ्खम् इत्यादौ शङ्खचक्रोभयधारणस्य प्रतीतेः । न चात्र सर्वशाखाप्रत्ययन्यायः । प्रतप्तपञ्चायुधधारणस्य कैश्चिदप्यकरणात् । नापि विकल्पः, तत्सूचकवाकाराद्यदर्शनात्, गुरुलघुविषये विकल्पायोगाच्च । व्यवस्थापकप्रमाणाभावे व्यवस्थितविकल्पाश्रयणायोगाच्च इति चेत् ।

अत्र केचित् आयुधानि बिभृयात् इत्यादौ उपादेयगततया बहुत्वं पश्वेकत्वादिवद् विवक्षितम् । तस्य च कपिञ्जलाधिकरणन्यायेन त्रित्वपर्यवसाने प्राप्तेऽपि ।

**ललाटे तु गदा धार्या मूर्ध्नि चापशरौ तथा ।**
**हृन्मध्ये नन्दकं चैव शङ्खचक्रे भुजद्वये ॥**

**उपवीतादिवद्धार्याः शङ्खचक्रगदादयः ।**
**पञ्चायुधानि धार्याणि भक्तिश्रद्धोपबृंहितैः ॥**

इति वचनानुसारात् पञ्चत्वसङ्ख्यायां तस्य पर्यवसानमाश्रयणीयम् । चक्रं बिभर्ति, अब्जचक्रे पवित्रे इत्यादिकं तु, 'एकं द्वौ वृणीते त्रीन् वृणीते चतुरो वृणीते न पञ्चादि वृणीते, इत्यत्रैकद्विचरणयोः त्र्यार्षेयवरुणैकदेशानुवादत्ववत् पञ्चायुधधारणं विध्येकदेशानुवादः । एवं चित्रादिशब्दानामपि ब्राह्मणैः क्षत्रियैरित्यादिविहितादिकार्यैकदेशानुवादत्वम् । (अतः) सर्वेषामपि सदा पञ्चायुधानि धार्याणीत्याहुः ।

अन्ये तु एकस्मिन्नेव मन्त्रे प्रते विष्णो, अब्जचक्रे पवित्रे इत्यादिशङ्खचक्रादिधारणं विधाय अन्ये पुराणा लिङ्गान्यङ्के तावकान्यर्पयन्ति इति केषाञ्चिदतिशयिताधिकारिणामेव पञ्चायुधधारणविधानात् ।

**चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ।**
**धारयित्वैव विधिवद् ब्रह्मकर्म समारभेत् ॥** इति इत एव विकल्पोक्तेः

**चक्राङ्कितधराः केचित् केचिच्छङ्खधरास्तथा ।**
**शङ्खचक्रधराः केचित्** इत्यादौ पृथगभिधानाच्च ।

[1].. वा विषयतया शक्ताशक्तविषयतया वा पञ्चायुधद्व्येकायुधधारणानि व्यवस्थाप्यन्त इत्याहुः ।

---

१. अत्र पाठः लुप्तः ।

ननु तथापि तप्तचक्रादिधारणं किं नित्यम् उत नैमित्तिकम् यद्वा काम्यम् अथ प्रायश्चित्तम् । नाद्यः नियतसमयकर्तव्यत्वाभावात् । न द्वितीयः । निमित्ते सति चोदित्वाभावात् । अकरणे प्रत्यवायाश्रवणाच्च । न तृतीयः । अनियतानुष्ठानप्रसङ्गात् । अत एव न तुरीयः । याजयित्वा प्रतिगृह्य वा .... स्वाध्यायं वेदमधीयीत ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत इत्यादिवत् पापविशेषसंयोगे सति अचोदितत्वाच्च । सामान्यतः पापनिवर्तकत्वेन प्रायश्चित्तत्वे च धर्ममात्रस्य तथात्वापत्तेः । धर्मेण पापमपनुदति इत्यादिश्रुत्या धर्ममात्रस्य पापनिवर्तकत्वावेदनात् । तस्मात् कथमस्य धर्मत्वमिति चेत् । उच्यते—

**'दिवा नक्तं बिभृयुस्तज्जनासः। '**
**ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते द्विजः ॥**

**'चक्राङ्कितस्तदा तिष्ठेत् चिह्नं कृष्णायुधादिना ।**
**नित्यं कुर्वन्नतन्द्रितः ॥'**

इत्यादिश्रुतिस्मृतिपुराणेषु तस्य नित्यत्वं तावच्छ्रूयते ।

**'अचक्रधारिणं विप्रं यः श्राद्धे भोजयिष्यति ।**
**रेतोमूत्रपुरीषादि स पितृभ्यः प्रयच्छति ॥'**

इत्यादावकरणे प्रत्यवायश्चोच्यते ।

तथा—

**सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।**
**उपनीय विधानेन पश्चात्कर्मसु योजयेत् ॥**

इत्यादौ उपनयनाव्यवहितकालः तद्धारणकाल इत्युच्यते । न चैवम्—

**शृणु वत्स प्रवक्ष्यामि मन्त्रदीक्षाविधिं परम् ।**
**सुदर्शनं पाञ्चजन्यम् ............................. ॥**

इत्यादिवचनान्तरविरोधः । तत्र भगवन्मन्त्रोपदेशकाल एव चक्रादिधारणकथनात् । उपनीतस्यैव च वैदिकमन्त्रोपदेशोऽधिकारादिति वाच्यम् । तस्य प्रयोगान्तरत्वात् ।

**उपवीतादिवद्धार्याः शङ्खचक्रगदादयः ।**
**ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥**

**अङ्कयेच्छङ्खचक्राभ्यां दक्षिणेतरपार्श्वयोः ।**
**विप्राणां वेदविदुषां वैष्णवानां विशेषतः ॥**

इत्यादौ तत्रोपनयनाद्यङ्गताया भगवन्मन्त्रोपदेशाङ्गतायाश्च प्रतिपादनात् । वैष्णवानां विशेषत इत्यनेन प्रयोगान्तरे तस्याकरणे प्रत्यवायभूयस्त्वमेवोच्यते, न तु ब्राह्मणोपयुक्तधारणस्यानावश्यकत्वम् । यथा— तस्मादाहिताग्निर्नानृतं वदेदित्यादिकं आहिताग्नेः अनृतवचने प्रत्यवायाधिक्यपरम्, अनाहिताग्नेस्तु तदल्पीयस्त्वपरम्, न त्वनाहिताग्नेः अनृतवचने सर्वात्मना दोषाभावपरं तद्वत् । एवं शृतास इद्रहन्तरस्तत्समाशत । तद्विष्णोः परमं पदम्, येन गच्छन्ति लाञ्छिताः, तुरीयं धाम महिषो विवक्ति, नेमिना तप्ततनूः ब्रह्मणः सायुज्यं सलोकतामाप्नोति, स एति नाकम् इत्यादिश्रुतिषु फलसाधनत्वश्रवणात्, काम्यत्वमप्यङ्गीकर्तव्यम् । न चैवं नित्यानित्यसंयोगविरोधः । यावज्जीवमग्निहोत्रं जुहोति, अग्निहोत्रं जुहुयात् स्वर्गकामः, दध्ना जुहोति, दध्नेन्द्रियकामस्य – इत्यादाविव एकस्यैव विनियोगभेदेन तदुभयोपपत्तेः । तथा अतिपाप्मानमरातिं तरेम, स एति नाकं दुरिता विधूय, इत्यादिश्रुतिषु पापनिवर्तकतया प्रायश्चित्तत्वं नैमित्तिकत्वं चोच्यते, धर्ममात्रस्य पापनिवर्तकत्वेन प्रायश्चित्तत्वस्येष्टत्वात् । न च नित्यस्य प्रायश्चित्तरूपादिकं विरुद्धम् । अयाजयित्वा अप्रतिगृह्य वा अनश्नन् स्वाध्यायं वेदमधीयीत, त्रिरात्रं वा यो यक्ष्यति, इत्युक्त्वा, 'न यजते त्रैधातवीयेन यजेत' इत्यादौ नित्ययोरेव अध्ययनगायत्रीजपयोः दीक्षाशेषत्वेन क्रत्वर्थत्वस्यैव त्रैधातवीयस्य प्रायश्चित्तादिरूपत्वस्य च दर्शनात्, 'तवाङ्किता लोके सुभागा भवेम, भूरितेजः प्रयच्छति, स एति नाकं दुरिता विधूय, नेमिना तप्ततनूः ब्रह्मणः सायुज्यं सलोकतामाप्नोति, जन्माम्भोधिं तर्तवे, तद्विष्णोः परमं पदं येन गच्छन्ति लाञ्छिताः' इत्यादिश्रुतिषु उच्यमानं सौभाग्यतेजःप्रधृष्णुत्वदुरितावधूननमोक्षाद्यनेकफलसाधनत्वमेकस्य कथमुपपद्यत इति वाच्यम् । यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वेभ्यः कामेभ्यः दर्शपूर्णमासौ, वैश्वानरं द्वादशकपालं निर्वपेत्, पुत्रे जाते, यदष्टाकपालो भवति पूत एव तेजस्व्यन्नादः इन्द्रियावी पशुमान् भवति, इत्यादिश्रुत्यनुसारेण सौभरदर्शपूर्णमासवैश्वानरेष्ट्यादीनामनेकफलसाधनत्वस्याभ्युपगमात् ।

नन्वेवमपि तप्तचक्रादिधारणरूपकर्मणो मोक्षसाधनत्वमङ्गीकर्तुं न युज्यते । मोक्षस्य ब्रह्मज्ञानैकसाध्यत्वात् । तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते । न कर्मणा, नास्त्यकृतः कृतेन, न दानेन न चेज्यया इत्यादिश्रुतिस्मृतिभ्यः । न च वचनबलात् तस्य मोक्षसाधनत्वं निषेधश्रुतीनां सामान्यरूपतया सङ्कोच इति वाच्यम् । अपाम सोमं अमृता अभूम, अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति इत्यादिवचनबलात् सोमपानचातुर्मास्यादीनामपि मोक्षसाधनत्वप्रसङ्गात् ।

न चेष्टापत्तिः श्रोतव्य इत्यादिशास्त्राणामननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्, अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् इति न्यायात्। न च शास्त्रद्वयप्रामाण्यात् कर्मविशेषाणां ब्रह्मज्ञानस्य च समुच्चित्य मोक्ष-साधनत्वम्। तथासति कर्मणः ज्ञानद्वारा मोक्षसाधनत्वापत्त्या कर्मणां चाङ्गित्वापत्त्या यज्ञेन दानेन इति कर्मणां ज्ञानाङ्गत्वप्रतिपादकशास्त्रविरोधात् ज्ञानस्यैव अङ्गित्वाभ्युपगमाच्च इति चेत्।

अत्राहुः— "धृतोर्ध्वपुण्ड्रः धृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा, वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यै विशेषतः। प्रतपेच्छङ्खचक्राभ्यामि"त्यादिश्रुतिस्मृतिषु तावत् तप्तचक्रादिधारणरूपकर्मणो ब्रह्मज्ञानाङ्गत्वमवसीयते, ब्रह्मज्ञानं च मोक्षहेतुरिति स्थिते ब्रह्मज्ञानरूपाङ्गिफलमेव ब्रह्मसायुज्य-मित्यादिना तदङ्गेन तप्तचक्रादिधारणे उपचर्यते। यथा 'ता वा एताः स्वर्गस्य लोकस्य' इत्यादौ चातुर्होत्रचयनादिफलमेव तदङ्गभूत-अपायाख्येष्ट्यादिषूपचर्यते तद्वत्। एवं पापनिवर्तकत्वादिकमपि तस्य पापनिवर्तककर्मावृततया स्वातन्त्र्येण वा उपपादनीयम्। तस्य वैदिककर्माङ्गत्वं च "पारयित्वैव विधिवत् ब्रह्मकर्म समारभेत्" इत्यादिपाद्मवचनैः स्पष्टम्। न च एकस्यानेकशेषत्वं स्वतन्त्रस्य सतः अङ्गत्वं च विरुद्धम्। स्वतन्त्रस्यैव मन्त्रादेः अनेककर्मशेषत्वस्य स्वतन्त्रस्य सतो वाजपेयादि-बृहस्पतिसवाद्यङ्गस्य च दर्शनादिति। तस्मात् प्रचरदवस्थश्रुतिगतमन्त्राणाम् अखिलमन्त्राणां च तप्तचक्रादिधारणविधायकत्वेन कश्चिद्दोषः।

ननु सर्वेषामपि मन्त्राणां कथं तप्तचक्रादिधारणविधायकत्वम्। धारणस्य वाक्यान्तरप्राप्तत्वेन अपूर्वत्वाभावात्। अन्यथा अग्निहोत्रं जुहोति, उदिते जुहोति, दध्ना जुहोति, अग्निहोत्रं जुहुयात् स्वर्गकामः इत्यादिषु सर्वत्रापि होमविधानप्रसङ्ग इति चेत्—

अत्र केचित्— उदाहृतमन्त्राणां भिन्नशाखास्थत्वेन तत्तदध्येतृपुरुषान् प्रति अपूर्वार्थत्वसम्भवेन तेषां सर्वेषामपि विधायकत्वोपपत्तेः। न च एकस्यैव सर्वशाखाध्ययनम्। साङ्गं सशिरस्कं स्वीय-शाखाध्ययनस्यैव स्वाध्यायोऽध्येतव्यः इत्यध्ययनविधिविहितत्वात्। अन्यथा तत्र स्वाध्यायशब्द-वैय्यर्थ्यात्, स्वाध्यायशब्दस्यैव देवतावाचकत्वे प्रमाणाभावात्, [1]अध्यायानामुपाकर्मेत्यादिस्मृतिषु अध्यायशब्दस्य वेदे प्रयोगदर्शनात्।

त्रिःस्वाध्यायं वेदमधीयीत इत्यादौ वेदशब्दस्य पृथगुपादानाच्च। तत्र वेदशब्दसामानाधिकरण्येन स्वेन अध्येतुं योग्यं इत्यर्थस्याश्रयणीयत्वात्। न च स्वीयत्वानिरूपणम्। वयं तैत्तिरीयाः, वयं काण्वाः

१. अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु॥ याज्ञवल्क्यस्मृतिः. आचाराध्याय-स्नातकधर्मप्र. श्लो. १४२.

वयं माध्यन्दिनाः इत्यादिकुलपरम्पराप्राप्तव्यवहारानुसारेण तन्निरूपणसम्भवात् । न च तैत्तिरीयादेः शाखान्तराध्ययनप्रसङ्गः, अभ्युदयार्थं तस्यापि तदध्ययनोपपत्तेः । सर्वैः सर्वशाखाध्ययनस्य कर्तुमशक्यत्वाच्च। केषाञ्चित् सर्वशाखाध्ययनसम्भवेऽपि तस्य तान्प्रत्येव अपूर्वत्वविधायकत्वात्, अन्यथा सर्वस्यापि वेदस्य नित्येश्वरप्रत्यक्षसिद्धार्थकत्वेन अस्मदादीन्प्रत्यपि तत्र अपूर्वार्थकत्वाभावप्रसङ्गात् । न च सर्वशाखाध्ययनसमर्थान्प्रत्यपि न तेषां मन्त्राणामपि सर्वात्मना अविधायकत्वम्। यथा अस्ति तत्र कश्चिदुत्पत्तिविधिः, क्वचिद्विनियोगविधिः, क्वचित्त्वधिकारविधिरित्यभ्युपगमात् । प्रयोगविधेश्च सर्वत्र परिकल्प्यत्वात् । न च भगवदायुधसङ्ख्यास्थानविशेषादिपरिज्ञानार्थं एकैकशाखाध्यायिनोऽपि सर्वशाखाप्रत्ययन्यायेन मन्त्रान्तराणामपि अनुसरणीयतया सर्वान्प्रत्यप्युत्पत्तिवाक्यैव प्राप्ततया कर्मस्वरूपविधेः अभ्युपगन्तव्यत्वेन अन्यत्र प्राप्तस्थानविशेषसङ्ख्याविशेषफलसम्बन्धादिकं विधाय तद्वत्त्वमेव वक्तव्यमित्येव वक्तव्यमिति वाच्यम् । अधीतिक्रमेणैव तत्तच्छाखिनः प्रति तन्मन्त्रस्याप्राप्तार्थकत्वसम्भवेन विधित्वाक्षतेः । न हि स्वशाखाध्ययनसमये अधीयमानं विनियोजकफलादिबोधकं वा वाक्यं उत्पत्तिवाक्यश्रवणाभावापराधेन मूकमिति शक्यते वक्तुम्। वाक्यानां गृहीतसङ्गतिकपुरुषान्प्रति बोधकत्वस्वाभाव्यात् । न चाध्ययनकाले सर्वात्मना व्युत्पत्त्यभावः । अर्थज्ञानपर्यन्तं व्याकरणाध्ययनादिना तत्सम्भवात् । अतः सर्वेषामपि मन्त्राणां विधायकत्वे बाधकाभावात् तद्विहितं तप्तचक्रादिधारणं सर्वैरप्यनुष्ठेयम् इति सिद्धम् ॥

ननु कथं अनुष्ठानप्रकारनिश्चयः । केषाञ्चित् सकृदेव अनुष्ठानदर्शनात् । अन्येषां च प्रतिसंवत्सरं एकवारं, द्विवारं, त्रिवारं वा अनुष्ठानदर्शनाच्च इति चेत् ॥

अत्र केचित्— अशेषकर्मशेषतया अस्य सकृदेवानुष्ठानम् । तथाहि—

**उपवीती शिखी विप्रः चक्रलाञ्छनसंयुतः ।**
**चक्रलाञ्छनहीनस्य विप्रस्य विफलाः क्रियाः ॥**

इत्यादिना शिखोपवीतानामिव चक्राद्यङ्कनस्य कर्मानुष्ठानकाले विद्यमानस्यैव तदङ्गत्वावेदनात् । शुचित्वापादकत्वेन अस्य कर्मशेषतया—

**विष्णुचक्राङ्कितं देहं पवित्रं इति वै श्रुतिः ।**

इत्यादिस्मृतौ चक्राद्यङ्कनरूपक्रियाणां सम्बन्धेनैव शरीरस्य पावित्र्यप्रतिपादनात् । प्राथमिकतापनेनैव बहुकालमनुवर्तमानचक्राद्यङ्कनस्य सम्पादयितुं शक्यत्वात्, तावन्मात्रोपजीवनेनैव कर्मप्रवृत्तेश्च न पौनः-

पुन्येन कर्माणि चक्रादिधारणमनुष्ठापयन्ति । अन्यथा प्रतिक्षणं तदनुष्ठानप्रसङ्गः । यद्वा, अनेकाङ्गयागप्रधानयागार्थानामपि बर्हिर्लवनादीनां न यावत्प्रधानमावृत्तिः, किन्तु सकृदेवानुष्ठानम् । संस्कृतबर्हिषैव सर्वेषां साध्यत्वात् [१].... या बर्हिस्तदुपसामित्मामित्यन्यशेषाहुतस्य बर्हिषोऽन्यत्र विनियोगेऽपि न संस्कारस्यावृत्तिः बर्हिषः एकत्वात् । यथा वा क्रतुसिध्यापदकानां स्नानाचमनादीनां क्रत्वादौ सकृदनुष्ठितानामेव सकलाङ्गप्रधानशेषत्वम् । कर्तुरेकत्वात् । तद्वत् सकृदेवानुष्ठितं तप्तचक्रादिधारणं सकलधर्मक्रतुशेषतां भजते । अस्य नित्यकाम्यत्वेऽपि नित्येनैव काम्यसिद्धेः उभयार्थमपि सकृदेवानुष्ठानम् । नैमित्तिके त्वस्य यावन्निमित्तं नैमित्तिकस्यानुष्ठेयत्वात् आवृत्तिफलत्वे प्रतिफलमावृत्तिरेव । एकानुष्ठानेन सर्वेषां फलानां युगपत् सिद्ध्यसम्भवात् । काम्यस्य कारीयदिः पुनःफलाकाङ्क्षायां अनुष्ठानावृत्त्यभ्युपगमात् । सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ इति सकलफलसाधकत्वेन श्रुतयोः दर्शपूर्णमासयोः प्रतिफलमनुष्ठानावृत्तेः सर्वकाम्याधिकरणसिद्धत्वाच्चेत्याहुः ।

अन्ये तु यावद्देहपातमनुवर्तमानचक्राद्यङ्कनस्य तापेन सम्पादने शरीरस्याक्षमतया किञ्चित्कालमनुवर्तमानमेव चक्राद्यङ्कनं कर्माङ्गतया श्रुत्यादिभिः विधीयते इति वक्तव्यम् । तावन्मात्रेणापि विधीनां चारितार्थ्यात् । तदपगमे पुनरनुष्ठेयमित्यशेषकर्मशेषतया अस्य असकृदेवानुष्ठानम् । तदनुपगमेऽपि तदनुष्ठानं नैमित्तिकम् । न च तप्तचक्रादिधारणस्य अङ्कनसम्बन्धेनैव कर्माङ्गत्वाभ्युपगमे प्रतिदिनं अनुष्ठीयमानगोपीचन्दनानुलिप्तचक्राद्यङ्कनेन क्रतुविधीनां चारितार्थ्यात्, तेषां न चक्राद्यङ्कनानुष्ठापकत्वम् । तप्तचक्राङ्कनेनैव कार्यसम्भवे गोपीचन्दनानुलिप्तचक्राद्यङ्कनवैयर्थ्यं चेति वाच्यम् । तप्तचक्राद्यङ्कनस्यैव नित्यतया तेनैव विधीनां चारितार्थ्यात् ।

**कृष्णायुधाङ्कितं पुण्यं गोपीचन्दनमृत्स्नया ।**
**प्रयागदिषु तीर्थेषु स गत्वा किं करिष्यति ॥**

इति पाद्मवचनानुसारेण गोपीचन्दनलिप्तचक्राद्यङ्कनस्य फलार्थत्वेन अवैय्यर्थ्याच्च इत्याहुः ॥

तस्मात् स्वतःसर्वज्ञसदाचारसङ्ग्रहप्रवृत्तपरमकारुणिकभगवत्प्रणीतपञ्चरात्रपुराणाभियुक्तोदाहरणादिसिद्धश्रुतिभावैः अप्रतिहतविधिशक्तिकैः तादृशपाञ्चरात्रसनकादिस्मृतिवचनैः सदैव (?) सदये कर्मणि विनियुक्ततया सिद्धसुदर्शनादिधारणतात्पर्यैः सर्वशाखाप्रत्ययन्यायेन अधिगतपरस्परसौहार्दैः अखिलमन्त्रैः अधीयमानमन्त्रैः स्मृतीतिहासपुराणसदागमसदाचारैश्च प्रसिद्धधर्मभावस्य श्रुतिस्मृत्याद्यनिषिद्धस्य तप्तचक्रादिधारणस्य सर्ववर्णाश्रमकर्तव्यत्वं सिद्धमिति सर्वं समञ्जसम् ।

---

१. अत्र समीचीनपाठः मृग्यः ।

**इति श्रीविजयीन्द्रेण मुनिना प्रीतये हरेः ।**
**अकारि चक्रमीमांसा वैष्णवोल्लासकारिणी ॥**

[1]*इति श्री विजयीन्द्रश्रीपादविरचिता चक्रमीमांसा समाप्ता ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



---

**पूर्वोत्तरविरुद्धापि वागेषास्तु सतां मुदे ।**
**असतां न हि युक्तायामपि वा विप्रमोदिता ॥**

अयं श्लोकः प्रकृतासङ्गतः, लिपिकारेण योजित इति प्रतिभाति ॥

---

१. लिखितपुस्तके इतः परम् इयं पंक्तिः दृश्यते— 'श्रीसुमतीन्द्रतीर्थगुरुभ्यो नमः । इतःपरं तप्तचक्रादिमुद्राधारणविषये प्रमाणमन्त्रावलिः लिखितास्ति । सा दर्शनीया' इति ॥

**इति श्रीविजयीन्द्रेण मुनिना प्रीतये हरेः ।**
**अकारि चक्रमीमांसा वैष्णवोल्लासकारिणी ॥**

*[1]इति श्री विजयीन्द्रश्रीपादविरचिता चक्रमीमांसा समाप्ता ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

---

पूर्वोत्तरविरुद्धापि वागेषास्तु सतां मुदे ।
असतां न हि युक्तायामपि वा विप्रमोदिता ॥

अयं श्लोकः प्रकृतासङ्गतः, लिपिकारेण योजित इति प्रतिभाति ॥

---

१. लिखितपुस्तके इतः परम् इयं पंक्तिः दृश्यते— 'श्रीसुमतीन्द्रतीर्थगुरुभ्यो नमः । इतःपरं तप्तचक्रादिमुद्राधारणविषये प्रमाणमन्त्रावलिः लिखितास्ति । सा दर्शनीया' इति ॥

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

## श्रीमद्विजयीन्द्रभिक्षुविरचिता

# न्यायाध्वदीपिका

रक्षोनाथस्य वक्षोभुवि विपुलनखैर्वज्रकल्पैः कृतायां
रक्तस्रोतःसरस्यां प्रतिफलितमिदं स्वं वपुर्वीक्षमाणः ।
स्मृत्वांशं भार्गवाख्यं रघुवरमपि तं रावणं तत्प्रसक्त्या
चैद्यं रुष्टः प्रहृष्टः प्रदिशतु [1]हृदि शं श्रीनृसिंहोऽनिशं नः ॥ १ ॥

उर्व्यां सत्कर्णतां यान्ति यद्गुणाकर्णने रताः[2] ।
अर्णवं गुणरत्नानां पूर्णबोधं तमाश्रये ॥ २ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा ॥ ३ ॥

श्रीमन्मध्वमताब्धीन्दुं दुर्वादिफणिपक्षिपम् ।
ब्रह्मण्याख्यमुनेः शिष्यं व्यासदेशिकमाश्रये ॥ ४ ॥

मूको[3]ऽपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ नत्वा गिरं भजे ॥ ५ ॥

न्यायाध्वगामिनामध्वदर्शनाद्गतिसिद्धये ।
तन्यते विजयीन्द्रेण तन्वी न्यायाध्वदीपिका ॥ ६ ॥

ग्रन्थग्रन्थिविमोकस्य नेशते येऽल्पबुद्धयः ।
तेषां कृते जयीन्द्रस्य कृतिरेषा प्रवर्तते ॥ ७ ॥

---

१. सुदृशं – क.पा.  २. याति – रतः – क.ग.पा.  ३. मूर्खोऽपि – ग.पा.

**नित्यं ये पदवाक्यमानसरणीसंशीलनालङ्कृता-**
**स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।**
**या चानेकविनेय[1]षट्पदततेः सम्फुल्लमल्ली सदा**
**सैषा वाग्विजयीन्द्रसंयमिमणेर्न्याध्वगैः सेव्यताम् ॥ ८ ॥**

यद्यपि शास्त्रदीपिकादिरूपा दीपिका न्यायाध्वगामिनां गतिसिद्धये तदध्वदर्शनसाधनरूपा पूर्वमेव प्रवृत्ताऽस्ति, तथाऽपि न तया बालाबालसाधारणं गतिसाधनदर्शनं सिद्ध्यति; शास्त्रदीपिकादेः प्रौढ-प्रकाशत्वेन बालदृष्ट्यभिभावकत्वात् । न हि दृष्ट्यभिभवे तत्पद्धतिदर्शनं सम्भवत् दृष्टचरम् । अत एव प्रौढसौरालोकाभिभूतदृष्टयो लोकाः सन्निकृष्टानपि पदार्थानपश्यन्तो दृश्यन्ते, तत एव प्रतिरुद्ध[2]-गतयोऽपि । तस्माद्बालाबालसाधारणं दृष्ट्यनभिभवेन न्यायाध्वदर्शनेन गतिसिद्ध्यर्थं तन्न्यायाध्व-दीपिकानिष्पादनाय अयमस्मदीयो यत्नः न विफलः । लोके ह्यसङ्गतानर्थान् वक्ताऽश्रद्धेयवागिति । दर्शनात् सङ्गतानर्थान् वक्ष्ये श्रद्धेयताप्तये ॥

तथा हि— परस्परसङ्गता एव न्यायाः अध्वगतये [3]विज्ञातव्यार्थज्ञानाय [4]तल्लाभाय च उपयुज्यन्ते, नान्यथा ।

सङ्गतयश्च अनेकविधाः सम्भवन्ति । तत्र प्रथममपेक्षिताः सङ्गतयः तिस्रः— शास्त्रसङ्गतिः, अध्यायसङ्गतिः, पादसङ्गतिश्चेति । [5]ताश्च शास्त्राध्यायपादानां च त्रयाणां असाधारणे विषये ज्ञाते सति स्वयमेव ऊहितुं शक्यन्त[6] इति शास्त्रस्य अध्यायानां पादानां च तावत् असाधारणो विषयः सामान्यतो ज्ञाप्यते । शास्त्रं नाम तदिह विवक्षितं यत् 'अथातो धर्मजिज्ञासा' इत्यादि 'अन्वाहार्ये च दर्शनात्' इत्यन्तं द्वादशाध्यायोपेतं षष्टिपादयुक्तं न्यायनिबन्धनात्मकसूत्रसन्दर्भरूपम् । तस्य कृत्स्नस्य शास्त्रस्य विषयो धर्म एव । अत एव 'अथातो धर्मजिज्ञासा' इति शास्त्रादिमसूत्रेणोपक्रमरूपेण जिज्ञास्यत्वेन सम्प्रतिज्ञातः, 'चोदनालक्षणोऽर्थो धर्मः' इति लक्षितः, 'तस्य निमित्तपरीष्टिः' इत्यादिना परीक्षितश्च । अध्यायानां च द्वादशानां प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः असाधारणाः विषयाः ।

---

१. विधेय – क.पा. २. प्रतिहत – क.पा.
३. अवश्यज्ञातव्य – क.पा. ४. तत्फललाभाय इति मुद्रितपाठः
५. तत्र शास्त्राध्यायपादादसाधारणे विषये ज्ञाते सति सङ्गतिः स्वयमेवोहितुं शक्या इति – क.पा.
६. शक्याः – क.पा.

तथा हि—

तत्र प्रथमेऽध्याये विध्यर्थवादमन्त्रनामधेयात्मकस्य कृत्स्नस्य वेदस्य प्रामाण्यं निरूपितं इति तस्याध्यायस्य कृत्स्नवेदप्रामाण्यरूपोऽर्थोऽसाधारणो विषयः ।

[1]द्वितीयाध्याये यजति ददाति जुहोति इति[2] कर्मणां भेदो निरूपित इति तद्भेदरूपोऽर्थः तस्य असाधारणो विषयः ।

[3]तृतीयेऽध्याये प्रयाजादीनां दर्शपूर्णमासार्थत्वेन तच्छेषत्वं निरूपितमिति तद्रूपोऽर्थः तस्य असाधारणो विषयः ।

चतुर्थे गोदोहनस्य पुरुषार्थप्रयुक्त्या अनुष्ठानं न तु क्रत्वर्थप्रयुक्त्या इत्येवमादयो निरूपिता इति [4]तस्य ते असाधारणा विषयाः ।

पञ्चमे क्रमनियतिविधेयत्वादयः तथा इति ते तस्यासाधारणा विषयाः ।

षष्ठे कर्तुः अधिकारः न अन्धादेः इत्यादयो निरूपिता इति ते तस्य तथा ।

सप्तमे 'समानमितरच्छ्येने'त्येवमादिप्रत्यक्षवचनेन अग्निहोत्रादिनाम्ना अनुमितवचनेन च सामान्यतोऽतिदेशो निरूपित इति तस्य सोऽसाधारणो विषयः ।

अष्टमे 'सौर्यं चरुं निर्वपेत्' इत्यत्र निर्वापस्तद्धितेन देवतानिर्देशः, एकदैवत्यं, औषधद्रव्यकत्वं, इत्यादिलिङ्गेन [5]आग्नेयपुरोडाशेतिकर्तव्यतैव नान्येत्येवमादिर्विशेषतोऽतिदेशो वर्णित इति तस्य सोऽसाधारणो विषयः ।

नवमे प्रकृतौ 'अग्नये जुष्टं निर्वपामि' इति पठिते मन्त्रे विकृतौ सौर्यचरौ अग्निपदपरित्यागेन सूर्यपदप्रक्षेपेण 'सूर्याय जुष्टं निर्वपामि' इत्येवमाद्यूहः प्रतिपादित इति स तस्यासाधारणो विषयः ।

दशमे कृष्णलेषु चोदकप्राप्तस्य अवघातस्य वितुषीकरणासम्भवेन द्वारलोपात्[6] लोप इत्येवमादयोऽर्था निरूपिता इति ते तस्य असाधारणा विषयाः ।

---

१. द्वितीयेऽध्याये – क.ख.पा. २. इतिशब्दो कपाठेऽधिकः ।

३. तृतीये भिन्नानां कर्मणां श्रुतिलिङ्गादिभिः प्रमाणैः शेषशेषिभावो निरूपित इति सोऽस्यासाधारणो विषयः – क.पाठः

४. तस्यैते – क.पा. ५. अग्नीषोमीय – क.पा. ६. द्वारलोपादिति क.पाठेऽधिकः

**नित्यं ये पदवाक्यमानसरणीसंशीलनालङ्कृता-**
**स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।**
**या चानेकविनेय[1]षट्पदततेः सम्फुल्लमल्ली सदा**
**सैषा वाग्विजयीन्द्रसंयमिमणेर्न्यायाध्वगैः सेव्यताम् ॥ ८ ॥**

यद्यपि शास्त्रदीपिकादिरूपा दीपिका न्यायाध्वगामिनां गतिसिद्धये तदध्वदर्शनसाधनरूपा पूर्वमेव प्रवृत्ताऽस्ति, तथाऽपि न तया बालाबालसाधारणं गतिसाधनदर्शनं सिद्ध्यति; शास्त्रदीपिकादेः प्रौढ-प्रकाशत्वेन बालदृष्ट्यभिभावकत्वात् । न हि दृष्ट्यभिभवे तत्पद्धतिदर्शनं सम्भवत् दृष्टचरम् । अत एव प्रौढसौरालोकाभिभूतदृष्टयो लोकाः सन्निकृष्टानपि पदार्थानपश्यन्तो दृश्यन्ते, तत एव प्रतिरुद्ध[2]-गतयोऽपि । तस्माद्बालाबालसाधारणं दृष्ट्यनभिभवेन न्यायाध्वदर्शनेन गतिसिद्ध्यर्थं तन्न्यायाध्व-दीपिकानिष्पादनाय अयमस्मदीयो यत्नः न विफलः । लोके ह्यसङ्गतानर्थान् वक्ताऽश्रद्धेयवागिति । दर्शनात् सङ्गतानर्थान् वक्ष्ये श्रद्धेयताप्तये ॥

तथा हि— परस्परसङ्गता एव न्यायाः अध्वगतये [3]विज्ञातव्यार्थज्ञानाय [4]तल्लाभाय च उपयुज्यन्ते, नान्यथा ।

सङ्गतयश्च अनेकविधाः सम्भवन्ति । तत्र प्रथममपेक्षिताः सङ्गतयः तिस्रः— शास्त्रसङ्गतिः, अध्यायसङ्गतिः, पादसङ्गतिश्चेति । [5]ताश्च शास्त्राध्यायपादानां च त्रयाणां असाधारणे विषये ज्ञाते सति स्वयमेव ऊहितुं शक्यन्त[6] इति शास्त्रस्य अध्यायानां पादानां च तावत् असाधारणो विषयः सामान्यतो ज्ञाप्यते । शास्त्रं नाम तदिह विवक्षितं यत् 'अथातो धर्मजिज्ञासा' इत्यादि 'अन्वाहार्ये च दर्शनात्' इत्यन्तं द्वादशाध्यायोपेतं षष्टिपादयुक्तं न्यायनिबन्धनात्मकसूत्रसन्दर्भरूपम् । तस्य कृत्स्नस्य शास्त्रस्य विषयो धर्म एव । अत एव 'अथातो धर्मजिज्ञासा' इति शास्त्रादिमसूत्रेणोपक्रमरूपेण जिज्ञास्यत्वेन सम्प्रतिज्ञातः, 'चोदनालक्षणोऽर्थो धर्मः' इति लक्षितः, 'तस्य निमित्तपरीष्टिः' इत्यादिना परीक्षितश्च । अध्यायानां च द्वादशानां प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः असाधारणाः विषयाः ।

---

१. विधेय – क.पा. २. प्रतिहत – क.पा.

३. अवश्यज्ञातव्य – क.पा. ४. तत्फललाभाय इति मुद्रितपाठः

५. तत्र शास्त्राध्यायपादादसाधारणे विषये ज्ञाते सति सङ्गतिः स्वयमेवोहितुं शक्या इति – क.पा.

६. शक्याः – क.पा.

तथा हि—

तत्र प्रथमेऽध्याये विध्यर्थवादमन्त्रनामधेयात्मकस्य कृत्स्नस्य वेदस्य प्रामाण्यं निरूपितं इति तस्याध्यायस्य कृत्स्नवेदप्रामाण्यरूपोऽर्थोऽसाधारणो विषयः।

[1]द्वितीयाध्याये यजति ददाति जुहोति इति[2] कर्मणां भेदो निरूपित इति तद्भेदरूपोऽर्थः तस्य असाधारणो विषयः।

[3]तृतीयेऽध्याये प्रयाजादीनां दर्शपूर्णमासार्थत्वेन तच्छेषत्वं निरूपितमिति तद्रूपोऽर्थः तस्य असाधारणो विषयः।

चतुर्थे गोदोहनस्य पुरुषार्थप्रयुक्त्या अनुष्ठानं न तु क्रत्वर्थप्रयुक्त्या इत्येवमादयो निरूपिता इति [4]तस्य ते असाधारणा विषयाः।

पञ्चमे क्रमनियतिविधेयत्वादयः तथा इति ते तस्यासाधारणा विषयाः।

षष्ठे कर्तुः अधिकारः न अन्धादेः इत्यादयो निरूपिता इति ते तस्य तथा।

सप्तमे 'समानमितरच्छ्येने'त्येवमादिप्रत्यक्षवचनेन अग्निहोत्रादिनाम्ना अनुमितवचनेन च सामान्यतोऽतिदेशो निरूपित इति तस्य सोऽसाधारणो विषयः।

अष्टमे 'सौर्यं चरुं निर्वपेत्' इत्यत्र निर्वापस्तद्धितेन देवतानिर्देशः, एकदैवत्यं, औषधद्रव्यकत्वं, इत्यादिलिङ्गेन [5]आग्नेयपुरोडाशेतिकर्तव्यतैव नान्येत्येवमादिर्विशेषतोऽतिदेशो वर्णित इति तस्य सोऽसाधारणो विषयः।

नवमे प्रकृतौ 'अग्नये जुष्टं निर्वपामि' इति पठिते मन्त्रे विकृतौ सौर्यचरौ अग्निपदपरित्यागेन सूर्यपदप्रक्षेपेण 'सूर्याय जुष्टं निर्वपामि' इत्येवमाद्यूहः प्रतिपादित इति स तस्यासाधारणो विषयः।

दशमे कृष्णलेषु चोदकप्राप्तस्य अवघातस्य वितुषीकरणासम्भवेन द्वारलोपात्[6] लोप इत्येवमादयोऽर्था निरूपिता इति ते तस्य असाधारणा विषयाः।

---

१. द्वितीयेऽध्याये – क.ख.पा. २. इतिशब्दो कपाठेऽधिकः।

३. तृतीये भिन्नानां कर्मणां श्रुतिलिङ्गादिभिः प्रमाणैः शेषशेषिभावो निरूपित इति सोऽस्यासाधारणो विषयः – क.पाठः

४. तस्यैते – क.पा. ५. अग्नीषोमीय – क.पा. ६. द्वारलोपादिति क.पाठेऽधिकः

एकादशे बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेन उपकार इत्यादितन्त्रं वर्णितमिति तस्य तद्रूपोऽर्थः असाधारणो विषयः ।

द्वादशे प्रधानस्य पशोरुपकाराय अनुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽपि उपकार इत्यादिप्रसङ्गो वर्णित इति तस्य सोऽसाधारणो विषयः इति ।

एतेन कथं असङ्गतार्थनिरूपणं प्रेक्षावदनवधेयं न भवितुमर्हतीति शङ्का निरस्ता । अत एव आहुः—

**शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा ।**
**शास्त्रादिविषये [1]ज्ञाते तत्तत्सङ्गतिरूह्यताम् ॥**

**धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः ।**
**प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः[2] ॥**

**अधिकारोऽतिदेशश्च सामान्येन विशेषतः ।**
**ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥** इति ॥

अत्र लक्षणशब्दः अध्यायशब्दसमानार्थ इति न काचिदनुपपत्तिः । एवं असङ्गतार्थनिरूपणप्रयुक्तं प्रेक्षावदनवधेयवचनत्वं क्वापि न प्रसज्यत इति प्रदर्शनाय सामान्यतः तत्तदध्यायार्थान् निरूप्य तन्निरूपणपूर्वकं सङ्गतार्थत्वसिद्ध्यर्थमेव तत्तदध्यायपादार्था अपि विशेषतो निरूप्यन्ते—

धर्ममीमांसाशास्त्रेऽस्मिन् 'अथातो धर्मजिज्ञासा' इति शास्त्रादिमसूत्रेण प्रमाणस्वरूपसाधनफलैः धर्मस्य जिज्ञासाशब्दितं विचारं प्रतिज्ञाय अस्मिन् प्रथमेऽध्याये प्रथमपादे साक्षाद्धर्मे प्रमाणभूताया-श्चोदनायाः पौरुषेयत्वाद्यप्रामाण्यहेतुशङ्कानिराकरणपूर्वकं तत्प्रामाण्यमुपपादितं इति तत्प्रामाण्यमेव तस्य असाधारणो विषयः ।

द्वितीयपादे अर्थवादमन्त्रयोः विध्यपेक्षितद्रव्यदेवतादिस्तुत्यनुष्ठेयार्थस्मृतिजनकतया प्रामाण्यं वर्णितं इति तस्य तद्रूपो[3]ऽर्थः असाधारणो विषयः ।

तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्याचारादीनां मूलवेदानुमापकतया प्रामाण्यं वर्णितमिति तस्य तद्रूपोऽर्थः असाधारणो विषयः ।

---

१. तत्र तत्र सङ्गतिरूह्यताम् – क.ख.पा. २. संज्ञिकाः – क.ग.पा. ३. अर्थ इति अधिकः क.पा.

चतुर्थे पादे 'उद्भिदा यजेत', 'चित्रया यजेत'[1], 'अग्निहोत्रं जुहोति', 'श्येनेनाभिचरन् यजेत' इत्यादिविधिवाक्यगतानां [2]अग्निहोत्रादिपदानां नाम्ना कर्मभेदः नाम्ना धर्मातिदेशः नाम्ना दूरस्थस्यानुवाद [3]इत्यादिप्रयोजनवत्कर्मनामतया नाम्नां तत्र धर्मे प्रामाण्यमुत्पादितं इति तस्य तद्रूपोऽर्थो असाधारणो विषयः ।

एवं प्रमाणसिद्धस्य धर्मस्य परस्परभिन्नस्वरूपं द्वितीयाध्याये निरूपितम् । तत्र यजति-ददाति-जुहोति-चोदनासु यज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदो निरूपितः । 'समिधो यजति', 'तनूनपातं यजति,' इत्यादिविधिषु यजतीति पञ्चकृत्वोऽभ्यासेनाविशेषपुनःश्रुतिरूपेण प्रयाजादीनां भेदः । 'सप्तदश प्राजापत्यान् पशून् आलभते' इत्यत्र द्रव्यदेवतासम्बन्धभेदिन्या सप्तदश-सङ्ख्यया [4]तदनुमेययागानां भेदः । 'अथैष ज्योतिः' इत्यादिवाक्येषु ज्योतिरित्यादिनामधेयैः तन्नामकयागानां प्रकृतज्योतिष्टोमयागाद्भेदः । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र आमिक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिनगुणेन [5]वाजिनयागस्य आमिक्षायागाद्भेदः । प्रकरणान्तरेण नित्याग्निहोत्रात् मासाग्निहोत्रस्य भेद इति । एवं द्वितीयेऽध्याये कर्मभेदः [6]सापवादः प्रपञ्चित इति तस्य स एव असाधारणो विषयः ।

तत्र द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेव अपूर्वबोधकमपूर्वसद्भावः इत्यादिकः कर्मभेद-चिन्तोपयुक्त उपोद्घातो वर्णितः । द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः । तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादो वर्णितः । चतुर्थपादे नित्यकाम्ययोः प्रयोगयोः भेदो वर्णित इति तेषां विषयभेदो द्रष्टव्यः ।

तृतीयाध्याये भिन्नानां कर्मणां श्रुतिलिङ्गादिभिः प्रमाणैः शेषशेषिभावो निरूपितः । शेषशेषिभावो नाम अङ्गाङ्गिभाव एव । अङ्गाङ्गित्वे च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यान्यतमसहितो विनियोग-विधिः प्रमाणम् । अङ्गत्वं नाम कर्तृसमीहितसाधनत्वम् । यत् यत्समीहानिमित्तककृतिगोचरत्वे सति यत्साधनं तत् तदङ्गमिति निर्गलितोऽर्थः । इदमेव च तादर्थ्यम् । [7]अत एव आमिक्षावाजिनयोः साधन-मपि दध्यानयनं आमिक्षाङ्गमेव न तु वाजिनाङ्गम् । वाजिनस्य नान्तरीयकसिद्धतया वाजिनसमीहा-निमित्तककृतिगोचरत्वाभावात्, तस्य तथात्वे मानाभावात् ।

---

१. क.मातृकायां अधिकः पाठः  २. उद्भिच्चित्राज्याग्निहोत्रश्येनादिपदानां – क.पा.
३. इत्यादिप्रयोजनवत्या – क.ख.पा.  ४. तदनुष्ठेययागानां – क.पा.  ५. वाजियागस्य – क.पा.
६. सापवादं – ग.मु.पा.  ७. अत एव च – ग.मु.पा.

तत्र निरपेक्षः शब्दः श्रुतिः, यथा 'व्रीहिभिर्यजेत' इत्यत्र व्रीहिशब्दः । तेन व्रीहयः पदान्तर-समभिव्याहारादिनिरपेक्षमेव बोध्यन्ते । वस्तुसामर्थ्यं लिङ्गम्; यथा 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य बर्हिर्लवनप्रकाशनसामर्थ्यम्; तेन बर्हिर्लवने तस्य विनियोगः । पदसङ्घातो वाक्यम्, यथा 'यजेत स्वर्गकामः' इति । तेन यागस्य स्वर्गशेषता । न ह्यत्र यागस्य शेषत्वे तृतीया श्रुतिः, स्वर्गस्य शेषित्वे द्वितीया श्रुतिर्वा अस्ति । किन्तु समभिव्याहारादेव साध्यसाधनताधीः ।

इतिकर्तव्यताकाङ्क्षा प्रकरणम्, तेन प्रयाजादेः दर्शपूर्णमासशेषता । तुल्यप्रदेशत्वं स्थानम्, तेन 'अग्नेरहं देवयज्यया अन्नादो भूयासम्,' 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इत्यनुमन्त्रण-मन्त्रयोः लिङ्गावगताग्नेयाग्नीषोमीययागशेषभावयोर्मध्ये समाम्नातस्य 'दब्धिरस्यदब्धो भूयासम्' इति मन्त्रस्य आग्नेयाग्नीषोमीयमध्यविहितमुपांशुयाजं प्रति शेषता ।

समाख्या नाम यौगिकी संज्ञा, यथा होतृचमस इति होतुश्चमसभक्षणशेषता । एवं सामान्यतः श्रुत्यादयः दर्शिताः ।

अथ श्रुत्यादीनां प्रभेदाः तत्प्रभेदानां तत्तदधिकरणसिद्धविषयास्तदपवादाश्च प्रदर्श्यन्ते— तत्र श्रुतिः त्रिविधा— विधात्री अभिधात्री विनियोक्त्री च ।

तत्र प्रवर्तनारूपशब्दभावनापरपर्यायविधिशब्दितस्वव्यापारबोधनेन पुरुषस्य प्रवर्तिका श्रुतिः विधात्री, [1]यथा 'यजेत' इत्यादिलिङ्लोट्पञ्चमलकारतव्यप्रत्ययादिः । सा द्विविधा— श्रुता कल्प्या च । श्रुताऽपि द्विविधा— असन्दिग्धा । [2]वर्तमानाख्यातत्वसन्दिग्धा सती पञ्चमलकारत्वेन कल्प्या[3] च । तत्राद्या यथा— 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । द्वितीया त्रिविधा— विध्याकाङ्क्षावशात् कल्पनीया, अर्थवादवशात्[4] कल्पनीया, अपूर्वत्वमात्रेण कल्पनीया च । 'व्रीहीनवहन्ति' इत्याद्या । 'अक्ताश्शर्करा उपदधाति', 'तेजो वै घृतम्' इति द्वितीया । 'अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति तृतीया ।

कल्प्या विध्याकाङ्क्षार्थवादापूर्वत्वश्रौतलिङ्गादिपौरुषेयस्मृत्याचारकल्प्यत्वेन पञ्चविधा— 'औदुम्बरो यूपो भवति' इत्यत्र विध्याकाङ्क्षाकल्प्या । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति, सुवर्गस्य लोकस्य अनुख्यात्यै' इत्यत्र द्वितीया । 'शतोक्थ्यं भवति शतातिरात्रं

---

१. यथा यजेत इत्यादौ – क.ख.घ.पा.    २. वर्तमानाख्यातत्वेन सन्दिग्धा – ख.पा.
३. कल्पनीया च – क.घ.पा.    ४. अर्थवाददर्शनात् – क.घ.पा.

भवति' इत्यत्र तृतीया। 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रलिङ्गकल्प्या चतुर्थी। अष्टकादिस्मृतिहोलाकाद्याचारकल्प्या पञ्चमी।

अभिधात्री तु 'व्रीहिभिर्यजेत' इत्यादौ व्रीह्याद्यभिधायिका श्रुतिः[1] पूर्वमुदाहृता।

विनियोक्त्री शेषशेषिभावसम्बन्धरूपविनियोगपरा श्रुतिः। सा त्रिविधा— एकप्रत्ययरूपा, एकपदरूपा, विभक्तिरूपा च। तत्राद्या यथा— 'पशुना यजेत' इत्यत्र तृतीया। तया हि स्वोक्तकरणत्वं प्रति स्वोक्तैकत्वस्य शेषतोपनीयते। द्वितीया तु 'यजेत' इति पदम्। तेन प्रत्ययोक्तां भावनां प्रति प्रकृत्युक्तस्य यागस्य शेषत्वप्रतीतेः। तृतीया तु द्विविधा— शेषित्वबोधिका शेषत्वबोधिका च। तत्राद्या 'व्रीहीन् प्रोक्षति' इत्यादौ द्वितीया, 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र चतुर्थी च। द्वितीया तु 'स्फ्येनोद्धन्ति इत्यादौ तृतीया, 'मूलतः शाखां परिवास्य' इत्यादौ पञ्चमी, 'वेद्यां हवींष्यासादयति' इत्यादौ सप्तमी च। षष्ठी तु सम्बन्धमात्रे अनुशिष्टा क्वचिच्छेषित्वबोधिका क्वचिच्छेषत्वबोधिका। तत्राद्या ''राजन्यवासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषाम्'' इत्यादिः। द्वितीया 'यजमानस्य याज्या' इत्यादिः। प्रथमाविभक्तिस्तु न शेषत्वस्य नापि शेषित्वस्य बोधिका, प्रातिपदिकार्थमात्रे अनुशासनात्। एवं केचन श्रुतिप्रभेदाः दर्शिताः।

वस्तुसामर्थ्यं लिङ्गम्। [2]तत्तु द्विविधम्— शब्दसामर्थ्यं अर्थसामर्थ्यं चेति। तत्र 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गात् लवनशेषता; 'स्वधितिनावद्यति', 'स्रुवेणावद्यति', 'हस्तेनावद्यति' इत्यवदानसामान्ये साधनत्वेन [3]श्रुतानां स्वधित्यादीनां तत्तत्सामर्थ्यरूपलिङ्गात् विशिष्य मांसद्रवद्रव्यपुरोडाशाद्यवदानेषु शेषता।

शेषत्वस्य शेषित्वस्य वा बोधिकया श्रुत्या रहितः पदसमभिव्याहारो वाक्यम्। यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति, यथा वा 'मैत्रावरुणः प्रेष्यति चान्वाह च' इति। न हि [4]यागभावनां प्रति स्वर्गकामस्य भाव्यत्वेन शेषित्वबोधिका द्वितीया श्रुतिः, प्रैषानुवचनं प्रति मैत्रावरुणस्य कर्तृत्वेन शेषत्वबोधिका तृतीया श्रुतिः वाऽस्ति। प्रथमा तु प्रातिपदिकार्थमात्रे अनुशिष्टा। अतः पदसमभिव्याहाररूपेण वाक्येनैव अत्र शेषशेषिभावावगमः।

विधिवाक्येन कर्तव्यतयाऽवगतस्य, केन प्रकारेण कर्तव्यमिति विशिष्याज्ञायमानस्य इतिकर्तव्यताकाङ्क्षा प्रकरणम्। तत् द्विविधम्। महाप्रकरणमवान्तरप्रकरणं चेति। तत्राद्येन दर्शपूर्णमासादिकं प्रति प्रयाजादीनाम्, द्वितीयेन प्रयाजादिकं प्रति अभिक्रमणादीनां च तत्तत्सन्निधिसमाम्नातानां शेषता।

---

१. प्रागुदाहृता – क.घ.पा. २. तत् – क.ख.घ.पा. ३. श्रुतस्वधित्यादीनां – ग.मु.पा. ४. होम – मु.पा.

स्थानं द्विविधम् । यथासङ्ख्यं सन्निधिश्चेति । तत्राद्येन "दब्धिरस्यदब्धो भूयासम्" इति मन्त्रस्य आग्नेयाग्नीषोमीयमन्त्रद्वयमध्याम्नातस्याग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयाजशेषता । सन्निधिस्तु आम्नानसन्निधिः अनुष्ठानसन्निधिः इति द्विविधः । आद्येन "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति मन्त्रस्य महाप्रकरणावान्तरप्रकरणरहितसान्नाय्यपात्रप्रोक्षणशेषता । द्वितीयेन पशुधर्माणां अग्नीषोमीय-पशुशेषता ।

समाख्या यौगिकी संज्ञा । सा द्विविधा— लौकिकी वैदिकी चेति । "होतृचमसः" इति वैदिकसमाख्यया होतुश्चमसभक्षणं प्रति, "आध्वर्यवम्" इति याज्ञिकप्रसिद्धलौकिकसमाख्यया अध्वर्योः अन्वाधानादिकं प्रति च, कर्तृत्वेन शेषता इति । एवं शेषशेषिभावः सापवादः तृतीयाध्याये प्रपञ्चितः ॥

एवंविधार्थप्रतिपादकस्य तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता । द्वितीये लिङ्गं विचारितम् । तृतीये वाक्यप्रकरणादि । चतुर्थे निवीतोपवीतादि-ष्वर्थवादविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसद्भावः उक्तः । पञ्चमे प्रतिपत्तिकर्माणि । षष्ठे अनारभ्याधीतानि । [1]सप्तमे वेदितद्धर्मादीनां प्रयाजाद्यङ्गप्रधानोपकारः । [2]अष्टमे परिक्रयादि याजमानम् । इति विषयविवेको द्रष्टव्यः ।

अथेदानीमुक्तप्रतिज्ञानुसारेण बुद्धिसौकर्याय श्रुतिलिङ्गादीनामुपदेशप्रमाणानां विषयाः प्रदर्श्यन्ते । तत्र प्रवर्तनारूपशब्दभावनापरपर्यायविधिशब्दितस्वव्यापारबोधनेन पुरुषस्य प्रवर्तिका श्रुतिर्विधात्री । यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ लिङादिश्रुतिः । सा हि पदान्तरसमभिव्याहारादिनैर-पेक्ष्येण प्रवर्तनारूपं स्वव्यापारं बोधयन्ती पुरुषस्य प्रवर्तिका । अत एव पुरुषार्थे पुरुषं प्रवर्तयितु-मशक्तत्वेन, आख्यातोपात्तायाः अर्थभावनायाः भाव्यापेक्षायां समानपदोपात्तत्वेनान्तरङ्गमपि यागं क्लेशात्मकमतिक्रम्य भिन्नपदोपात्तस्यापि स्वर्गस्यैव भाव्यत्वेनान्वयः इति षष्ठे स्वर्गकामाधिकरणे (६-१-१) व्युत्पादितम् ॥ अन्यथा तादृशविधिश्रुत्यभावे तन्न सिद्ध्येत् । अन्तरङ्गस्य यागस्यैव प्रथममर्थभावनाभाव्यत्वेनान्वये सति स्वर्गकामशब्दस्य क्रियाभिधानादेव तत्कर्तृत्वेनाक्षिप्तं पुरुषमनूद्य, समुद्रमनोध्यानवत् तत्संस्कारात्मकस्वर्गकामनारूपविशेषणविधायकत्वोपपत्तेः इति ।

---

१. सप्तमे बहुप्रधानोपकारः प्रयाजादिभिः इति क.ख.ग.घ. मातृकायां पाठः । मुद्रितपुस्तके उपरितनपाठः दृश्यते । मुद्रितपाठ एव समीचीन इति भाति ।

२. अष्टमे प्रयाजादीनि इति मातृकासु पाठः ।

प्रवर्तकत्वमन्तरेणार्थाभिधानमात्रव्यापारवती श्रुतिरभिधात्री । यथा "ग्रहं सम्मार्ष्टि" इत्यत्र ग्रह-श्रुतिः । तया हि इतरनैरपेक्ष्येण सोमपात्रविशेषः अभिधीयते । अत एव तदभिहितस्य विशेषस्यैव सम्मार्गक्रियाकर्मत्वेनान्वयात् सोमावसेकनिर्हरणप्रयोजनाय तदुपायापेक्षायां सामर्थ्यलभ्यस्यापि सोमपात्रसामान्यस्य तत्कर्मत्वेन नान्वयः इत्युक्तं चमसाधिकरणे (३-१-८) ॥

विनियोगशब्दितशेषशेषिभावबोधिका श्रुतिः विनियोक्त्री । सा च त्रिविधा । एकप्रत्ययरूपा, एकपदरूपा, विभक्तिरूपा [1]च । तत्र एकप्रत्ययरूपा यथा "पशुना यजेत" इति । अत्र हि तृतीया-विभक्तिरूपप्रत्ययोपात्तं करणकारकं प्रति तदुक्तस्यैवैकत्वस्य शेषत्वोपनायिका श्रुतिः [2]व्युत्पादिता चतुर्थे पश्वेकत्वाधिकरणे (४-१-५) । एकपदरूपा यथा, 'यजेत' इत्यत्र हि प्रकृतिप्रत्ययात्मके एकस्मिन् पदे [3]प्रत्ययोक्तां भावनां प्रति प्रकृत्युक्तस्य यागस्य, करणतया शेषता व्युत्पादिता स्वर्ग-कामाधिकरणे (६-१-१) ॥

तृतीया तु द्विविधा— शेषित्वबोधिका शेषत्वबोधिका च । तत्राद्या 'व्रीहिनवहन्ति' इत्यत्र द्वितीया, 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इत्यादौ चतुर्थी च । तत्रावहननक्रियया आप्तुमिष्ट-तमत्वरूपकर्मत्वात्मकस्य शेषित्वस्य द्वितीयया अभिधानात्, अवहननक्रियां प्रति व्रीहीणां प्राधान्य-मिति द्वितीये 'तानि द्वैधाधिकरणे' (२-१-४) निरूपितम् ॥ दीयमानदण्डरूपेण कर्मणाऽभिप्रेय-माणत्वरूपसम्प्रदानात्मकस्य शेषित्वस्य चतुर्थ्याऽभिधानात् दीयमानदण्डं प्रति मैत्रावरुणस्य प्राधान्य-मिति चतुर्थे "प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात्" इत्यधिकरणे (४-१-६) निर्णीतम् ॥

शेषत्वबोधिका तु 'स्फ्येनोद्धन्ति' इत्यादौ तृतीया, 'मूलतश्शाखां परिवास्योपवेषं करोति' इत्यत्र पञ्चमी, 'वेद्यां हवींष्यासादयति' इत्यत्र सप्तमी च । तत्र स्फ्यस्य साधकतमत्वात्मककरणत्वाभि-धायितृतीयया उद्धननक्रियां प्रति शेषता निर्णीता 'द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत' (३-१-११) इत्यधिकरणे (३-१-५) ॥ पलाशशाखामूलस्य परिवासनशब्दितच्छेदनापादानतया छेदनसाध्यमग्रं प्रति शेषता चतुर्थे 'शाखायां तत्प्रधानत्वात्' (४-२-३) इत्यधिकरणे, सप्तम्या अङ्गप्रधानहविरधि-करणतया तच्छेषता 'प्रकरणविशेषादसंयुक्तं प्रधानस्य' इत्यधिकरणे (३-७-१) च वर्णिता ॥

षष्ठी द्विविधा । शेषित्वबोधिका शेषत्वबोधिका च । तत्राद्या "राजन्यवासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषाम्" इति । तत्र राजन्यवासिष्ठादीन् स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादिर्विधीयते इति षष्ठे 'सन्निपातेऽवैगुण्यात्' (६-६-१) इत्यधिकरणे दर्शितम् ॥ द्वितीया

---

१. चेति – क.पा. २. प्रतिपादिता – क.पा. ३. प्रत्ययोपात्तां – क.पा.

**'यजमानस्य याज्या'** इति । अत्र याज्याविशेषे यजमानः कर्तृतया तदङ्गत्वेन विधीयते इति **'याज्यापनयेनापनीतो भक्षः प्रवरवत्'** (३-५-४४) इत्यधिकरणे (३-५-१७) दर्शितम् ॥ प्रथमा **न शेषित्वस्य बोधिका, नापि शेषत्वस्य,** प्रातिपदिकार्थमात्रे तस्यानुशासनात् इति सा नोदाहृता ॥ एवं श्रुतिर्निरूपिता ॥

**अथ लिङ्गादिस्वरूपं निरूप्यते ।** वस्तुसामर्थ्यं लिङ्गम् । तच्च द्विविधम् । शब्दसामर्थ्यमर्थसामर्थ्यं च । तत्र **'बर्हिर्देवसदनं दामि'** इत्यादिमन्त्राणां बर्हिर्लवनप्रकाशनशक्तिरूपेण शब्दसामर्थ्येन बर्हिर्लवने विनियोगः मन्त्राधिकरणे (१-२-४) दर्शितः ॥ 'स्वाध्यायोऽध्येतव्यः' इत्यत्र, अध्ययनस्य अर्थज्ञान-जननशक्तिरूपेणार्थसामर्थ्येनार्थज्ञाने विनियोगः जिज्ञासासूत्रे (१-१-१) दर्शितः ॥

पदसङ्घातो वाक्यम् । तत् द्विविधम् । मन्त्रवाक्यं ब्राह्मणवाक्यं च । तत्राद्येन ''देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्याम्'' इत्यस्य निर्वापे विनियोगः । तत्र हि ''अग्नये जुष्टं निर्वपामि'' इत्युत्तरभागस्य लिङ्गान्निर्वापे विनियोगे स्थिते, 'देवस्य त्वा' इत्यादिपूर्वभागस्य तथाविध-लिङ्गरहितस्यापि तदेकवाक्यतया समभिव्याहृतत्वादेव कथञ्चिन्निर्वापप्ररोचनार्थतया निर्वापविशेषणी-भूतार्थप्रकाशकस्य सतः, तत्रैव विनियोगः इति ''अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्'' (९-१-३६) इति नावमिकाधिकरणे (९-१-१२) प्रदर्शितम् ॥ द्वितीयेन 'यजेत स्वर्गकामः' इत्यत्र यागस्य स्वर्गं प्रति शेषता इति स्वर्गकामाधिकरणे (६-१-१) व्युत्पादितम् ॥ अत्र यागे शेषत्व-बोधकतृतीयायाः, स्वर्गे शेषित्वबोधकद्वितीयायाः वा अभावात् न विनियोगस्य श्रौतत्वं शङ्कनीयम् ॥

इतिकर्तव्यताकाङ्क्षा प्रकरणम् । तत् द्विविधम् । महाप्रकरणमवान्तरप्रकरणं च ॥ तत्राद्येन प्रयाजादेर्दर्शपूर्णमासशेषता 'असंयुक्तं प्रकरणात्' (३-३-११) इत्यधिकरणे (३-३-४) दर्शिता । द्वितीयेन 'अभिक्रामं जुहोति' इत्यादिवाक्यविहिताभिक्रमणादेः प्रयाजशेषता 'कर्तृगुणे तु कर्म सम-वायात्' (३-१-१९) इत्यधिकरणे (३-१-१०) दर्शिता ॥

तुल्यप्रदेशत्वं स्थानम् । तत् द्विविधम् । पाठसादेश्यमनुष्ठानसादेश्यं च । आद्यमपि द्विविधम् । यथासङ्ख्याम्नानं सन्निध्याम्नानं च । तत्राऽऽग्नेयाग्नीषोमीयानुमन्त्रणमन्त्रयोः ''अग्नेरहं देवयज्ययान्नादो भूयासम्'', ''अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्'' इत्यनयोर्मध्ये पठितस्य ''दब्धिरस्यदब्धो भूयासम्'' इति मन्त्रस्य आग्नेयाग्नीषोमीययागयोर्मध्ये अनुष्ठेयोपांशुयाजे विनियोगः ''क्रमश्च देश-सामान्यात्'' (३-३-१२) इत्यधिकरणे (३-३-५) दर्शितः ॥ सान्नाय्यपात्रसन्निधौ समाम्नातस्य ''शुन्धध्वं'' इति मन्त्रस्य सान्नाय्यपात्रशुद्धौ विनियोगः बलाबलसूत्रविषये स्थानसमाख्याधिकरणे

दर्शितः । अनुष्ठानसादेश्येन ज्योतिष्टोमे पशुधर्माणामग्नीषोमीयपशुशेषता ''तुल्यः सर्वेषां पशुविधिः'' इत्यधिकरणे (३-६-७) दर्शिता ।

समाख्या यौगिकी संज्ञा । सा हि द्विविधा । लौकिको वैदिकी च । तत्रावघातादिपदार्थेष्वाध्वर्यवादिसंज्ञा लौकिकी । तया तेष्वाध्वर्यवादीनां कर्तृत्वेन विनियोगः ''आख्या चैवं तदर्थत्वात्'' (३-३-१६) इत्यधिकरणे (३-३-६) दर्शितः । होतृचमसादिसमाख्या वैदिकी । तया होत्रादेः चमसभक्षणशेषता ''चमसेषु समाख्यानात्'' इत्यधिकरणे (३-५-६) दर्शिता ॥

ननु द्विविधस्य प्रकरणस्य सन्निध्याम्नानानुष्ठानसादेश्यरूपस्थानयोश्च को भेदः ? उच्यते । प्रधानस्य दर्शपूर्णमासादेरितिकर्तव्यताकाङ्क्षा महाप्रकरणम् । इतिशब्दः प्रकारवचनः । कर्तव्यतेति क्रियोच्यते । यागेन स्वर्गम्भावयेदित्युक्ते, न ज्ञायते यागस्य क्रियाप्रकारः । अतस्तत्राकाङ्क्षा भवति । सेयमितिकर्तव्यताकाङ्क्षा । अनया क्लृप्तया दर्शपूर्णमाससन्निध्याम्नातस्य प्रयोजनाकाङ्क्षस्य प्रयाजादेः, योऽयं तदितिकर्तव्यतारूपेणान्वयः असौ महाप्रकरणसाध्य उच्यते । एवमेव यद्यप्यङ्गानामपि प्रयाजादीनामनिर्ज्ञातकर्तव्यताप्रकारत्वात् सन्ति इतिकर्तव्यताकाङ्क्षाः, तथापि तासां फलवत्प्रधानभावनेति कर्तव्यताकाङ्क्षाभिभूतत्वान्न ताः कार्याय प्रभवन्ति । अत एव प्रयाजाज्यभागादीनां दर्शपूर्णमासेतिकर्तव्यतारूपेणैवान्वयो न परस्परेतिकर्तव्यतारूपेण । अतो यत्राङ्गानां पूर्वं पश्चाच्च वाचनिकगुणविधानेन सदंशस्तत्रैव तदितिकर्तव्यताकाङ्क्षा कार्यकरीति अवान्तरप्रकरणमिष्यते । यथोदाहृते 'अभिक्रामन् जुहोति' इत्यत्र । अत्र हि प्रयाजादीन् विधाय, 'समानयते उपभृतः' इत्यादिगुणं च विधाय 'अभिक्रामन् जुहोति' इत्युक्त्वा, पुनरपि 'यो वै प्रयाजानां मिथुनं वेद' इत्यारभ्य, 'प्रयाजानिष्ट्वा हवींष्यभिघारयति' इति पर्यन्तं प्रयाजपरामर्शदर्शनेन, नूनमेतावता प्रदेशेन प्रयाजाः समाप्यन्ते इत्यवगम्यते । यत्र तु नैवं वाचनिकगुणसन्दंशः, किन्तु सन्निधावाम्नानमात्रं, तत्र नावान्तरप्रकरणम् । किन्तु सन्निध्याम्नानलक्षणस्थानप्रमाणमात्रम्, यथा 'शुन्धध्वं' इति मन्त्रस्य । यस्य तु न सन्निधानेऽप्याम्नानं, किन्त्वन्यत्रोत्पन्नस्य वचनादन्यत्रानुष्ठेयस्य सतः, अनुष्ठानप्रदेशे कस्यचित्समाम्नानं, यथा प्रायणीयेऽहनि राजक्रयसन्निधौ 'यदग्नीषोमीयं पशुमालभते' इत्युत्पन्नस्याग्नीषोमीयस्य, 'स एष औपवसथ्येऽहनि द्विदैवत्यः पशुरालभ्यते' इति वचनादन्यत्रानुष्ठेयस्य, अनुष्ठानप्रदेशे औपवसथ्येऽहनि पशुधर्माणां समाम्नानं, तत्रानुष्ठानस्य सादेश्यमात्रमित्येतेषां भेदः इति ॥

एषां श्रुतिलिङ्गादीनां विरोधे पारदौर्बल्यमुक्तं ''श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्'' (३-३-१४) इत्यत्र ॥ तदुदाहरणमुखेन प्रदर्शयामः । तत्र श्रुतिलिङ्गविरोधे

**इदमुदाहरणम्—** महाचयने 'निवेशनः सङ्गमनो वसूनाम्' इत्येषा ऋगाम्नायते । तत्रैव तस्य विनियोजकं ब्राह्मणमेवमाम्नायते— 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति । तत्र संशयः, किमनया ऋचा इन्द्रस्योपस्थानं कर्तव्यं, उत गार्हपत्यस्य इति । ऋचः इन्द्रप्रकाशनशक्तिरूपेण लिङ्गेन इन्द्रोपस्थानशेषत्वस्य, तृतीयाश्रुत्या गार्हपत्योपस्थानशेषत्वस्य च प्रतीतेः, श्रुतिलिङ्गयोर्बलाबलापरिज्ञानात् संशयो भवति । तत्र विनियोज्यवस्तुशक्त्यनुसारेण विनियोगस्य वर्णनीयत्वात्, इन्द्राभिधायिकायाः ऋचः, अग्निप्रकाशने शक्त्यभावात्, अशक्येऽर्थे श्रुत्या विनियोक्तुमशक्यत्वात्, लिङ्गानुसारेण इन्द्रोपस्थानशेषतैव युक्ता । 'ऐन्द्र्या गार्हपत्यमि'ति गार्हपत्यशब्दस्तु यज्ञसाधनत्वादिसाधर्म्यात् इन्द्र एव वर्तयितव्यः इति पूर्वपक्षे ।

सिद्धान्तः— श्रुत्येव न साक्षात् लिङ्गेन शेषत्वं प्रतिपाद्यते । किन्तु मन्त्रेण मन्त्रार्थे प्रतिपादिते, कार्यतो मन्त्रस्य विनियोगाकाङ्क्षावशेन, लिङ्गेनेन्द्रशेषत्वप्रतिपादकश्रुतिकल्पनया । न च लिङ्गेन साक्षाद्विनियोगकल्पनसम्भवे तेन विनियोजकश्रुतिकल्पनवैयर्थ्यम् । सर्वस्याप्यङ्गविधेः प्रयोगविधिपरिग्रहं विनाऽनुष्ठापकत्वायोगात्, अशाब्दस्य च शाब्देनान्वयायोगात्, प्रयोगवाक्यपूरणाय श्रुतेरेव कल्पनीयत्वात् । एवं च यदा [1]लैङ्गिकेन्द्रविनियोगकल्पनाप्रणाड्या प्रथमप्रवृत्तया मन्त्रेण मन्त्रार्थः प्रतिपाद्यते, तदैव 'ऐन्द्र्या' इति श्रुतिः मन्त्रस्य गार्हपत्यार्थतां प्रतिपादयतीति प्रथमावगतश्रौतविनियोगेन मन्त्रस्य नैराकाङ्क्ष्यात्, न तदनन्तरं लैङ्गिकविनियोगकल्पनावसरः । न चाशक्येऽर्थे विनियोगासम्भवः, मन्त्रस्य गार्हपत्ये मुख्यसामर्थ्याभावेऽपि गौणसामर्थ्यसत्त्वात्, अवश्यं हि मन्त्रस्थेन्द्रशब्दस्य वा ब्राह्मणस्थगार्हपत्यशब्दस्य वा कस्यचित् गौणत्वं कल्पनीयम् । तत्राप्राप्तार्थे ब्राह्मणे गौणत्वकल्पनाद्वरं प्राप्तार्थे मन्त्रे एव गौणत्वकल्पनम् । तस्मात् श्रुत्या लिङ्गबाधात् गार्हपत्योपस्थानमेव कर्तव्यमिति इन्द्रशब्दसामर्थ्यात्मकस्य लिङ्गस्य श्रुतिविरोधे उदाहरणम् ॥

अर्थसामर्थ्यात्मकस्य तु तद्विरोधे उदाहरणम्— द्वादशाध्याये "विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात्" इत्यधिकरणे (१२-१२-१) द्रष्टव्यम् ॥ तत्र हि गार्हपत्यादयोऽग्नयः पचनप्रकाशनादीनां लौकिककार्याणामङ्गं[2], तदुत्पादनसामर्थ्यात्मकाल्लिङ्गात् इति प्राप्ते "गार्हपत्ये हवींषि श्रपयति", "आहवनीये जुहोति", "दक्षिणाग्नावन्वाहार्यं पचति" इत्यादिप्रत्यक्षश्रुतिनिर्दिष्टैरेव प्रयोजनैः निराकाङ्क्षत्वान्न लिङ्गेन तेषां पचनार्थता कल्पयितुं युक्ता इति निर्णीतम् ॥

---

१. लैङ्गिकेन्द्रविनियोगकल्पनाप्रणाड्यां प्रथमपर्वतया – घ.पा.

२. कार्याणामप्यङ्गं – क.पा.

लिङ्गवाक्यविरोधे "स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन्, सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इति दार्शपौर्णमासिको मन्त्रः उदाहरणम् । तत्र संशयः— किं सकलोऽयं मन्त्रः एकवाक्यत्ववशेन अविभज्य पुरोडाशस्य सदनकरणे प्रतिष्ठापने च विनियोक्तव्यः, उत, लिङ्गबलेन विभज्य कल्पयामीत्यन्तस्य सदनकरणे 'तस्मिन् सीद' इति च प्रतिष्ठापने विनियोक्तव्य इति । तत्र सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात्, 'तस्मिन् सीदे'ति पूर्वोक्तसापेक्षसर्वनामवशेन सकलस्यैकवाक्यत्वावगमाच्चाविभज्य विनियोक्तव्यः, इति पूर्वपक्षे ।

सिद्धान्तः— 'सीद', 'प्रतितिष्ठ' इति लिङ्गाभ्यां विभज्य विनियोक्तव्यम् । लिङ्गेन हि क्लृप्तेन शीघ्रं श्रुतिमनुमाय, विभज्य विनियुज्यते । एकवाक्यत्ववशेनोत्तरार्धस्यापि स्वार्थविशिष्टसदनकरणे लाक्षणिकं सामर्थ्यं कल्पयित्वा पूर्वार्धस्यापि च स्वार्थं विशिष्टपुरोडाशप्रतिष्ठापने लाक्षणिकं सामर्थ्यं कल्पयित्वा, तेन श्रुतिमनुमाय, सकलोऽप्युभयत्र विनियोक्तव्य इति विलम्बः स्पष्टः । तस्माद्वाक्या-ल्लिङ्गस्य बलीयस्त्वाद्विभज्यैव विनियोक्तव्य इति शब्दसामर्थ्यात्मकलिङ्गस्य मन्त्रवाक्यस्य च विरोधे इदं उदाहरणम् ॥

अर्थसामर्थ्यरूपलिङ्गस्य ब्राह्मणवाक्यस्य च विरोधे उदाहरणमिदम् । षष्ठे 'फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्' इत्यधिकरणे (६-१-४) द्रष्टव्यम् ॥ तत्र हि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्येन सर्वेषां स्वर्गकामनावतामविशेषेण यागेऽधिकारबोधनात्, अन्धमूकादीनामपि स्वर्गकामना-वत्त्वाविशेषाच्च, तेषामप्यस्त्यधिकार इति प्राप्ते ।

साङ्गस्य क्रतोः पुरुषैः सम्बन्धात्, अङ्गभूताज्यावेक्षणविष्णुक्रमणादौ अन्धपंग्वादीनामसामर्थ्यात्, सामर्थ्यानुसारेणानन्धादिभिरेव सम्बध्यते इति लिङ्गेन वाक्यस्य सङ्कोच इति ।

वाक्यस्य प्रकरणविरोधे "अग्नीषोमाविदं हविरजुषेतां, अवीवृधेतां, महोज्यायोक्राताम्" इति दार्शपौर्णमासिकसूक्तवाक्यभेदः उदाहरणम् । तत्राग्नीषोमाविति देवतापदं लिङ्गात् पौर्णमास्यामेव प्रयोक्तव्यम् इति स्थिते, यानि तदेकवाक्यभूतानि 'इदं हविरजुषेताम्' इत्यादीनि पदानि, तानि किं प्रकरणाविशेषात् पर्वद्वये प्रयोक्तव्यानि, उताग्नीषोमपदैकवाक्यत्वात् तद्वदेव व्यवस्थया पौर्णमास्यां प्रयोक्तव्यानि इति संशये— प्रधानार्थत्वात् सर्वस्य प्रधानाकाङ्क्षारूपप्रकरणनिबन्धनो विनियोगो बलीयान्, इति प्रकरणाविशेषात् पर्वद्वये च प्रयोक्तव्यानि, इति पूर्वपक्षे ।

सिद्धान्तः— 'इदं हविः' इत्यादेः अग्नीषोमपदैकवाक्यत्वं क्लृप्तम् । [1]एकवाक्यतायाश्च अग्नी-षोमप्रकाशनसामर्थ्यम् 'इदं हविः' इत्यादेः शीघ्रं कल्प्यते । ततः श्रुतिः । तया विनियोगः इति सन्नि-

१. एकवाक्यतया – च क.ख.पा.

**इदमुदाहरणम्—** महाचयने 'निवेशनः सङ्गमनो वसूनाम्' इत्येषा ऋगाम्नायते । तत्रैव तस्य विनियोजकं ब्राह्मणमेवमाम्नायते— 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति । तत्र संशयः, किमनया ऋचा इन्द्रस्योपस्थानं कर्तव्यं, उत गार्हपत्यस्य इति । ऋचः इन्द्रप्रकाशनशक्तिरूपेण लिङ्गेन इन्द्रोपस्थानशेषत्वस्य, तृतीयाश्रुत्या गार्हपत्योपस्थानशेषत्वस्य च प्रतीतेः, श्रुतिलिङ्गयोर्बलाबलापरिज्ञानात् संशयो भवति । तत्र विनियोज्यवस्तुशक्त्यनुसारेण विनियोगस्य वर्णनीयत्वात्, इन्द्राभिधायिकायाः ऋचः, अग्निप्रकाशने शक्त्यभावात्, अशक्येऽर्थे श्रुत्या विनियोक्तुमशक्यत्वात्, लिङ्गानुसारेण इन्द्रोपस्थानशेषतैव युक्ता । 'ऐन्द्र्या गार्हपत्यमि'ति गार्हपत्यशब्दस्तु यज्ञसाधनत्वादिसाधर्म्यात् इन्द्र एव वर्तयितव्यः इति पूर्वपक्षे ।

सिद्धान्तः— श्रुत्येव न साक्षात् लिङ्गेन शेषत्वं प्रतिपाद्यते । किन्तु मन्त्रेण मन्त्रार्थे प्रतिपादिते, कार्यतो मन्त्रस्य विनियोगाकाङ्क्षावशेन, लिङ्गेनेन्द्रशेषत्वप्रतिपादकश्रुतिकल्पनया । न च लिङ्गेन साक्षाद्विनियोगकल्पनसम्भवे तेन विनियोजकश्रुतिकल्पनवैयर्थ्यम् । सर्वस्याप्यङ्गविधेः प्रयोगविधिपरिग्रहं विनाऽनुष्ठापकत्वायोगात्, अशाब्दस्य च शाब्देनान्वयायोगात्, प्रयोगवाक्यपूरणाय श्रुतेरेव कल्पनीयत्वात् । एवं च यदा [1]लैङ्गिकेन्द्रविनियोगकल्पनाप्रणाड्या प्रथमप्रवृत्तया मन्त्रेण मन्त्रार्थः प्रतिपाद्यते, तदैव 'ऐन्द्र्या' इति श्रुतिः मन्त्रस्य गार्हपत्यार्थतां प्रतिपादयतीति प्रथमावगतश्रौतविनियोगेन मन्त्रस्य नैराकाङ्क्ष्यात्, न तदनन्तरं लैङ्गिकविनियोगकल्पनावसरः । न चाशक्येऽर्थे विनियोगासम्भवः, मन्त्रस्य गार्हपत्ये मुख्यसामर्थ्याभावेऽपि गौणसामर्थ्यसत्त्वात्, अवश्यं हि मन्त्रस्थेन्द्रशब्दस्य वा ब्राह्मणस्थगार्हपत्यशब्दस्य वा कस्यचित् गौणत्वं कल्पनीयम् । तत्राप्राप्तार्थे ब्राह्मणे गौणत्वकल्पनाद्वरं प्राप्तार्थे मन्त्रे एव गौणत्वकल्पनम् । तस्मात् श्रुत्या लिङ्गबाधात् गार्हपत्योपस्थानमेव कर्तव्यमिति इन्द्रशब्दसामर्थ्यात्मकस्य लिङ्गस्य श्रुतिविरोधे उदाहरणम् ॥

अर्थसामर्थ्यात्मकस्य तु तद्विरोधे उदाहरणम्— द्वादशाध्याये "विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात्" इत्यधिकरणे (१२-१२-१) द्रष्टव्यम् ॥ तत्र हि गार्हपत्यादयोऽग्नयः पचनप्रकाशनादीनां लौकिककार्याणामङ्गं[2], तदुत्पादनसामर्थ्यात्मकाल्लिङ्गात् इति प्राप्ते "गार्हपत्ये हवींषि श्रपयति", "आहवनीये जुहोति", "दक्षिणाग्नावन्वाहार्यं पचति" इत्यादिप्रत्यक्षश्रुतिनिर्दिष्टैरेव प्रयोजनैः निराकाङ्क्षत्वान्न लिङ्गेन तेषां पचनार्थता कल्पयितुं युक्ता इति निर्णीतम् ॥

---

१. लैङ्गिकेन्द्रविनियोगकल्पनाप्रणाड्यां प्रथमपर्वतया – घ.पा.

२. कार्याणामप्यङ्गं – क.पा.

लिङ्गवाक्यविरोधे "स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन्, सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इति दार्शपौर्णमासिको मन्त्रः उदाहरणम् । तत्र संशयः— किं सकलोऽयं मन्त्रः एकवाक्यत्ववशेन अविभज्य पुरोडाशस्य सदनकरणे प्रतिष्ठापने च विनियोक्तव्यः, उत, लिङ्गबलेन विभज्य कल्पयामीत्यन्तस्य सदनकरणे 'तस्मिन् सीद' इति च प्रतिष्ठापने विनियोक्तव्य इति । तत्र सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात्, 'तस्मिन् सीदे'ति पूर्वोक्तसापेक्षसर्वनामवशेन सकलस्यैकवाक्यत्वावगमाच्चाविभज्य विनियोक्तव्यः, इति पूर्वपक्षे ।

सिद्धान्तः— 'सीद', 'प्रतितिष्ठ' इति लिङ्गाभ्यां विभज्य विनियोक्तव्यम् । लिङ्गेन हि क्लृप्तेन शीघ्रं श्रुतिमनुमाय, विभज्य विनियुज्यते । एकवाक्यत्ववशेनोत्तरार्धस्यापि स्वार्थविशिष्टसदनकरणे लाक्षणिकं सामर्थ्यं कल्पयित्वा पूर्वार्धस्यापि च स्वार्थं विशिष्टपुरोडाशप्रतिष्ठापने लाक्षणिकं सामर्थ्यं कल्पयित्वा, तेन श्रुतिमनुमाय, सकलोऽप्युभयत्र विनियोक्तव्य इति विलम्बः स्पष्टः । तस्माद्वाक्याल्लिङ्गस्य बलीयस्त्वाद्विभज्यैव विनियोक्तव्य इति शब्दसामर्थ्यात्मकलिङ्गस्य मन्त्रवाक्यस्य च विरोधे इदं उदाहरणम् ॥

अर्थसामर्थ्यरूपलिङ्गस्य ब्राह्मणवाक्यस्य च विरोधे उदाहरणमिदम् । षष्ठे 'फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्' इत्यधिकरणे (६-१-४) द्रष्टव्यम् ॥ तत्र हि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्येन सर्वेषां स्वर्गकामनावतामविशेषेण यागेऽधिकारबोधनात्, अन्धमूकादीनामपि स्वर्गकामनावत्वाविशेषाच्च, तेषामप्यस्त्यधिकार इति प्राप्ते ।

साङ्गस्य क्रतोः पुरुषैः सम्बन्धात्, अङ्गभूताज्यावेक्षणविष्णुक्रमणादौ अन्धपंग्वादीनामसामर्थ्यात्, सामर्थ्यानुसारेणानन्धादिभिरेव सम्बध्यते इति लिङ्गेन वाक्यस्य सङ्कोच इति ।

वाक्यस्य प्रकरणविरोधे "अग्नीषोमाविदं हविरजुषेतां, अवीवृधेतां, महोज्यायोक्राताम्" इति दार्शपौर्णमासिकसूक्तवाक्यभेदः उदाहरणम् । तत्राग्नीषोमाविति देवतापदं लिङ्गात् पौर्णमास्यामेव प्रयोक्तव्यम् इति स्थिते, यानि तदेकवाक्यभूतानि 'इदं हविरजुषेताम्' इत्यादीनि पदानि, तानि किं प्रकरणाविशेषात् पर्वद्वये प्रयोक्तव्यानि, उताग्नीषोमपदैकवाक्यत्वात् तद्वदेव व्यवस्थया पौर्णमास्यां प्रयोक्तव्यानि इति संशये— प्रधानार्थत्वात् सर्वस्य प्रधानाकाङ्क्षारूपप्रकरणनिबन्धनो विनियोगो बलीयान्, इति प्रकरणाविशेषात् पर्वद्वये च प्रयोक्तव्यानि, इति पूर्वपक्षे ।

सिद्धान्तः— 'इदं हविः' इत्यादेः अग्नीषोमपदैकवाक्यत्वं क्लृप्तम् । [1]एकवाक्यतायाश्च अग्नीषोमप्रकाशनसामर्थ्यम् 'इदं हविः' इत्यादेः शीघ्रं कल्प्यते । ततः श्रुतिः । तया विनियोगः इति सन्नि-

[1]. एकवाक्यतया – च क.ख.पा.

कर्षः । अमावास्यादेवताप्रकाशकेनेन्द्राग्निपदेन 'इदं हविः' इत्यादेः शीघ्रं कल्प्यते । ततः श्रुतिः । तया विनियोगः इति सन्निकर्षः । अमावास्यादेवताप्रकाशकेनेन्द्राग्निपदेन 'इदं हविः' इत्यादेः एकवाक्यत्वं न क्लृप्तम् । समभिव्याहाराभावात् । किन्तु प्रकरणात् दर्शपूर्णमासाभ्यां, इदं हविरित्यादेः, अनेन दर्शपूर्णमासयोरुपकुर्यात् इत्येकवाक्यतां कल्पयित्वा, ततः कोऽस्योपकारः इत्याकाङ्क्षायां, तदीय-देवतापदैकवाक्यत्वं कल्पयित्वा, तत्प्रकाशनसामर्थ्यकल्पनापुरःसरं श्रुतिकल्पनया विनियोगः कल्पनीय इति विप्रकर्षः । तस्मात् प्रकरणाद्वाक्यस्य बलीयस्त्वात् वाक्यबलेन पौर्णमास्यामेव प्रयोक्तव्यानि इति मन्त्रवाक्यस्य प्रकरणविरोधे इदमुदाहरणम् ॥

ब्राह्मणवाक्यस्य तद्विरोधे तु ''पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ'' (३-३-३४) इति सूत्रोदाहरणं द्रष्टव्यम् । तत्र हि दर्शपूर्णमासप्रकरणाम्नातस्य पूषदेवताकयागापूर्वार्थतया पेषणविधाय-कस्य ''पूषा प्रपिष्टभागः'' इति वाक्यस्य दर्शपूर्णमासप्रकरणे पूषदैवत्ययागाभावेनानन्वयात् वाक्यबलेन प्रकरणात् पौष्णचरावुत्कर्षो दर्शितः ॥

स्थानप्रकरणविरोधे इदमुदाहरणम् । राजसूये बहवः पश्विष्टिसोमयागाः समप्रधानतया समा-म्नाताः । तत्राभिषेचनीयस्य सोमयागस्य सन्निधौ विदेवनादयः केचन पदार्थाः श्रूयन्ते । ते किमभि-षेचनीयस्याङ्गं, उत सर्वस्य राजसूयस्य, इति संशये सन्निधिविशेषात् अभिषेचनीयमात्राङ्गत्वे प्राप्ते, प्रकरणाविशेषात् सर्वराजसूयाङ्गतेति सिद्धान्तः ॥ सर्वस्य राजसूयस्य राजसूयात्मना इतिकर्तव्यता-काङ्क्षालक्षणं प्रकरणमस्त्यविशिष्टम् ॥ यदि सर्वेषामाकाङ्क्षायामविशिष्टायामपि पाठतः सन्निधिविशेषा-दभिषेचनीयस्य विशेषतोऽप्याकाङ्क्षां कल्पयित्वा तादर्थ्यं कल्प्येत, तदा विप्रकर्षः । क्लृप्ताकाङ्क्षया ततःप्रागेव सर्वार्थताप्रतीतेः । तस्मात् स्थानात् बलीयसा प्रकरणेन सर्वराजसूयाङ्गता इति ॥ इदं पाठसादेश्यस्य प्रकरणविरोधे उदाहरणम् ।

अनुष्ठानसादेश्यस्य तद्विरोधे तूदाहरणं ''दोहयोः कालभेदादसंयुक्तं शृतं स्यात्'' (३-६-२८) इत्यधिकरणे (३-६-८) द्रष्टव्यम् । तत्र हि चिन्तितम्— ''ऐन्द्रं दध्यमावास्यायां ऐन्द्रं पयोऽमा-वास्यायाम्'' इति ऐन्द्रे दधिपयसोरङ्गभावेनोत्पन्नयोरपि दधि पूर्वेद्युरनुष्ठीयते, पूर्वेद्युरुपक्रान्तं दधि उत्तरेद्युरभिनिर्वर्त्यत इति दध्नो दिनद्वयसाध्यत्वस्वाभाव्यात्, दोहधर्माश्च, शाखाहरणं, गवां [1]प्रस्थापन-मित्येवमादयः, पूर्वेद्युरनुष्ठीयन्ते, ततश्च तेषामनुष्ठानसादेश्यात् दध्यर्थत्वे प्राप्ते प्रकरणाविशेषादुभयार्थ-त्वमिति ॥

---

१. प्रतिष्ठापनं – क.पा.

स्थानसमाख्याविरोधे इदमुदाहरणम् । पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्यपात्र-शुन्धनक्रमे समाम्नातः शुन्धध्वमिति मन्त्रः किं पुरोडाशपात्राङ्गमुत सान्नाय्यपात्राङ्गमिति चिन्तायां, समाख्यावशात् पुरोडाशपात्राङ्गत्वप्राप्तौ,

सिद्धान्तः— पौरोडाशिकसमाख्यारूपस्य पदमात्रस्य प्रकृतिप्रत्ययाभिहितयोः पुरोडाश-काण्डयोः सम्बन्धे प्रमाणाभावात्, समाख्यामुपलभ्य नूनमस्त्यनयोः कश्चित् सम्बन्ध इति कल्प्यम् । स्थाने तु देशसामान्यलक्षणः सम्बन्धः क्लृप्तोऽस्तीति, तेन परस्पराकाङ्क्षा, तेनैकवाक्यत्वं, ततः सामर्थ्यं, ततः श्रुतिः, ततो विनियोगश्च शीघ्रं कल्प्यते । तस्मात् समाख्यातः स्थानस्य विनियोगे सन्निकृष्टत्वेन बलवत्वात् सान्नाय्यपात्राङ्गं शुन्धनमन्त्रः इति ॥ एवमन्यत्रापि बलाबलविषये उदा-हरणमूहनीयम् ॥

श्रुत्यादिभिर्विरोधे लिङ्गादीनामव्यवहितानां दौर्बल्ये स्थिते, व्यवहितानां वाक्यादीनां दौर्बल्यं अनुक्तसिद्धमिति ध्येयम् । स्थितं च तत्र तत्राधिकरणे । तथाहि श्रुतिविरोधे वाक्यदौर्बल्यं उद्भिदधिकरणे (१-४-२) दर्शितम् । "उद्भिदा यजेत" इत्यत्र उद्भिदेत्यत्र प्रकृतौ ज्योतिष्टोमे योगलभ्यखनित्रादि-गुणविधिरिति प्राप्ते, समानपदश्रुत्युपात्तयागविधिसम्भवे वाक्यगम्यगुणविधिस्वीकारो न युक्त इत्यु-द्भिदेत्यस्य यागनामधेयत्वं समर्थितम् ॥

श्रुतिविरोधे प्रकरणदौर्बल्यं "अहीनो वा प्रकरणात् गौणः" इति द्वादशोपसत्ताधिकरणे (३-३-१३) दर्शितम् ॥ तत्र हि ज्योतिष्टोमप्रकरणे "तिस्र एव साह्नस्योपसदः" इत्यह्ना समाप्य-मानत्वात् साह्नशब्दवाच्यस्य ज्योतिष्टोमस्य त्र्युपसत्त्वमङ्गं विधाय, 'द्वादशाहीनस्य' इत्यहीनस्य विधीयमाने द्वादशोपसत्त्वमपि तस्यैव भवितुं युक्तम्, प्रकरणात् । न हीयत इत्यहीनशब्दस्यापि तत्रैव वृत्तिसम्भवात् इति प्राप्ते, द्विरात्रादिष्वहर्गणेषु अहीनशब्दस्य रूढत्वात् अहीनश्रुत्या प्रबलया, द्विरात्रादिष्वेव प्रकरणादुत्कर्षः इति ॥

श्रुतिविरोधे स्थानदौर्बल्यं "रशना च लिङ्गदर्शनात्" इत्यधिकरणे (३-६-१०) दर्शितम् । ज्योतिष्टोमे अग्नीषोमीये पशौ यूपपरिव्याणं विहितं 'परिव्ययत्यूर्ग्वै रशना' इति । सवनीये पशौ पुनः परिव्याणान्तरं विहितम् 'आश्विनं ग्रहं गृहीत्वा, उपनिष्क्रम्य, यूपं परिव्ययति' इति । परिव्याण-साधनभूता रशना तद्धर्माश्च, अग्नीषोमीयस्थाने विहिताः "त्रिवृद्भवति, दर्भमयी भवति" इत्यादयः । ते किमग्नीषोमीयपरिव्याणार्थाः, उत सवनीयपरिव्याणार्थाः अपि इति संशये, स्थानप्रमाणात्

**अग्नीषोमीयार्थत्वे प्राप्ते** सिद्धान्तः— श्रुत्यैतद्यूपसम्बन्धिपरिव्याणाङ्गत्वमात्रमवगम्यते, [1]सवनीय-**परिव्याणमपि भवत्येतद्यूपसम्बन्धि** । तस्माच्छ्रुतिबलात् तदर्था अपि रशना तद्धर्माश्चेति ॥

श्रुतिविरोधे समाख्यादौर्बल्यं, "तथा कामोऽर्थसंयोगात्" (३-८-१३) इत्यधिकरणे (३-८-५) दर्शितम् । ज्योतिष्टोमे सदोमाने गुणकामः श्रुतः— "यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्" इति । स किमाध्वर्यवः, यदि कामयेताध्वर्युरिति, उत याजमानः यदि कामयेत यजमानः इति चिन्तायां आध्वर्यवकाण्डाम्नातत्वात् अस्य वचनस्य समाख्यावशात् सदोमानवत् गुणकामस्याप्याध्वर्यवत्वे प्राप्ते, 'मिनुयात्' इति परस्मैपदश्रुत्या, अध्वर्युव्यापारस्य पारार्थ्यप्रतीतेः, तत्फलस्याध्वर्युगामित्वायोगात्, गुणकामो याजमानः इति ॥

लिङ्गविरोधे प्रकरणस्य दौर्बल्यं "सन्दिग्धे तु व्यवायात्" (३-१-२१) इत्यधिकरणे (३-१-११) दर्शितम् ॥ दर्शपूर्णमासयोरग्निसमिन्धनार्थाः ऋचः सामिधेन्याख्या विधाय, तासां "त्रिःप्रथमामन्वाह त्रिरुत्तमाम्" इत्यादिवचनैः कांश्चिद्गुणान् विधाय, ततो 'देवेद्धोमन्विद्धः' इत्यादीन् निविदो नाम मन्त्रानाम्नाय, तदनन्तरं "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इत्युपव्यान् विधाय, पुनरपि 'अन्तरानूच्यं सदेवत्वाय' इत्यादिभिः सामिधेनीनामेव गुणाः विहिताः । तत्र पूर्वं पश्चाच्च वाचनिकगुणविधानात्, उद्भूतेन सामिधेनीनामवान्तरप्रकरणेनोपवीतं सामिधेन्यङ्गमिति प्राप्ते,

सिद्धान्तितम् ॥ असम्बन्धिनिवित्पदव्यवधानेन तासामवान्तरप्रकरणस्य विच्छेदात् महा-प्रकरणेन दर्शपूर्णमासाङ्गमुपवीतम् । न च निवित्पदानामपि अवान्तरप्रकरणेन सामिधेन्यङ्गत्वात् व्यवधानमसिद्धम् । लिङ्गेन प्रकरणं बाधित्वा, तेषामग्निसमिन्धनार्थत्वावगमात् इति ॥

लिङ्गात्स्थानस्य दौर्बल्यं 'आनन्तर्यमचोदना' (३-१-२४) इत्यधिकरणे (३-१-१४) दर्शि-तम् ॥ ज्योतिष्टोमे 'मुष्टीकरोति, वाचं यच्छति' इत्युक्त्वा 'दीक्षितमावेदयति' इति श्रूयते । तत्र मुष्टी-करणं वाग्यमनं च मनःप्रणिधानद्वारा, करिष्यमाणार्थतयाऽवगतमानन्तर्यात् दीक्षितावेदनमात्राङ्गमिति प्राप्ते, सन्निधानात् प्रबलेन लिङ्गेन करिष्यमाणकर्मार्थं तदिति ॥

लिङ्गात्समाख्यादौर्बल्यं "लिङ्गसमाख्याभ्यां भक्षार्थतानुवाकस्य" (३-२-२४) इत्यधिकरणे (३-२-९) दर्शितम् । अस्ति भक्षानुवाकः "भक्षे हि माविश दीर्घायुत्वाय" इत्यादिः । तस्य कृत्स्नस्य भक्षानुवाकसमाख्यया सोमभक्षणे विनियोगे प्राप्ते, "अश्विनोस्त्वा बाहुभ्यां सध्यासं", "नृचक्षसं त्वा

---

१. सवनीयपरिव्याणाङ्गमपि – क.ख.पा.

देव सोम सुचक्षा अत्र रूपेषम्" इत्यादिभागस्य ग्रहणावेक्षणादिप्रकाशनसामर्थ्यरूपालिङ्गात् भक्षणे सोमस्य ग्रहणावेक्षणादौ विभज्य विनियोग इति ॥

वाक्यात्स्थानदौर्बल्यं, 'तद्वत्सवनान्तरे ग्रहाम्नानम्' (३-६-३०) इत्यधिकरणे (३-६-९) दर्शितम् । ज्योतिष्टोमे प्रातस्सवनसन्निधौ ग्रहधर्माः समाम्नाताः 'उपोप्तेऽन्ये ग्रहास्साद्यन्तेऽनुपोप्ते ध्रुवः' इत्यादयः । ते स्थानप्रमाणात् प्रातस्सवनिकग्रहार्था इति प्राप्ते, ग्रहमात्रोद्देशेन धर्मविधानात्, वाक्येन प्राकरणिकसवनत्रयवर्तिसकलग्रहार्था इति सिद्धान्त इति ॥

वाक्यात्समाख्यायाः दौर्बल्यं "तस्योपदेशसमाख्यानेन निर्देशः" (३-७-४१) इति सूत्रेण अधिकरणे (३-७-२१) दर्शितम् ॥ हौत्रकाण्डाम्नातस्य कृत्स्नस्य समाख्यया होतृकर्तृकत्वे प्राप्ते, "मैत्रावरुणः प्रेष्यति चान्वाह च" इति वचनात्, प्रैषान्तानुवचनस्य मैत्रावरुणकर्तृकत्वमिति ॥

प्रकरणात्समाख्यायाः दौर्बल्यं "तपश्च फलसिद्धत्वाल्लोकवत्" (३-८-९) इत्यधिकरणे (३-८-३)दर्शितम् ॥ ज्योतिष्टोमे "द्व्यहं नाश्नीयात्" इत्यादिवाक्यैः, आध्वर्यवकाण्डविहितं काय-शोषणरूपं तपःसमाख्यावशात् अध्वर्युकर्तृकमिति प्राप्ते, तपसो दुःखफलकत्वात्, दुःखस्य च पाप-क्षयहेतुत्वात्, प्रकरणाच्च क्रतुफलप्रतिबन्धकपापक्षयहेतुत्वावगमात्, यत्र यजमाने फलेन भाव्यं तत्रैव प्रकरणावगतप्रतिबन्धकनिवर्तकेनापि भाव्यमिति, समाख्याबाधात् याजमानं तप इति ॥

समाख्याया अपि सामान्यविषयायाः विशेषसमाख्यातो दौर्बल्यं 'तस्योपदेशसमाख्यानेन निर्देशः' इति सूत्र (३-७-४१) एव दर्शितम् ॥ हौत्रमिति सामान्यसमाख्यया ऋग्वेदोक्तस्य कृत्स्नस्य होतृ-कर्तृकत्वे प्राप्ते तत्र तत्र पोत्रीयं, नेष्ट्रीयं, इत्यादिविशेषसमाख्याबलात् तत्तत्कर्तृकत्वमिति दिक् ॥

एवं श्रुत्यादीनां विरोधे पारदौर्बल्यमौत्सर्गिकं दर्शितम् ॥ एतदपवादोऽपि तत्र तत्र दृश्यते । तद्यथा "अर्थाद्वा कल्पनैकदेशत्वात्" इत्यधिकरणे (१-४-२०) 'स्रुवेणावद्यति स्वधितिनावद्यति, हस्तेनावद्यति" इति तृतीयाश्रुतीनां अवदानसामान्ये स्रुवादिशेषित्वबोधिकानां, स्रुवादिसामर्थ्यरूप-लिङ्गानुसारेण, द्रवद्रव्य-मांस-पुरोडाशावदानविषयतया संकोचः दर्शितः ॥ तत्र श्रुतितो लिङ्गस्य प्राबल्ये अनन्यथासिद्धत्वं हेतुः । स्रुवादेर्मांसाद्यवदाने कथमपि विनियोक्तुमशक्यत्वात् ॥

स्वर्गकामाधिकरणे (६-१-१) 'स्वर्गकामो यजेत' इत्यत्र भावनायाः भाव्याकाङ्क्षायां, समान-पदश्रुत्युपात्तयागपरित्यागेन भिन्नपदोपात्तवाक्यप्रमाणकस्वर्गान्वयो दर्शितः ॥ तत्र श्रुतितो वाक्यस्य प्राबल्ये बीजं विधिश्रुतिवशात् पुरुषार्थरूपभाव्यापेक्षणम् ॥

''**प्रायश्चित्ताधिकारे सर्वत्र दोषसामान्यात्**'' इत्यधिकरणे (६-५-१५) दर्शपूर्णमासप्रकरणे हि 'भिन्ने जुहोति' इत्यनेन पात्रभेदने निमित्ते श्रुतो होमः, यत्र यत्र भेदः तत्र सर्वत्र स्यात्, निमित्तसप्तमी-श्रुत्यविशेषात् इति प्राप्ते, नैमित्तिकस्यापि फलावश्यंभावात्, अप्रतीतफलकल्पनातः प्रतीतैकवाक्यतया तत्फलेन फलवत्त्वाभ्युपगमस्यैव युक्ततरत्वात्, प्रकरणवशेन दर्शपूर्णमासमध्यगते एव पात्रभेदने होमः इति श्रुतेः प्रकरणानुरोधो दर्शितः ॥ तत्र श्रुतेः प्रकरणस्य प्राबल्ये बीजं विध्यानर्थक्यपरिहारायापे-क्षितत्वम् ॥

''एका देया, द्वादश देयाः, चतुर्विंशतिर्देया, सहस्रं देयम्, अपरिमितं देयम्'' इत्याधानदक्षिणा-कल्पभेदश्रुतौ अपरिमितशब्दस्य बहुत्वसामान्ये रूढस्याविशेषेण यत्किञ्चिद्बहुत्वोपस्थापकत्वे प्राप्ते, 'अनियमोऽविशेषात्' इत्यधिकरणे (६-७-११) ''अधिकं वा स्यात् बह्वर्थत्वादितरेषां सन्निधानात्'' (६-७-२४) इति सूत्रेण सहस्रसन्निधानात् सहस्राधिकबहुत्वपरतया सङ्कोचो दर्शितः ॥ तत्र सन्नि-धानस्य प्राबल्ये अपरिमितश्रुतेः प्रतियोगिसव्यपेक्षार्थकत्वं बीजम् ॥

श्रुतेः समाख्यानुरोधस्तु ''प्रत्यक्षोपदेशाच्चमसिनामव्यक्तः शेषे'' (३-५-३३) इत्यधिकरणे (३-५-१०) सोमभक्षणकारणानां समवाये समुच्चयव्यवस्थापनेन दर्शितः ॥ तथाहि— सोमे त्रीणि भक्षणकारणानि । ''वषट्कर्तुः प्रथमभक्षः'' इति षष्ठीश्रुत्या वषट्कर्तुः प्राथम्यविशिष्टभक्षणशेषता-बोधनात् वषट्कारः एकं भक्षणकारणम् ॥ ''अभिषुत्याहवनीये हुत्वा, प्रत्यञ्चः परेत्य सदसि भक्षयन्ति'' इति त्त्वाश्रुत्या, होमाभिषवसमानकर्तृकभक्षणविधानात् होमाभिषवौ द्वितीयम् । होतृचमसादिसमाख्या तृतीयम् । एतेषां समवाये समुच्चयो व्यवस्थापितः । तत्रैकैकस्य भक्षणकारणस्य होमपात्रस्थसर्वहुत-शेषविषयत्वप्राप्तावपि वाचनिकयोः समबलत्वादन्योन्यानुरोधेन एकदेशविषयत्वमापादितम् । समा-ख्यायास्तु स्वतो दुर्बलत्वेऽपि अत्र निरवकाशत्वात्, अत्यन्तबाधायोगाच्च, तदनुरोधेनापि एकदेश-विषयत्वमापादितमिति ॥

''देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि'' इति दर्शपूर्ण-मासयोराम्नातमन्त्रे सवित्रश्विपूषन्शब्दानां तयोरसमवेतार्थानां, पूषानुमन्त्रणमन्त्रवत्, लिङ्गात्तत्तद्दैवत्ये कर्मणि विनियोगप्रसक्तावपि ''अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्'' (९-१-३६) इति नावमिकाधिकरणे (९-१-१२) ''अग्नये जुष्टं निर्वपामि'' इति भागस्याग्निदेवत्यनिर्वापप्रकाशकतया लिङ्गात्तयोरन्वितत्वेन, तेषामपि तदेकवाक्यतया निर्वापं प्ररोचयितुं, कथञ्चिन्निर्वापविशेषणीभूतार्थ-परत्वेन दर्शपूर्णमासयोरेव निर्वापे विनियोग इत्युपपादनेन, लिङ्गात् वाक्यस्य बलवत्वं दर्शितम् ॥ अत्र

लिङ्गाद्वाक्यस्य बलवत्वे बीजं सामान्यसम्बन्धस्य प्रकरणेनैव सिद्धत्वात् विशेषसम्बन्धे वाक्यस्य शीघ्रप्रवृत्तिकत्वम् ॥ लिङ्गं हि सवित्रादिशब्दानां, कर्मान्तराणां प्रकरणानाम्नानेन, तत्सामान्यसम्बन्धस्य असिद्धत्वात् द्रागेव विशेषसम्बन्धे न प्रभवति ॥

'अदितिः पाशान् प्रमुमोक्तु' इत्येकपाशकाग्नीषोमीयपशुप्रकरणाम्नातस्य मन्त्रस्य, बहुवचन-लिङ्गात् बहुपाशकेषु पशुगणेषु उत्कर्षे प्राप्ते, "विप्रतिपत्तौ विकल्पः स्यात्" (९-३-१५) इति नावमिकाधिकरणे (९-३-५) अग्नीषोमीयपशावेव विनियोगप्रदर्शनेन लिङ्गात् प्रकरणस्य प्राबल्यं दर्शितम् । तत्र तस्य प्राबल्ये बीजं लिङ्गस्याप्रधानविषयत्वम् ॥ प्रकृत्यर्थस्य पाशस्य, विभक्त्यर्थस्य कारकस्य च, प्रकृतौ सद्भावात्, अप्रधानबहुत्वलिङ्गमात्रं प्रकृतावनन्वयि, इत्यलं पल्लवितेन ॥

एवं सप्रपञ्चं निरूपितमपि श्रुत्यादीनां समवायोदाहरणं, उत्तरोत्तरदौर्बल्यं च, दृढतरतद्व्यवहार-सिद्ध्यर्थं सङ्क्षेपोऽपि विशेषतो निरूप्यते । तत्र पदान्तरसमभिव्याहारानपेक्षान्वयबोधकशब्दत्वमिह श्रुतित्वम् इत्युक्तम् । पदं चात्र सुप्तिङन्तरूपमिति न पदश्रुतावव्याप्तिः । विभक्तिश्रुतिर्यद्यपि 'पशुना' इत्यादौ तृतीयान्वयप्रतियोगिविशेष्य[1]लाभाय, पदान्तरमपेक्षते, तथापि साध्यसाधनत्वरूपान्वयस्वरूप-बोधे सापि पदान्तरानपेक्षैव ॥ 'कस्यचित्साधनं पशुः' इति बोधस्य पशुनेत्युक्त एव सम्भवात् इति ॥

लिङ्गं चात्र सामर्थ्यम् । तदनयोः समवाये विरोधे च श्रुतिरेव बलवतीति तत एव विनियोग-सिद्धिः । तथाहि— "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रूयते । तत्र गार्हपत्यमिति द्वितीयाश्रुत्या वह्निविशेषः तावत् — ऐन्द्रीकरणकोपस्थानकर्मेत्यवगम्यते । लिङ्गाच्चेन्द्रप्रकाशनसमर्थरूपात्, इन्द्र-प्रधानकोपस्थानकरणमैन्द्रीति ज्ञेयम् । तदनयोर्विरोधे निरपेक्षप्रमाणाभ्यां विकल्पेनोभयत्र विनियोगः इत्येकः पूर्वपक्षः । समुच्चयेनैवेत्यपरः । सामर्थ्यमन्तरेण श्रुतिरपि न विनियोगक्षमा इत्युपजीव्यत्वात्, लिङ्गमेव बलवदिति, गार्हपत्यपदमिन्द्रलक्षणकम् ॥ सिद्धान्तेऽपि मन्त्रस्थेन्द्रपदस्याग्नौ लक्षणैव, अन्यथा विरोधात् इति तृतीयः पक्षः ॥ सिद्धान्तस्तु निरपेक्षरूढ्या गार्हपत्यपदेनाग्निविशेषोपस्थितौ, द्वितीयया च तस्य क्रियाजन्यफलभाक्त्वेऽवगते, "का सा क्रिया" इत्यपेक्षायां 'उपतिष्ठते' इति श्रुतेः, केनेत्या-काङ्क्षायां, 'ऐन्द्र्या' इति श्रुतम् । 'का सा नामैन्द्री' इति जिज्ञासायां "कदाचनस्तरीरसि, नेन्द्र सश्चसि दाशुषे" इति तत्स्वरूपमुक्तम् । तदर्थस्तु— हे इन्द्र, न कदाचन, स्तरीरसि घातकोऽसि, दाशुषे आहुतिं दत्तवते यजमानाय, सश्चसि प्रीयसे चेति [2]तदर्थे च विविच्यमाने, सहस्राक्षत्वमिन्द्रत्वं, तत् वह्ना-वनन्वितम् इति स्वकीयपरमैश्वर्यं तत्रेन्द्रपदेन बोध्यते, 'इदि परमैश्वर्ये' इति धात्वर्थानुसारात् । योगार्थेऽपि

१. विशेष – क.ख.पा. २. ऋगर्थे – क.ख.पा.

तस्मिन् स्वतन्त्रोपस्थित्यर्थं रूढिपूर्वकलक्षणा । विधिवाक्यस्थगार्हपत्यपदे तु न लक्षणा, प्रथमं तद्बीजानुपपत्त्यनवतारात् तदा तत्प्रतीतलिङ्गानाकलनात्, मन्त्रस्थेन्द्रपदार्थान्वयस्यानुपजीव्यत्वात्, 'न विधौ परश्शब्दार्थः' इति स्वरसाच्च । एवं च लिङ्गं यावत् श्रुतिं परिकल्प्य विनियुङ्क्ते, तावत् पूर्वमेव प्रत्यक्षा श्रुतिः विनियोगमवगमयतीति श्रुत्या विनियुक्तस्य मन्त्रस्य, नान्यत्र विनियोगाकाङ्क्षेति, श्रुत्या लिङ्गबाधः ॥ अयं चाप्राप्तबाधः । "ऐन्द्र्या इन्द्रमुपतिष्ठते" इति विरुद्धश्रुतिकल्पनायोन्मुखीभवतः लिङ्गस्य, निरपेक्षश्रुत्या, कल्पनामूलाकाङ्क्षानिवर्तनेन, प्रापकतादृशश्रुतेरेवानुन्मज्जनात् ॥ अयमेव चात्र बाधार्थोऽपि ॥ एवं च प्रतीतौ विनियोगे च श्रुतेः प्राथमिकत्वमेव बलम् ॥ तदुक्तम्—

**यथा शीघ्रं प्रतीतत्वात् लिङ्गादेर्बाधिका श्रुतिः ।**
**तथैव विनियोगेऽपि सैव पूर्वं प्रतीयते ॥** इति ।

यच्चोक्तं लिङ्गबलादिति तत्रोच्यते ।

**लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता ।**
**श्रुतिज्ञानं पुरोधाय, लिङ्गं तु विनियोजकम् ॥** इति ।

न हि सामर्थ्यं मन्त्रस्यावगम्य, प्रमाता श्रुतितः विनियोगमवधारयति । किन्तु श्रुतेर्विनियोगमवगम्य, तदानुगुण्याय, मन्त्रस्य सामर्थ्यं कल्पयति । यथा विस्फोटे जाते वह्निगतदाहशक्तिर्विज्ञायते । तथा च श्रुतेः विनियोगात् पूर्वं सामर्थ्यमस्ति, न तु ज्ञायते । तस्माद्विद्यमानैव श्रुतिर्विनियोजिका । तन्निर्वाहार्थं सामर्थ्यं कल्पनीयम् ॥ तच्च न मुख्यया वृत्त्या, जघन्यया गौण्यापि ज्ञेयम् । शक्यते चेन्द्रपदेन गौण्या गार्हपत्याभिधानं कर्तुम् । भवति हि गुणादप्यभिधानम् । यथा 'सिंहो माणवकः' इति । गुणश्चात्र यज्ञसाधनत्वं स्वकीयपरमैश्वर्यादि ॥ यद्यपि वाक्येनाप्यत्र श्रुतेर्विरोध एव, पदद्वयसमभिव्याहारात्मकैकवाक्यताग्रहणादेव हि गार्हपत्योपस्थानकरणमैन्द्रीत्यवगन्तव्यम् ॥ अन्यथा "ऐन्द्र्या, इन्द्रं, गार्हपत्यमासाद्य,[1]" इति पदद्वयाध्याहारेणापि श्रुतिलिङ्गयोरविरोधोपपत्तौ नान्यतरबाधमादाय अधिकरणापेक्षा[2] । तथापि श्रुतिबाध्यलिङ्गबाध्यत्वेनैव वाक्यस्य श्रुतिबाध्यत्वोपपत्तौ किमत्र तदुदाहरणमादृतम् । श्रुतिवाक्यविरोधोदाहरणस्य लिङ्गासत्व एव सप्रयोजनत्वात् । लिङ्गसत्वे वाक्यस्य तद्विरोधेनैव वाक्यबाधात् । तदानुगुण्येन लिङ्गबाधेनैव वाक्यबाधसिद्धेरिति ॥ वाक्यं नाम पदसंहतिः ।

ततश्च लिङ्गं बलवत् । तथाहि— "स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः" इति दर्शपूर्णमासप्रकरणे श्रूयते । तस्यार्थः—

१. आसज्य – क.पा.  २. प्रकरणापेक्षा – क.पा.

हे पुरोडाश । ते = तव, स्योनं = समीचीनं, सदनं = आश्रयं, कृणोमि = कल्पयामि, कीदृशम् ? घृतस्य धारया, सुशेवं = सुखसेव्यम्, घृताप्लुतानां कपालानां सुखसेवायोग्यत्वात्, भो व्रीहीणां मेध = सारभूत, सुमनस्यमानः = समाहितमनाः सन्, अमृते = अनपायिनि, तस्मिन् स्थाने, सीद = उपविश, प्रतितिष्ठ = स्थिरो भव इति ॥ अत्रेदं वाक्यमेकमनेकं वेति सन्देहः, तत्र स्थानकरणे इदं वाक्यं विनियोज्यम्, तथा च "अनेन स्थानं कुर्यात्" इति श्रुतिः कल्पनीया । स्थापने वा विनियोज्यं, तथा चानेन स्थापनं कुर्यादिति श्रुतिः कल्पनीया । एकमेव कृत्स्नं वाक्यं, समभिव्याहारावगतैकवाक्यत्वे बाधकाभावात्, एवं च कृत्स्न एवायं मन्त्रः, विकल्पेन, समुच्चयेन वा स्थाने स्थापने च विनियोज्यः इति पूर्वः पक्षः ॥ सिद्धान्तस्तु, भवेदेवं यदि लिङ्गमप्रतीत्य, एकवाक्यत्वं शक्यग्रहं, कथञ्चित्, गृहीतं वा स्थानकरणादौ विनियोगक्षमम् । न त्वेवम् । प्रतीयमानसामर्थ्यानि विभज्यमानसाकाङ्क्षाणि एकार्थावच्छिन्नानि पदानि हि वाक्यम् । मन्त्रेषु च दृष्टार्थेषु प्रकाश्यमानार्थ एव प्रधानम् । प्रकृते सदनस्य कपालस्य करणम्, तत्र पुरोडाशासादनं च प्रधानतया द्वयमेव प्राप्तम् । तत्र सदनकरणं प्रकाशयितुं कल्पयामीत्यन्तो मन्त्रः समर्थः । पुरोडाशासादनं च प्रकाशयितुं 'तस्मिन्' इत्यादिः समर्थः । तथा च यदा तत्पूर्वोत्तरार्धयोः परस्परान्वयेन समस्तमेकं वाक्यमिति सदनकरणार्थमासादनार्थं वा इत्यवगन्तव्यम्, तत्रोत्तरार्धस्य सदनकरणे, पूर्वार्धस्य चासादने शक्तिं परिकल्प्य कृत्स्नमन्त्रः विनियोक्तुं शक्यते । ततश्च लिङ्गकल्पनव्यवधानेन श्रुतिं प्रति वाक्यं विप्रकृष्टम् । प्रत्यक्षं तु सदने सादने च लिङ्गद्वयं सन्निकृष्टम् । वाक्यं यावदेकत्र लिङ्गं कल्पयेत्, तावदपरत्र विद्यमानं लिङ्गं श्रुतिं कल्पयेत् । यावच्चैकत्र कल्पितं लिङ्गं श्रुतिं कल्पयेत्, तावदन्यत्र श्रुतिः विनियोजयेत् । ततश्च विनियोगे जाते, कल्पितापि श्रुतिः नैराकाङ्क्ष्यात् न विनियोगमावहति ॥ निदर्शनमत्र निःश्रेण्यारोहणम्, प्राप्यप्राप्तमात्रोपपादि च ॥

**एकमेव फलं प्राप्तुमुभावारोहतो यदा ।**
**एकसोपानवर्त्येकः, भूमिष्टस्त्वपरः, तयोः ॥**
**उभयोश्च जवस्तुल्यः, प्रतिलम्भश्च नान्तरा ।**
**विरोधिनोः सदैको हि तत्फलं प्राप्नुयात्तयोः ॥**
**प्रथमेन गृहीतेऽस्मिन्, पश्चिमो विचरन्मुधा ॥** इति ।

तथा च लिङ्गकल्पितश्रुत्या एकैकभागस्य विनियोगे सति दर्शपूर्णमासप्रकरणपाठोपपत्तौ न वाक्यकल्पितलिङ्गकल्पितश्रुतिर्विनियोजिका इति प्रथमोत्पन्नापि एकवाक्यताधीः आभासीभवतीति लिङ्गेन वाक्यबाधः ॥ तथा च लिङ्गेनैकवाक्यत्वबाधात्, पूर्वार्धं सदने, अपरार्धं सादने विनियुज्यते इति ॥

प्रकरणं च वाक्ययोः परस्पराकाङ्क्षारूपम् । ततो वाक्यं बलवत् ॥ तथाहि— दर्शपूर्णमासप्रकरणे "सूक्तवाकेन प्रस्तरं प्रहरती"ति कुशमुष्टिप्रहरणाङ्गत्वेन सूक्तवाकं विधाय, "अग्निरिदं हविरजुषत, अवीवृधत, महोज्यायोऽकृत, प्रजापतिरिदं हविरजुषत, अवीवृधत, महोज्यायोऽकृत, अग्नीषोमाविदं हविरजुषेताम्, अवीवृधेतां, महो ज्यायोऽकृताम्, इन्द्राग्नीकृतां, इन्द्र इदं हविरजुषत, अवीवृधत, महो ज्यायोऽकृत, देवा आज्यपा आज्यमजुषन्त, अवीवृधन्त, महोज्यायोऽक्रत" इति सूक्तवाकनिगद आम्नातः । तत्र यागकालीनतत्तन्मन्त्रयुक्तां देवतां, सूक्तं यथा भवति एवं वदतीति, सूक्तवाकपदार्थः । देवतासम्बोधनात्मकपरप्रत्यायनार्थानि यजूंषि निगदाः ॥ दर्शेष्टौ आग्नेयोऽष्टाकपालः, विष्णुरुपांशु यष्टव्यः, इन्द्राग्नी द्वादशकपालेन, इति विशेषदेवताः ॥ पौर्णमासेष्टौ आग्नेयोऽष्टाकपालः, अग्नीषोमावुपांशु यष्टव्यौ, अग्नीषोमावेकादशकपालेन, इति विशेषदेवताः । एवं च सूक्तवाके देवतावाचकमग्नीषोमादिपदं यथा देवतालिङ्गानुसारेण विभज्य प्रयोक्तव्यमिति तृतीये सिद्धान्तितम् ।

तत्र सन्देहः— किमग्नीषोमादिपदैकवाक्यतापन्नम् 'इदं हविः' इत्येवमादिकं यत्, तदप्यग्नीषोमादिपदैः सहोत्क्रष्टव्यम् । उत देवतावाचकाग्नीषोमादिपदमात्रमिति । तत्र पूर्वः पक्षः— यद्यपि इदं हविरित्येवमादिकमप्यग्नीषोमादिपदैकवाक्यतया प्रतीयते, तथाप्यग्नीषोमीयमन्त्रगतमपि 'इदं हविः' इत्येवमाद्यवशिष्टपदजातं अग्नीषोमयोः दर्शदेवतात्वाभावात्, तन्मात्रं परित्यज्य, दर्शे पठनीयम् ॥ तद्भागस्य प्रकरणावगततादर्थ्याबाधात् । अन्यथा अमीषां मन्त्रभागानां कृत्स्नदर्शपूर्णमासशेषत्वबोधकप्रकरणभङ्गापातात् इति ॥

सिद्धान्तस्तु— परस्पराकाङ्क्षाबलात् कस्मिंश्चित् विशिष्टैकार्थे पर्यवसितानि पदानि वाक्यम् । लब्धवाक्यभावानां च कार्यापेक्षाबलात् वाक्यान्तरेण सम्बन्धः प्रकरणम् । यथा अङ्गप्रधानवाक्ययोः । समिदादियागभावना हि पुरुषाभिलषितं भाव्यमपेक्षमाणा, दर्शपूर्णमासभावनामेव तथा निर्धारयति । न चामीषां सन्निहितकरणोपकारे सम्भवति विश्वजिन्न्यायेन फलकल्पनम्, गौरवात् ॥ नापि दर्शजन्यस्वर्गानुषङ्गः, तस्य प्रकरणनिराकाङ्क्षत्वात्, परम्पराकाङ्क्षा हि प्रयोजिका । [१]तदाकाङ्क्षायाश्चोपनिपतितानि समिदादिवाक्यानि स्वकार्यापेक्षाणि तदपेक्षितोपकारलक्षणं कार्यमासन्नं निर्वृण्वन्ति । निर्वाहयन्ति च स्वकृतोपकारेण दर्शपूर्णमासादिभावनामिति ॥ तथा च वाक्ययोः परस्पराकाङ्क्षारूपं प्रकरणमेकवाक्यतया जनितं स्ववाक्यार्थावगतिनिबन्धनमित्युपजीव्यप्रथमावगतपदैकवाक्यताग्रहेण बलवता बाध्यते । तथा चाग्नीषोमादिपदैकवाक्यतापन्नं 'इदं हविः' इत्यादि कथं तत्परित्यागेन दर्शाङ्गतां यायादिति ॥ किञ्च प्रकरणं विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य विनियोजकम् । तथा चाग्नीषोमीय-

१. तदाकाङ्क्षायां च – क.पा.

मन्त्रशेषस्य 'इदं हविरजुषेताम्' इति भागस्य ऐन्द्रादिमन्त्रान्वयाश्रवणात्, प्रकरणेन, तदन्वयरूपं वाक्यं प्रकल्प्य, तेन दर्शविशिष्टेन्द्रादिप्रकाशनसामर्थ्यं लिङ्गं कल्पनीयम् । तेन च विनियोजिका श्रुतिः कल्पनीया, इति त्रिभिस्तत्र व्यवधानम् । वाक्यं तु क्लृप्तमेव लिङ्गं परिकल्प्य, विनियोजिकां श्रुतिं कल्पयतीति द्वाभ्यामेव व्यवधानम् । तेनार्थविप्रकर्षाद्वाक्यस्य प्रकरणात् बलवत्त्वेन, अग्नीषोममन्त्रस्थेदंहविरित्यादिभागस्य, तच्छेषतया, तत्सहितस्यैवोत्कर्षः । अत एव "पूष्णोऽहं देवयजुषा प्रजया च पशुभिर्जनीय" इति दर्शप्रकरणपठितपूषमन्त्रस्य दर्शे पूषदेवताविरहात् अन्वयासम्भवे, अग्रे विहितपूषदेवताकर्मणि देवतानुसारात् कृत्स्नस्यैवोत्कर्षः । प्रकरणापेक्षया लिङ्गस्य बलवत्त्वेन तत्कल्पितवाक्यस्यापि बलवत्त्वात् । कर्मसमवेतदेवतादिप्रकाशनद्वारा मन्त्रविनियोगात् । तदसम्भवे मन्त्रविनियोगासम्भवात् । अत एव 'द्वादशोपसदोऽहीनस्य' इत्यस्य सोमयागप्रकरणपठितस्यापि न तत्र द्वादशोपसत्सम्बन्धबोधकत्वं सम्भवतीति, प्रकरणान्तरस्थाहीनयागस्य रूढ्या अहीनपदोपस्थापितस्योपसद्भिः सम्बन्धबोधकत्वं तद्वाक्यस्येति ॥

समानदेशो, पाठः अनुष्ठानं वा स्थानम् । तत्राद्यमाग्नेयाग्नीषोमीयमध्यविहितोपांशुयाजे तदुभयमन्त्रमध्यगतस्य दब्धिमन्त्रस्य विनियोजकम् । द्वितीयमग्नीषोमीयपशौ रशनादीनां विनियोजकम् । तस्मात्प्रकरणं बलवत् । तथाहि— नानेष्टिपशुसोमसङ्घातात्मकराजसूयमध्यगताभिषेचनीयाख्यसोमयागसन्निधौ 'अक्षैर्दीव्यति', 'शौनश्शेपमाख्यापयति' इति विदेवनादिः श्रूयते । शौनश्शेपं = शुनश्शेपविषयमाख्यानम् ॥ तच्च ब्राह्मणे पठितं, यथा शुनःशेपः किल ऋषिपुत्रः हरिश्चन्द्रपुत्रेण पुरुषमेधार्थं पशुत्वेन क्रीतः, स च वरुणाय स्वस्यालम्भं कर्तुमारब्धे, वरुणं तुष्टाव, स चैनं तुष्ट एव ररक्ष इति ।

तत्र देवनादयः किं स्थानात् अभिषेचनीयमात्रशेषाः, उत प्रकरणात् राजसूयस्येति सन्देहः । तत्र पूर्वः पक्षः— यद्यप्यभिषेचनीयस्य नावान्तरप्रकरणं सम्भवति, तस्य विकृतित्वेन प्राकृतैरेवाङ्गैराकाङ्क्षापूरणे, अङ्गापेक्षाविरहात् । "विकृतयो हि क्लृप्तोपकाराकाङ्क्षाः प्रथमं प्राकृतैरेवाङ्गैः समीपस्थमङ्गं विहाय सम्बद्ध्यन्ते" इति गृहमेधीयाधिकरणे भाष्यकारोक्तेः । तथापि अभिषेचनीयसमीपे, श्रुतविदेवनादिकं स्थानाख्यप्रमाणेन, तदाकाङ्क्षामुत्थाप्य, तत्रैव विनियुज्यते इति ।

सिद्धान्तश्च तदाकाङ्क्षारूपावान्तरप्रकरणं परिकल्प्य तद्वारा वाक्यलिङ्गश्रुतिकल्पनायां, विनियोगः, तदपेक्षया क्लृप्तेन महाप्रकरणेन राजसूयाङ्गतैव विदेवनादीनां प्रथममवगतेति प्रकरणेन स्थानबाधः इति ॥

समाख्या यौगिकी संज्ञा । ततः स्थानं बलवत् । तथाहि— याज्ञिकैः पुरोडाशार्थमन्त्रबाहुल्यात् 'पौराडाशिक' इति समाख्याते काण्डे आग्नेयादीनां क्रमेण मन्त्राः समाम्नाताः । तत्रामावास्यकसान्ना-य्यपात्रस्थाने "शुन्धध्वं दैव्याय कर्मणे" इति मन्त्रः, समाम्नातः । स किं पौराडाशिकसमाख्यया, तत्काण्डोक्तपुरोडाशपात्रोलूखलमुसलादिशोधनेऽप्यङ्गम्, उत स्थानात् सान्नाय्यपात्रशोधने इति सन्देहः । तत्र पूर्वः पक्षः— पुरोडाशसम्बन्धात् पौरोडाशिकः इति तदर्थसमाख्यया श्रुत्या वाक्येन वा पुरोडाशपात्रमात्रप्रतिपादनात्, तदपेक्षया स्थानेन, प्रकरणाद्यनुमानपरम्परया, सान्नाय्यपात्रमात्र-सम्बन्धप्रतिपादनस्य विलम्बितत्वात्, समाख्ययैव विनियोगः इति ॥

सिद्धान्तस्तु समाख्ययापि सम्बन्धमात्रं बोध्यते । तदपि वाक्यार्थविधया, न तु शेषशेषिभावः, पुरोडाशसम्बन्धिकाण्डोक्तसर्वपात्रसम्बन्धोऽपि न शाब्दः । ततस्तादृशसमाख्यानुपपत्त्या, तत्सान्निध्यं प्रकल्प्यते, तेन प्रकरणं, तेन वाक्यं, तेन लिङ्गं, तेन श्रुतिः । तया च तादर्थ्यमित्यर्थविप्रकर्षः समा-ख्यायाः । प्रत्यक्षेण तु सान्नाय्यपात्रसन्निधिना प्रकरणादिकल्पने सन्निकर्षः इति स्थानेन समाख्याबाधः इति दिक् ॥

चतुर्थे शेषशेषिभावं प्राप्तानां कर्मणामनुष्ठानशक्तिरूपा प्रयुक्तिर्निरूपिता । शेष्येव शेषं प्रयुङ्क्ते, स्वसिद्ध्यर्थमनुष्ठापयति, न तु अनुनिष्पाद्यपि, नापि शेषः शेषिणं प्रयुङ्क्ते ॥ अनेकशेषिसद्भावेऽपि यत्रान्यप्रयुक्तस्यैवान्यत्र विनियोगः, तत्र, यत्प्रयुक्तस्यान्यत्र विनियोगः, स एव शेषं प्रयुङ्क्ते, न तु शेष्यपि सन्नन्योऽपि ॥

एवं च "तप्ते पयसि दध्यानयति" इत्यादिवाक्ये विधीयमानस्य दध्यानयनस्य द्विकर्मकस्य कर्मान्तराकाङ्क्षायां, समभिव्याहृतं पयः कर्मान्तरत्वेनान्वीयमानं, सप्तम्या अधिकरणत्वेन निर्देशात्, प्रधानकर्मतया पर्यवस्यतीति, प्रकृतप्रधानभूतपयःपरामर्शिना तत्पदेन सामानाधिकरण्येन निर्दिष्टतया, पयोरूपत्वेनामिक्षैव शेषित्वात् स्वशेषभूतं दध्यानयमनुष्ठापयति । न तु तदनुनिष्पादि वाजिनमपीति, आमिक्षापचारे एव, पयोऽन्तरे दध्यानयनस्य प्रयुक्तिः, न वाजिनापचारे ॥

"कृष्णविषाणया कण्डूयते, चात्वाले कृष्णविषाणां प्रास्यति" इति कृष्णविषाणायाः कण्डूयन-प्रासनरूपक्रियान्वये सत्यपि, 'कृष्णविषाणया' इति तृतीयया कण्डूयनं प्रति शेषः, प्रासनं प्रति तु द्वितीयया शेषिणीति, निर्वृत्तकण्डूयनप्रयोजनाकाङ्क्षायाः तस्याः प्रासनात्पूर्वमपचारे प्रासनार्थं न पुनः कृष्णविषाणान्तरोपादानप्रयुक्तिः ॥

"पुरोडाशकपालेन तुषानुपवपति" इत्यत्र पुरोडाशप्रयुक्तस्यैव कपालस्य, तुषोपवापं प्रत्यपि शेषत्वेन विनियोगात्, यत्र पुरोडाशो नास्ति, न तत्र तुषोपवापार्थं कपालप्रयुक्तिः इत्येवं सापवादा प्रयुक्तिः तत्र चतुर्थाध्याये प्रपञ्चिता ॥

तादृशस्य चतुर्थाध्यायस्य प्रथमपादे प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिकेत्यादिप्रधान-प्रयोक्तृत्वं निरूपितम् ॥ द्वितीये तु अप्रधानं वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वं वर्णितम् । तृतीये जुहूपर्णमयत्वादेः अपापश्लोकफलमर्याभावाभावचिन्ता कृता । चतुर्थे राजसूयगत-जघन्याङ्गाक्षद्यूतादिचिन्ता, इति विषयविवेको द्रष्टव्यः ॥

एकप्रयोगान्तर्गतानामङ्गप्रधानानामनुष्टानक्रमः पञ्चमाध्याये निरूपितः । तत्र "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादिश्रुत्या, गृहपत्यादीनां नेत्रन्तानां, सत्रयजमानानां दीक्षाक्रमः, "अग्निहोत्रं जुहोति, यवागूं पचति" इत्यत्र होमद्रव्यनिष्पत्त्यर्थं यवागूपाकप्रयोजनरूपेणार्थेन, पाक-होमयोः क्रमः । 'समिधो यजति' इत्यादिविधिविहितानां प्रयाजादीनां विधिवाक्यपाठक्रमेणैव क्रमः । वाजपेये प्राजापत्यानां पशूनां, प्रतिपश्वावर्तनीयेषु उपाकरणनियोजनादिषु, उपाकरणे यतः कुतश्चित्, पशोरारभ्य, यत्र कुत्रचित् पशौ समापिते, तेनैव प्रवृत्तिक्रमेण विनियोजनादिक्रमः । साद्यस्के क्रतौ 'सहपशूनालभते' इति श्रुत्या, सवनीयस्थान एवाग्नीषोमीयसवनीयानुबन्ध्यपशुत्रयस्यापि सहकर्तव्य-तया प्राप्तौ सवनीयस्थानेन प्रथमं सवनीयपशोरुपाकरणम्, अनन्तरमग्नीषोमीयानुबन्ध्ययोरिति क्रमः । दर्शे पुरोडाशसान्नाय्ययोर्मुख्यक्रमेण प्रयाजशेषाभिधारणक्रमः इत्येवं श्रुत्यादिभिः क्रमः सापवादो निरूपितः ॥

एवं क्रमनिरूपणार्थं प्रवृत्तस्य पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थादिभिः क्रमो निरूपितः । द्वितीये वाजपेयगतेषु सप्तदशपशुषु एकैकधर्मसमापनम् इत्यादिक्रमविशेषो वर्णितः । तृतीये पशुप्रयाजादीना-मावर्तनेनैकादशत्वमित्यादिवृद्धिर्वर्णिता । अनारभ्यविहितग्रहचित्रिण्योः अनावृत्तिरित्यादिवृद्ध्यभावो वर्णितः । चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः विचारितः इति विषयविवेकः द्रष्टव्यः ॥ अथ—

**श्रुत्यर्थादिप्रमाणानां स्वरूपं विषयास्तथा ।**
**तेषां प्राबल्यदौर्बल्ये सङ्क्षिप्यैव निरूप्यते ॥**

पाञ्चमिके क्रमे श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तयः षट् प्रमाणानि । तत्र श्रुतिप्रमाणकः क्रमः "श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात्" इति प्रथमाधिकरणे (५-१-१) दर्शितः ॥ सत्रद्वादशाहे

**श्रूयते**— "**अध्वर्युर्गृहपतिं दीक्षयित्वा, ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रतिप्रस्थातारं दीक्षयित्वाऽर्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा, तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः ततस्तमुन्नेता दीक्षयित्वा, पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः, ततस्तमन्यो ब्राह्मणः दीक्षयति, ब्रह्मचारी वाचार्यप्रेषितः**" इति। अत्र विधेयान्तराभावात्, गृहपत्यादीनां दीक्षाक्रम एव क्त्वाश्रुत्यर्थपौर्वापर्यलक्षणः विधेयः इति श्रुतिप्रमाणकः क्रमः । अध्वर्य्वादीनां दीक्षैव विधेया किं न स्यात् इति चेन्न, सत्रे "ये यजमानास्त ऋत्विजः" इति सर्वेषां यजमानत्वादेव दीक्षा-प्राप्तेः । इमानध्वर्युर्दीक्षयति, इमान् प्रस्थाता, इत्यादिकर्तृनियमो विधेयः स्यादिति चेत्, अत्रोच्यते, अध्वर्योस्तावत् कर्तृत्वं गृहपत्यादिदीक्षायां चोदकादेव प्राप्तम् । अध्वर्युदीक्षायां तु "चित्पतिरस्त्वा पुनातु" इति मन्त्रलिङ्गविरोधात् अध्वर्योः कर्तृत्वं न सम्भवति इति "इतरमन्यस्तेषां यतो विशेषः स्यात्" इति न्यायेन द्वितीयस्याध्वर्युपुरुषस्य प्रतिप्रस्थातुः कर्तृत्वं प्राप्नोति । द्वितीयानां ब्राह्मणा-च्छंस्यादीनां दीक्षायामपि "न पूतः पावयेत्" इति दीक्षितस्य दीक्षाकर्तृत्वप्रतिषेधेन, अध्वर्योः कर्तृत्वासम्भवात्, तेनैव न्यायेन, तस्यैव तत्प्राप्नोति । तृतीयानां च दीक्षायां नेष्टुः, तस्य पादिनां च दीक्षायामुन्नेतुः, च कर्तृत्वं प्राप्नोति । उन्नेतृदीक्षायां तु अर्थादन्यस्य ब्राह्मणस्य कर्तृत्वं प्राप्नोति । क्षत्रियादीनां याजकत्वस्यान्तिमाधिकरणे निराकरणात् । तस्माद्विधेयान्तराभावात् क्रम एवात्र विधेयः ॥

'अर्थाच्च' इति तदनन्तराधिकरणे (५-१-२) आर्थक्रमो दर्शितः । "यवाग्वाग्निहोत्रं जुहोति, यवागूं पचति" इत्यत्र यवागूपाकहोमयोः सत्रदीक्षायामिव क्रमनियमे विधानाभावात् अनियमप्राप्तौ, प्रयोजनवशात्, प्रथमं यवागूपाकः, तदनन्तरं होमः इति नियमः होमद्रव्ययवागूत्पत्त्यर्थो हि श्रुत्या लिङ्गेन च पाकः, स पश्चात् क्रियमाणोऽनर्थकः स्यात्, होमोऽप्यसति द्रव्ये न निर्वर्तेत, इति ॥

"क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्' इत्यधिकरणे (५-१-४) पाठक्रमो दर्शितः ॥ 'समिधो यजति', 'तनूनपातं यजति' इत्यत्र क्रमेण पठितानां यागानामनुष्ठानक्रमनियामकयोः श्रुत्य-र्थयोरभावात्, अनियमे प्राप्ते लोके 'स्नायादनुलिम्पेत् भुञ्जीत' इत्यादौ पाठक्रमस्य यथापाठं स्मरणम्, यथास्मरणमनुष्ठानमिति नियामकत्वदर्शनात् स्वाध्यायविधिविहितपाठक्रमानुसारेण क्रमः इति ।

'स्थानाच्चोत्पत्तिसंयोगात्' इत्यधिकरणे (५-१-६) स्थानप्रमाणकः क्रमो दर्शितः । साद्यस्क्रे क्रतौ 'सहपशूनालभते' इत्यग्नीषोमीयसवनीयानुबन्ध्यपशूनां सहालम्भः श्रुतः । तच्च साहित्यं सवनीयस्थाने मध्यगते । अग्नीषोमीयस्थाने सवनीयानुबन्ध्ययोरपकर्षे अनुबन्ध्यस्यात्यन्तविप्रकर्ष-

प्रसङ्गात्, अनुबन्ध्यस्थाने अग्नीषोमसवनीययोरुत्कर्षे अग्नीषोमीयस्यातिविप्रकर्षप्रसङ्गाच्च । एवं स्थिते सवनीयस्थान एव प्रतिपशूपाकरणादयः भेदेनापतन्तः प्रकृतिवदग्नीषोमीयस्य प्रथमं कार्याः इति प्राप्ते, सवनीयस्थानात् सवनीयस्य प्रथमं कार्याः । 'आश्विनं ग्रहं गृहीत्वा' त्रिवृता यूपं परिवीय, आग्नेयं सवनीयं पशुमुपाकरोति'' इति श्रवणात्, आश्विनग्रहणेन पूर्वपदार्थेन सवनीयधर्माणां उपस्थापनात्, अग्नीषोमीयधर्माणां सहालम्भनवचनेन स्वस्थानाच्चलितानामिह तथोपस्थापकाभावात् इति ॥

'मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्' इत्यधिकरणे (५-१-७) मुख्यक्रमेण क्रमो दर्शितः । 'सारस्वतौ भवतः' इति यागद्वयं स्त्रीपुंसदैवत्यं विहितम् । 'एतद्वै दैव्यं मिथुनम्' इति वाक्यशेषात् । तत्र स्त्रीदेवत्यस्य याज्यानुवाक्ययोः प्रथमपठितत्वेन मन्त्रपाठक्रमात् तस्य प्रथममनुष्ठानं, ततः पुंदेवत्यस्य । तयोश्चोदकप्राप्तानां निर्वापादिधर्माणां, क्रमनियमे श्रुत्याद्यभावेनानियमे प्राप्ते, मुख्य-क्रमेण तेषां क्रमः, इतरथा पश्चाद्भाविनः प्रधानस्य पूर्वमङ्गं क्रियमाणं, प्रधानेनात्यन्तं व्यवहितं स्यादिति, अङ्गप्रधानसाहित्यबोधकप्रयोगवचनविरोधः इति ।

''प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्'' इत्यधिकरणे (५-१-५) प्रवृत्तिक्रमेण क्रमो दर्शितः ॥ वाजपेये सप्तदश प्राजापत्याः पशवः सहक्रियन्ते । तत्रोपाकरणनियोजनादयः, सन्निपातिनो धर्माः प्रतिपश्वावर्तनीयाः । तेषां चावृत्तिः नैकैकस्य पशोः कात्स्न्र्येन कृत्वा, अपरस्यापि तथैव क्रियन्ते इत्येवं काण्डानुसमयेन, किन्तु सर्वेषामुपाकरणं कृत्वा, ततः सर्वेषां नियोजनम् इत्येवं पदार्थानुसमयेन, इति ''सन्निपाते प्रधानानां एकैकस्य गुणानां सर्वकर्म स्यात्'' इत्यधिकरणे (५-२-१) सिद्धम् ॥ तत्रोपाकरणं यतःकुतश्चित्पशोरारभ्य, यत्र कुत्रचित् समाप्यते । नियामकाभावात् । तद्वदेव नियो-जनादावपि अनियमे प्राप्ते, येन क्रमेणोपाकरणं प्रवृत्तं, स एव नियोजनादावपि क्रमः । अन्यथा पदार्थानां मिथः प्रत्यासत्तिविरोधः स्यात् । एकैकस्य हि पशोः पदार्थाः मिथः प्रत्यासन्नाः कर्तव्याः । प्रयोग-वचनावगतसाहित्यानुरोधात् । तत्र ''वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति'' इति वचनावगतपश्वन्तर-साहित्यबलात्, अन्यदीयैः षोडशभिः पदार्थैः व्यवधिरनुज्ञायते, नाधिकैः । प्रवृत्त्या च तन्नियमे तावद्भिरेव व्यवधानम् । अन्यथाधिकैरपि स्यात् । तस्मात्प्रत्यासत्त्या नियमः ॥ मुख्यक्रमेऽङ्गानां प्रधानप्रत्यासत्तिर्नियमकारणम्, अत्र तु तेषामेव मिथः प्रत्यासत्तिः इति भेदः ॥

अथ श्रुत्यादीनां बलाबलविषये कानिचिदधिकरणानि प्रदर्श्यन्ते ॥ 'क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च' (५-४-१) इत्यधिकरणे पाठक्रमस्य श्रुत्यर्थाभ्यां दौर्बल्यं दर्शितम् । ज्योतिष्टोमे 'ऐन्द्रवायवं गृह्णाति', 'मैत्रावरुणं गृह्णाति', 'आश्विनं गृह्णाति' इति पाठक्रमादाश्विनग्रहस्य,

तृतीयस्थाने ग्रहणे, 'यवाग्वाग्निहोत्रं जुहोति, यवागूं पचति' इति पाठक्रमात् पाकस्य होमानन्तर्ये च प्राप्ते 'आश्विनो दशमो गृह्यते,' इति श्रुत्या, हुत्वा पचमानस्य यवागूः पाकश्च इति द्वयमप्यनर्थकं स्यात् इति तदुभय-प्रयोजनवशेन च, क्रमान्तरनिर्णयात्, न पाठक्रमेण क्रमकल्पनमिति ॥

ब्राह्मणपाठक्रमस्य मन्त्रपाठक्रमविरोधे अनियामकत्वं 'मन्त्रतस्तु विरोधे स्यात्' इत्यधिकरणे (५-१-९) दर्शितम् ॥ दर्शपूर्णमासयोः अग्नीषोमीयस्य प्रथमं ब्राह्मणं, ततः आग्नेयस्य, मन्त्रकाण्डे आग्नेयस्य प्रथमं याज्यानुवाक्यायुगलस्याम्नानं, अनन्तरमग्नीषोमीयस्य, तत्र ब्राह्मणपाठक्रमात् मन्त्र-पाठक्रमाद्वा तयोरनुष्ठानक्रमः इति सन्देहे, विधिवाक्यरूपब्राह्मणपाठक्रमस्य पदार्थोत्पत्तिकाल एव अवधारणात्, उत्पन्नेषु पदार्थेषु, विनियुक्ते च मन्त्रे, पश्चादापततो मन्त्रपाठक्रमस्य, ततो दुर्बलत्वात्, ब्राह्मणपाठक्रमादेवानुष्ठानक्रमः, इति प्राप्ते, पदार्थस्मृतिक्रमेणैवानुष्ठानं मन्त्राणामेव च अनुष्ठानकाले पदार्थस्मृतिजनकत्वात् तत्क्रमादेवानुष्ठानम्, न तु विधिपाठक्रमात्, 'विधीनां विधानेनैव चरितार्थतया स्मारकत्वाभावात् । तदभावे विधिरपि स्मारक' इति मन्त्रक्रमाभावे एव ब्राह्मणक्रमस्य प्रामाण्यं, न तद्विरोधेऽपि इति ॥

पाठक्रमस्य मुख्यक्रमात् प्राबल्यं 'प्रकृतौ स्वशब्दत्वाद्यथाक्रमं प्रतीयेत'' इत्यधिकरणे (५-१-८) दर्शितम् । पौर्णमास्यामुपांशुयाजानन्तरं अग्नीषोमीयः पुरोडाशः । तत्र मुख्यक्रमादुपांशुयाजाज्य-निर्वापप्राथम्यप्राप्तौ, अग्नीषोमीयद्रव्यौषधनिर्वापस्य ततः पूर्वं पठितत्वात् पाठक्रमादौषधनिर्वापस्यैव, प्राथम्यम् । मुख्यक्रमो हि मुख्ययोः क्रमं प्रथमं केनापि प्रमाणेनावगम्य, तत्साहित्त्यसम्पत्तये अङ्गेषु कल्प्यमानः विलम्बते । पाठतस्त्वन्यानपेक्षतया अङ्गानामेव क्रमोऽवधार्यते इति तस्य मुख्यक्रमात् बलीयस्त्वादिति ॥ मुख्यक्रमात् प्रवृत्तिक्रमस्य दौर्बल्यं ''अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात्'' (५-४-२) इत्यधिकरणे दर्शितम् । दर्शपूर्णमासयोः सान्नाय्यधर्माः शाखाहरणादयः पूर्वं प्रवर्तन्ते, पश्चादाग्नेयधर्माः । प्रदानं त्वाग्नेयस्य प्रथमं, पश्चात्सान्नाय्यस्य, तत्र स्विष्टकृदवदानं प्रयाज-शेषाभिघारणं, वेद्यामासादनं च किं प्रवृत्तिक्रमात् सान्नय्यस्य प्रथमं भवतु, उत, मुख्यक्रयादाग्नेयस्य इति संशये, तयोर्बलाबलाज्ञानादनियमे प्राप्ते, मुख्यक्रमादाग्नेयस्यैव प्रथमं स्विष्टकृदवदानादिकं युक्तं, मुख्यक्रमे आश्रीयमाणे प्रथमः एकः पदार्थः प्रधानाद्विप्रकृष्यते । अन्ये सर्वे सन्निकृष्टा भवन्ति, प्रवृत्तिक्रमे पुनराश्रीयमाणे बहवो विप्रकृष्यन्ते इति प्रवृत्तिक्रमस्य दौर्बल्यादिति ॥

स्थानान्मुख्यक्रमस्य दौर्बल्यं ''तद्वचनात्तु विकृतौ यथा प्रधानं स्यात्'' इत्यधिकरणे (५-१-१०) दर्शितम् ॥ अस्त्यध्वरकल्पा नामेष्टिः, ''आग्नावैष्णवमेकादशकपालं निर्वपेत् अभिचरन्, सरस्वत्याज्य-

भागा स्यात् बार्हस्पत्यश्चरुः इति। तत्राज्यबार्हस्पत्ययोः आज्यधर्माः प्रथमं कर्तव्याः, मुख्यक्रमादिति प्राप्ते यथा प्रकृतिधर्माः प्रथमं कर्तव्याः, चोदकप्राप्तस्वस्थानाबाधनाय। न च विकृतावौपदेशिकत्वेन, मुख्यक्रमस्य प्राबल्यं प्राप्तानां हि प्राकृतवैकृतानां पदार्थाना, विकृतौ मुख्यक्रमकल्पनम्। प्राकृतपदार्थाश्च प्राप्य-माणाश्चोदकेन प्रकृतिक्लृप्तक्रमेण सहैव प्राप्यन्ते इति नैराकाङ्क्ष्यान्न तेषां मुख्यक्रमेण क्रमान्तरकल्पना-वसरः इति॥

श्रुतिविरोधे स्थानस्य दौर्बल्यं "अङ्गानां मुख्यकालत्वात् यथोक्तमुत्कर्षे स्यात्" इत्यधिकरणे (५-१-२३)। दर्शपूर्णमासविकृतावग्नीषोमीये पशौ, प्रयाजानां यथाप्रकृति हविरासादनानन्तर्यप्राप्तौ "तिष्ठन्तं पशुं प्रयजति" इति, तेषां पश्वालम्भनात्पूर्वमपकर्षविधानात्, तेन तेषां चोदकप्राप्तस्वस्थान-बाधोपगमेन दर्शितम्॥

अर्थात्स्थानस्य दौर्बल्यं, "अर्थेन च विपर्यासे तादर्थ्यात्तत्वमेव स्यात्" इत्यधिकरणे (१०-५-३३) "सोमाय पितृमते पुरोडाशमष्टकपालं निर्वपति, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्" इति महापितृयज्ञेष्टौ विहिते मन्थे, प्राप्तस्य पेषणस्य प्रयोजनवशेन चोदकप्राप्तश्रपणपूर्वकाललक्षणस्वस्थानबाधेन श्रपणोत्तरत्वोपगमात् दर्शितम्॥

पाठविरोधात् स्थानस्य दौर्बल्यं "प्राकृताच्च पुरस्ताद्यत्" इत्यधिकरणे (५-२-१०) वर्णितम्। अग्निचयने सावित्रहोमोखासम्भरणादीन् कांश्चिदपूर्वपदार्थान्विधाय दीक्षणीयादयः सगुणाः आम्नाताः। तत्र दीक्षणीयादीन् कृत्वा सावित्रादयः कर्तव्याः, विपरीतं वेति चिन्तायां, प्राकृतानां प्रथमतः प्राप्तेः, यथाप्रकृति दीक्षणीयादयः प्रथमं कर्तव्याः सावित्रादीनां तु आगन्तुकानां 'अन्ते तु बादरायणेः' (५-२-१९) इति न्यायेनान्ते निवेशः इति प्राप्ते, दीक्षणीयादीनां सावित्रादनन्तरमाम्नानेन प्रत्यक्ष-पाठक्रमात् प्राकृतस्थानबाधेन सावित्राद्यनन्तरमेव ते कर्तव्याः॥

न च प्रत्यक्षपाठः गुणार्थः, न सावित्राद्यानन्तर्यार्थः इति शङ्क्यम्, यतो गुणार्थेनापि तत्राम्नानेन दीक्षणीयादीनां तत्रैव सगुणानामवगतिर्जायते। सा च प्रत्यक्षपाठनिमित्तत्वात् प्रकृतितोऽप्राप्तान् गुणान् तत्रैवानुष्ठापयति। गुणगुणिनोः समानस्थानत्वात् गुणिनोऽपि तत्रैवानुष्ठापयतीति। एवमन्यत्रापि श्रुत्यादीनां विरोधे बलाबलविषयाण्यधिकरणान्यूहनीयानि॥

एवमेभिरुदाहरणैः श्रुत्यर्थादीनां, श्रुतिलिङ्गादीनामिव पारदौर्बल्यमभिधीयते। तथाहि श्रुत्यर्थविरोधे तावदर्थदौर्बल्यं प्रथमाधिकरण एव कटाक्षितम्। सत्रे सर्वेषां यजमानत्वेन प्राप्तायां दीक्षायां, चोदक-प्राप्तस्याध्वर्योः कर्तृत्वस्य अध्वर्युदीक्षायां 'चित्पतिस्त्वा पुनातु' इति मन्त्रलिङ्गविरोधेन त्यागेऽपि

इतरेषां दीक्षायां त्यागायोगात्, इतरदीक्षालक्षणप्रयोजनवशेनाध्वर्युदीक्षायाः, सर्वानन्तर्ये प्राप्तेऽपि 'ततस्तं प्रतिप्रस्थाता दीक्षयित्वार्थिनो दीक्षयति' इति श्रौतक्रमवशेनार्थिभ्यः प्राक् तद्दीक्षानिर्णयात् ॥

अर्थविरोधे पाठस्य दौर्बल्यं क्रमकोपाधिकरणे (५-४-१) पाठविरोधे स्थानस्य दौर्बल्यं 'प्राकृताच्च पुरस्ताद्यत्' इत्यधिकरणे (५-२-१०) स्थानविरोधे मुख्यक्रमस्य दौर्बल्यं 'तद्वचनात्तु विकृतौ' इत्यधिकरणे (५-२-२३) मुख्यक्रमविरोधे प्रवृत्तिक्रमदौर्बल्यं, 'अवदानाभिघारण' इत्याद्यधिकरणे (५-४-२) दर्शितमेव ॥ 'अनियमोऽन्यत्र' (५-१-३) यत्रोक्तरूपबलाबलशालिनां श्रुत्यर्थानामभावः, तत्र न कश्चित्क्रमनियमः। यथा दर्शपूर्णमासयोः 'वसन्तमृतूनां प्रीणामि' इत्यादीनां, 'एको मम, एका तस्य' इत्यादीनां च प्रयाजानुमन्त्रणमन्त्राणां, शाखाभेदेनाम्नानात्, समुच्चितानुष्ठाने, न कश्चित् क्रम-नियमः ॥ यच्छाखागतेन मन्त्रेण समिद्यागः प्रथममनुष्ठितः, तच्छाखागतेनैव तनूनपादप्यनुमन्त्रणीयः प्रवृत्तिक्रमादिति चेन्न, प्रवृत्तिक्रमो हि प्रत्यासत्त्यनुग्रहायापेक्ष्यते। न चात्रैकशाखागतानां अनुमन्त्रण-मन्त्राणां प्रत्यासत्तिरपेक्षिता, तेषामङ्गाङ्गिभावस्यैकप्रधानाङ्गत्वस्यान्यस्य वा कस्यचिन्मिथः प्रत्या-सत्तिनियामकस्याभावात्। तस्मादनियमः इति सङ्क्षेपः ॥

एवं द्वितीये उत्पत्तिविधिप्रमेयस्य, कर्मभेदस्य, तृतीये विनियोगविधिप्रमेयस्य शेषशेषिभावस्य, चतुर्थपञ्चमयोः प्रयोगविधिप्रमेययोः, प्रयुक्तिक्रमयोः च निरूपणानन्तरं, षष्ठे अधिकारविधिप्रमेयः फलसम्बन्धो निरूपितः। तत्र स्वर्गकामादिपदं विधिप्रयोजनभूत-पुरुषप्रवृत्त्यपेक्षित-फलविशेषान्वयपरं, न तु चन्दनादिरूपयागादिद्रव्यसमर्पणपरम्। तच्च फलं स्वर्गकाम इत्याद्युद्देश्यगतलिङ्गविशेषस्याविव-क्षितत्वात्, स्त्रीणामप्यविशिष्टम्। 'ऋद्धिकामाः सत्रमासीरन्' इत्यादावेकैकस्य कृत्स्नं फलं इत्यादिरूपेण अधिकारः सापवादः षष्ठे प्रपञ्चितः ॥ एवंरूपार्थप्रतिपादनार्थं प्रवृत्तस्य षष्ठाध्यायस्य प्रथमे पादे कर्माधिकारः कर्तुरन्धपंग्वादेर्नास्ति, स्त्रियां तु 'संपत्नी' इति मन्त्रवर्णादस्ति, स च पत्या सहेति, एवमादिना अधिकारी निरूपितः।

द्वितीये सत्राधिकारिणां प्रत्येकं कृत्स्नं फलं, दर्शपूर्णमासयोः एककर्तृत्वनियमः, काम्यं कर्म समापनीयमित्येवमादयः, अधिकारिधर्माः कथिताः। तृतीये द्रव्यस्य प्रतिनिधिरस्ति, न देवताग्न्यादीनां, अधिकारिणश्च स प्रतिनिधिः नास्ति, इत्यादि निरूपितम्। चतुर्थे पादे पदार्थलोपनं विचारितम्। कृत्स्ननाशे सति आज्येन यजेत, इडाद्यर्थस्य नाशे शेषान्न ग्राह्यमित्येवमादिकं च ॥

पञ्चमे ज्योतिष्टोमस्यैका दीक्षा, द्वादशाहस्य द्वादश दीक्षाः, इत्यादि निरूपितम् ॥ षष्ठे सत्राधि-कारिणस्तुल्यकल्पा एव सत्रं प्रविशेयुरित्येवमादिकं विचारितम् ॥ सप्तमे पित्रादि न देयमिति देयविचारः

कृतः । अष्टमे लौकिकाग्नौ उपनयनहोमाः, स्थपतीष्टिस्तथा इत्येवमादिरग्निविचारः कृतः ॥ एवं विधिचतुष्टयप्रमेयात्मकोपदेशविचारः पूर्वषट्केन भगवता परमकारुणिकेन जैमिनिना महर्षिणा कृत इत्यलम् ॥

*इति पूर्वषट्के उपदेशविचारः समाप्तः ॥*

★ ★ ★

## अथ अतिदेशविचारः

एवं विधिचतुष्टयप्रमेयात्मकोपदेशविचारे पूर्वषट्केन कृते ततःपरमध्यायचतुष्टयेनातिदेशविचारः कृतः । इत्थं कर्तव्यमित्युपदेशः तद्वत्कर्तव्यमित्यतिदेशः, सप्तमाष्टमयोः वचननामधेयचोदकैरतिदेशो निरूपितः ।

इषुनामके क्रतौ कांश्चिद्वैशेषिकान् धर्मान् विधायाम्नातेन 'समानमितरत् श्येनेने'ति प्रत्यक्षवचनेन श्येनवैशेषिकाङ्गानां इषावतिदेशः । 'मासमग्निहोत्रं जुहोती'त्यादौ नित्याग्निहोत्रे अग्निहोत्रदेवतासद्भावात् क्लृप्तशक्तिकेन [1]तत्सादृश्यविधया कुण्डपायिनामयने कर्मणि प्रयुक्तेनाग्निहोत्रनामधेयेन तस्मिन्नित्याग्निहोत्रधर्माणामतिदेशश्च सापवादः सप्तमे पादत्रयेण निरूपितः । चतुर्थपादेन 'सौर्यं चरुं निर्वपेत्' इत्यादिष्वनुपदिष्टधर्मेषु प्रत्यक्षवचनस्य नाम्नश्चानिदेशिकस्याभावेऽपि कुतश्चेद्वैदिकात्कर्मणो धर्मप्रापकं वचनमस्तीत्यानुमानिकवचनरूपेण चोदकेनातिदेशः सामान्येन निरूपितः ।

तत्राप्यवान्तरविशेषः सप्तमाध्यायस्य प्रथमे पादे 'समानमितरच्छ्येनेने'त्यादि प्रत्यक्षवचनातिदेशः । द्वितीये पादे रथन्तरशब्देन साममात्राभिधानात् गानस्यैवातिदेशः इत्येतादृशपूर्वोक्तातिदेशस्य विशेषो विचारितः । तृतीयेऽग्निहोत्रादिनाम्नातिदेशः, चतुर्थे निर्वापौषधिद्रव्यादिलिङ्गातिदेश इति । एवं सामान्यातिदेशानन्तरं अष्टमेऽपि[2] कस्य कुतो धर्मप्राप्तिरित्याकाङ्क्षायां शब्दार्थगतसादृश्यविशेषलिङ्गादिष्टीनां दर्शपूर्णमासतो धर्मप्राप्तिः अग्निषोमीयपशुतः पशूनां सवनीयादैकादशिनां, ज्योतिष्टोमात्सोमानां, द्वादशाहादहर्गणानां गवामयनात् संवत्सरसत्राणामित्येवं रूपेण [3]विशेषचोदकातिदेशः सापवादः प्रपञ्चितः । एवं प्रवृत्तस्याष्टमाध्यायस्य प्रथमे पादे स्पष्टे लिङ्गेनातिदेशो निरूपितः । स यथा सौर्यचरौ तद्धितेन देवतानिर्देशः । [4]एकदेवतत्वमित्यादीनि स्पष्टाग्नेयलिङ्गानि । द्वितीये त्वस्पष्टलिङ्गैरतिदेशः । स यथा वाजिने हविःसामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते । तत्र लिङ्गमस्पष्टं विशिष्य तद्विध्यनापादानात् । तृतीये प्रबललिङ्गेनातिदेशः । आभिचारिके कर्मणि आग्नावैष्णवसारस्वतबार्ह-

---

१. तत्सादृश्यविधित्सया – क.ख.घ.पा.
२. अष्टमे तु – क.ख.घ.पा.
३. विशिष्य चोदकातिदेशः – क.ख.घ.पा.
४. एकदैवतं क.ख.पा.

स्यन्येषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते प्रथमे आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिप्रबलश्च सः । द्विदैवत्यशब्दोच्चारणमात्रेण प्रतिभासनात् । क्रमस्तु विलम्बितप्रतीत्या दुर्बलः । चतुर्थे दर्विहोमेष्वतिदेशोऽपोद्यत इति ।

अथ सप्तमाष्टमयोः यत्र यत्र विशेषः तत्र तत्र शङ्कापुरःसरं लेशतः प्रदर्शयामः । ननु यत्र श्रुतिलिङ्गादिभिर्नाङ्गसमर्पणं यथा सौर्यादिषु, तत्र कथं कथंभावाकाङ्क्षापूरणं इति चेत् इत्थम् । सौर्यादावङ्गोपदेशाभावेऽपि अतिदेशादेवापेक्षितेतिकर्तव्यतालाभः । तथाहि— इदमित्थं कर्तव्यमित्युपदेशः, तद्वदिदं कर्तव्यमित्यतिदेशः । स च शब्दप्रमाणभेदः । तदाश्रितं चोत्तरषट्कम् । अतिदेशश्च वचननामधेयचोदनालिङ्गनिमित्तभेदेन त्रिविधः । तत्र 'समानमितरच्छ्येनेने'ति वाचनिकातिदेशः । कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'ति सत्रान्तर्गताग्निहोत्रे नामधेयातिदेशः । भेदो हि तस्य नित्याग्निहोत्रात् प्रकरणान्तरात् सिद्धिः । उभयत्र च शक्तौ गौरवादेकत्र मुख्योऽपरत्र गौणोऽग्निहोत्रशब्दः । नित्ये चाग्निहोत्रे द्रव्यदेवतादिसर्वकर्मस्वरूपाम्नानाच्छक्यस्य परिच्छेतुं शक्यत्वात् तत्र मुख्यः । सत्रान्तर्गते तु तद्गुणयोगात् प्रवर्तमानोऽपेक्षावशात्तद्धर्मातिदेशे प्रमाणम् । न च वैपरीत्यं, तत्र धर्मानुपदेशादिति ।

द्वादशाहे 'अतिरात्रं प्रायणीयमहरि'ति विहितम् । गवामयने 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहरि'ति विहितम् । अत्र प्रायणीयशब्दस्य प्राथम्यवाचित्वादुभयत्र मुख्यतया न द्वादशाहिकधर्मातिदेशकतेत्यपवादः । 'सौर्यं चरुं निर्वपेदि'त्यादिविषयविहितेतिकर्तव्यताकेषु तदपेक्षायामुपकारजनकत्वेन क्लृप्तानामेव लाघवात् कल्पने प्राप्ते स्मार्तानामौपसनाग्न्याधारत्वेन अग्नित्रयीसाध्यप्रधानात् भिन्नदेशत्वापत्तेः, त्रयीसाध्यत्वेन वैदिकत्वेन च सादृश्यादुपस्थितानां वैदिकानामेवातिदेशः तद्वदित्यनुमितेन वचनेन । स च नामधेयाद्दुर्बलः, अनुमेयत्वात् । गवामयने हि ज्योतिर्गौरायुरिति यागा विहिताः । सन्ति च अथैष ज्योतिः अथैष गौरिति प्रसिद्धा एकाहाः । गवामयने चाहर्गणत्वात् द्वादशाहधर्माः । तत्राविरोधे समावेश एव । विरोधे तु नामधेयप्राबल्यम् । वैदिकानामपि कस्येत्यपेक्षायां किञ्चिच्छब्दगतमर्थगतं वा लिङ्गं दृष्ट्वा तत्सामर्थ्येन बुद्धिस्थस्य धर्माः कल्पनीयाः । तत्र 'सौर्यं चरुं निर्वपेदि'ति निर्वपतिशब्दमेकदेवतात्वं औषधद्रव्यत्वं च दृष्ट्वा तत्राग्नेयधर्माः, एवमेकदेवते आग्नेयस्य, द्विदेवते अग्नीषोमीयस्याज्यहविष्के उपांशुयाजस्य, पयोदध्यामिक्षाद्रव्यकेषु दैक्षपशौ चैन्द्रस्य, सवनीये च दैक्षपशोः सवनीयस्यैकादशनीयेषु पशुगणेषु च तथा अव्यक्तचोदितेषु द्वादशाहे एकाहेषु च सोमस्य, द्वादशाहस्याहर्गणेष्वहीनेषु गवामयने च, तस्य च सत्रेषु आग्नेयपशौ ऐन्द्रे पुरोडाशे च देवतासाम्यात् द्रव्यसाम्यस्य बलीयस्त्वात् अग्नीषोमीयपशोराग्नेयपुरोडाशस्य च धर्माः, न त्वाग्नेयपुरोडाशसान्नाय्ययोः । द्रव्यं हि कर्मणि साक्षात्सम्बद्धं बहुधर्मकं च । न तु देवतेति दिक् ॥

## अथ ऊहविचारः

अतिदिष्टानां मन्त्रसामसंस्काराणां प्राकृतपदार्थकार्यापन्नवैकृतपदार्थान्तरसम्बन्धेन अन्यथाभावस्वरूप ऊहो नवमे चिन्तितः। प्राकृतपदार्थकार्यापत्तिः प्रत्यक्षेण (१), अनुमानेन (२), प्रत्यक्षवचनेन (३), प्रत्यक्षवचनावगतनिवृत्त्यनुमितशब्देन (४), प्रत्यक्षवचनावगतलिङ्गोन्नीतनिवृत्त्यानुमितशब्देन (५) वाऽवसीयते। नैवारश्चरुरित्यत्र प्राकृतव्रीहिकार्यहविर्निष्पादकत्वं प्रत्यक्षेणावसीयते न तु नैवार इति तद्धितेन। तस्येदमिति सम्बन्धसामान्ये अणप्रत्ययविधानात्। तस्य प्रकृतिविकारभावरूपसम्बन्धविशेषपर्यवसायित्वकल्पनायाः प्रत्यक्षाधीनत्वात्। 'नैर्ऋतं चरुं (परिवृत्त्यै) गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नानामि'त्यत्र श्रुतस्य नखस्य प्राकृतोलूखलमुसलकार्यापत्तिर्न प्रत्यक्षेणावसीयते। उलूखलमुसलाभ्यां व्रीहीणामवहननं निष्पद्यते, नखेन तेषां निर्भेदनमिति प्रत्यक्षेण कार्यभेदस्यैव दर्शनात्। किन्तु अवहननेनेव निर्भेदनेनापि तुषविमोकात् तण्डुलनिष्पत्तिदर्शनेन प्रकृतावबघातस्योलूखलमुसलकार्यतायां यद्रूपं विवक्षितं तण्डुलनिष्पत्तिद्वारेणापूर्वोपयोगि क्रियात्वं तन्निर्भेदनेऽपि समानमिति तेन रूपेणावहनननिर्भेदनयोरैक्यस्योन्नेयत्वात् तत्कार्यापत्तिरनुमानेनावसीयते।

'परिधौ पशुं नियुञ्जीते'त्यत्र प्राकृतयूपकार्ये पशुनियोजने परिधेः विनियोगः प्रत्यक्षवचनेनावसीयते। 'न गिरा गिरेति ब्रूयात् ऐरं कृत्वोद्गेयमि'त्यत्र गिरा गिरोक्ति प्रतिषेधावगतया गिरापदनिवृत्त्या तत्कार्यसाधनापेक्षत्वावगमात् तत्कार्यवाचिपदमनुमाय गिरापदकार्यार्थिमैरं कृत्वोद्गेयमित्येवं रूपेण श्रुतानुमितैकदेशनिष्पादितेन वाक्येन गिरापदकार्यापत्तिरिरापदस्यावसीयते। 'यस्योभयं हविरार्तिमार्च्छत्त्यैन्द्रं पञ्चशरावमोदनं निर्वपेदि'त्यत्र पञ्चशरावद्रव्यस्य यागस्य दर्शकार्यापत्तौ दर्शकार्यनिवृत्तिर्न [1]साक्षादवसीयते। किन्तु द्रव्यविनाशादवगम्यते। तन्निवृत्तौ तत्कार्यस्य साधनापेक्षया तद्वाचिपदमनुमाय दर्शकार्यार्थिमैन्द्रं पञ्चशरावमोदनं निर्वपेदिति श्रुतानुमितैकदेशनिष्पाद्येन वाक्येन पञ्चशरावयागस्य दर्शकार्यापत्तिरवसीयते। 'स प्रत्यात्मनेत् स्थानादि'ति (६-४-१०) षष्ठाध्यायाधिकरणपूर्वपक्षरीत्यैवमुदाहरणम्। सिद्धान्ते तु द्रव्यापचारे द्रव्यान्तरानयनेन दर्शनिष्पत्तेर्न तन्निवृत्त्युन्नयनमस्तीत्युदाहरणान्तरमन्वेषणीयम्। एवं कार्यापत्त्या व्रीहिधर्माणां अवघातादीनां, नीवारेषूलूखलमुसलधर्माणां प्रोक्षणादीनां, यूपधर्माणां परिव्याणादीनां परिधौ चोहः संस्कारोहः। गिरापदगतगीतिक्रियायाः इरापदे ऊहः सामोहः। दर्शधर्माणां तु सिद्धान्ते नास्त्यूहः।

पञ्चशरावयागे मन्त्रोहस्त्वष्टविधः। क्वचित्प्रकृतिमात्रमूह्यते। यथा 'अग्नये जुष्टं निर्वपामि' इत्यत्र अग्निपदस्थाने सौर्यचरौ सूर्यायेति। क्वचिल्लिङ्गमात्रमूह्यते। यथा 'वस्व्यसि रुद्रासी'त्येकहायनीमन्त्रे विकृतिविशेषविहितं सोमक्रयणं वत्सं प्राप्ते वसुरसि रुद्रोऽसि इति। क्वचिद्वचनमात्रमूह्यते। यथा

१. प्रत्ययवचनात् – क.घ.पा.

'छागस्य वपाया मेदस' इति मन्त्रे प्राजापत्यपशून् प्राप्ते च्छागानां वपानां मेदसामिति । क्वचित्प्रकृतिलिङ्गं चोह्यते । यथाग्नये जुष्टमित्यादित्यचरुं प्राप्ते मन्त्रे अदित्यै जुष्टमिति । क्वचित्प्रकृतिवचनं चोह्यते। यथा तस्मिन्नेव मन्त्रे वैश्वदेवचरुं प्राप्ते विश्वेभ्यो देवेभ्य इति । क्वचिद्वचनलिङ्गं चोह्यते । यथा 'प्रास्मा अग्निं भरते'ति मन्त्रे मल्हा आलभेतेति विहितान् पशून् प्राप्ते प्रादावतीतो विचार इति प्रमेयभेदो द्रष्टव्यः। इह स्वयमङ्गानामपूर्वप्रयुक्तत्वादृते न सिद्ध्यतीत्यङ्गानामपूर्वप्रयुक्तत्वं स्वरूपप्रयुक्तत्वं चेति विचिन्त्य प्रागभ्योऽग्निमिति । क्वचित्तु त्रीण्यप्यूह्यन्ते । यथा 'आपो देवीरि'ति मन्त्रे आज्यं प्रोक्षणमिति सोमारौद्रचरौ विहितं व्रतं प्रति व्रतदेवेति । क्वचित्सकलस्याभ्यासरूप ऊहः । यथा 'एकधास्यत्वचमाच्छतात्' इति मन्त्रे पशुगणं प्राप्ते एकधा एकधेवेत्येव ऊहः सापवादो नवमे प्रपञ्चितः ।

एवमूहनिरूपणार्थं प्रवृत्तस्य नवमाध्यायस्य प्रथमे पादे उपोद्घातपूर्वकमूहविचार आरब्धः । तत्र प्रयाजादयो धर्माः अपूर्वप्रयुक्ताः अवघातादिषु अविवक्षितं व्रीह्यादिस्वरूपसाधने विशेषमात्रं विवक्षितमित्यादिरूप उपोद्घातः । सवित्रश्विपूषं शब्दानां विकृतिषु नास्त्यूहः । अग्निशब्दस्यास्त्यूह इत्यादिक ऊह विचारः, द्वितीये सपरिकरसामोहः, तृतीये मन्त्रोहः, चतुर्थे मन्त्रोहप्रसङ्गादापतितो विचार इति प्रमेयभेदो द्रष्टव्यः ।

ऊहस्त्वङ्गानामपूर्वप्रयुक्तत्वादृते न सिद्ध्यति इति । अङ्गानां किमपूर्वप्रयुक्तत्वं स्वरूपप्रयुक्तत्वं वेति चिन्त्यते। अवघातादिष्वविवक्षितं व्रीह्यादिस्वरूपं, साधनविशेषमात्रं विवक्षितम्; इत्यादिरूप उपोद्घातः। सवित्रश्विपूषशब्दानां विकृतिषु नास्त्यूहः, अग्निशब्दस्यास्त्यूहः इत्यादिकः ऊहविचारः । द्वितीये सपरिकरसामोहः । तृतीये मन्त्रोहः । चतुर्थे मन्त्रोहप्रसङ्गः । स्वरूपप्रयुक्तत्वे हि विकृतौ व्रीह्यादिस्वरूपरूपद्वाराङ्गं, तेनातिदेशसिद्ध्या ऊहोऽपि नेति प्रसङ्गात् । तेषामपूर्वप्रयुक्तत्वं चापूर्वसाधनताधीनिमित्तकृतिगोचरत्वमिति तच्चित्यन्ते । "प्रोक्षिताभ्यामुलूखलमुसलाभ्यां अवहन्ति प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि" इति दर्शपूर्णमासप्रकरणे श्रुतम् । तत्र किं हन्तिपिनष्टिप्रयुक्तं प्रोक्षणमुतापूर्वप्रयुक्तमिति सन्देहे, पूर्वपक्षः– प्रोक्षणमवघाताद्यङ्गत्वेन वाक्यत एव विधीयमानमवगम्यते । अवघातश्च स्वतोऽनुद्देश्योऽप्यपूर्वार्थयागार्थपुरोडाशार्थतया उद्देश्यत्वादेव विधिभावनाभाव्यत्वं भजते । एवं चोक्तप्रणाड्यैव विधिपर्यवसानात् नापूर्वार्थमपि प्रोक्षणम् । अङ्गाकाङ्क्षा शान्तौ प्रकरणाद्यनवकाशात् । यदि चावघातौ न स्वरूपतः उद्देश्य इत्येतावतैव लङ्घनीयः तदा अपूर्वमप्युल्लङ्घ्य स्वर्गं यावत्प्रोक्षणं नीयेत, आधानं चाग्निमुल्लङ्घ्य यावत्क्रत्वपूर्वं, साधनं साधनत्वमात्रेण चाङ्गत्वे स्वर्गार्थत्वमपि स्यात् । आधानस्य च क्रत्वङ्गत्वम् । एवं च यथाप्रकरणाधीतस्यापि यूपाङ्गतक्षणादेर्नापूर्वाङ्गतेति 'खलेवाली यूपो भवती'ति यूपकार्याय[1] विहितया खलेवाल्या यूपे बाधिते यूपाङ्गं न विकृतिं गच्छति । प्रयाजाङ्गं वा 'न प्रयाजा

[1]. तीति उपकाराय इति – क.घ.पा.

इज्यन्ते नानुयाजा' इत्यनेन प्रयाजबाधे तथा 'नैवारश्चरुर्नखावपूतानामि'ति नखावपनेनावघातबाधे प्रोक्षणं नातिदिश्येत इति नखेषु तस्योहो न स्यादिति।

सिद्धान्तस्तु— प्रोक्षणमवघातरूपेष्टसाधनमिति तत्र विध्यर्थः। अवघातश्च येन रूपेणेष्टः न तादृशं प्रति प्रोक्षणं साधनत्वासाधनं विनापि प्रोक्षणं तत्सम्भवात्। प्रोक्षणविधिरवघाते विशेषं कल्पयतीति चेत्। सत्यम्, न तु तेन रूपेण तस्येष्टता। अवघातमात्रस्य इष्टावगमात्। न च रूपान्तरेणेष्टस्य तदन्यरूपेण साध्यता युक्ता। विधिविरोधात्। न च विधिरेवावघातविशेषत्वेनेष्टसाधनत्वमपि कल्पयतीति वाच्यम्। अन्योन्याश्रयात्। इष्टतावच्छेदकावच्छिन्नमनूद्य तादृशोद्देशेन विधिप्रवृत्तिः। प्रवृत्ते च विधौ तत एवेष्टसाधनतावच्छेदककल्पना। न हीष्टतावच्छेदकरूपानुपस्थितौ विधिभावनान्वयः क्षमते। न च स्वर्गत्ववदवघातत्वेन वोपस्थित्या प्रवृत्ते विधौ स्वर्गविशेषत्ववदवघातविशेषत्वस्यापि अवच्छेदकं कल्प्यत इति वाच्यम्। स्वर्गे हि साध्यतावच्छेदकत्वेन विशेषमात्रं कल्प्यम्, इष्टतावच्छेदकं तु सुखत्वावान्तरजातित्वेन क्लृप्तमेव। इह त्ववघातविशेषत्वेनेष्टतापि कल्प्यैव। तथा च प्रयोजनतापि साध्यस्य शास्त्रगम्येत्याश्चर्यो मीमांसापरिपाकः। एवं विनियोगे विलम्बमानायां श्रुतौ, प्रथममवघातमुल्लङ्घ्यापूर्वसाधनतैव प्राकरणिकी प्रोक्षणस्याश्रियेत। तत्र च द्वारापेक्षायां दृष्टे सम्भवत्यदृष्टकल्पनायोगात्। द्वारापेक्षस्य च प्रकरणस्य श्रुत्याद्यविरोधे सम्भवति तद्बाधकत्वायोगादपूर्वसाधनत्वोपपत्तये श्रुतिसंयुक्तावघाते विशेषं परिकल्प्य तादृशस्य द्वारताऽऽश्रीयते। एवं चावघातस्यातन्त्रत्वात् येन वैतुष्यद्वारा अपूर्वं साध्यते तद्द्वारा प्रोक्षणमुत्पत्त्यपूर्वसाधनमवगम्यते। तथाच आवहन्तिपदं तदुपलक्षणार्थम्। एतेम 'व्रीहीनवहन्ति', 'व्रीहीन् प्रोक्षती'ति व्याख्यातम्। व्रीहिपदेन तत्साध्योत्पत्त्यपूर्वसाधनप्रदेय(प्रकृति)द्रव्यलक्षणात्। व्रीहीणामेव द्वारत्वे यवपेक्षे अपूर्वसाधनता बोध्येतेति लक्षणाया आवश्यकत्वात्। यूपाहवनीयप्रयाजापूर्वाणां तु उद्देश्यताप्रयोजकरूपेणैव साध्यत्वसम्भवान्नातिक्रमे हेतुरस्तीति न तक्षणविधीनां क्रत्वर्थता। अध्ययने तु प्रकरणाव्यभिचरितक्रतुसम्बन्धयोरभावान्नापूर्वोपस्थितिरस्ति। न च दृष्टानादरेण स्वर्गः कल्पयितुं शक्यते। ततो दृष्ट एवार्थज्ञाने विशेषं (विनियोगं) परिकल्प्य तस्य क्रतौ उपयोगः कल्पितः। स्वर्गं प्रति न प्रोक्षणस्याङ्गत्वं, अपूर्व एव विश्रान्तिसम्भवात्। एवं चावघातस्वरूपानादरेण प्रोक्षणस्य वैतुष्यजननद्वारा प्राकृतापूर्वसाधनत्वेनोपदेशावगतस्यातिदेशेन वैकृतापूर्वसाधनत्वमपि तद्वारैव बोधितमिति नखावपनेऽपि तत्साधनत्वावगतिसाम्यान्नखेषु तस्योहः। तदा *परमूहो न स्यात्। यद्यप्यपूर्वसाधनत्वेऽपि अवघातत्वं तद्वारतायामादृतं स्यात्। द्वारबाधे अतिदेशायोगात्। यदि चावघातत्वानादरेऽपि अपूर्वसाधनता न स्यात् अपूर्वसाधनस्यानतिदेशादिति।

* सिद्धान्तितम्। ननु प्रकृतौ मन्त्राणां मुख्यत्वादिरूपेण प्रयोगे सत्यपि विकृतावर्थान्तरयुक्तायामतिदेशेन प्राप्तानां

**एतेन त्रिरावृत्तिमन्त्रोहश्च व्याख्यातः**। तथाहि। दर्शपूर्णमासे 'पञ्चदशसामिधेनीरनुब्रूयादि'ति विधौ एकादश पठिताः। पुनश्च पठितं 'त्रिः प्रथमामन्वाह त्रिरुत्तमामि'ति। प्रथमा च 'प्रवोवाजा अभिद्यवः' इत्याद्या। उत्तमा च 'आजुहोताद्युवस्यते'त्याद्या। तत्र त्रित्वस्य प्राथम्योत्तमत्वप्रयुक्तत्वाद्विकृतौ ऋगन्तरे तस्योहः प्रथमामुत्तमामिति। प्राथम्योत्तमत्वाभ्यां उद्देशं निर्दिश्य त्रिरनुवचनाख्यसंस्कारविधानात् प्रवोवाजीयाजुहोतीयास्वरूपप्रयुक्तत्वे तु विकृतौ तत्स्वरूपाभावात् ऊहो न सिध्येत्। 'अग्नये जुष्टं निर्वपामी'त्याग्नेये प्रकृतावाम्नातो मन्त्रो विकृतौ सौर्ये सूर्याय जुष्टमित्येवमूह्येत। तस्य देवतात्मकापूर्वसाधनविशेषप्रकाशनार्थत्वेनाग्निपदेन तदसम्भवात्, अग्निस्वरूपप्रकाशनप्रयुक्तत्वे तु तस्य तत्रोहो न सिध्येदिति। एवंविधोहव्यवस्था च वार्तिके दर्शिता।

**मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः।**
**प्रयुक्ताः प्रकृतौ मन्त्राः गताः कार्यातिदेशतः॥**

**विकृतिष्वनिषिद्धोहाः कार्यापन्नेषु पञ्चधा।**
**अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति ते (नः, हि)॥ इति।**

अत्र (९-१-१५) हि 'इयं गौस्तया ते क्रीणामि तस्यै शृतं तस्यै दधी'त्यादौ सोमक्रयार्थैकहायनीप्रकाशनार्थे मन्त्रे क्षीरादिवाचिनां शृतादिशब्दानां विक्रेत्रानत्यर्थत्वात्, दृष्टार्थत्वेऽपि क्रयसाधनस्तुत्यर्थत्वाच्च, स्वार्थत्वेऽपि कालान्तरे एकहायन्या अपि क्षीरादिसम्भवात्, समवेतार्थत्वेऽपि एकहायन्यवस्थायामुच्यमानस्य क्षीरादिसम्भवस्य मुख्यत्वाभावादौपचारिकस्य क्षीरादिसम्भवस्य साण्डोत्पादयिष्यमाणधेनुद्वारेण साण्डेऽप्युपपत्तेः ऊहाभावान्मुख्येत्युक्तम्।

'पत्नीं सन्नह्ये'ति (९-३-६) यजमानपत्नीसन्नहनप्रैषार्थे मन्त्रे पत्नीमित्येकवचनस्य विद्यमानार्थत्वेन मुख्यार्थत्वेऽपि, सन्नहनीयपत्नीसङ्ख्याप्रकाशनाच्च स्वार्थत्वेऽ[1]प्येकत्वस्य चानेकपत्नीकप्रयोगेऽपि पत्नीत्वसामान्यसमवायात्समवेतार्थत्वेऽपि, प्रकृतापूर्वसाधनीभूतपत्नीव्यक्तिपरत्वात् सामान्यसङ्ख्याप्रकाशनस्यादृष्टार्थत्वेनोहाभावात् दृष्टार्थतेत्युक्तम्। इडोपह्वानमन्त्रे 'यज्ञपतिं वर्धानि'ति (९-१-१४) यज्ञपतिशब्दस्य यजमाने मुख्यत्वेऽपि, तत्प्रोत्साहनार्थत्वेन दृष्टार्थत्वसम्भवेऽपि, यजमानस्य च तद्वृद्धेर्मनुष्यरूपाध्वर्युपदवाच्यऋत्विक्कर्तृकायाः च कर्मणि समवायात् समवेतार्थत्वेऽपि इडास्तुत्यर्थवृद्धिविशेषणत्वात्स्वार्थत्वाभावेनोहाभावात् स्वार्थेत्युक्तम्। 'इन्द्रागच्छ हरिव आगच्छे'ति सुब्रह्मण्यामन्त्रे (९-१-१५) हरिवच्छब्दस्य हरिवत्तालक्षणगुणे मुख्यत्वेऽपि तस्य 'चेन्द्राय हरिवते धाना

---

१. वस्तुवृत्त्या पत्न्यामेकत्वसमवायात् समवेतार्थत्वेऽपि – घ.पा.

निर्वपेदि'ति सवनीयहविरादिषु देवतात्वान्तर्गतेः दृष्टार्थत्वेऽपि, यक्ष्यमाणेन्द्रप्रकाशनाच्च स्वार्थत्वेऽपि, वस्तुगत्या इन्द्रे हरिवत्त्वासमवायात् समवेतार्थत्वाभावेनोहाभावात्समवेतार्थतेत्युक्तम् । सत्स्वपि मुख्यत्वादिषु अर्थप्रकाशनवच्छब्दस्वरूपस्याप्यादरे सत्यर्थान्तरयुक्तायां विकृतावैन्द्रीवद्गुणत्वोपपत्तेरूहासम्भवाच्छब्दस्वरूपानादरसूचनायादिशब्दः ।

नवमे हि तृतीयपादाद्याधिकरणे 'अग्नये जुष्टं निर्वपामि', 'व्रीहीणां मेधः सुमनस्यमान' इति व्रीह्यग्निशब्दौ द्रव्यदेवतान्तरयुक्तायां विकृतावूह्यावनूह्यौ वेति निर्णयार्थं किमर्थप्रकाशनं(वत्) च स्वरूपमपि विवक्षितं न वेति सन्दिह्य शब्दस्वरूपानादरे समाम्नानानर्थक्यापत्तेरौत्पत्तिकं समाम्नायावगतशब्दस्वरूपमनतिक्रम्यार्थानां वचनमभिधानं प्रकृताविति कृत्वा, उत्तरस्यामपि ततो विकृतिविस्तरे तथाभूतमविकृतमेव शब्दस्वरूपं प्रयोक्तव्यम् । प्रकृतिदृष्टस्यैव शब्दस्य प्रकृतिवच्छब्देन विनियुक्तत्वादिति "प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वात्" (९-३-१) इति सूत्रावयवेन पूर्वपक्षयित्वा, कर्मसमवेतार्थप्रकाशनोद्देशेन विहितानां मन्त्राणां प्रधानवशवृत्तित्वेनाङ्गस्यार्थप्रकाशननिरपेक्षस्वरूपानादरायोगात् । वैकृते सूर्यनीवारादियुक्ते व्रीह्यादिशब्दानां प्रकाशनाख्यकार्याभावात् तत्समर्थशब्दोपादानेन विकृतौ मन्त्रोच्चारणं युक्तमिति 'अर्थे चाकार्यत्वात्' इति सूत्रावयवेन तदीयद्रव्यदेवतादिप्रकाशनसामर्थ्येन प्राकृतकार्यार्थत्वायोगादातिदेशिकवचनवशात् कार्यकल्पनैवोचिता । नोहेन प्राकृतकार्यकल्पनेत्याशङ्क्य 'विकृतिषु कार्यातिदेशतो गता' इत्युक्तम् । प्राकृतकार्यनैरपेक्ष्येण पदार्थातिदेशे शास्त्रातिदेशे च कार्यान्तरकल्पना युज्येत । वैकृतभावनाकाङ्क्षावशात् करणोपकारलक्षणकार्यद्वारस्यैवातिदेशस्य दशमाद्ये प्रतिपादित्वान्न कार्यान्तरकल्पना युक्ता । कार्यद्वारातिदेशेऽपि कार्यान्तरार्थे व्रीह्यादौ 'व्रीहीणां मेधे'त्यादिमन्त्रप्रयोगस्यैव अभावात्, प्राकृतकार्यार्थेऽप्यर्थान्तरत्वाभावेन अविकृतस्यैव प्रयोगोपपत्तेः ऊहाभावात् प्राकृतकार्यमापन्नेषु अर्थान्तरेष्वित्युक्तम् । ननु व्रीहिकार्यापत्तिष्वपि नीवारादिषु व्रीह्यादिप्रकाशनार्थानां मन्त्राणां व्रीह्यादिस्वरूपस्याभावेन नोहः स्यादित्याशङ्क्य अपूर्वार्थद्वारेणेत्युक्तम् । स्वरूपप्रयुक्तत्वनिराकरणेनाङ्गानामपूर्वप्रयुक्तत्वाङ्गीकरणात् (९-१-१) 'पूयति वा एतदृचो अक्षरं यदेनमूहति तस्मादृचं नोहेदि'त्यादौ मन्त्रविशेषे ऊहनिषेधादनिषिद्धोह इत्युक्तम् । विकृतिष्वित्यनेन प्रकृतिषु नोह इति दर्शितम् । तेन 'प्रतितिष्ठ व्रीहीणां मेधे'ति पुरोडाशस्थापने मन्त्रस्य नोहः । तस्मान्मुख्यार्थत्वादिप्रयुक्तेष्वेव मन्त्रेषूहो नान्यत्रेति दर्शितम् ।

ननु कथं तर्हि 'धान्यमसि धिनुहि देवानि'ति मन्त्रे प्रकृतौ तण्डुलेषु लाक्षणिकं धान्यपदं विकृतौ मांसपुरोडाशे निवर्त्य मांसमसीत्यूह्येत, तथा दैक्षपशौ 'अदितिः पाशान् प्रमुमोक्त्वेतानदितिः पाशं प्रमुमोक्त्वेतमि'ति पाशोन्मोचनमन्त्रौ पठितौ । दैक्षे च एकः पाशः तत्र बहुवचनान्तपाशमन्त्रस्योत्कर्षे

प्राप्ते, सिद्धान्तितम्— एकत्वस्यावच्छेदकतया पाशं प्रत्युपसर्जनत्वात् प्रधानभूते पाशे पाशप्रातिपदिकस्य लिङ्गेन विनियोगे सति 'गुणे त्वन्याय्यकल्पने'ति (९-३-१५) बहुवचनस्य लाक्षणिकतेति द्विपशुकयागे विकृतौ पशुद्वये वैकल्पिकप्राप्तमन्त्रद्वयं 'अदितिः पाशौ प्रमुमोक्त्वेतावि'त्यूहितव्यमित्यपि सिद्धान्तितं विरुध्येतेति। उच्यते— यस्य यत्प्रकारकोपस्थित्युपयोगिनी लक्षणा क्लृप्ता तस्यार्थलोपेन निवृत्तौ तत्पदस्य लाक्षणिकस्याप्यूहः। अन्यथा प्राकृतलक्षणातिरिक्ताप्राकृतलक्षणान्ताश्रयणे गौरवात्। तण्डुलानावपति इति विधानात्तण्डुलत्वेन रूपेण तत्प्रतीतिरुद्देश्येति धान्यपदे धान्याधीनतण्डुले लक्षणा प्रकृतौ क्लृप्ता। मांसे त्वर्थलोपेन निवृत्तेति मांसत्वेन रूपेण तत्प्रतीतये वाचकं मांसपदमेवोह्यते।

एवमेकत्वलक्षणा पाशद्वये अर्थलोपेन लुप्तेति बहुवचने निवृत्ते वाचकं द्विवचनमूह्यते। प्राकृत्याः तु लक्षणाया विकृतावलोपे अनूहः। यथैकपशुकायां विकृतौ बहुवचनस्येति।

कथं प्राकृतकार्यापत्तिरित्यपेक्षायां कार्यापत्तेषु पञ्चधेत्युक्तम्। तथाहि— 'बार्हस्पत्यश्चरुरि'ति देवतायोगेन चरोः पुरोडाशकार्यापत्तौ 'नैवारश्चरुरि'ति तद्धितश्रुतिः विकाराद्यनेकार्थापि चरुनीवारयोः प्रकृतिविकारभावान्नीवाराणां प्रयोजनान्तराभावाच्च सामर्थ्येन विकारार्था निर्णीयत इति प्रदेयप्रकृतिव्रीहिकार्यापत्तिर्नीवाराणामवगम्यते।

'नैऋतश्चरुर्नखावपूतानामि'त्यत्र चरुप्रकृतेर्नखैः शोधनसामान्यमुच्यमानं वैतुष्याख्यमेव पर्यवस्यतीति तस्यावघातकार्यापत्तिः। तत्साधनानां च नखानामुलूखलमुसलकार्यापत्तिः। सामान्यशब्दस्य विशेषपरत्वं निर्णीयत इति नखेषु प्रोक्षणाद्यूहः। 'परिधौ पशुं नियुञ्जीते'त्यत्र तु कार्यान्तरोपयोगिनोऽपि परिधेर्वचनेनैव पशुबन्धनरूपयूपकार्यार्थत्वमवगम्यते इति यूपस्वरूपोपयोगितद्धर्माप्राप्तावपि प्रकृतकार्योपयोगिनां परिव्याणादीनां ऊहः। 'संस्थिते षडहे मध्वाशयेदि'त्यत्र षडहाभावे तत्कार्यसाधनापेक्षायां विधीयमानमध्वशनस्य साध्यापेक्षस्यापेक्षाबलेनैव तत्कार्यापत्तिरिति तद्धर्मोहः।

'सत्रायागूर्य विश्वजिता यजेते'ति वा उदाहार्यम्। अत्र हि सत्रं प्रतिज्ञाय तदकरणे विश्वजिद्विधीयते। 'न गिरा गिरेति ब्रूयादैरंकृत्वोद्गेयमि'त्यत्र 'गिरागिरा च दक्षस' इत्यत्र ऋचि साम्नि गीयमाने गिरापदं प्रतिषिध्य इरापदं विधीयत इति पूर्वन्यायेन तत्कार्यापत्तौ गिरापदगानोहः। तदेवमनेकार्थस्य शब्दस्य सामर्थ्येन विशेषपरत्वनिर्णयात् तत्कार्यापत्तिरित्येकविधासामान्यशब्दस्य सामर्थ्येनैव विशेषपरत्वनिर्णयात् तत्कार्यापत्तिर्द्वितीया। वचनादेव तत्कार्यापत्तिरिति तृतीया। तदभावे विधानात् तत्कार्यापत्तिश्चतुर्थी। वचसैव तत्प्रतिषिध्यार्थान्तरविधानात्तस्य कार्यापत्तिः पञ्चमी। एवं वार्तिकश्लोकव्याख्यानं च राणकरीत्येति द्रष्टव्यम्।

# अथ बाधनिरूपणम्

एवमातिदेशिकपदार्थगतरूपान्तरात्मकोहनिरूपणानन्तरं तन्निवृत्त्यात्मको बाधो दशमेऽध्याये निरूपितः। निवृत्तिश्च कस्य[2]चित्क्वचिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतावज्ञातत्वेन तद्ग्राह्यत्वासम्भवात्। यथा दर्शपूर्णमासाङ्गभूतायामारम्भणीयायां आरम्भणीयायाः। न ह्यारम्भणीयाविधानसमये दर्शपूर्णमासयोरारम्भणीयाङ्गमिति ज्ञायते। येन सापि प्रयाजादिवदतिदेशवाक्येन गृह्येत। कस्यचिदतिदेश[3]वाक्यप्रवृत्तिकाले प्रकृतौ विज्ञातस्याप्यसम्भवात् निवृत्तिः। यथा पावमानेष्टावग्निहोत्रहवण्याः। 'ययाग्निहोत्रं हुतं सा अग्निहोत्रहवणी। प्रकृतावग्निहोत्रहवण्यां हवींषि निर्वपति' इति निर्वापकरणत्वेन ग्राह्येति स्थितम्। न च पावमानेष्टिसमये अग्निहोत्रं हुतम्।

क्वचिद्द्वार[3]लोपान्निवृत्तिः। द्वारलोपश्च क्वचिद्द्वारत्वाभिमतस्य स्वतःसिद्धतया। यथा कृष्णलेष्ववघातद्वारस्य वैतुष्यस्य स्वतःसिद्धतयाऽवघातस्य निवृत्तिः। क्वचित्पूर्व[4]सिद्धतया। यथा 'खलेवाली यूपो भवती'त्यत्र खलेवाल्याः प्रागेव च्छित्वा तक्षणेन श्लक्ष्णीकृत्य निखातायाः छेदनतक्षणोच्छ्रयणानां निवृत्तिः। क्वचित्[1] द्वारसम्पादनाशक्त्या। यथा प्राशित्रेडाभक्षणार्थेषु कृष्णलेषु अभिघारणजन्योपकारस्य स्वादिम्नः सम्पादयितुमशक्यत्वादभिघारणनिवृत्तिः। क्वचित् सिद्ध[6]शेषिविरोधान्निवृत्तिः। यथा आग्रयणदक्षिणारूपे वत्से अन्वाहार्यधर्मस्य पाकस्य। पाके हि कृते वत्सो नश्येत्, तस्मान्मांसमेव दक्षिणा स्यात्।

क्वचित्साध्यशेषि[7]विरोधान्निवृत्तिः। यथा 'बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवती'त्यत्र निर्वाप्येषु 'चतुरो मुष्टीन् निर्वपती'त्यतिदेशप्राप्तस्य चतुर्मुष्टिपरिमाणस्य सप्तदशशरावपरिमाणचरुरूपसाध्यशेषिविरोधित्वात् सङ्ख्यामुष्ट्योरन्यतरबाधावश्यंभावेन जघन्यजघन्यत्वान्मुष्टेर्निवृत्तिः। क्वचि[8]द्विरोधाभावेऽपि प्रयोजनाभावान्निवृत्तिः। यथा आग्नेयदक्षिणारूपे वाससि पाकस्य। प्रकृतौ ह्यन्वाहार्यरूपदक्षिणाद्रव्यनिष्पत्त्यर्थं 'दक्षिणाग्नौ अपरिमितं महान्तमोदनं पचती'ति पाको विहितः। इह दक्षिणाद्रव्ये वाससि प्रागेव निष्पन्ने स्थिते तन्निष्पत्त्यनुपयोगिना किं पाकेन द्वारलोपान्निवृत्तिरिति। अत्र द्वार[9]शब्देन यद्द्वारतया फलतयाऽवश्यं प्रयोजनं तत्सर्वं विवक्षितम्। तेन मृते यजमाने क्रियमाणायामिष्टा'वायुराशास्ते' इत्यादिमन्त्राणां विवक्षितफलानां मृतस्य यजमानस्यायुरादिफललोपान्निवृत्तिरित्युदाहरणमित्यादि द्रष्टव्यम्।

क्वचित्प्रत्या[10]म्नानात् प्राकृतपदार्थनिवृत्तिः। साऽप्यनेकविधा। क्वचिदुपदिष्ट[1]पदार्थविरोधात् तन्निवृत्तिः। यथा 'औदुंबरो यूपो भवती'ति वैकृतपशावतिदेशप्राप्तयूपोद्देशेनौदुम्बररूपप्रकृतिद्रव्य-

विधानादुदुम्बरप्रकृतिके यूपे प्राकृतस्य बिल्वपलाशादेर्विरोधेन प्रकृतित्वासम्भवान्निवृत्तिः । क्वचिदुपदिष्टपदार्थगतश्रुतनैरपेक्ष्यविरोधान्निवृत्तिः । यथा 'नैवारश्चरुर्भवती'त्यत्र नीवारप्रकृतिके चरौ व्रैह्यतण्डुलानामपि मिश्रणेन प्रकृतित्वसम्भवेऽपि नीवारशब्दोपरितनतद्धितोत्पत्त्यवगतनैरपेक्ष्यविरोधात् व्रीहीणां निवृत्तिः । नीवाराणां व्रीहिसापेक्षाणां चरुप्रकृतित्वे हि सापेक्षमसमर्थमित्यसामर्थ्यात्तद्धितोत्पत्तिर्न स्यात् । क्वचि'दविरोधेऽपि नैरपेक्ष्यान्निवृत्तिः । यथा आग्रयणे 'वासो दक्षिणा वत्सः प्रथमजो दक्षिणे'ति श्रुताभ्यां वासोवत्साभ्यामृत्विग्यजमानतौ उभयोरन्वाहार्यनिरपेक्षकारणत्वात् प्रकृतान्वाहार्यदक्षिणाया निवृत्तिः । क्वचि'न्नैरपेक्ष्याभावेऽपि नियमवशात् निवृत्तिः । यथा ऋतपेये श्रुतः 'औदुम्बरः सोमचमसो दक्षिणा । स प्रियाय सगोत्राय ब्रह्मणे देय' इति । श्रुतेन सोमचमसेन केवलं ब्रह्मणे दत्तेन लौकिकोपायान्तरनिरपेक्षं ऋत्विजामामनमसम्भवेऽपि श्रुतनियमवाक्य(वशात्)प्राकृत्या द्वादशशतदक्षिणाया निवृत्तिरित्याद्युदाहरणम् ।

क्वचित्प्रतिषेधात् ''प्राकृतपदार्थनिवृत्तिः । प्रतिषेधशब्देनात्र यः कश्चित् प्राकृतपदार्थनिवृत्तिफलको विधिः स सर्वोऽपि विवक्षितः । तेन मासपितृयज्ञे 'नार्षेयं वृणीत' इत्यनेनार्षेयवरणवर्जं प्रकृतिवत्कुर्यादिति पर्युदासेन तस्मिन्नार्षेयवरणनिवृत्तिः । 'न तौ पशौ करोति' इत्याज्यभागनिषेधात् पशावाज्यभागनिवृत्तिः, 'आज्यभागौ यजती'त्यपूर्वतापरविधिनाज्यभागादीनां या गृहमेधीये निवृत्तिः सा सर्वाप्यत्रोदाहरणम् । एवं दर्शपूर्णमासयोः 'कृष्णलेषु श्रपयती'ति वाक्यस्य तण्डुलहविष्केषु चित्रादिषु व्रीह्युपादाननिवृत्तेरेव फलत्वात्तदप्यत्रोदाहरणम् ।

एवं बाधनिरूपणार्थं प्रवृत्तस्य दशमाध्यायस्य प्रथमे पादे बाधोऽर्थद्वारलोपेन निरूपितः । तद्यथा— 'स्वयंकृता वेदिर्भवती'त्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन तन्निष्पादकानां उद्धननादीनां बाधः । कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः । द्वितीये सङ्क्षेपेणोक्तस्य द्वारस्य बहुभिरुदाहरणैर्विस्तरः । तृतीये बाधकारणं कार्यैकत्वम् । तद्यथा— गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्यः । तथा विकृतिरूपे भूर्नामके एकाहे धेनुर्दक्षिणा, तस्यास्तदेव कार्यम् । ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते । चतुर्थे नक्षत्रेष्टिर्विहितोपहोमाश्चोदकप्राप्तनारिष्टहोमैः सह समुच्चीयन्त इत्यादिसमुच्चयः । पञ्चमे षोडशिग्रह आग्रयणपात्रादेव गृहीतव्य इत्यादिबाधप्रसङ्गतो ग्रहादिविचारः । षष्ठे 'पृष्ठ्यः षडहो बृहद्रथन्तरं सामे'त्यत्र केषुचिदहःसु रथन्तरं, केषुचिद्बृहदिति न तत्र प्रत्यहं समुच्चयः । सप्तमे अग्नीषोमीये प्रत्यङ्गहविर्भेदो, न कृत्स्नपशुरेकं हविः । पशोर्हृदयाद्यङ्गानां हविष्ट्वेन सङ्कीर्तनं इतराङ्गपरिसङ्ख्यार्थमित्यादि । अष्टमे 'नानुयाजेषु ये यजामहं करोती'त्यादौ अनूयाजव्यतिरिक्तेषु यजतिषु ये यजामहं करोतीति पर्युदासनमित्यादि ।

अत्रैवं विशेषश्चिन्त्यते— कथं च वचनप्राप्तस्य बाधः । अन्यथा तत्प्रापकस्य चोदकवचनस्य अप्रामाण्यपातात् । न च लुप्तार्थादीनां प्राप्तिबाध एव प्राप्तबाधार्थः । तर्हि तार्तीयबाधात् दाशमिकबाधस्याविशेषे तार्तीयोऽप्राप्तबाधो, दाशमिकस्तु प्राप्तबाध इति सिद्धान्तव्याकोपः । किञ्च न हि प्रतिस्वं पदार्थानां चोदकोऽस्ति, यदेकवर्जमितरत्प्राप्येत । उपकारसूत्रे हि प्राकृतपदार्थजातं प्रोतं, तस्मिन्नाकृष्यमाणे सर्वमेव समाकृष्यते, तदनाकर्षणे च न किञ्चिदपीति लुप्तार्थादिवर्जमितरप्राप्तिः । अथ यथा आग्नेय उपकृतस्तथा सौर्योऽपीति सामान्यवचनात् प्राप्तिमवगम्य पदार्थान् स्वरूपेणालोचयति प्रकृतौ केन कथमुपकृतमिति, तत्रावघातस्य वैतुष्यद्वारेणोपकारकत्वमालोच्य, कृष्णले तस्य तथाभावासम्भवात् पूर्वजातसामान्यज्ञानस्य तदंशे मिथ्यात्वमवधारयतीत्येव प्राप्तबाधार्थ इति । एतदपि न युक्तम् । दुष्टेन्द्रियादिकरणकप्रत्यक्षादिविज्ञानस्यायाथार्थ्यासम्भवेऽपि अदुष्टचोदकरूपवेदजन्यज्ञानस्य हेत्वाभावेनायाथार्थ्यासम्भवादिति ।

उच्यते— यत्र क्लृप्तस्यैव शास्त्रस्य विषयसङ्कोचः, तत्र प्राप्तबाधः । यत्र तु कल्पनीयस्य शास्त्रस्य कल्पनानिरोधः तत्र अप्राप्तबाधः । अत एव 'साधारणस्य शास्त्रस्य विशेषविषयादिना सङ्कोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयते' । 'कल्प्यस्य शास्त्रस्य तु कल्पनं यन्निरुध्यते मूलनिकृन्तनेन क्लृप्तेन शीघ्रेण फलोपहारादप्राप्तबाधं तमुदाहरन्ती'ति प्राप्ताप्राप्तबाधयोः स्वरूपं वर्णयन्ति ।

तत्र प्राप्ताप्राप्तबाधविवेकाय शास्त्रे यावन्तो बाधास्ते निरूप्यन्ते । तत्र श्रुत्यादिभि[१]र्लिङ्गादीनां [२]प्रत्यक्षेणेतरेषां, प्रमाणैः [३]प्रमाणाभासानां, श्रुत्या [४]स्मृतेः, आप्त[५]स्मृत्याऽनाप्तस्मृतेः, अविगीतया [६]विगीतायाः, अदृष्टार्थया [७]दृष्टार्थायाः, श्रुति[८]प्रभवाल्लिङ्गादिप्रभवायाः, विधिप्रभवया[९] अर्थवादप्रभवायाः, स्मृत्या [१०]आचारस्य, अभियुक्ताचारेण [११]आचारमात्रस्य, असन्दिग्धेन [१२]सन्दिग्धस्य, बलवदाश्रयेण [१३]दुर्बलाश्रयस्य, उपक्रमेण [१४]उपसंहारस्य, नियमादृष्टार्थेन [१५]अदृष्टार्थत्वस्य, असन्निपत्योपकारकत्वेन [१६]आरादुपकारकत्वस्य,[(१)] एकार्थविधानेन [१७]अनेकार्थविधानस्य, एकशब्दत्वेन [१८]अनेकशब्दत्वस्य, एकार्थविधानेन [१९]अनेकार्थत्वस्य, अल्पबाधेन [२०]बहुबाधस्य, वेदान्तरविहितेन [२१]वेदान्तरोत्पन्नस्य, स्वशाखाविहितेन [२२]परशाखाविहितस्य, नैमित्तिकेन [२३]नित्यस्य, पुरुषार्थेन [२४]द्विविधस्य क्रत्वर्थस्य, प्रकरणाधीतेन [२५]अनारभ्याधीतस्य, परेण [२६]पूर्वस्य, वैकृतेन [२७]प्राकृतस्य, चोदकाश्रयेण [२८]प्रयोगवचनाश्रयस्य, प्रयोजनेन [२९]निष्प्रयोजनस्य, मन्त्रक्रमेण [३०]ब्राह्मणक्रमस्य, द्रव्याश्रयेण [३१]देवताश्रयस्य, पूर्वाम्नातेन [३२]पश्चादाम्नातस्य, भूयसा [३३]अल्पस्य, मुख्येन [३४]गौणस्य, विशेषविहितेन [३५]सामान्यविहितस्य, निरवकाशेन [३६]सावकाशस्य, प्रधानेन [३७]अङ्गस्य, प्रधानधर्मेण [३८]अङ्गधर्मस्य बाधः ।

---

(१). असन्निहितोपकातित्वस्य – क.घ.पा.

विधानादुदुम्बरप्रकृतिके यूपे प्राकृतस्य बिल्वपलाशादेर्विरोधेन प्रकृतित्वासम्भवान्निवृत्तिः । क्वचिदुपदिष्ट पदार्थगतश्रुतनैरपेक्ष्यविरोधान्निवृत्तिः । यथा 'नैवारश्चरुर्भवती'त्यत्र नीवारप्रकृतिके चरौ व्रैह्यतण्डुलानामपि मिश्रणेन प्रकृतित्वसम्भवेऽपि नीवारशब्दोपरितनतद्धितोत्पत्त्यवगतनैरपेक्ष्यविरोधात् व्रीहीणां निवृत्तिः । नीवाराणां व्रीहिसापेक्षाणां चरुप्रकृतित्वे हि सापेक्षमसमर्थमित्यसामर्थ्यात्तद्धितोत्पत्तिर्न स्यात् । क्वचि'दविरोधेऽपि नैरपेक्ष्यान्निवृत्तिः । यथा आग्रयणे 'वासो दक्षिणा वत्सः प्रथमजो दक्षिणे'ति श्रुताभ्यां वासोवत्साभ्यामृत्विग्यजमानतौ उभयोरन्वाहार्यनिरपेक्षकारणत्वात् प्रकृतान्वाहार्यदक्षिणाया निवृत्तिः । क्वचि'न्नैरपेक्ष्याभावेऽपि नियमवशात् निवृत्तिः । यथा ऋतपेये श्रुतः 'औदुम्बरः सोमचमसो दक्षिणा । स प्रियाय सगोत्राय ब्रह्मणे देय' इति । श्रुतेन सोमचमसेन केवलं ब्रह्मणे दत्तेन लौकिकोपायान्तरनिरपेक्षं ऋत्विजामानमसम्भवेऽपि श्रुतनियमवाक्य(वशात्)प्राकृत्या द्वादशशतदक्षिणाया निवृत्तिरित्याद्युदाहरणम् ।

क्वचित्प्रतिषेधात् ''प्राकृतपदार्थनिवृत्तिः । प्रतिषेधशब्देनात्र यः कश्चित् प्राकृतपदार्थनिवृत्तिफलको विधिः स सर्वोऽपि विवक्षितः । तेन मासपितृयज्ञे 'नार्षेयं वृणीत' इत्यनेनार्षेयवरणवर्जं प्रकृतिवत्कुर्यादिति पर्युदासेन तस्मिन्नार्षेयवरणनिवृत्तिः । 'न तौ पशौ करोति' इत्याज्यभागनिषेधात् पशावाज्यभागनिवृत्तिः, 'आज्यभागौ यजती'त्यपूर्वतापरविधिनाज्यभागादीनां या गृहमेधीये निवृत्तिः सा सर्वाप्यत्रोदाहरणम् । एवं दर्शपूर्णमासयोः 'कृष्णलेषु श्रपयती'ति वाक्यस्य तण्डुलहविष्केषु चित्रादिषु व्रीह्युपादाननिवृत्तेरेव फलत्वात्तदप्यत्रोदाहरणम् ।

एवं बाधनिरूपणार्थं प्रवृत्तस्य दशमाध्यायस्य प्रथमे पादे बाधोऽर्थद्वारलोपेन निरूपितः । तद्यथा— 'स्वयंकृता वेदिर्भवती'त्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन तन्निष्पादकानां उद्धननादीनां बाधः । कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः । द्वितीये सङ्क्षेपेणोक्तस्य द्वारस्य बहुभिरुदाहरणैर्विस्तरः । तृतीये बाधकारणं कार्यैकत्वम् । तद्यथा— गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्यः । तथा विकृतिरूपे भूर्नामके एकाहे धेनुर्दक्षिणा, तस्यास्तदेव कार्यम् । ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते । चतुर्थे नक्षत्रेष्टिर्विहितोपहोमाश्चोदकप्रासनारिष्टहोमैः सह समुच्चीयन्त इत्यादिसमुच्चयः । पञ्चमे षोडशिग्रह आग्रयणपात्रादेव गृहीतव्य इत्यादिबाधप्रसङ्गतो ग्रहादिविचारः । षष्ठे 'पृष्ठ्यः षडहो बृहद्रथन्तरं सामे'त्यत्र केषुचिदहःसु रथन्तरं, केषुचिद्बृहदिति न तत्र प्रत्यहं समुच्चयः । सप्तमे अग्नीषोमीये प्रत्यङ्गहविर्भेदो, न कृत्स्नपशुरेकं हविः । पशोर्हृदयाद्यङ्गानां हविष्ट्वेन सङ्कीर्तनं इतराङ्गपरिसङ्ख्यार्थमित्यादि । अष्टमे 'नानुयाजेषु ये यजामहं करोती'त्यादौ अनूयाजव्यतिरिक्तेषु यजतिषु ये यजामहं करोतीति पर्युदासनमित्यादि ।

अत्रैवं विशेषश्चिन्त्यते— कथं च वचनप्राप्तस्य बाधः । अन्यथा तत्प्रापकस्य चोदकवचनस्य अप्रामाण्यपातात् । न च लुप्तार्थादीनां प्राप्तिबाध एव प्राप्तबाधार्थः । तर्हि तार्तीयबाधात् दाशमिकबाधस्याविशेषे तार्तीयोऽप्राप्तबाधो, दाशमिकस्तु प्राप्तबाध इति सिद्धान्तव्याकोपः । किञ्च न हि प्रतिस्वं पदार्थानां चोदकोऽस्ति, यदेकवर्जमितरत्प्राप्येत । उपकारसूत्रे हि प्राकृतपदार्थजातं प्रोतं, तस्मिन्नाकृष्यमाणे सर्वमेव समाकृष्यते, तदनाकर्षणे च न किञ्चिदपीति लुप्तार्थादिवर्जमितरप्राप्तिः । अथ यथा आग्नेय उपकृतस्तथा सौर्योऽपीति सामान्यवचनात् प्राप्तिमवगम्य पदार्थान् स्वरूपेणालोचयति प्रकृतौ केन कथमुपकृतमिति, तत्रावघातस्य वैतुष्यद्वारेणोपकारकत्वमालोच्य, कृष्णले तस्य तथाभावासम्भवात् पूर्वजातसामान्यज्ञानस्य तदंशे मिथ्यात्वमवधारयतीत्येव प्राप्तबाधार्थ इति । एतदपि न युक्तम् । दुष्टेन्द्रियादिकरणकप्रत्यक्षादिविज्ञानस्यायाथार्थ्यासम्भवेऽपि अदुष्टचोदकरूपवेदजन्यज्ञानस्य हेत्वाभावेनायाथार्थ्यासम्भवादिति ।

उच्यते— यत्र क्लृप्तस्यैव शास्त्रस्य विषयसङ्कोचः, तत्र प्राप्तबाधः । यत्र तु कल्पनीयस्य शास्त्रस्य कल्पनानिरोधः तत्र अप्राप्तबाधः । अत एव 'साधारणस्य शास्त्रस्य विशेषविषयादिना सङ्कोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयते' । 'कल्प्यस्य शास्त्रस्य तु कल्पनं यन्निरुध्यते मूलनिकृन्तनेन क्लृप्तेन शीघ्रेण फलोपहारादप्राप्तबाधं तमुदाहरन्ती'ति प्राप्ताप्राप्तबाधयोः स्वरूपं वर्णयन्ति ।

तत्र प्राप्ताप्राप्तबाधविवेकाय शास्त्रे यावन्तो बाधास्ते निरूप्यन्ते । तत्र श्रुत्यादिभि[१]र्लिङ्गादीनां [२]प्रत्यक्षेणेतरेषां, प्रमाणैः [३]प्रमाणाभासानां, श्रुत्या [४]स्मृतेः, आप्त[५]स्मृत्याऽनाप्तस्मृतेः, अविगीतया [६]विगीतायाः, अदृष्टार्थया [७]दृष्टार्थायाः, श्रुति[८]प्रभवालिङ्गादिप्रभवायाः, विधिप्रभवया[९] अर्थवादप्रभवायाः, स्मृत्या [१०]आचारस्य, अभियुक्ताचारेण [११]आचारमात्रस्य, असन्दिग्धेन [१२]सन्दिग्धस्य, बलवदाश्रयेण [१३]दुर्बलाश्रयस्य, उपक्रमेण [१४]उपसंहारस्य, नियमादृष्टार्थेन [१५]अदृष्टार्थत्वस्य, असन्निपत्योपकारकत्वेन [१६]आरादुपकारकत्वस्य,[(१)] एकार्थविधानेन [१७]अनेकार्थविधानस्य, एकशब्दत्वेन [१८]अनेकशब्दत्वस्य, एकार्थविधानेन [१९]अनेकार्थत्वस्य, अल्पबाधेन [२०]बहुबाधस्य, वेदान्तरविहितेन [२१]वेदान्तरोत्पन्नस्य, स्वशाखाविहितेन [२२]परशाखाविहितस्य, नैमित्तिकेन [२३]नित्यस्य, पुरुषार्थेन [२४]द्विविधस्य क्रत्वर्थस्य, प्रकरणाधीतेन [२५]अनारभ्याधीतस्य, परेण [२६]पूर्वस्य, वैकृतेन [२७]प्राकृतस्य, चोदकाश्रयेण [२८]प्रयोगवचनाश्रयस्य, प्रयोजनेन [२९]निष्प्रयोजनस्य, मन्त्रक्रमेण [३०]ब्राह्मणक्रमस्य, द्रव्याश्रयेण [३१]देवताश्रयस्य, पूर्वाम्नातेन [३२]पश्चादाम्नातस्य, भूयसा [३३]अल्पस्य, मुख्येन [३४]गौणस्य, विशेषविहितेन [३५]सामान्यविहितस्य, निरवकाशेन [३६]सावकाशस्य, प्रधानेन [३७]अङ्गस्य, प्रधानधर्मेण [३८]अङ्गधर्मस्य बाधः ।

(१). असन्निहितोपकातित्वस्य – क.घ.पा.

तत्र श्रुत्यादिभिर्बाधः प्रागुक्तः[१] । प्रत्यक्षेण स्तम्भोऽयमित्यादिना बाह्यार्थविषयेण 'ननु सर्व एव प्रत्ययो निरालम्बनः प्रत्ययत्वात् स्वप्नप्रत्ययवदि'त्यादि भाष्येण निरालम्बनतानुमानस्य बाध उक्तः[२] । एवं प्रमाणैः प्रमाणाभासानामपि[३] तत्र तत्र स द्रष्टव्यः ।

श्रुत्या स्मृतिबाधस्तु [४]"विरोधे त्वनपेक्ष्यं स्यादि'त्यत्रोक्तः । तेनैव न्यायेनानाप्तस्मृत्यादिबाधः । तत्र 'औदुम्बरीं स्पृष्ट्वोद्गायेदि'ति श्रुत्या 'औदुम्बरी सर्वा वेष्टयितव्ये'ति स्मृतेः । आप्तस्य मन्वादेः 'नात्मानं घातयेत् प्राज्ञ' इति स्मृत्या 'केदारे पातयेद्देहमि'त्यनाप्तपाषण्डस्मृतेः[५] । 'भार्याश्चतस्रो विप्रस्ये'त्यस्याः

यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ।
नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥

इति याज्ञवल्क्यस्मृतिविगीतायाश्च । 'शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिमि'त्यनया[६] । अदृष्टार्थया 'न जातु ब्राह्मणं हन्यादि'त्यनया 'जिघांसन्तं जिघांसीयादि'त्यस्याः आत्मरक्षणार्थादि-दृष्टार्थायाः[७] । 'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये व्याहृतीभिर्हुत्वा प्रति-गृह्णीयादि'त्याद्यया होमादीतिकर्तव्यताप्रयुक्तपुत्रप्रतिग्रहविषयत्वात् श्रुतिप्रभावया स्मृत्या, 'न शेषो अग्ने अन्वजातमस्ती'त्यादेः, शेषोऽपत्ययमन्योत्पादितं नास्तीत्यर्थाभिधायिनो दत्तपुत्रनिषेधे लिङ्गत्वात् तन्मूलायाः 'यस्य ते बीजिनो जातास्तस्य नेतरस्य त्वित्याद्यायाः[८] । 'मागामनागामदितिं वधिष्ठे'ति विधिनिषेधमूल्या 'गोब्राह्मणानलान्नातेनिनोच्छिष्टो न पदा स्पृशेत् न निन्दितान्येव कुर्यादि'त्यनया 'तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाहेत्युक्षाणं वा वेहतं वाक्षदत' इत्यर्थवादमूलाया 'महो वा क्षमहाजं वा श्रोत्रियायोपकल्पयेदि'त्यस्याः स्मृतेः[९] । 'सूर्याविदे वधूवस्त्रं दद्यादि'त्यनया स्मृत्या विवाह-चतुर्थहि वधूवस्त्रपरिधानाचारस्य बाधः[१०] । दीर्घशूकादौ यवादिपदप्रयोगरूपाभियुक्ताचारेण प्रियंग्वादौ तत्प्रयोगरूपस्य म्लेच्छाचारस्य, पील्वादिपदानां वृक्षविशेषादौ प्रयोगरूपेण वा तेन हस्त्यादौ तत्प्रयोग-रूपस्य तस्य बाधः[११] 'तेष्वदर्शनात्' (१-३-७) इत्यादावुक्तः । 'अक्ताः शर्कराः उपदधाती'ति सन्दि-ग्धस्य विधेः असन्दिग्धेन 'तेजो वै घृतमि'त्यनेन बाधः[१२] 'सन्दिग्धे तु' (१-२-२४) इत्यत्रोक्तः । प्रबलपदार्थाश्रयेण क्षुतादिनिमित्ताचमनवाक्येन दुर्बलक्रमाश्रयस्य 'वेदं कृत्वा वेदिं करोती'त्यादेर्बाधः[१३] 'शिष्टाकोप' (१-३-५) इत्यादावुक्तः ।

'प्रजापतिर्वा इदमेक आसीत् । स तपोऽतप्यत । तस्मात्तेपानात् त्रयो देवा असृज्यन्त । अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त । अग्ने ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेदः' इत्युपक्रमस्थवेदपदेन 'उच्चैः ऋचा क्रियते', 'उच्चैः साम्ना क्रियते', 'उपांशु

यजुषे'त्युपसंहारस्य ऋगादिपदस्य बाधः[14] 'श्रुतेर्जाताधिकारः स्यात्' (३-३-१) इत्यादावुक्तः। अवघातादेर्नियमादृष्टार्थत्वेनात्यन्तादृष्टार्थत्वस्य 'तेषामर्थेन' (३-१-७) इत्यादौ बाध[15] उक्तः। सन्निपत्योपकारत्वेनारादुपकारित्वस्य पशुपुरोडाशादौ 'आश्रयिषु अविशेषेण' (४-१-१८) इत्यादौ बाध[16] उक्तः। एकार्थविधानेनानेकार्थविधानस्य 'दध्ना जुहोती'त्यादौ 'आघाराग्निहोत्रम्' (२-२-१३) इत्यादौ स[17] उक्तः। एकशब्दत्वैकार्थत्वाभ्यां अनेकशब्दत्वेनेकार्थत्वयोः 'अन्यायश्चानेकशब्दत्वम्' (१-३-२६) 'प्रयोगचोदनभावात्' (१-३-३०) इत्यादौ स[18-19] उक्तः।

अल्पबाधेन बहुबाधस्याश्वप्रतिग्रहेष्टौ बाधो [20]'अचोदितं च' (३-४-३६) इत्यादौ उक्तः। वेदान्तरविहितेन उपांशुत्वेन सामवेदाख्यवेदान्तरोत्पन्नाधानाङ्गवारवन्तीयादिसामोच्चैस्त्वस्य बाधो[21] 'गुणमुख्यव्यतिक्रम' (३-३-९) इत्यादावुक्तः। परशाखाविहितस्याग्नीषोमीयद्वादशकपालत्वादेः स्वशाखाविहितैकादशकपालत्वेन मूलानिश्चयाद्बाधः[22] स्मृतिन्यायेन सिद्धः। सामिधेनीसाप्तदश्येन वैश्यत्वनिमित्तेन तत्पाञ्चदश्यस्य बाधो[23] 'नैमित्तिकं तु' (३-६-१०) इत्यादावुक्तः। पुरुषार्थेन तदेकविंशतित्वादिना नित्यनैमित्तिकयोः तयोर्बाधोऽपि तत्रैव 'आसन्नपुरुषार्थत्वाद्विप्रकृष्टफलात् तथा। बलवच्छीघ्रगामित्वात्* काम्यं नैमित्तिकादपी'ति वार्तिकोक्तन्यायेन तत्रैवोक्तः[24]। अनारभ्याधीतस्य तत्साप्तदश्यस्य प्रकरणलभ्यौपदेशिकसाप्तदश्ययुक्तावैमृधपशुमित्रविन्दाध्वरकल्पाग्रयणादिविकृति-निविष्टस्य प्रकरणस्थेन तत्पाञ्चदश्येन बाधः[25] 'अप्रकरणे तु यच्छास्त्रं विशेषात् तु' (३-६-९) इत्यादौ उक्तः। सर्वस्वदाक्षिण्यादाक्षिण्यनिमित्तकप्रतिहर्त्रुद्गात्रपच्छेदयोः पौर्वापर्यात्सर्वस्वदाक्षिण्यादाक्षिण्ययोः पौर्वापर्येण जायमानयोः विरोधे 'अन्यतरस्य पूर्वस्य बाधः[26] 'पौर्वापर्य' (६-५-५४) इत्यादौ उक्तः। वैकृतेन शरादिना प्राकृतस्य कुशादेर्बाधः[27] 'चोदनालिङ्गसंयोग' (१०-४-२) इत्यादावुक्तः। श्येने प्राकृतेष्वङ्गेषु अतिदेशप्राप्तनानासमाख्यानियतनानाकर्तृकचोदकाश्रयेण प्रयोगवचनाश्रयस्य साम-वेदिकविधिविहितौद्गात्रसमाख्यातः श्येनद्वारा वैकृतेषु कण्ठकवितोदनाद्यङ्गेष्विव उद्गातृकर्तृकत्वस्य बाधो[28] 'वेदोपदेशात्पूर्ववत्' (३-७-५०) इत्यादावुक्तः। निगदे सप्रयोजनेनोच्चैस्त्वेन परसम्बोध-नोपयोगिना निष्प्रयोजनस्योपांशुत्वस्य 'वचनाद्धर्मविशेष' (२-१-४१) इत्यत्र बाध[29] उक्तः। मन्त्र-क्रमेण ब्राह्मणक्रमस्य बाधो[30] 'मन्त्रतस्तु विरोधे स्यात्' (५-१-१६) इत्यादावुक्तः। द्रव्याश्रयेण औषधविध्यन्तादिना सान्नाय्यादिविध्यन्तस्य देवताश्रयस्य ऐन्द्रपुरोडाशादौ बाधो[31] 'विप्रतिपत्तौ हविषा' (८-१-३२) इत्यादौ उक्तः। पूर्वाम्नाताग्नावैष्णवेन पौर्णमासीतन्त्रप्रवर्तकेन पश्चादाम्नातोपांशु-याजविकारभूताज्यद्रव्यकसारस्वतकर्मणोऽमावास्यायामुपांशुयाजमपेक्ष्य अमावास्या तन्त्रप्रवर्तकतया

* शीघ्रकारित्वात्।

तत्र श्रुत्यादिभिर्बाधः प्रागुक्तः[1] । प्रत्यक्षेण स्तम्भोऽयमित्यादिना बाह्यार्थविषयेण 'ननु सर्व एव प्रत्ययो निरालम्बनः प्रत्ययत्वात् स्वप्नप्रत्ययवदि'त्यादि भाष्येण निरालम्बनतानुमानस्य बाध उक्तः[2] । एवं प्रमाणैः प्रमाणाभासानामपि[3] तत्र तत्र स द्रष्टव्यः ।

श्रुत्या स्मृतिबाधस्तु [4]"विरोधे त्वनपेक्ष्यं स्यादि'त्यत्रोक्तः । तेनैव न्यायेनानाप्तस्मृत्यादिबाधः । तत्र 'औदुम्बरीं स्पृष्ट्वोद्गायेदि'ति श्रुत्या 'औदुम्बरी सर्वा वेष्टयितव्ये'ति स्मृतेः । आप्तस्य मन्वादेः 'नात्मानं घातयेत् प्राज्ञ' इति स्मृत्या 'केदारे पातयेद्देहमि'त्यनाप्तपाषण्डस्मृतेः[5] । 'भार्याश्चतस्रो विप्रस्ये'त्यस्याः

यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ।
नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥

इति याज्ञवल्क्यस्मृतिविगीतायाश्च । 'शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिमि'त्यनया[6] । अदृष्टार्थया 'न जातु ब्राह्मणं हन्यादि'त्यनया 'जिघांसन्तं जिघांसीयादि'त्यस्याः आत्मरक्षणार्थादि-दृष्टार्थायाः[7] । 'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये व्याहृतीभिर्हुत्वा प्रति-गृह्णीयादि'त्याद्यया होमादीतिकर्तव्यताप्रयुक्तपुत्रप्रतिग्रहविषयत्वात् श्रुतिप्रभावया स्मृत्या, 'न शेषो अग्ने अन्वजातमस्ती'त्यादेः, शेषोऽपत्ययमन्योत्पादितं नास्तीत्यर्थाभिधायिनो दत्तपुत्रनिषेधे लिङ्गत्वात् तन्मूलायाः 'यस्य ते बीजिनो जातास्तस्य नेतरस्य त्वित्याद्यायाः[8] । 'मागामनागामदितिं वधिष्टे'ति विधिनिषेधमूल्या 'गोब्राह्मणानलान्नातेनिनोच्छिष्टो न पदा स्पृशेत् न निन्दितान्येव कुर्यादि'त्यनया 'तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाहेत्युक्षाणं वा वेहतं वाक्षदत' इत्यर्थवादमूलाया 'महो वा क्षमहाजं वा श्रोत्रियायोपकल्पयेदि'त्यस्याः स्मृतेः[9] । 'सूर्याविदे वधूवस्त्रं दद्यादि'त्यनया स्मृत्या विवाह-चतुर्थहि वधूवस्त्रपरिधानाचारस्य बाधः[10] । दीर्घशूकादौ यवादिपदप्रयोगरूपाभियुक्ताचारेण प्रियंग्वादौ तत्प्रयोगरूपस्य म्लेच्छाचारस्य, पील्वादिपदानां वृक्षविशेषादौ प्रयोगरूपेण वा तेन हस्त्यादौ तत्प्रयोग-रूपस्य तस्य बाधः[11] 'तेष्वदर्शनात्' (१-३-७) इत्यादावुक्तः । 'अक्ताः शर्कराः उपदधाती'ति सन्दि-ग्धस्य विधेः असन्दिग्धेन 'तेजो वै घृतमि'त्यनेन बाधः[12] 'सन्दिग्धे तु' (१-२-२४) इत्यत्रोक्तः । प्रबलपदार्थाश्रयेण क्षुतादिनिमित्ताचमनवाक्येन दुर्बलक्रमाश्रयस्य 'वेदं कृत्वा वेदिं करोती'त्यादेर्बाधः[13] 'शिष्टाकोप' (१-३-५) इत्यादावुक्तः ।

'प्रजापतिर्वा इदमेक आसीत् । स तपोऽतप्यत । तस्मात्तेपानात् त्रयो देवा असृज्यन्त । अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त । अग्ने ऋग्वेदो वायोर्यजुवेद आदित्यात् सामवेदः' इत्युपक्रमस्थवेदपदेन 'उच्चैः ऋचा क्रियते', 'उच्चैः साम्ना क्रियते', 'उपांशु

यजुषे'त्युपसंहारस्य ऋगादिपदस्य बाधः[१४] 'श्रुतेर्जाताधिकारः स्यात्' (३-३-१) इत्यादावुक्तः। अवघातादेर्नियमादृष्टार्थत्वेनात्यन्तादृष्टार्थत्वस्य 'तेषामर्थेन' (३-१-७) इत्यादौ बाध[१५] उक्तः। सन्निपत्योपकारत्वेनारादुपकारित्वस्य पशुपुरोडाशादौ 'आश्रयिषु अविशेषेण' (४-१-१८) इत्यादौ बाध[१६] उक्तः। एकार्थविधानेनानेकार्थविधानस्य 'दध्ना जुहोती'त्यादौ 'आघाराग्निहोत्रम्' (२-२-१३) इत्यादौ स[१७] उक्तः। एकशब्दत्वैकार्थत्वाभ्यां अनेकशब्दत्वेनेकार्थत्वयोः 'अन्यायश्चानेकशब्दत्वम्' (१-३-२६) 'प्रयोगचोदनभावात्' (१-३-३०) इत्यादौ स[१८-१९] उक्तः।

अल्पबाधेन बहुबाधस्याश्वप्रतिग्रहेष्टौ बाधो [२०]'अचोदितं च' (३-४-३६) इत्यादौ उक्तः। वेदान्तरविहितेन उपांशुत्वेन सामवेदाख्यवेदान्तरोत्पन्नाधानाङ्गवारवन्तीयादिसामोच्चैस्त्वस्य बाधो[२१] 'गुणमुख्यव्यतिक्रम' (३-३-९) इत्यादावुक्तः। परशाखाविहितस्याग्नीषोमीयद्वादशकपालत्वादेः स्वशाखाविहितैकादशकपालत्वेन मूलानिश्चयाद्बाधः[२२] स्मृतिन्यायेन सिद्धः। सामिधेनीसाप्तदश्येन वैश्यत्वनिमित्तेन तत्पाञ्चदश्यस्य बाधो[२३] 'नैमित्तिकं तु' (३-६-१०) इत्यादावुक्तः। पुरुषार्थेन तदेकविंशतित्वादिना नित्यनैमित्तिकयोः तयोर्बाधोऽपि तत्रैव 'आसन्नपुरुषार्थत्वाद्विप्रकृष्टफलात् तथा। बलवच्छीघ्रगामित्वात्* काम्यं नैमित्तिकादपी'ति वार्तिकोक्तन्यायेन तत्रैवोक्तः[२४]। अनारभ्याधीतस्य तत्साप्तदश्यस्य प्रकरणलभ्यौपदेशिकसाप्तदश्ययुक्तावैमृधपशुमित्रविन्दाध्वरकल्पाग्रयणादिविकृति-निविष्टस्य प्रकरणस्थेन तत्पाञ्चदश्येन बाधः[२५] 'अप्रकरणे तु यच्छास्त्रं विशेषात् तु' (३-६-९) इत्यादौ उक्तः। सर्वस्वदाक्षिण्यादाक्षिण्यनिमित्तकप्रतिहर्त्रुद्गात्रपच्छेदयोः पौर्वापर्यात्सर्वस्वदाक्षिण्यादाक्षिण्ययोः पौर्वापर्येण जायमानयोः विरोधे 'अन्यतरस्य पूर्वस्य बाधः[२६] 'पौर्वापर्ये' (६-५-५४) इत्यादौ उक्तः। वैकृतेन शरादिना प्राकृतस्य कुशादेर्बाधः[२७] 'चोदनालिङ्गसंयोग' (१०-४-२) इत्यादावुक्तः। श्येने प्राकृतेष्वङ्गेषु अतिदेशप्राप्तनानासमाख्यानियतनानाकर्तृकचोदकाश्रयेण प्रयोगवचनाश्रयस्य साम-वेदिकविधिविहितौद्गात्रसमाख्यातः श्येनद्वारा वैकृतेषु कण्ठकवितोदनाद्यङ्गेष्विव उद्गातृकर्तृकत्वस्य बाधो[२८] 'वेदोपदेशात्पूर्ववत्' (३-७-५०) इत्यादावुक्तः। निगदे सप्रयोजनेनोच्चैस्त्वेन परसम्बोध-नोपयोगिना निष्प्रयोजनस्योपांशुत्वस्य 'वचनाद्धर्मविशेष' (२-१-४१) इत्यत्र बाध[२९] उक्तः। मन्त्र-क्रमेण ब्राह्मणक्रमस्य बाधो[३०] 'मन्त्रतस्तु विरोधे स्यात्' (५-१-१६) इत्यादावुक्तः। द्रव्याश्रयेण औषधविध्यन्तादिना सान्नाय्यादिविध्यन्तस्य देवताश्रयस्य ऐन्द्रपुरोडाशादौ बाधो[३१] 'विप्रतिपत्तौ हविषा' (८-१-३२) इत्यादौ उक्तः। पूर्वाम्नाताग्नावैष्णवेन पौर्णमासीतन्त्रप्रवर्तकेन पश्चादाम्नातोपांशु-याजविकारभूताज्यद्रव्यकसारस्वतकर्मणोऽमावास्यायामुपांशुयाजमपेक्ष्य अमावास्या तन्त्रप्रवर्तकतया

* शीघ्रकारित्वात्।

भासमानस्य बाधो[३२] 'मुख्यं वा पूर्वचोदनात्' (१२-२-२५) इत्यादावुक्तः । पञ्चदशरात्रे भूयसा ज्योतिरादिना ऐन्द्रसुब्रह्मण्यप्रवर्तकेन एकाहाग्निष्टुद्धर्मकैतदन्तर्गताग्निष्टुत्कर्मण आग्नेयसुब्रह्मण्यप्रवर्तकस्य, प्राजापत्ययागे वा भूयसा मध्वादिनाऽल्पस्येन्द्रपुरोडाशादेः दार्शिकाभिमर्शनाज्यभागमन्त्रस्य बाधो[३३] 'विप्रतिषिद्धधर्माणां समवाय' (१२-२-२४) इत्यादावुक्तः ।

मुख्येन बर्हिर्मन्त्रप्रकाश्येन कुशेन गौणस्य कुशसदृशस्य प्रकाश्यस्य बाधो[३४] 'अर्थाभिधानसंयोगान्मन्त्रेषु' (३-२-१) इत्यादिनोक्तः । विशेषविहितेन पदेन गार्हपत्येन वा सामान्यविहितस्याहवनीयस्य 'अविशेषेण यच्छास्त्रम्' (१०-८-१६) इत्यादौ बाध[३५] उक्तः । दीक्षणीयादिमन्त्राङ्गतया (प्रकरणावगत) 'यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयात्' इत्यनेन वाक्यविहितेन निरवकाशेन स्वरेण 'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु प्रचरन्ती'ति विहितस्योपांशुत्वस्य सावकाशस्य बाधः[३६] । आधानेन प्रधानेन निर्वापणाङ्गभूतायाः अग्निहोत्रहवण्या बाधो[३७] 'गुणलोपे च मुख्यस्य' (१०-२-६३) इत्यत्रोक्तः । प्रधानधर्मेण सुत्यापर्वकालत्वेन दीक्षापर्वकालत्वस्याङ्गधर्मस्य बाधः[३८] 'अङ्गगुणाविरोधे च' (१२-२-२७) इत्यादावुक्तः ।

तत्र प्रमाणतदाभास-नित्यनैमित्तिक-क्रत्वर्थपुरुषार्थ-पूर्वपरप्राकृत-वैकृत-सामान्यविशेष-निष्प्रयोजनसप्रयोजन-अल्पभूयः-सावकाशनिरवकाश-अङ्गप्रधान-तद्धर्मस्थले प्राप्तबाधः । अन्यत्र अप्राप्तबाधः इति व्यवस्था द्रष्टव्या ॥

तत्र प्रमाणाभासरूपस्य कारणस्य चक्षुरादेः प्रमाणविरोधेऽपि, नित्ये सामिधेनीपाञ्चदश्ये क्रतुप्रकरणाम्नातत्वस्य वैश्यप्रयोगेऽपि, नित्यनैमित्तिकयोश्च क्रत्वर्थयोः पाञ्चदश्यसाप्तदश्ययोर्गुणकामप्रयोगेऽपि, पूर्वस्मिंश्च सर्वस्वदाक्षिण्ये निमित्तस्य प्रतिहर्त्रपच्छेदस्योद्गात्रपच्छेदेऽपि, प्राकृते च प्रकृतिवच्छब्दस्य वैकृतोपदेशेऽपि, सामान्यविहिते चाहवनीये होमत्वस्य पदपत्नीसंयाजादिहोमत्वस्य पदपत्नीसंयाजादिहोमेऽपि, निष्प्रयोजने च परसम्बोधनार्थे उपांशुत्वस्य यजुर्वेदविहितस्य, भूयसि अल्पत्वस्य साग्नेयसुब्रह्मण्यायां दीक्षणीयादिषु उपांशुत्वे अग्निहोत्रहवण्यङ्गके च निर्वापे अङ्गधर्मेषु दीक्षणीयायाः पर्वकालत्वे मुख्यत्वेनानुपसञ्जातविरोधित्वस्य भूयोनिरवकाशप्रधानसोमयागधर्मपर्वकालत्वविरोधेऽपि विद्यमानत्वात् प्राप्तिसम्भवे प्रापकस्य विरोधिविषयविशेषेऽप्रापकत्वात् प्राप्तबाधत्वम् ।

अन्यत्र तु श्रुत्यादिविरोधे लिङ्गादिभिः श्रुत्यादिकल्पनाशक्तेः, प्रत्यक्षविरोधे अनुमितिहेतुत्वाभावात् सर्ववेष्टनास्मृतेश्च द्वित्र्याङ्गुलव्यतिरिक्तसर्ववेष्टनादिविषयत्वसम्भवेनाशेषवेष्टनादिश्रुतिकल्पनाशक्तेः, अनाप्तस्मृतेश्च श्रुतिकल्पनाशक्तेः स्पष्टत्वात्, विगीतायाश्च आप्तस्मृतेरपि आपद्विषयेऽल्प-

दोषार्थत्वसम्भवेन सदा, निर्दोषत्वावेदकश्रुत्यकल्पकत्वात्, आततायिवधादिस्मृतेश्च आत्मरक्षणप्रयत्नमात्रार्थत्वसम्भवेन वधपरश्रुत्यकल्पकत्वात्, लिङ्गार्थवादप्रभवयोश्च स्मृत्योः तन्मूलत्वेनैव श्रुत्यकल्पकत्वात्, वधूवस्त्रपरिधानाद्याचारस्य च वधूबन्धुभिः प्रवर्तितत्वसम्भवेन श्रुतिकल्पनाशक्तेः, प्रियंगुहस्त्यादौ यवपील्वादिशब्दप्रयोगस्याचारस्य सादृश्यादिमूलत्वसम्भवेनानुपपत्त्यनुदयाच्छक्तिकल्पनाशक्तेः, सन्दिग्धस्य च विध्युद्देशस्यासन्दिग्धवाक्यशेषापेक्षत्वेन तद्विरुद्धार्थे विध्यशक्तेः अवघातादिविधेश्च औषधनियमादृष्टार्थत्वेन परिहृतानर्थक्यस्य आज्यसान्नाय्ययोरत्यन्तादृष्टार्थावघातादिविध्यशक्तेः, अग्नीषोमीयपुरोडाशविधेश्च लिङ्गावगतदेवतासंस्काराख्यसन्निपत्योपकारार्थयागविधानेन परिहृतानर्थक्यस्य प्रकरणादिगम्यारादुपकारार्थयागविध्यशक्तत्वात्, अल्पार्थविधानेन चरितार्थस्य विधेरनेकार्थविध्यशक्तेः, एकस्य शब्दस्य वाचकत्वशक्तिकल्पनेन अशक्तिजशब्दान्तरप्रयोगोपपत्तेः शब्दान्तरशक्तिकल्पनाशक्तेः एकस्य चार्थस्य वाच्यत्वेनाविनाभावेनार्थान्तरप्रत्ययोपपत्तेः शक्तेरर्थान्तरे कल्पनाशक्तेः, प्रतिग्रहातिमात्रबोधने चाश्वप्रतिग्रहेष्टिवाक्योपपत्तेः बहुबाधकल्पनाशक्तेः, 'उच्चै ऋचा क्रियते' इति करोतेर्विधिवाचित्वेनोत्पत्तिवेदस्वरविध्यशक्तेः, परशाखाविहितस्य मूलनिश्चयात् प्रागश्रद्धेयत्वेनानुष्ठानाशक्तेः, अनारभ्याधीतस्य च विकृतिप्रकरणावगतविकृत्यन्वयानिराकाङ्क्षस्य प्रकृत्यन्वयकल्पनाऽशक्तेः, प्रयोगवचनस्य च चोदकापेक्षत्वेन तद्विरुद्धार्थविध्यशक्तेः, [1]प्रयोगसमवायिमन्त्रक्रमविधायिश्रुतिविहितेन च क्रमेण प्रागेव क्रमाकाङ्क्षायां ब्राह्मणक्रमविधायिश्रुतिकल्पनाशक्तेः, स्वरूपसमवाय्यन्तरङ्गद्रव्यसामान्ययुक्तप्रकृतिलाभसम्भवे शब्दमात्रसमवायिबहिरङ्गदेवतासामान्ययुक्तस्य कर्मणः प्रकृतित्वकल्पनाशक्तेः, पूर्वाम्नातकर्मतन्त्रप्रयुक्त्या च प्रसङ्गलब्धोपकारस्य पश्चादाम्नातस्य कर्मणः स्वीयतन्त्रप्रवर्तकत्वाशक्तेः, मुख्यार्थे मन्त्रविनियोजकलैङ्गिकश्रुतिकल्पनेन मन्त्राकाङ्क्षायां भूतायां गौणार्थे विनियोजकश्रुतिकल्पनाशक्तेः, प्रापकाभावादप्राप्तबाध इति वदन्ति । तस्मात् सिद्धः प्राप्ताप्राप्तबाधयोर्विवेकः । प्रत्युत एकदेशिमत एव प्राप्तबाधानुपपत्तिः । प्राप्तस्याङ्गस्य अबाधात् । बाध्यमानस्यानुष्ठानस्याप्राप्तेरिति दिक् ।

## अथ तन्त्रनिरूपणम्

एवमुपदेशविषयेषु अतिदेशविषयेषु च पृथङ्निरूपणीयेषु निरूपितेषु तदुभयसाधारणयोः तन्त्रप्रसङ्गयोर्निरूपणीययोरेकादशे तन्त्रं निरूपितम् । तत् त्रिविधम् । फलतन्त्रं पदार्थतन्त्रं अनुष्ठानतन्त्रमिति । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्र फलमुद्दिश्योपादीयमानानामाग्नेयादीनां षण्णां

१. प्रयोगसमवायिमन्त्रक्रमेण प्रयोगवचनक्रमाकाङ्क्षायां निवृत्तायां – घ.पा.

द्वन्द्वावगतं, 'राजसूयेन स्वाराज्यकामो यजेते'त्यत्र बहूनामिष्टिपशुसोमानामेकेन नाम्ना तन्त्राभिधानावगतं च साहित्यं विवक्षितमिति सहितानां फलान्वयादाग्नेयादीनां षण्णां फलम्, राजसूयनामगृहीतयागानां च फलं साधारणम् । तदेतत्फलतन्त्रम् ।

'समे दर्शपूर्णमासाभ्यां यजेत', 'पौर्णमास्यां पौर्णमास्या यजेत', 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इति विहिताः देशकालकर्तार एकफलसाधनानां कर्मणां यथायोगं साधारणा इत्येतत्पदार्थतन्त्रम् । एकफलकानामेकदेशकालकर्तृकाणां यदङ्गभूतप्रयाजाद्यनुष्ठानं साधारणं तदनुष्ठानतन्त्रम् ।

यत्र तु फलैक्येऽपि देशकालकर्तृणामन्यतमस्यापि भेदः तत्र प्रतिप्रधानमङ्गानुष्ठानावृत्तिः आवापः । यथा द्वादशाहे द्वादशानां सोमयागानां द्वादशस्वहःसु कर्तव्यानां कालभेदात् सुत्याकालकर्तव्यसवनीयपशुप्रभृत्यङ्गानुष्ठानावृत्तिः । वरुणप्रघासेषु नवहविष्कायामिष्टौ, विहारद्वयं विधाय 'अष्टावध्वर्युत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्नि'ति देशभेदविधानात् तत्र तत्र देशेऽष्टानां हविषां मारुत्याश्च अङ्गानुष्ठानं भिद्यते इति देशभेदेन तदावृत्तिः ।

तत्रैव गार्हपत्ये 'पत्नीसंयाजान् जुहोती'ति विहितानामापराग्निकहोमानां देशकालैक्येऽपि अध्वर्युप्रतिप्रस्थातृरूपकर्तृभेदादावृत्तिः । यत्र कर्तृत्वाधिष्ठानाभेदेऽपि कर्तृकारकभेदः तत्रापि प्रयोगभेदेन अङ्गानुष्ठानावृत्तिरेव । यथा 'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा', 'सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणे'त्यादिवाक्यविहितेषु देशकालफलभेदाप्रतीतावपि वामनानतैराग्नावैष्णवयागः कर्तव्यः, श्यामानतैः सौमापौष्णश्चरुर्यागः कर्तव्यः इत्येवं दक्षिणाव्यवस्थया तद्भेदात् कर्तृरूपं भिद्यत इति । तथा प्रतिप्रयोगभेदादङ्गानुष्ठानावृत्तिः । यानि तु कालभेदेन कर्तव्यानामपि प्रधानानां अकर्मकालाद्यङ्गानि तान्यगृह्यमाणविशेषत्वात् सर्वेषां तन्त्रं भवन्तीति । यथा ज्योतिष्टोमे, अग्नीषोमीयसवनीयानुबन्ध्यपशूनां 'दीक्षासु यूपं छिनत्ती'ति दीक्षाकालकर्तव्यत्वेन विहितो यूपः । यथा वा द्वादशाहे द्वादशानां सोमयागानां अहर्भेदेन कर्तव्यानां दीक्षोपसदादय इत्येवं रूपेण सापञ्चदं तन्त्रं एकादशे निरूपितम् । एवं तन्त्रनिरूपणार्थं प्रवृत्तस्यैकादशाध्यायस्य प्रथमपादे तन्त्रस्योपोद्धातो वर्णितः । द्वितीये तन्त्रावापौ सङ्क्षेपेणोक्तौ । तृतीये तन्त्रमुदाहरणबाहुल्येन प्रपञ्चितम् । चतुर्थे तथैवावापः प्रपञ्चितः ।

एवं सङ्ग्रहेण निरूपितमपि तन्त्रं बुध्यारोहकारणात् दृढतरसंस्काराधानकारणाच्च पुनर्निरूप्यते । प्रकृतिविकृतिगतपादार्थवर्गेऽनुष्ठेयेऽवधारिते तन्त्रं विचारणीयम् । एवं सति प्रयाजाद्यङ्गतन्त्रसिद्ध्यर्थं प्रथममिदं निरूप्यते । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यनेन प्रतीयमानं फलसाधनत्वं अन्योन्यानपेक्षाणामुत परस्परसहितानामिति । तत्र अन्योन्यनैरपेक्ष्येणैवाग्नेयोऽष्टाकपाल इत्यादि वाक्यो-

त्पन्नानामाग्नेयादिभावनानां फलाकाङ्क्षायां तथैव फले सम्बन्ध इति प्राप्ते फलमुद्दिश्याग्नेयादीनां विधानात् तद्गतस्यैकशब्दोपादानावगतसाहित्यस्य विवक्षितत्वात् सहितानामेव साधनत्वमिति सिद्धान्तः ।

एवमङ्गानामपि निरपेक्षैरेव समिदादिवाक्यैः क्रतूपकाराय साधनत्वेन विनियोगात् निरपेक्षाणामेव तत्साधनत्वं सान्नाय्यादीनां सौर्यादीनामिव ब्रह्मवर्चसादिसाधनत्वमिति प्राप्ते, नैषां वाक्येन विनियोगः, स्वरूपमात्रेण तत्र स्ववाक्यैरुपस्थितानां प्रकरणेन विनियोगः । तच्चापर्यायव्यापारमिति सहैव सर्वेषां विनियोगात् सहितानामेव क्रतूपकारसाधनत्वमिति सिद्धान्तः । कथं तर्हि अङ्गविधीनां विनियोजकत्वम् । तदभावे प्रकरणविनियोगस्यासम्भवात् । न तु स्वरूपेणैव विनियोजकत्वम् । प्रयोजकैकस्वभावत्वाद्विधेः । तस्य हि प्रवृत्तिपरत्वं स्वाभाविकम् । तच्च विधिविषयजन्यस्य फलस्य प्रवृत्तिनिष्टत्वाभावे न सम्भवतीति तत्फलभागित्वरूपमधिकारित्वं गम्यत इत्यधिकारिविधित्वं फलसाधनताबोधकत्वं विना प्रवर्तकत्वानुपपत्तेस्तद्बोधकत्वेन विनियोगविधित्वम् । प्रवृत्तिविषयविशेषज्ञानाभावे तत्र प्रवर्तकत्वानुपपत्तेः । अज्ञातज्ञापकत्वादुत्पत्तिविधित्वमपि । तत्र प्रयाजादिविधिभिः प्रयाजादिस्वरूपे तेषां सामान्यतः श्रेयःसाधनत्वे च बोधितेऽपि श्रेयोविशेषप्रतिपत्तिहेतुभूतप्रधानाकाङ्क्षालक्षणप्रकरणेन युगपदेव तत्साधनतावगमः । प्रयोजनं तु न स्वीक्रियते । प्रयाजादिविध्येकवाक्यतापन्नविधिनैव विधानात् । न चैवमङ्गविधिष्वर्थवादानुपयोगः । प्रधानविध्येकवाक्यतादशायां तदुपयोगात् । वायुपदस्यैव विध्येकवाक्यत्वे 'वायुर्वै क्षेपिष्ठे'त्यस्य । एवमन्यत्रापि विध्यन्तरलभ्येऽर्थे नैकस्य विधेस्तात्पर्यमिति द्रष्टव्यम् ।

तस्मात् प्रयाजादीनां सहितानामुपकारकत्वमिति तन्त्रसिद्ध्यर्थमेव चैकदेशकालकर्तृत्वमस्ति न वेति विचार्यते । तत्र 'समे दर्शपूर्णमासाभ्यां यजेत', 'पौर्णमास्यां पौर्णमास्यया यजेत', 'अमावास्यायां अमावास्यया यजेत', 'दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विज' इति श्रुतम् । तथा चातुर्मास्येषु 'प्राचीनप्रवणे वैश्वदेवेन यजेत', 'वसन्ते वैश्वदेवेन यजेत, 'चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज' इति । तत्र सन्देहः किमाग्नेयादीनां परस्परनिरपेक्षाणां देशकालादिभिः सम्बन्धः, उत परस्परसहितानामिति । तत्र परस्परनिरपेक्षाणामिति प्राप्तम् । आग्नेयादयो हि 'आग्नेयोऽष्टाकपाल' इत्यादिवाक्यैरुत्पन्नास्ताननूद्य देशकालादयो विधीयन्ते । तेषां चोद्दिश्यमानानां साहित्यमविवक्षितम् । तथाच भिन्नदेशकालादावनुष्ठीयमानानामाग्नेयादीनां तन्त्रमिति प्राप्तम् । सिद्धान्तस्तु— यद्यप्यत्र देशकालयोः कारकविभक्तिः श्रूयते । तथापि स्वभावादनुपादेयतयोद्देश्यभूतयोरुद्देश्यकर्मसम्बन्धायोगात् कर्मैवोपादेयमिति तद्गतं साहित्यं विवक्षितम् । कारणभूतानामेव च देशकालसम्बन्धावगमात् । परस्परसहितानां साङ्गानाञ्च कारणत्वावगमात् । निरपेक्षाणां च न देशादिसम्बन्धः । कर्तारस्तु यद्यप्युपादेयास्तथापि सेतिकर्तव्यताके

प्रयोगे ज्ञाते कथं तं करिष्यति किं ससहायः किमसहाय इत्यपेक्षायां 'शास्त्रफलं प्रयोक्तरि' (३-७-१८) इति यजमाने केवले प्राप्ते 'अन्यो वा स्यादि'ति (३-७-२०) वचनादध्वर्य्वादयः प्राप्यमाणाः साङ्गपरस्परसहितप्रयाजाङ्गं भवन्ति । देशकालयोरप्येवमेव प्रयोगाङ्गत्वम् । अत एव 'सायमग्निहोत्रं जुहोती'त्यादौ तृतीयाभावेऽपि साङ्गस्य तत्कालतासिद्धिः ।

इदं तु विचार्यते— पौर्णमास्यामित्यादिवाक्यस्य कथं कालविधानेनोपयोगः । 'यदाग्नेयो-ऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति', 'अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्, 'उपांशुयाजमन्तरा यजति', 'ऐन्द्रं दध्यमावास्यायामैद्रं पयोऽमावास्यायामि'त्युत्पत्तिवाक्यैरेव तत्र तत्र कालसम्बन्धावगमात् । तस्मादनर्थकमेतत् । अत्र केचिदाहुः । एतेन वाक्येन विनोत्पत्तिवाक्येषु प्रत्येकं कालश्रवणात् तस्य च साङ्गप्रधानविषयत्वादेकैकस्य कृत्स्नमिति कर्तव्यताजातमाग्नेयादेराव-र्तेत । सति त्वेतस्मिन्वाक्ये, पौर्णमास्यां ये यागा उत्पन्नास्ते सर्वेऽपि कारकविभक्तियुक्ताः कालं प्रति विधीयन्ते । उपादीयमानत्वाच्च तेषां साहित्यं विवक्षितम् । तस्मादेकैकं कृत्स्नेतिकर्तव्यताकं क्रियत इति । यत्तु तत्साहित्यमवगतं तद्बाध्येत । तेन तदबाधायेतिकर्तव्यतां प्रति साहित्यमेषां कर्तव्यम् । तस्मादनेनेतिकर्तव्यता तन्त्रेण भवतीत्ययमर्थः क्रियत इति । तदेतदयुक्तम् । वाक्यान्तरेणैवास्यार्थस्य लाभात् । तथाहि— 'समे दर्शपूर्णमासाभ्यां यजेते'त्यनेन इतरेतरयुक्ताः सेतिकर्तव्यताका यागा देशे विधीयन्ते । विधीयमानानां च साहित्यं विवक्षितम् । तद्यदीतिकर्तव्यता वर्तेत तत्साहित्यमवगतं बाध्येत । तस्मादस्मिन्वाक्ये सति सिद्धमङ्गानां तन्त्रत्वमिति पौर्णमास्यामित्याद्यनर्थकम् ।

अन्ये त्वाहुः । प्रधानस्य केवलोत्पत्तिवाक्ये पौर्णमासीकालोऽवगतः । न ह्युत्पत्तिवाक्ये करणी-भूतस्य कालसंयोगः, येनाङ्गयुक्तस्य तत्कालता स्यात् । तेनाङ्गानां अनवगमात् । तत्कालस्य पञ्च-म्यामपि प्रयोगः प्राप्नोति । तस्मादनेनाङ्गकालनियमः क्रियत इति । तदयुक्तम् । करणानुग्राहिण्या इतिकर्तव्यतायास्तत्कालत्वस्य तत्त्वेनैव सिद्धेः । तस्माद्वाच्यं प्रयोजनमिति ।

तत्राभिधीयते । 'समे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यनेन षडपि यागास्सेतिकर्तव्यताकाः इतरेतरयुक्ता देशं प्रति विधीयन्ते । तत्र षण्णामपि यागानां तन्त्रेणेतिकर्तव्यता प्राप्नोति । साहित्यस्य विवक्षितत्वात् । तस्मादीदृशमनुष्ठानं स्यात् । यदि पौर्णमासीसंज्ञकाः यागाः तेषामुत्पत्तिवाक्यवशेन पौर्णमास्यां क्रियमाणानां समीपे प्राक्तनान्यङ्गान्याज्यभागान्तानि करिष्यन्ते । पाठक्रमात् । एवममा-वास्यासंयुक्तानां समीपे अनूयाजादीनि पश्चात्तनान्यङ्गानि करिष्यन्ते । पाठक्रमात् । एवं तन्त्रेणाङ्गप्रयोगे प्राप्ते, 'पौर्णमास्यां पौर्णमास्या' इत्यादिना त्रिकं प्रत्यङ्गानामावृत्तिः प्रतिपाद्यते ।

अपि च 'समे दर्शपूर्णमासाभ्यां यजेते'त्यनेन इतरेतरयोगस्य विवक्षितत्वात् तन्त्रेणेतिकर्तव्यता प्राप्यते । तत्र पौर्णमास्यां सर्वं प्रधानमारब्धममावास्यायां समाप्यते । प्रातःसवनारब्ध इव सवनीयस्तृतीयसवने । तेन सर्वोऽयं प्रधानकाल इति पौर्णमास्यमावास्याकालयोरन्तराले यत्र क्वचिदपि कुर्वन्नङ्गानि समे दर्शपूर्णमासाभ्यामित्यस्य न किञ्चिद्बाधः । नापि फलवाक्यस्य, तत्रापीतरेतरयोगावगमात् । यदि परं पाठक्रमो मा बाधीत्यन्तराले न क्रियन्ते, किन्तु पुरस्तात् परस्ताच्च क्रियन्ते । न त्वनयोर्वचनयोरन्तराले काले अनुष्ठानेऽपि कश्चिद्बाधः । तस्मादनेन पौर्णमास्यामित्यादिना कालनियमो अन्तरालकाले क्वचिदनुष्ठानमुपेयते । आज्यभागान्तानां पौर्णमासीकालता अनूयाजादीनाममावास्याकालतेत्येवं व्यवस्थितकालता च बाध्यते । तस्मादनेन कालविधिः क्रियते । तस्मात् सिद्धमेकदेशकालकर्तृकत्वमाग्नेयादीनामिति । एवञ्च प्रयाजादितन्त्रं सिद्ध्यति । तथाहि । प्रधानानामङ्गानां च समानदेशकालकर्तृकत्वम् । तेन गृह्यमाणविशेषत्वात् सकृदेव प्रयुक्तेतिकर्तव्यता सर्वेषामुपकरोति । तस्मात्तन्त्रमङ्गानामनुष्ठानमिति । यत्र तु देशकालकर्तृभेदः तत्र न तन्त्रम् । किन्तु अङ्गावृत्तिरावापलक्षणा । यथा राजसूयेऽनुमत्यादयः इष्टयः सन्ति तत्र देशभेदः । यथा बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे ऐन्द्राग्न एकादशकपालो राजन्यस्य गृहे आदिश्चरुर्मनुष्याणां गृह इति, दर्शादित्रिकद्वये कालभेदः । वरुणप्रघासे कर्तृभेदः आपराग्निकाङ्गेषु । यत्रास्ति वचनं तत्राप्यावापः । यथा 'अग्नये पवमानाय निरूप्य पावकशुचिभ्यां बर्हिषि निर्वपेदि'ति सर्वमवदातम् ।

## अथ प्रसङ्गविचारः

द्वादशे प्रसङ्गो निरूपितः । अन्यार्थेनान्यस्य तत्प्रयुक्तिशक्तस्योपकारः प्रसङ्गः । यथा भोजनार्थं प्रथममागतस्याचार्यस्य कृते कृतेन सूपापूपादिना पश्चादागतस्य स्वयमाचार्यनैरपेक्ष्येणापि सूपापूपादिप्रयुक्तिशक्तस्य जामातुरुपकारः । यत्त्वन्यार्थेन स्वयं तत्प्रयुक्तिशक्तिरहितमुपक्रियते तन्न प्रासङ्गिकम् । किन्तु आचार्यकृतसूपाद्युपाक्रियमाणपरिचारकादिवत् तदुपजीव्यप्रयोजकम् । यथा दध्यानयनेनोपक्रियमाणं वाजिनं, पुरोडाशकपालं प्रति तुषोपवापस्य शेषित्वे सत्यपि न तत्प्रयुक्तिशक्तिः । पुरोडाशकपालेनेति सविशेषेणोपादानेनान्यप्रयुक्त्युपजीवित्वाविष्करणात् ।

स च प्रसङ्गस्त्रिविधः । अनुष्ठानप्रसङ्गः पदार्थप्रसङ्गः शास्त्रप्रसङ्गश्चेति । तत्र पश्वर्थप्रयाजाद्यनुष्ठानेन पशुपुरोडाशाद्युपकारोऽनुष्ठानप्रसङ्गः । सौमिक्या वेद्या सोमान्तर्गतेष्टिपशूनामुपकारः पदार्थप्रसङ्गः । 'यजनादिभिर्ब्राह्मणो धनमार्जयेदि'ति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्ष्यस्य अविशेषेण त्रैवर्णिकानामार्त्विज्यमाक्षेप्तुं प्रवृत्तस्योपकारः शास्त्रप्रसङ्ग इत्येवमादिरूपेण द्वादशे सापवादः प्रसङ्गो निरूपितः ।

**एवं प्रसङ्गनिरूपणार्थं प्रवृत्तस्य द्वादशाध्यायस्य प्रथमे पादे पशुधर्माणां पशुपुरोडाशे प्रसङ्गः । सौमिकवेदेरुत्तरकालीनकर्मसु प्रसङ्ग** इत्यादिविचारः कृतः । द्वितीये सवनीयपशोस्तन्त्रित्वं, न तु सवनीयपशुपुरोडाशानां विकृतिस्तन्त्रिणी न तु प्रकृतिरित्यादिविचारः । तृतीये वत्सत्वक्वासयोः समुच्चयः, आघारगतानाम् ऋजुत्वसन्ततत्वादीनां समुच्चय इत्यादिकं चिन्तितम् । चतुर्थे ऐन्द्रबार्हस्पत्य-याज्यानुवाक्ययुगलयोः विकल्पो न समुच्चय इत्यादिकं प्राधान्येन चिन्तितमिति । यद्यपि यथोक्तेभ्यः पदार्थेभ्योऽन्येऽप्यर्था बहवस्तत्तत्पादे विचारिताः । तेषां कथं तत्तत्पादार्थान्तभाव इति शङ्कास्ति, तथापि यथोक्ततत्तत्पादप्रतिपाद्यार्थेभ्योऽन्येष्वर्थेषु यथौचित्यं कश्चिदुपोद्घातः कश्चिदपवादः कश्चित्तु प्रसङ्गपतित इत्येवं तत्तत्पदार्थान्तर्भाव उन्नेयः इति शङ्कापरिहारो द्रष्टव्यः ।

अयमेव प्रसङ्गः सुग्रहत्वसिद्ध्यर्थं यथायोगं विशिष्य सप्रमाणकः पुनर्निरूप्यते । उक्तरीत्या एकदेशकालकर्तृकाण्यङ्गानि तादृशानामेव बहूनामपि सकृदनुष्ठितमित्येव उपकारकाणीति सिद्धे, उद्देश-विशेषानादरेण देशकालाद्यविशेषादेव सकृत्प्रयोगसिद्ध्यर्थं प्रसङ्गो विचार्यते । अस्त्यग्नीषोमीयः पशुः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इति । तत्र श्रूयते 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपती'ति । तत्र सन्देहः । किं तस्य पाशुकेभ्योऽङ्गेभ्यः पृथगङ्गानि प्रयोक्तव्यानि उत यानि पशूद्देशेन कृतान्यङ्गानि तान्येव तस्याप्युपकुर्वन्ति इति । तत्सिद्ध्यर्थं प्रसङ्गोऽस्ति न वेति विचार्यते । परार्थमनुष्ठितस्यापि परोपकारत्वं प्रसङ्गः । अत एव भाष्यकारेणोक्तं 'साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकम् । एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधावि'ति साधारण्यमनेकोद्देशेनानुष्ठीयमानत्वम् । परार्थे त्वप्रयोजक इति विधेः प्रयोजकताशक्त्यभावेऽन्यार्थानुष्ठेयाङ्गोपजीवने अप्रयोजक इत्यर्थः । एवमित्यस्य तु, सत्येव प्रयुक्तिसामर्थ्ये विधौ, परार्थानुष्ठिताङ्गानां लाघवेनोपजीवनं प्रसङ्ग इति, तदेवं परार्थानुष्ठितस्यापि परोपकारकत्वरूपः प्रसङ्गोऽस्ति न वेति सन्देहे नास्तीति पूर्वः पक्षः । तथाहि । द्विविधानि कर्माणि, एकविधिविहितानि भिन्नविधिविहितानि इति । तत्रैकविधिविहितानां भवतु समान-तन्त्रत्वं, भिन्नविधिविहितानां न समानतन्त्रता । पशुर्हि सान्नाय्यविध्यन्तग्राही, पशुपुरोडाशयागस्तु अग्नीषोमीयान्तः तथा चेतरेतरनिरपेक्षयथाप्राप्ताङ्गयुक्तयोस्तयोर्भिन्नविधिबोधितत्वाद्भेदेनैवाङ्गानि कर्त-व्यानीति न पशुतन्त्रं पुरोडाशस्योपकारकम् । न च यद्यपि साङ्गपुरोडाशस्य वचनमस्ति, तथापि प्रयोजनाभावान्न पृथगङ्गानि क्रियन्ते, उपकारायैतानि प्रयुज्यन्ते । अत्र पश्वर्थैरेवोपकारः सिद्ध्यति । यथा लोके प्रासादार्थेनारोपितस्यापि दीपस्य राजमार्गोपकार इति वाच्यम् । लोके उपकारस्य प्रत्यक्षगम्यत्वात् प्रकृते तूपकारस्य शास्त्रगम्यत्वेन यथाशास्त्रं कल्पनात् ।

किञ्च गुणकालविकारादपि न प्रसङ्गः । तथाहि— 'एकादशप्रयाजान् यजति, तिष्ठन्तं पशुं प्रयजती'ति वचनादेकादेशत्वविशिष्टानां तिष्ठत्पशुकालानां च प्रयाजानां ''पृषदाज्येनानूयाजान्यजति एकादशानूयाजान्यजती''ति वचनाच्च पृषदाज्यगुणकालानां तावत्सङ्ख्यानामनूयाजानां पशूपकारकत्वमवगतम् । पशुपुरोडाशस्य तु यथाप्रकृति हविरासादनोत्तरकाले पञ्चसङ्ख्यागुणकैः प्रयाजैः, केवलाज्यगुणकैः त्रिसङ्ख्यैश्चानूयाजैरुपकर्तव्यमिति तत्र भेद इति प्राप्तम् ।

तत्राभिधीयते । अस्ति प्रसङ्गः, तस्य विषयो निरूप्यते । अन्यस्य तन्त्रे प्रवृत्ते यदन्यत्तत्तुल्यधर्मकमापतति कर्म तत् प्रसङ्गस्य विषयः । यथा पशोस्तन्त्रे प्रवृत्ते आपतितः पशुपुरोडाशः । तत्र हि तदितिकर्तव्यता प्रसज्यते । तथाहि । पशुपुरोडाशयागेन पशूपकारं भावयेदित्यवगते कथमिति यागगतव्यापाराख्यप्रकारापेक्षायां प्रयाजादिजन्यदृष्टादृष्टोपकारवत्तासंपादनात्मकस्य तस्य सादृश्यवशेन दार्शपूर्णमासिकाग्नीषोमीयस्य चोदकेन विनियोगः । एवं पशावपि । तदुत्तरकालं च प्रयोगवचनेनोपसङ्ग्रहः । उपसङ्ग्रहो नाम उप समीपे, संशब्दोक्तेन नानाविधाङ्गप्रकारस्य साकल्येन, ग्रहः करणमनुष्ठापनमिति यावत् । स चोपसङ्ग्रहः पौराडाशिकेन प्रयोगवचनेन न क्रियते । पाशुकेन प्रयोगवचनेन तस्य प्रकरणस्य समीपे कृतत्वात् । तस्मात्पौरोडाशिकः प्रयोगवचनोऽत्र लुप्यते इति प्रसङ्गः । न च प्रयोगवचनलोपे तदधीनस्य कारणांशस्याप्यननुष्ठानप्रसङ्गः इति वाच्यम् । न हि वयं प्रयोगवचनस्वरूपस्य लोपं ब्रूमः किन्तु यस्तस्य प्रकारसामीप्यकरणांशः स लुप्यत इति । कथं पुनरिदमवगम्यते ? पाशुकप्रयोगवचनः प्राकृतं प्रकारं पुरोडाशस्य समीपे करोतीति ।

उच्यते 'अग्नीषोमीयं पशुमालभेत' इत्यस्मादेव वचनात् । तथाहि । अस्य वाक्यस्य तावदयमर्थः । भावयेत् किं ज्योतिष्टोमोपकारमग्नीषोमीयापूर्वमित्यर्थः । केन पशुयागेन । कथमित्यंशेन प्रयाजादीतिकर्तव्यता सम्बध्यते । तत्र यस्मिन्नेव क्षणे ज्योतिष्टोमोपकारो भवन् कर्तृत्वं प्रतिपद्यते, तस्मिन्नेव क्षणे करणेन पशुयागेन भाव्यते, तस्मिन्नेव क्षणे इतिकर्तव्यता करणमनुगृह्णाति सम्बध्यते । तथाच त्रयाणामेषां तुल्यकालत्वं भवन् ज्योतिष्टोमोपकाः यागेनेष्टं भावयेदिति । यदि हि भूते भविष्यति वा भाव्ये करणेतिकर्तव्यता सम्बध्यते । ततस्तयोस्तेन सह सम्बन्धः न स्यादेवं करणेतिकर्तव्यतयोरपि । तस्मात् तुल्यकालता तत्र यद्यप्युपकारस्य भावस्य कालो नावधार्यते तथापि त्रयाणामेककालसम्बन्धात् करणेतिकर्तव्यता कालेन परिच्छिद्यते । यस्तयोः कालः स तस्यापीति सहितानि चाङ्गानीति इतिकर्तव्यतेत्युक्तम् । ततश्च यावत्पशोरन्त्यमङ्गं क्रियते तावत्पूर्वाण्यङ्गानि स्वावान्तरोपकाररूपद्वारेणावतिष्ठन्ते । पशोश्च दीर्घकालत्वात् तन्मध्यपाती पुरोडाशः पशुकेन प्रयोगवचनेन समीपे कृतान् बर्हिस्तरणादिदृष्टोपकारान् प्रयाजादिजन्यादृष्टोपकारांश्च लाघवेन गृह्णाति, न तु पृथक् प्रयो-

जयति । अन्यार्थैरेवात्मनः तद्वत्तासिद्धेः । न हि स्वोद्देशेनैवानुष्ठितैस्तद्वत्तया भवितव्यम् । उद्देशस्याऽनङ्गत्वात् । न चैवमवघातादीनां अननुष्ठानप्रसङ्गः । पौराडाशस्य विधेरप्रयोजकत्वादिति वाच्यम् । अंश एव तस्य बाधात् । पाशुकेन प्रयोगवचनेनाप्राप्तानुष्ठानानां प्रयुक्तावुपपादकाभावात् । न च गुणकालविरोधाद्यथाक्तोपकारासिद्धिः । प्राकृतसङ्ख्याद्रव्यापायेऽप्युपकारस्य भेदाभावात् । गुणस्यापि कार्यार्थत्वात् । कार्यस्य चान्यतोऽपि लब्धस्य सत्त्वात् । तस्मान्न कश्चिद्दोषः इति प्रसङ्गसिद्धिरविकलेति सङ्क्षेपः ।

नन्वेवमपि सन्त्वध्यायानां पादानां चार्था व्यवस्थिताः । तदीयस्तु क्रमः कथमवगन्तव्य इति चेत्, उच्यते । एकस्मिन्नध्याये समाप्ते सति अध्यायान्तरारम्भे तयोरध्याययोः पूर्वोक्तरीत्या भाव एव ज्ञातुं शक्यते । तथाहि— प्रथमाध्यायगतानां पादानां पूर्वोक्तरीत्या भावे उदाहृते सति तद्व्युत्पत्त्या पादान्तरेष्वपि स तावदुत्प्रेक्षितुं शक्यः धर्मे जिज्ञास्यत्वेन प्रतिज्ञाते विधिवाक्यं साक्षात्प्रमाणमिति तद्विचारः प्रथमे पादे युक्तः । अर्थवादानां विध्यपेक्षितप्राशस्त्यसमर्पकतया विध्येकवाक्यत्वेन प्रामाण्यात् तद्विचारस्य तदनन्तरभावित्वं, स्मृतिवाक्यानां सार्थवादविधिरूपवेदमूलत्वेन प्रामाण्यात् तद्विचारस्यार्थवादविचारोत्तरभावित्वं, नामधेयानां विधिवाक्यैकदेशत्वेन विचार्यत्वेन प्रथमप्राप्तविधिवाक्यविचारोत्तरकालीनविचारास्पदतया तद्विचारस्य तदनन्तरभावित्वम्, अनेनैव न्यायेन उत्तराध्यायगतपादानां परस्परक्रमः उन्नेयः इति दिक् ।

इत्थं शास्त्रस्य अध्यायानां पादानां च क्रमविशेषविशिष्टानामसाधारणप्रतिपाद्यार्थनिरूपणस्येदं फलम्, शास्त्रादिप्रतिपाद्यार्थसम्बन्धतया अधिकरणे योजिते सति तस्याधिकरणस्य शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्चेति तिस्रः सङ्गतय ऊहिता भवन्ति । तद्यथा— प्रथमाध्यायप्रथमपादस्य द्वितीयाधिकरणे धर्मस्य लक्षणप्रमाणराहित्यं पूर्वपक्षीकृत्य तत्सद्भावप्रतिपादनेन तस्याधिकरणस्य धर्मसम्बन्धितया धर्मशास्त्रविचारे सङ्गतिः, प्रमाणविचाररूपत्वात् प्रमाणाध्याये सङ्गतिः, विधिवाक्यानां प्रमाणत्वेनोपन्यासेन प्रथमपादे सङ्गतिः इति । यथैवं तत्सङ्गतित्रयमूहितं तथा पूर्वोत्तराधिकरणयोः परस्परमवान्तरसङ्गतिरूहनीया । सा च अवान्तरसङ्गतिरनेकरूपा । आक्षेपसङ्गतिः दृष्टान्तसङ्गतिः प्रत्युदाहरणसङ्गतिः प्रासङ्गिकसङ्गतिः उपोद्घातसङ्गतिः आपवादिकी सङ्गतिश्चेत्येवमादिरूपा । तासामाक्षेपादीनां सङ्गतीनां एवमुदाहरणं द्रष्टव्यम् ।

प्रथमेऽध्याये प्रथमपादस्य प्रथमाधिकरणे विचारशास्त्रं विधेयमिति सिद्धान्तः । अर्थज्ञानहेतावध्ययने नियमविधेः सम्भवादिति तद्युक्तिः । द्वितीयाधिकरणे धर्मे लक्षणं प्रमाणं च नास्तीति पूर्वः पक्षः । लौकिकाकारहीनत्वात् प्रत्यक्षाद्यप्रवृत्तेश्चेति तद्युक्तिः । तया युक्त्या धर्मस्य लक्षणप्रमाणराहित्ये

सति नरविषाणसमो धर्मः इति तद्विचारशास्त्रस्यास्य विधेयत्वमनुपपन्नमित्याक्षेपिकी सङ्गतिः । यथा प्रथमाधिकरणे नियमविधिसम्भवेन हेतुना शास्त्रस्य विधेयत्वमुक्तं, तथा द्वितीयाधिकरणे लौकिकाकारहीनत्वात् प्रत्यक्षाद्यप्रवृत्तिरूपेण हेतुना धर्मे लक्षणप्रमाणराहित्यं वक्तव्यमिति दृष्टान्तसङ्गतिः । यथा प्रथमाधिकरणे सिद्धान्ते पूर्वोक्तयुक्तिर्दृश्यते । तथा द्वितीयाधिकरणे काञ्चिद्युक्तिं न पश्यामः इति प्रत्युदाहरणसङ्गतिः । एतेन दृष्टान्तप्रत्युदाहरणसङ्गतिरपि मन्दबुद्धिभिः सर्वत्रोत्प्रेक्षितुं शक्यते । पञ्चमाधिकरणे विधिवाक्यस्य निरपेक्षत्वात् प्रामाण्यं वर्णितम् । तस्य वाक्यस्य शब्दार्थयोर्मध्ये शब्दकोटिनिविष्टत्वात् वाक्यप्रसङ्गेन शब्दनित्यत्वं षष्ठाधिकरणे वर्ण्यत इति प्रासङ्गिकी सङ्गतिः । सप्तमाध्यायस्य चतुर्थे पादे द्वितीयाधिकरणे सौर्यादिविकृतिभेदेषु वैदिकमङ्गजातमतिदेष्टव्यम् । तदुपयोगित्वेन प्रथमाधिकरणे धर्मसापेक्षत्वं साधितम् । तत्र प्रथमाधिकरणे उपोद्घातसङ्गतिः । सेयमुत्तराधिकरणेन पूर्वाधिकरणस्योपोद्घातसङ्गतिः । प्रथमाध्यायतृतीयपादस्य प्रथमाधिकरणे अष्टकास्मृतेः प्रामाण्यमुक्तम् । द्वितीयाधिकरणे सर्ववेष्टनस्मृतेः पूर्ववत्प्राप्तं प्रामाण्यमपोद्यते । सेयमापवादिकी सङ्गतिः । अनया दिशा सर्वत्र सङ्गतिरूह्या ।

नन्वेतन्न्यायाध्वदीपिकातननं न्यायाध्वगामिनां गतिसम्पादनमुखेन तदैव सफलं स्यात्, यद्येतत्प्रकरणमूलभूतं 'अथातो धर्मजिज्ञासे'त्यादि-'अन्वाहार्ये च दर्शनादि'त्येतदन्तन्यायनिबन्धनात्मकं धर्ममीमांसाशास्त्रं विहितं स्यात् । न हि काकदन्तादिसङ्ख्यानिर्णयप्रयोजकं न्यायनिबन्धनं केनापि प्रेक्षावता सफलतयोपादीयते । तदाहुः ।

**काकस्य कति वा दन्ताः मेषस्याण्डं कियत्फलम् ।**
**गर्दभे कति रोमाणि ह्येषा मूर्खविचारणा ॥** इति ।

तस्मादस्य शास्त्रस्य प्रवृत्तौ प्रेक्षावदुपादेयत्वसिद्ध्यर्थं कारणं वाच्यम् । न हि प्रेक्षावतामेतच्छास्त्रानुसरणं काकदन्तादिविचारानुसरणम्, तुल्यन्यायेन तद्वदस्य प्रवृत्तिरिति उच्येतेति चेत् । अत्राहुः । इह हि ग्रन्थे सकलपुरुषार्थहितावाम्नायराशौ विशिष्टकुलसम्पन्नमदभ्रगर्भाधानाद्यतिशयशालिनमुपनीतं त्रैवर्णिकमधिकृत्य श्रूयते । "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्यध्ययनविधिः । न चात्र णिचः श्रवणान्न पश्यामोऽध्ययनविधिमिति वाच्यम् । अष्टवर्षतया अप्रबुद्धः पुत्रः शुभलोकार्थिना पित्रैवानुशास्य इत्यर्थज्ञापनाय णिच उपयोगेन तस्य तद्वचनेऽध्ययनविधायकत्वापरिपन्थितत्वात् । वस्तुतस्तु 'ब्रह्मचार्युपाकृत्याधीयीते'ति स्मरणात् 'आचार्याधीनो वेदमधीष्वे'ति प्रैषाच्चाध्ययनविधिरेवायमित्यवसीयते । अतोऽष्टवर्षो ब्राह्मणमुपगच्छेत् सोऽधीयीतेति वचनव्यक्तिरिति तत्र किमनुपपन्नम् । परमार्थतस्तु 'स्वाध्यायोऽध्येतव्य' इति स्पष्टोऽध्ययनविधिरुपलभ्यते । यद्यपि 'तयोरेव

कृत्यक्तखलार्थाः' इति भावकर्मणोरेव तव्यप्रत्ययः स्मर्यते । तथाप्यविगीतानादिवृद्धव्यवहारात् विधौ स्मरणाच्चात्र तव्यप्रत्ययो विद्ध्यर्थः इति ।

नन्वस्त्वेतावता अध्ययनं विहितम् । मीमांसाशास्त्रस्य विहितत्वे किमायातम् । न हि मीमांसाशास्त्रस्य विधानं कथं इति पृष्टे स्वाध्यायाध्ययनस्य विहितत्वोपन्यास उपयुक्तः । 'आम्रान् पृष्टः कोविदारानाचष्टे' इति न्यायादिति चेन्न । अध्ययनविधेरर्थज्ञानफलत्वेन तस्येदमित्थमेवेत्यवधारणरूपस्य विनान्वयानुसन्धानरूपविचारमनिष्पत्तेः, तदर्थं न्यायनिबन्धनरूपशास्त्रस्यावश्यानुसरणीयतया, तस्यापि न्यायानुसन्धानस्यैवाध्ययनविधिव्यापारविषयत्वावश्यंभावादिति । तथा चोक्तरूपशास्त्रस्य प्रवृत्तौ विहितत्वरूपकारणसद्भावाद्विहितानुष्ठानस्य साफल्यनियमात् सफलतच्छास्त्रमूलतया तन्यमानन्यायाध्वदीपिकापि सफलेति न्यायाध्वगामिगतिसिद्ध्यर्थं वेदेतिकर्तव्यतारूपमीमांसाशास्त्रमूलकन्यायाध्वदीपिकारचनमपि मदीयं न निष्फलमिति सर्वमनवद्यमिति ।

नन्वेतेनोक्तप्रकारेण मीमांसाशास्त्रस्यास्य वेदार्थनिर्णायकन्यायानुसन्धानरूपविचारप्रयोजनकतन्निबन्धनात्मकस्य प्रेक्षावदुपादेयत्वरूपारम्भणीयत्वसिद्ध्यर्थं विषयप्रयोजनाधिकारितत्सम्बन्धबोधनाय प्रवृत्तमिदम् 'अथातो धर्मजिज्ञासे'ति तच्छास्त्रादिमसूत्रमध्ययनविधिमूलमित्यर्थाद्वर्णितं पर्यवसितं तत्तदा शोभते, यद्यध्ययनविधिरर्थज्ञानपर्यन्तः स्यात् । तदेव कथमिति चेत् । उच्यते । 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनभावना विधिसंयोगात् समीहितं भाव्यमपेक्षमाणा सन्निहितमध्ययनं स्वाध्यायं चासमीहितत्वादुपेक्ष्यान्यद्भाव्यमपेक्षते । तत्र किं पदपदार्थसंवित्प्रणाडिकयाऽध्ययनादुपजायमानं दृष्टं फलवत्तदुत्तरकर्मानुष्ठानौपयिकत्वात् समीहितं, वाक्यार्थज्ञानमेवास्य भाव्यमुत रात्रिसत्रन्यायेन 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवती'त्याद्यर्थवादोपस्थितं तत्क्रतुफलावाप्त्याख्यं फलम्, अथवा विश्वजिन्न्यायेन साक्षात्स्वर्ग एव भाव्यः ।

तत्र वाक्यार्थज्ञानफलत्वे तत्साधनत्वस्याध्ययने इष्टतया विध्यानर्थक्यापातात् अवघातवन्नियमार्थो विधिरिति, अर्थज्ञानस्वरूपे नियमासम्भवेनायोगात्, अन्यतोऽपि तदुत्पत्तेरनुभविकत्वात्, क्रतौ च नियमस्य अक्रत्वार्थतया बाधितत्वात्, आधानवदनारभ्याधीतत्वेनाध्ययनस्य अक्रत्वर्थत्वादुक्तार्थवादस्य च धारणाध्ययनविषयत्वात्, आद्ये ग्रहणाध्ययने तदभावाद्विश्वजिन्न्यायात् स्वर्ग एव अध्ययनविधिभावेनाभाव्य इति वेदस्यौत्सर्गिकार्थपरत्वबलेन कदाचिद्विविक्षितार्थत्वसम्भवेऽपि तद्विचारस्यावैधतया अवश्यकर्तव्यत्वासिद्धौ 'अधीत्य स्नायादि'ति वैधस्नानोत्कर्षकल्पनात्, अध्ययनानुपदमेव नावश्यकर्तव्या मीमांसेति । यद्यप्युक्तरीत्या मीमांसायास्तदनुपदेवावश्यकर्तव्यतायां नाप्यध्ययनविधिः कारणं भवितुमर्हतीति न मीमांसाशास्त्रस्यारम्भणीयत्वे प्रयोजनादिसद्भावप्रति-

पादकमिदं 'अथातो धर्मजिज्ञासे'ति तच्छास्त्रादिमसूत्रं नाध्ययनविधिमूलं भवितुमर्हति । तथाऽप्यध्ययनस्य फलाकाङ्क्षायां दृष्टे सम्भवत्यदृष्टा कल्पना इति अर्थावबोध एवाध्ययनभावनायाः फलं कल्प्यते। अर्थज्ञानस्य त्विष्टत्वमध्ययनसाध्यत्वं स्वरूपं चोपस्थितं क्लृप्तं च । तादर्थ्यमात्रमध्ययनस्य कल्प्यम्। अदृष्टार्थत्वे तु सर्वं अप्रतिपन्नमेव कल्प्यमिति गौरवम् । न च विध्यानर्थक्यम् । नियमविधित्वाभ्युपगमात् । न चाक्रत्वर्थतया नियमविधित्वानुपपत्तिः । अक्रत्वर्थत्वेऽप्यार्जन इव नियमविधित्वसम्भवात्। प्राभाकरेणाक्रत्वर्थत्वेऽप्यार्जने नियमविधित्वस्वीकाराच्च । न चोक्तानुपपत्तिः । न ह्यध्ययनेनैव क्रतुरिति तत्र नियमार्थः । किन्त्वध्ययनसम्पादितमेवाऽर्थज्ञानं क्रतुसाधनमिति । न च क्रतुप्रकरणाभावे कथं क्रतुना विशेषितमर्थज्ञानमुद्दिश्य अध्ययननियमनं, कथं वा तथा सत्यक्रत्वर्थत्वावधारणं, क्रतुना विशेषणे क्रतावपि तादर्थ्यपर्यवसानादिति वाच्यम् । न ह्युक्तनियमो वाक्यार्थ एवेति ब्रूमः, किन्तु अयोगव्यवच्छेदरूपवाक्यार्थज्ञानसाधनत्वे शब्दादध्ययनस्यावगताध्ययनं विनाऽप्यर्थज्ञानसम्भवात् तद्बाधप्राप्तौ च तत्परिहाराय विध्यानर्थक्यपरिहाराय चाध्ययनसाध्यतावच्छेदकः फलवदुत्तरकर्मानुष्ठानसाधनतावच्छेदकश्च विशेषः शक्तिरूपो नियमादृष्टाभिधानः कल्प्यते । ततश्चाध्ययनसम्पादितमेवार्थज्ञानं फलवत्कर्मानुष्ठानहेतुः इति पर्यवस्यति । अन्यथा अध्ययनविधितः फलवदर्थावबोधसाधनत्वेन स्वाध्यायराशेरनवगते अवघातादावपि कुतो नियमविधिवार्ता । विध्यानर्थक्येऽपि क्षतेरभावात् । न हि सर्वेऽपि विधयः फलवदर्थावबोधार्था इति अयमर्थोऽध्ययनविधिं विना अन्यतः सिद्ध्यति । ततोऽप्युक्तक्रमेण नियमविधित्वादृते वा निष्पद्यते । अत एव 'स्वाध्यायोऽध्येतव्य' इति कर्मणि तव्यश्रवणात् स्वाध्यायस्य प्राप्यकर्मतया स्वाध्यायाक्षररूपावधारणमेवाध्ययनविधिफलं युक्तम् । न हि वाक्यार्थज्ञानस्यापि स्वर्गादिवन्मुख्यप्रयोजनत्वम् । गौणप्रयोजनत्वं च स्वाधायाक्षरग्रहणेऽपि सममिति प्रथमप्राप्तं तदुलङ्घ्य वाक्यार्थज्ञानपर्यन्तधावनानौचित्यात् । अन्यथा तदप्युलङ्घ्य क्रतुः स्वर्गो वा फलं किं न स्यात् । एवञ्च अन्यनिरपेक्षस्वतन्त्रस्वाध्यायाक्षरोच्चारणकारणतदक्षरावधारणरूपतदक्षरावाप्तिरेवाध्ययनफलमापन्नमिति नाध्ययनविधिवेदार्थनिर्णायकन्यायानुसन्धानरूपमीमांसाप्रवृत्तौ कारणमिति तदर्थं तन्निबन्धनरूपशास्त्रं प्रेक्षावदुपादेयमिति प्रतिपादयितुं प्रवृत्तं 'अथातो धर्मजिज्ञासे'ति शास्त्रादिमसूत्रं कथमध्ययनविधिमूलमिति न जानीम इति शङ्का निरास्ता । साङ्गवेदाध्ययनसम्पादितमेवार्थज्ञानं फलवदुत्तरकर्माङ्गमित्यस्यासिद्धौ तादृशार्थज्ञानरूपविद्याविरहान्न शूद्राणां क्रत्वधिकार इत्यपशूद्राधिकरणविरोधापातात् । तथासति शूद्राधिकारस्यापि तत्र दुर्वारतापातात् । न च अध्ययनसम्पादितमन्त्राक्षरस्वरूपज्ञानाभावादेव न तदधिकारः, मन्त्राधिकारणे मन्त्राणामपि दृष्टार्थत्वसाधनेनार्थज्ञान एवोपयोगाभिधानात् । तस्य चान्यतोऽपि निष्पत्तिसम्भवादधीतमन्त्रसम्पादितमेवार्थज्ञानं कर्माङ्ग-

**कृत्यक्तखलार्थाः**' इति भावकर्मणोरेव तव्यप्रत्ययः स्मर्यते । तथाप्यविगीतानादिवृद्धव्यवहारात् विधौ **स्मरणाच्चात्र तव्यप्रत्ययो विद्ध्यर्थः** इति ।

**नन्वस्त्वेतावता अध्ययनं** विहितम् । मीमांसाशास्त्रस्य विहितत्वे किमायातम् । न हि मीमांसाशास्त्रस्य विधानं कथं इति पृष्टे स्वाध्यायाध्ययनस्य विहितत्वोपन्यास उपयुक्तः । 'आम्रान् पृष्टः कोविदारानाचष्टे' इति न्यायादिति चेन्न । अध्ययनविधेरर्थज्ञानफलत्वेन तस्येदमित्थमेवेत्यवधारणरूपस्य विनान्वयानुसन्धानरूपविचारमनिष्पत्तेः, तदर्थं न्यायनिबन्धनरूपशास्त्रस्यावश्यानुसरणीयतया, तस्यापि न्यायानुसन्धानस्यैवाध्ययनविधिव्यापारविषयत्वावश्यंभावादिति । तथा चोक्तरूपशास्त्रस्य प्रवृत्तौ विहितत्वरूपकारणसद्भावाद्विहितानुष्ठानस्य साफल्यनियमात् सफलतच्छास्त्रमूलतया तन्यमानन्यायाध्वदीपिकापि सफलेति न्यायाध्वगामिगतिसिद्ध्यर्थं वेदेतिकर्तव्यतारूपमीमांसाशास्त्रमूलकन्यायाध्वदीपिकारचनमपि मदीयं न निष्फलमिति सर्वमनवद्यमिति ।

नन्वेतेनोक्तप्रकारेण मीमांसाशास्त्रस्यास्य वेदार्थनिर्णायकन्यायानुसन्धानरूपविचारप्रयोजनकतन्निबन्धनात्मकस्य प्रेक्षावदुपादेयत्वरूपारम्भणीयत्वसिद्ध्यर्थं विषयप्रयोजनाधिकारितत्सम्बन्धबोधनाय प्रवृत्तमिदम् 'अथातो धर्मजिज्ञासे'ति तच्छास्त्रादिमसूत्रमध्ययनविधिमूलमित्यर्थाद्वर्णितं पर्यवसितं तत्तदा शोभते, यद्यध्ययनविधिरर्थज्ञानपर्यन्तः स्यात् । तदेव कथमिति चेत् । उच्यते । 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनभावना विधिसंयोगात् समीहितं भाव्यमपेक्षमाणा सन्निहितमध्ययनं स्वाध्यायं चासमीहितत्वादुपेक्ष्यान्यद्भाव्यमपेक्षते । तत्र किं पदपदार्थसंवित्प्रणाडिकयाऽध्ययनादुपजायमानं दृष्टं फलवत्तदुत्तरकर्मानुष्ठानौपयिकत्वात् समीहितं, वाक्यार्थज्ञानमेवास्य भाव्यमुत रात्रिसत्रन्यायेन 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवती'त्याद्यर्थवादोपस्थितं तत्क्रतुफलावाप्त्याख्यं फलम्, अथवा विश्वजिन्न्यायेन साक्षात्स्वर्ग एव भाव्यः ।

तत्र वाक्यार्थज्ञानफलत्वे तत्साधनत्वस्याध्ययने इष्टतया विध्यानर्थक्यापातात् अवघातवन्नियमार्थो विधिरिति, अर्थज्ञानस्वरूपे नियमासम्भवेनायोगात्, अन्यतोऽपि तदुत्पत्तेरनुभविकत्वात्, क्रतौ च नियमस्य अक्रत्वार्थतया बाधितत्वात्, आधानवदनारभ्याधीतत्वेनाध्ययनस्य अक्रत्वर्थत्वादुक्तार्थवादस्य च धारणाध्ययनविषयत्वात्, आद्ये ग्रहणाध्ययने तदभावाद्विश्वजिन्न्यायात् स्वर्ग एव अध्ययनविधिभावेनाभाव्य इति वेदस्यौत्सर्गिकार्थपरत्वबलेन कदाचिद्विविक्षितार्थत्वसम्भवेऽपि तद्विचारस्यावैधतया अवश्यकर्तव्यत्वासिद्धौ 'अधीत्य स्नायादि'ति वैधस्नानोत्कर्षाकल्पनात्, अध्ययनानुपदमेव नावश्यकर्तव्या मीमांसेति । यद्यप्युक्तरीत्या मीमांसायास्तदनुपदेवावश्यकर्तव्यतायां नाप्यध्ययनविधिः कारणं भवितुमर्हतीति न मीमांसाशास्त्रस्यारम्भणीयत्वे प्रयोजनादिसद्भावप्रति-

पादकमिदं 'अथातो धर्मजिज्ञासे'ति तच्छास्त्रादिमसूत्रं नाध्ययनविधिमूलं भवितुमर्हति। तथाऽप्यध्ययनस्य फलाकाङ्क्षायां दृष्टे सम्भवत्यदृष्टा कल्पना इति अर्थावबोध एवाध्ययनभावनायाः फलं कल्प्यते। अर्थज्ञानस्य त्विष्टत्वमध्ययनसाध्यत्वं स्वरूपं चोपस्थितं क्लृप्तं च। तादर्थ्यमात्रमध्ययनस्य कल्प्यम्। अदृष्टार्थत्वे तु सर्वं अप्रतिपन्नमेव कल्प्यमिति गौरवम्। न च विध्यानर्थक्यम्। नियमविधित्वाभ्युपगमात्। न चाक्रत्वर्थतया नियमविधित्वानुपपत्तिः। अक्रत्वर्थत्वेऽप्यार्जन इव नियमविधित्वसम्भवात्। प्राभाकरेणाक्रत्वर्थत्वेऽप्यार्जने नियमविधित्वस्वीकाराच्च। न चोक्तानुपपत्तिः। न ह्यध्ययनेनैव क्रतुरिति तत्र नियमार्थः। किन्त्वध्ययनसम्पादितमेवाऽर्थज्ञानं क्रतुसाधनमिति। न च क्रतुप्रकरणाभावे कथं क्रतुना विशेषितमर्थज्ञानमुद्दिश्य अध्ययननियमनं, कथं वा तथा सत्यक्रत्वर्थत्वावधारणं, क्रतुना विशेषणे क्रतावपि तादर्थ्यपर्यवसानादिति वाच्यम्। न ह्युक्तनियमो वाक्यार्थ एवेति ब्रूमः, किन्तु अयोगव्यवच्छेदरूपवाक्यार्थज्ञानसाधनत्वे शब्दादध्ययनस्यावगताध्ययनं विनाऽप्यर्थज्ञानसम्भवात् तद्बाधप्राप्तौ च तत्परिहाराय विध्यानर्थक्यपरिहाराय चाध्ययनसाध्यतावच्छेदकः फलवदुत्तरकर्मानुष्ठानसाधनतावच्छेदकश्च विशेषः शक्तिरूपो नियमादृष्टाभिधानः कल्प्यते। ततश्चाध्ययनसम्पादितमेवार्थज्ञानं फलवत्कर्मानुष्ठानहेतुः इति पर्यवस्यति। अन्यथा अध्ययनविधितः फलवदर्थावबोधसाधनत्वेन स्वाध्यायराशेरनवगते अवघातादावपि कुतो नियमविधिवार्ता। विध्यानर्थक्येऽपि क्षतेरभावात्। न हि सर्वेऽपि विधयः फलवदर्थावबोधार्था इति अयमर्थोऽध्ययनविधिं विना अन्यतः सिद्ध्यति। ततोऽप्युक्तक्रमेण नियमविधित्वादृते वा निष्पद्यते। अत एव 'स्वाध्यायोऽध्येतव्य' इति कर्मणि तव्यश्रवणात् स्वाध्यायस्य प्राप्यकर्मतया स्वाध्यायाक्षररूपावधारणमेवाध्ययनविधिफलं युक्तम्। न हि वाक्यार्थज्ञानस्यापि स्वर्गादिवन्मुख्यप्रयोजनत्वम्। गौणप्रयोजनत्वं च स्वाधायाक्षरग्रहणेऽपि सममिति प्रथमप्राप्तं तदुल्लङ्घ्य वाक्यार्थज्ञानपर्यन्तधावनानौचित्यात्। अन्यथा तदप्युल्लङ्घ्य क्रतुः स्वर्गो वा फलं किं न स्यात्। एवञ्च अन्यनिरपेक्षस्वतन्त्रस्वाध्यायाक्षरोच्चारणकारणतदक्षरावधारणरूपतदक्षरावाप्तिरेवाध्ययनफलमापन्नमिति नाध्ययनविधिवेदार्थनिर्णायकन्यायानुसन्धानरूपमीमांसाप्रवृत्तौ कारणमिति तदर्थं तन्निबन्धनरूपशास्त्रं प्रेक्षावदुपादेयमिति प्रतिपादयितुं प्रवृत्तं 'अथातो धर्मजिज्ञासे'ति शास्त्रादिमसूत्रं कथमध्ययनविधिमूलमिति न जानीम इति शङ्का निरास्ता। साङ्गवेदाध्ययनसम्पादितमेवार्थज्ञानं फलवदुत्तरकर्माङ्गमित्यस्यासिद्धौ तादृशार्थज्ञानरूपविद्याविरहान्न शूद्राणां क्रत्वधिकार इत्यपशूद्राधिकरणविरोधापातात्। तथासति शूद्राधिकारस्यापि तत्र दुर्वारतापातात्। न च अध्ययनसम्पादितमन्त्राक्षरस्वरूपज्ञानाभावादेव न तदधिकारः, मन्त्राधिकारणे मन्त्राणामपि दृष्टार्थत्वसाधनेनार्थज्ञान एवोपयोगाभिधानात्। तस्य चान्यतोऽपि निष्पत्तिसम्भवादधीतमन्त्रसम्पादितमेवार्थज्ञानं कर्माङ्ग-

मित्यस्यास्मद्रीत्यैवाध्ययनविधिमात्रगम्यतया, 'तव्यः श्रुतिः कर्मणी'ति स्वीकुर्वतोऽपि तस्य विध्यर्थत्वस्वीकारावश्यंभावाच्च। अन्यथा अध्ययने विध्यभावेन तस्याकर्तव्यत्वापातात्। न च तव्यश्रुतेर्विधिकर्मत्वोभयपरत्वमाश्रयितुं युक्तम्। सकृदुच्चारितानामावृत्तिं विना एकार्थपरत्वनियमात्। आवृत्त्याश्रयणे च तद्रूपवाक्यभेददोषात्। किञ्च विहिताध्ययने क्रियमाणे 'यत्र तु विहिते फलाकाङ्क्षिणी'ति न्यायेन यावददृष्टं भवति तावत्सर्वमान्तरालिकमध्ययनफलत्वेनावश्यमुपेयम्। अन्यथा गुरूच्चारणानूच्चारणरूपाध्ययनेन जायमानं प्राथमिकस्वाध्यायाक्षरग्रहणरूपमेव फलमुल्लङ्घ्य स्वतन्त्रोच्चारणसाधनस्वाध्यायाक्षरावधारणरूपतदक्षरावाप्तिरध्ययनफलमिति कल्पनं न स्यात्। तथाच अक्षरावाप्तिवत् स्वाध्यायार्थावधारणमपि 'दृष्टे सम्भवत्यदृष्टकल्पना' इति न्यायेन अध्ययनफलत्वेनोपेयम्। जपपारायणादिविधिं प्रति स्वाध्यायाक्षरावाप्तेरिवोत्तरकालक्रतुविधिं प्रति तदर्थावधारणस्योपयोगसत्त्वेन साफल्यतौल्यात्। सामर्थ्यलक्षणलिङ्गेनार्थावधारणस्य क्रत्वनुष्ठानहेतुत्वावधारणात् 'ज्ञात्वा कर्म समाचरेदि'ति स्मृत्या ज्ञानस्य कर्माङ्गत्वेनावधारणेनाविहितस्याङ्गत्वायोगेनार्थावधारणस्याध्ययनविधिविहितत्वावश्यंभावात्। 'स्थाणुरयं भारहारः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थमि'ति निन्दार्थवादबलेनाप्यर्थज्ञानस्याध्ययनफलत्वावसायात्। 'यदेव विद्यया करोति श्रद्धयोपनिषदे'ति ज्ञात्वा अनुष्ठानस्य फले अतिशयश्रवणाच्चार्थज्ञानस्याध्ययनफलत्वौचित्याच्च। अत एव 'अध्ययनेन यच्छक्नुयात् तत्कुर्यादि'त्यध्ययनविधिवचनव्यक्तिरिति वदन्ति। एवञ्च अक्षरावाप्तिवदर्थावधारणमप्यध्ययनफलमित्यस्य दुर्निरसत्वे स्थिते अक्षरावाप्त्यर्थावधारणसाधारणं विध्यपेक्षितं यत् स्वाध्यायसाध्यत्वमध्ययनकार्यतावच्छेदकमनुगतं सम्भवतीत्युक्तं भवति। न ह्यर्थावधारणं फलमिति स्वीकुर्वद्भिरस्माभिरक्षरावाप्तेरध्ययनफलत्वं नोपेयते। किन्तु अक्षरावाप्तिरेव फलमिति वा अर्थावधारणमेव फलमिति वा नोपेयते। तथाच वेदेतिकर्तव्यतारूपमीमांसाकर्तव्यतायामध्ययनविधेर्मानत्वात्, मीमांसाशास्त्रारम्भणीयतायामारम्भणीयताप्रतिपादकम् 'अथातो धर्मजिज्ञासा' इति शास्त्रादिमसूत्रमध्ययनविधिमूलमिति सिद्धमिति न किञ्चिदनुपपन्नम्।

अत्र प्राभाकराः। अध्यापनविधिप्रयुक्तमेवाध्ययनम्। न स्वविधिप्रयुक्तम्। तत्प्रयुक्तत्वं च अध्ययनस्याध्यापकीयाध्यापननियोगकार्यताधीमात्रनिबन्धनाध्ययनप्रवृत्तिकत्वम्। मात्रार्थश्चाध्येतृगताधिकारज्ञानानपेक्षत्वम्। न च स्वविधिप्रयुक्तत्वसम्भवे किमन्यविधिप्रयुक्तिकल्पनयेति वाच्यम्। अध्ययनविधौ नियोज्याश्रवणात्। अश्रुतनियोज्यकल्पने च मानाभावात्। अन्यविधित एव विषयानुष्ठानसम्भवे तत एव स्वविधित्वोपपत्तेः। नियोज्याभावे चाज्ञाताधिकारतया विषयानुष्ठापकत्वासम्भवात्। अध्यापनविधिश्चाचार्यककामनियोज्यकतया ज्ञाताधिकारकत्वेन स्वविषयमध्यापनं

प्रयुञ्जानोऽध्ययनमपि प्रयुङ्क्ते । अध्ययनं चाध्यापनाङ्गोपनयनापेक्षितोपनेयव्यापारत्वेनोपनयनप्रकरण-पठितं वैधमेवाध्यापनोपकारकमवगतमिति विधिरपि तादृशस्यैव प्रयोजको भवति । एवं च प्रयोज्यत्वे-नावश्यापेक्षितत्वात् प्रवृत्तिवेलायामुपस्थितत्वाच्च अध्यापनविधिसिद्धिरेव अध्ययनप्रयोजनं कल्प्यते । न तु कर्तृगामित्वेन अन्तरङ्गमपि वाक्यार्थज्ञानम् । पश्चाद्भावित्वेन प्रवृत्तिकाले अनुपस्थितेर्मुख्यजघन्य-न्यायात् । ततश्चान्यार्थत्वेनाविविक्षितार्थो वेदो न विचारमर्हतीति शास्त्रारम्भमाक्षिप्यान्यविधिप्रयुक्तत्वे-ऽप्यध्ययनविधेः साधिकारत्वनियमात् । अध्ययनविधावप्यध्ययनानन्तरं विचारात्पूर्वमधिकारकल्पना-प्राप्तौ वाक्यार्थज्ञानस्योपस्थितत्वादन्तरङ्गत्वाच्च तदेव फलम्, तत्कामश्चाधिकारी कल्प्यते । अन्तरङ्ग-बहिरङ्गन्यायात् । एवञ्च वेदस्य विविक्षितार्थत्वादध्ययनविधेश्च विचारकाले ज्ञानाधिकारत्वात् तत्प्रयुक्त एव तद्विचार इति युक्तः शास्त्रारम्भ इति पूर्वपक्षसिद्धान्तौ वर्णयाम्बभूवुः ।

तन्न । अध्यापनविधावाचार्यककाम इत्यश्रवणादध्यापनेऽपि नियोज्योऽश्रुत एव कल्पः । यद्यपि 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'त्यात्मनेपदेनाचार्यकं श्रुतम् । न हि तावन्मात्रं नियोज्य-शब्दार्थः । किन्त्वाचार्यककामः स चाश्रुत एव । तथाच अध्ययन एवार्थज्ञानकामे नियोज्यकल्प-नाऽस्तु । किमन्यविधिप्रयुक्तिकल्पनया । किञ्चाध्यापनाधिकारो न कर्तृगामी, न च कर्ता विज्ञातः इति कथमध्ययनं प्रयुञ्जीत । अध्यापकावगत एव चेत् तत्प्रयोजकः तर्हि न कथमध्येतृगत एवाधिकारो-ऽध्यापकावगतः प्रयोजक उपेयते । सिद्धान्ते त्वयाऽप्यध्ययनेऽधिकारस्वीकारात् । अपि चाध्यापने विधिरेव नेति कथं तत्प्रयुक्तमध्ययनम् । अध्यापयेदित्यस्य विपरिणामेनाधीयीतेत्यध्ययनविधिपरत्वा-द्यथा "एतयैवान्नाद्यकामं याजयेत्" इत्यस्य अन्नाद्यकामो यजेतेति यागविधिपरत्वम् । याजनवदध्या-पनस्यापि द्रव्यार्जनोपायतया वृत्तित्वेनैव प्राप्तस्याविधेयत्वात् । तस्माद्भाट्टरीत्या स्वविधिप्रयुक्तमेवा-ध्ययनमिति युक्तमुत्पश्यामः ।

अथाखिलस्वाध्यायवाक्यानां पुरुषार्थत्वावबोधप्रयोजनकत्वमध्ययनविध्यायत्तमिति तद्विधि-निरूपणानन्तरं इतरेऽपि विधिभेदाः निरूप्यन्ते । तत्र विधिशब्दितोऽर्थस्तावच्चतुर्विधः । उत्पत्ति-विनियोगप्रयोगाधिकारविधिभेदात् । तत्रोत्पत्तिविधिस्त्रिविधः । अपूर्वविधिः नियमविधिः परिसङ्ख्या-विधिश्चेति । अपूर्वविधिरपि द्विविधः । विशिष्टविधिगुणविधिभेदात् । अत्र लिङादिश्रुतेरैक्येऽपि उत्पत्त्यादिविषयकशक्तिसारूप्यात् तच्चातुर्विध्योपपत्तिः । तथाहि । कर्मभेदं बोधयन्नुत्पत्तिविधिः । अप्रवृत्तप्रवर्तकाचनो हि विधिः, कर्मस्वरूपविशेषपरो भवन् स्वसम्बन्धवशेन विषयस्य प्रमाणान्तराप्राप्तिं परिकल्प्य अपूर्वावगतिरूपामुत्पत्तिं गमयन्, शब्दान्तराभ्यासादिभिरुपस्थापितं कर्मभेदमवस्थापयति । कर्मस्वरूपमात्रप्रतिपत्तिहेतुर्भवतीति यावत् । यथा 'सोमेन यजेते'ति ।

भावनाविषयस्येष्टविशेषसाधनतां बोधयन् विनियोगविधिः । प्रवर्तकवचनो हि लिङादिशब्दः तामुपपादयितुं फलसाधनत्वं फलवदुपकारकत्वं वा स्वविषयभावनाविषयस्याक्षिप्य श्रुतिलिङ्गादि-साहित्यात् तद्विषययोः शेषशेषिभावं बोधयति । 'समिधो यजती'त्यादिकार्यतां बोधयन् प्रयोगविधिः एकाभिधानश्रुत्या विधेः भावनामात्रगोचरतया स्वरूपेणैव प्रयोगविधित्वात् । क्रमविशिष्टसाङ्गप्रधान-कर्तव्यतां बोधयति । यथा 'ज्योतिष्टोमेन यजेते'ति । फलस्य कर्तृगामितां बोधयन्नधिकारविधिः । फलसाधने हि कर्मणि पुरुषं प्रवर्तयन् तदनुपपत्त्या पुरुषस्य कर्मजन्यफलभावं बोधयति । यथा 'उद्भिदा यजेत पशुकाम' इति ।

यद्विध्यभावे विधेयत्वाभिमतस्य मानान्तरात् पक्षेऽपि न प्राप्तिः । यद्विध्यभावारोपे तद्विषयस्य सदा सकलप्रेक्षावत्प्रवृत्त्यभावापादनसम्भव इति यावत् । सोऽपूर्वविधिः । यथा 'राजा राजसूयेन यजेते'त्यादिः । यद्विध्यभावे तु पाक्षिकी प्राप्तिरप्राप्तिश्च विधिसत्त्वे च प्राप्तिरेव न त्वप्राप्तिः कदापि । यद्विध्यभावारोपे कदाचित्प्रवृत्तिसम्भवेऽपि नियता प्रेक्षावत्प्रवृत्तिर्न स्यादित्यापादनसम्भव इति यावत् । स नियमविधिः । यथा 'समे दर्शपूर्णमासाभ्यां यजेते'त्यादि ।

यद्विध्यभावे च न कदाप्यप्राप्तिः किन्त्वेकत्र साध्ये साधनान्तरस्याप्येकस्मिन्साधने साध्या-न्तरस्यापि वा नियमेनैव प्राप्तिः । यद्विध्यभावारोपेऽन्यत्रापि नियमेनैव प्राप्त्यापादनसम्भव इति यावत् । तत्र परिसङ्ख्या । यथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त' इति । तदुक्तम्—

**विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।**
**तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते ॥** इति ।

तत्रान्यत्र च प्राप्त इति सप्तम्योः सामानाधिकरण्यवैयधिकरण्याभ्यामेकत्र साधनद्वयस्य, साध्यद्वये चैकसाधनस्य वा, प्राप्तौ परिसङ्ख्येत्यभियुक्तव्याख्यानात् । अध्ययने चार्थज्ञानार्थप्रवृत्तिनियमार्थ-विध्यर्थानां नियमविधिरेवेति न काचिदनुपपत्तिः । एवं च 'धनमार्जयन् ब्राह्मणो याजयेदध्यापयेत् प्रतिगृह्णीयादि'त्यत्र धनार्जनप्रवृत्तमुद्दिश्य याजनादिषु, 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रविशां नृपे'त्यादिना पञ्चनखभक्षणप्रवृत्तमुद्दिश्य शशकादिपञ्चसु, दारोपगमविधिना सम्भोगप्रवृत्तिमुद्दिश्य स्वदारेषु प्रवृत्ति-र्नियम्यत इति सर्वोऽप्ययं नियमविधिरेव । ततश्चार्जने नियमो भक्षणे परिसङ्ख्येत्यज्ञातविधिनियम-परिसङ्ख्यातत्वानां श्रद्धामात्रं न तु प्रामाणिक इति ।

केचित् तदुभयमात्रमालोच्य कथञ्चिद्वैषम्यकल्पनयाऽर्जने नियमं, भक्षणे परिसङ्ख्यामुररीकुर्वते । तथाहि । यत्र साधनान्तरस्य विकल्पेनैव प्राप्तिः । यथा व्रीहीनवहन्तीत्यत्र विधिमन्तरापि वैतुष्यार्थी

तत्साधनानि स्वयमेवोत्प्रेक्ष्यावहननेऽपि कदाचित्प्रवर्तेतैवेति नात्यन्ताप्राप्तिरिति नापूर्वविधिः । किन्तु नखविदलनादिना वैतुष्यप्राप्तावघाताप्राप्त्या अप्राप्तांशपूरणाय विधिनाऽवघातो नियम्यते । विरुद्ध-साधनयोर्नखविदलनावहननयोः समुच्चयासम्भवेन पक्षे ऽवघाताप्राप्तेः । एवञ्च सर्वदा अवघातान्वयात् समुच्चयासम्भवाच्च न कदाचिन्नखविदलनादीनामन्वय इत्यर्थात् तेषां बाधे तत्रार्थी विवक्षितान्ययोग-व्यवच्छेदसिद्धिः । अयोगव्यवच्छेदमात्रं तु वाक्यार्थः । एवञ्च आर्जनादिष्वप्येकार्जनक्रियायां कृषि-याजनयोरन्वयासम्भवात् अपेक्षितधनार्जनक्रियात्वावच्छिन्नमुद्दिश्य याजनाद्यन्यतमसाधनान्वयवाक्या-दवगमे साधनान्तरव्यवच्छेदलाभाय न पृथक् शब्दापेक्षा, अर्थादेव तल्लाभसम्भवात् । यत्र तु साधनयोः विरोधाभावात् समुच्चयसम्भवः, यथा 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र शशकशुनकोभयसाधितैकापूप-भक्षणक्रियासम्भवात् तत्रान्ययोगव्यवच्छेदस्यार्थादलाभे तल्लाभाय शब्दव्यापार एव साक्षादभ्युपेयः । अत एव स्वार्थहानपरार्थत्वकल्पनाप्राप्तबाधात्मकदोषत्रयवती परिसङ्ख्या । नियमे तु स्वार्थहानेन परार्थत्वकल्पनाविरहान्न तथेति परिसङ्ख्यानियमाज्जघन्येत्याहुः ।

अथ समस्तविधिवाक्यसाधारणवाक्यार्थो निरूप्यते । तत्र 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादौ लिङ्श्रुत्या तावदाख्यातत्वलिङ्त्वाभ्यां उपस्थापितार्थभावनाशब्दभावनयोः कुर्यादित्याकारः प्रवर्तना-विषया कृतिरित्यन्वयबोधो भवति । एकाभिधानोपादनश्रुतेः शब्दान्तरोपात्तधात्वर्थनामार्थापेक्षया प्रत्य-यार्थयोरासत्त्याधिक्यात् । तदुक्तम् । 'विधिभावनयोः श्रुत्या सङ्गतिः पूर्वमिष्यत' इति । न च प्रवर्तना-रूपशब्दनिष्ठव्यापारान्तरे तस्य च लिङाद्यभिधेयत्वे मानाभावः । लिङादिश्रवणसमनन्तरं हि यागपाकादौ चेतनप्रवृत्तिर्दृश्यते तावत् । सा च स्वविषये हितहेतुतावगतिमन्तरा न घटते । तदवगतिरपि तदा शब्दानन्तर्यात् तत्कारितैवेति निश्चीयते । किन्तु हितहेतुतावगतिस्तत्र किं लिङादिशब्दादेव शक्त्या साक्षादुपजायते, किं वा कञ्चिदर्थं प्रतिपादयता लिङादिना तद्द्वारेणाक्षेपात् । तत्र यद्यपि साक्षादुप-पादकविषयत्वात् कल्पनायाः शक्तिकल्पनैव तस्मिन्साक्षादुपपत्तिमती । तथापि संविद्विरोधात् सह-प्रयोगाच्च साक्षात्तदभिधायकत्वासम्भवात् येनाभिहितेन हितहेतुत्वं अत्र कल्पयितुं शक्यते तद्वाची लिङादिरिति निर्णीयते । न हि यागो यागयत्नो वा हितहेतुरित्यस्माच्छब्दाद्यजेतेत्यस्माच्च तुल्या संवि-दुत्पद्यमानाऽनुभूयते । न वा 'सन्ध्यामुपास्व समीहितं हि ततः स्यादि'ति विधिशब्दः समीहितहेतु-वचनश्च शब्दो लोके सह न प्रयुज्यते, न वा पर्यायौ प्रेक्षावान् सह प्रयुङ्क्ते इति प्रवर्तनैव लिङाद्यभिधेया कल्प्यते । किञ्च ज्यायः समकनीयोभिः कनीयः समज्यायःसु प्रवर्त्यमानेषु तत्प्रवृत्त्यर्थं प्रयुक्तानां प्रेषणाध्येषणाभ्यनुज्ञालिङादीनामेकार्थसम्भावे तदेव न्यायम्, अन्यथा प्रेषणत्वादयो बहवोऽर्थाः कल्प्ये-रन्नित्यनेकार्थत्वगौरवापत्तिः । प्रेषणात्वादिविशेषास्तु आक्षेपादपि लप्स्यन्ते ।

एवं च ज्ञायमानप्रवृत्त्यनुकूलप्रवृत्तिविषयनिर्दोषगतव्यापारत्वं प्रवर्तनात्वसामान्यं लिङ्त्वावच्छेदेन लाघवादभिधेयं क्लृप्तमिति विधिलिङोऽपि तदभिधायित्वमेवाधार्यत इति प्रवर्तनासामान्यमेव विधिः। अत्र प्रवृत्त्यनुकूलेत्यनुक्तौ विषभक्षणादिप्रवृत्तिविषयकनिर्दोषापित्रादिगतद्वेषात्मकव्यापारे गतमिति प्रवृत्त्यनुकूलेत्युक्तम्। ज्ञायमानेत्यनुक्तौ च चिकीर्षायां गतमिति तदुपात्तम्। निर्दोषगतेत्यनुकूलानाप्तप्रेरणायामतिप्रसक्तमिति तदुपात्तम्। स च व्यापारो लोकवचसि चेतनाभिप्रायः, वेदे त्वपौरुषेये तदसम्भवात् लिङादिनिष्ठोऽनादिलिङ्व्यापारत्वात् प्रवाहरूपेण अनादिलिङादिज्ञाननिमित्तश्चान्य एव अभ्युपेयते। स च स्वात्मा मा भञीति स्वे विषये हि ते हेतुतामाक्षिपन्ति। यदि हि अन्यत्र क्लृप्तसामान्यशक्त्या यजेतेत्यादौ सकलसिद्धहितहेतुतावगतिर्न कथञ्चिदापेक्षादिनापि सम्भवेत्, सम्भवेदपि तदा नानार्थत्वकल्पना। अन्यथानुपपत्तेः। सम्भवति तु यथोक्तव्यापारविषयत्वेनाक्षेपात् समीहितसाधनत्वावगतिः। तादृशव्यापारविषयत्वस्य बलवदनर्थाननुबन्धिहितहेतुत्वव्याप्तेः। अत एव 'न सुरां पिबेदि'त्यादौ विधिप्रतिषेधः बलवदनर्थसाधनत्वेन तस्य तादृशव्यापाराविषयत्वात्, निवर्तनैव वा तत्र लिङो नञुपादानेनार्थः। सैव च स्वविषयस्य बलवदनर्थसाधनत्वमाक्षिपतीति केचित्। कथं तर्हि अभिधाभावनामाहुरन्यामेव लिङादयः' इति वार्तिकम्। अभिदधातीति व्युत्पत्त्या शब्द एवाभिधा। तन्निष्ठा भावनेति तदर्थात्।

इदं त्ववधेयम्। प्रवर्तनात्वसामान्यमेव लिङ्वाच्यम्, व्यक्तिस्तु गङ्गादिवदाक्षेपलभ्यैवेति अभिधा शब्दशक्तिः। सैव च भावना प्रवर्तनात्मना लिङाद्यभिधेया।

मण्डनमिश्रस्तु। निर्दोषत्वं नाम प्रकृतविषये भ्रमादिराहित्यमेव। अन्यानिरुक्तेः। तच्च प्रकृतार्थाननुगमादननुगतमतिप्रसक्तं च। विशिष्य हितहेतुत्वादिविषयभ्रमादिराहित्योक्तौ तु गौरवमधिकांशवैयर्थ्यं चेति निर्दोषत्वांशमपहायैव प्रवर्तनाशक्तौ वक्तव्यायां हितहेत्वाक्षेपकत्वासम्भवः। प्रवृत्त्यनुकूलव्यापारमात्रस्य अनाप्तप्रेरणायां व्यभिचारात् ऐकार्थ्यासम्भवे नानेकार्थता लिङो युक्तेति। अत एव 'पथ्यमश्नीयात् दक्षिणेन यायादि'त्यादिविधिविहितशब्देभ्यः 'समिधमाहर गां बधाने'त्याज्ञाद्यनुशिष्टप्रत्ययवाक्येषु विलक्षणैवार्थावगतिरनुभाविकी। सैव च प्रवर्तना भावनाद्यभिधाना, प्रवृत्तिहेतुत्वात्, तद्भवनहेतुत्वाच्च। तदुक्तम्। 'प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनामि'ति।

सा च समानशब्दाभिहितार्थभावनायामेवान्वेति, यजेत यागभावना हितहेतुरिति। ततश्च करोतिसमानशीलाख्यातोपस्थितार्थभावना, किं केन कथमित्यंशत्रयमपेक्षमाणा विधिश्रुत्या च प्रथममेव विधिसङ्गतिं प्रापितेति, श्रुत्या अर्थाद्वा हितहेतुत्वेन सामान्यतोऽधिगता, किमिष्टङ्कुर्यादित्याकाङ्क्षमाणा पदश्रुतिसमर्पितधात्वर्थं भाव्यतया स्वीकर्तुमभिप्रस्थिता कष्टत्वेनासमीहितत्वात् सन्निकृष्टमपि तं

भाव्यत्वेनानाश्रित्य करणकोटावस्य अन्यद्भाव्यमनुसन्दधती, समानवाक्यश्रुतस्वर्गकामपदसमर्पितं किंकामसम्बन्धावगतप्राधान्यं प्रसिद्धतया च साधनास्वर्गं भाव्यत्वेन स्वीकरोति, स्वर्गं भावयेदिति। एतच्च स्वर्गकामाधिकरणे स्थितम्। यद्यपि पुरुषोपसर्जनतया श्रुतः स्वर्गो न साक्षात् भावनया सम्बद्धुमर्हति। तथापि श्रुतिवृत्त्या स्वर्गकामस्यैव भाव्यत्वमुच्यमानं विशिष्टविधिवत् विशेषणविधिं स्वर्गभाव्यत्वमर्थादवगमयति। तादर्थ्यावगमश्चात्र पदद्वयसमभिव्याहारात्मकवाक्येन स्वर्गकाममिति श्रुतिकल्पनाद्वारैव, तदुभयसम्बन्धमात्रमेव तु साक्षाद्वाक्यगम्यमित्यवधेयम्।

यत्र तु स्ववाक्ये फलविशेषसमर्पकपदाश्रवणं तत्र प्रकरणादिना फलविशेषलाभ इति प्रकरणान्तराधिकरणार्थः। तस्याप्यभावेऽप्यर्थवादोपस्थितफलेन समन्वय इति रात्रिसत्राधिकरणे स्थितम्। अर्थवादेऽपि फलाश्रवणे अध्याहृतेन फलेन सम्बन्ध इति विश्वजिदधिकरणे स्थितम्। ततः केनेत्यपेक्षायां बलीयस्या विधिश्रुत्या साध्यांशात् प्रच्यावितो धात्वर्थः पदश्रुतिसमर्पितो नामार्थापेक्षया सन्निकृष्टः करणतया निविशते। यागेन स्वर्गं भावयेदिति। अयमेव च भावाधिकरणार्थः। यद्यपि साधकतमत्वं करणत्वं न भावार्थस्य, भावनाया भावार्थानिष्पाद्यत्वात्। तथापि स्वर्गं भावयेत् केनेति फलविशेषावच्छिन्नभावनायामेव करणापेक्षासत्त्वात्। तादृश्याश्च तस्याः भावार्थावच्छेदनिष्पाद्यत्वाद्युक्त एव तस्यां करणभावो भावार्थस्य। न खल्वलब्धयागादिभावार्थविषया कृतिः फलं भावयितुमीष्टे। वस्तुतोऽन्योद्देशप्रवृत्तकृतिव्याप्यत्वरूपं करणत्वमत्र। न तु साधकतमत्वादि। लोकेऽपि च्छिनत्त्यभिहितायां विभागफलावच्छिन्नोद्यमननिपतनादिभावनायां कुठारादेस्तत एव करणत्वव्यपदेशात्। तदिह केन स्वर्गं भावयेदित्यस्य कं व्याप्नुवती भावना स्वर्गं साधयतीत्यर्थः। यागेनेत्यपि यागं व्याप्नुवती कृतिः फलसाधनमित्यर्थ इति किमनुपपन्नम्।

यद्यपि यागेनेति करणत्वान्वयप्रकारो न यजिना नापि पदान्तरेणाभिहितः। अनभिहितश्च नान्वयप्रकारतां प्रतिपद्यते। तथाऽप्यकारकावस्थेन क्रियायाः सम्बन्धासम्भवात् धातुनैवोपसर्गादिवदौपसन्दानिकशक्त्या लक्षणया वा तदुपस्थितिरुपेया। तदुक्तं प्रथमचतुर्थपादे भाष्यकृता 'यागेन कुर्यादिति। यागेनेत्यस्यार्थः। करणं हि याग' इति। अत एव च यागेनेत्यस्योद्भिदेत्यनेनाभेदान्वयः। उद्भिदा यजेतेत्यादावुद्भिदादीनां कर्मनामधेयत्वम्। अन्यथा सोमेनेत्यत्र सोमवता यागेनेतिवदुद्भिद्वता यागेन कुर्यादिति मत्वर्थलक्षणापत्तेः। तदुक्तं भाष्यकृता। 'श्रुतिश्चैवं यागमभिधास्यति, इतरथा श्रुतिरुद्भिदादीन् वक्ष्यन्ती तद्वतो यागान् लक्षयेत्। श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसीति उद्भिदा यागं कुर्यादिति प्रकृतिज्योतिष्टोमानुवादेन गुणविधावेकस्यैव यजेः साध्यत्वप्रधानत्वोद्देश्यत्वपरत्वं साधनत्वगुणत्वविधेयत्वपरत्वं चेति विरुद्धत्रिकद्वयापत्तेरि'ति। इदं चोद्भिदधिकरणे स्फुटम्। ततश्च चिरविनष्टेन यागेन

व्यापाराभावे स्वर्गो भावयितुं न शक्यत इति प्रतीतापर्यवसानादन्तराऽपूर्वं कृत्वेयदनुषज्यते। यागेनापूर्वं कृत्वा स्वर्गं कुर्यादिति।

तदुक्तं वार्तिके। 'फले यजेः प्रत्यक्षो गुणभावः, आनुभाविकोऽपूर्व' इति। ततश्चापूर्वे कृते फलं स्यादेवेति निश्चयात् फलकर्तव्यता कथन्ता अपूर्वे सङ्क्रान्ता सती इतिकर्तव्यतामपेक्षते, कथमपूर्वं यागेन कर्तव्यमिति। अत एव अपूर्वभावनायामित्थंभावेन सम्बध्यमानमितिकर्तव्यताजातमपूर्वप्रयुक्तं न फलप्रयुक्तमित्यभ्युपेयते। एवञ्च कथमपूर्वं कर्तव्यं, अपूर्वकरणे कस्तत्प्रकार इत्युपकारविशेषाकाङ्क्षायां समिधो यजतीत्यादिविधिवाक्यैरिष्टविशेषापेक्षैः सह साधिकारवाक्यैकवाक्यतया समिदादिभिर्दर्शपूर्णमासापूर्वभावनां भावयेदित्यवगम्यते। ततो दर्शपूर्णमासभावना समिदादिभावनोपेताऽपूर्वं साधयतीत्यवगते विशिष्टस्य साधनत्वं विशेषणेन तत्रोपकाराजनने अनुपपन्नमिति समिदादेस्तदुपकारकत्वं कल्प्यते। तदपि करणोपकारकत्वेनैव निर्वहतीति साधिकारभावनाङ्गत्वेनावगतानां समिदादीनां तादर्थ्यनिर्वाहाय करणोपकारकत्वं पश्चात् कल्प्यते। एवमेव सन्निपातिनामवघातादीनां मन्त्राणां च प्रधानभावनया। श्रुतिलिङ्गादिभिस्तादर्थ्येनान्वये पश्चादुपकारकत्वकल्पनेति। तत्राविवक्षितवचना विवक्षितवचना वा मन्त्रा इति सन्दिह्य तदर्थशास्त्रादिरूपेण मन्त्रानर्थक्ये पूर्वपक्षिते 'अविशिष्टस्तु वाक्यार्थ' इति सिद्धान्तसूत्रेण मन्त्राधिकरणे मन्त्राणां दृष्टार्थतयाऽर्थवत्त्वं साधितम्। न चैवं प्रयाजादिवाक्यवन्मन्त्राणामप्यङ्गभूतार्थप्रतिपादनमात्रपर्यवसानासम्भवात् स्वरूपेण प्रधानैरग्रहणात् कर्मकाले प्रयोज्यत्वं न स्यात्। अन्यथा अङ्गप्रतिपादनमात्रेण स्वरूपाग्रहणे प्रयाजादिवाक्यानामपि मन्त्रवत् स्वरूपग्रहणापत्तिरिति वाच्यम्। मन्त्राणां विधित एव स्वरूपेण तादर्थ्यसिद्धेः। न चाङ्गवाक्यानां तथाविधिरस्तीत्यलं पल्लवेन।

## नित्यकाम्यविधिभेदः

अथ नित्यकाम्यविषयभेदेन विधिभेदो निरूप्यते। तत्र यद्यपि नित्यं नैमित्तिकं काम्यं चेति त्रैविध्यमन्यत्रोक्तम्। तथापि नियतनिमित्तकं नित्यम्। यथा दर्शपूर्णमासादि। अनियतनिमित्तकं नैमित्तकम्। यथोपरागस्नानादीति। अवान्तरभेदेऽप्यवश्यकर्तव्यं नित्यमित्येवं द्वयमेकीकृत्य काम्यात् तद्वैषम्यं विचार्यते।

तत्रोपदेशातिदेशप्राप्तसमग्राङ्गोपेतस्यैव काम्यस्य फलसाधनत्वं तिर्यगधिकरणे साधितम्। तत्र हि 'स्वर्गकामः पशुकाम' इत्येवं प्रधानवाक्येषु सामान्येनाधिकारावगमात् कतिपयाङ्गोपसंहारशक्तिविरहिणामप्यन्धबधिरमूकादीनामधिकारः 'आज्यमवेक्षते, सामिधेनीरनुब्रूयादि'त्याद्यङ्गविधयस्तु शक्तविषया एव। यो यत् कर्तुं शक्नुयात् स तत्कुर्यादित्यन्धस्याज्यावेक्षणरहितमेव मूकस्य मन्त्रोच्चारण-

रहितमेव कर्म फलं साधयति । साधिकारप्रधानप्रयोगविध्युपजीविनो हि विनियोगविधयस्तदविरोधे-नैवाङ्गानि प्रापयन्तीत्याशङ्क्य स्वर्गकाम इत्यादिसामान्यवचनस्याङ्गविधिसामर्थ्योपस्थापितसर्वाङ्गोप-संहारशक्तिमद्विषयत्वेऽपि प्रधानविधिविरोधाभावात् अङ्गानां नित्यवदन्वयश्रुतिभङ्गोऽष्टविधदोषनिदान-विकल्पश्च न कल्प्यते । अङ्गस्य साधनविशेषतया तदभावे अङ्ग्यसिद्धेः । अङ्गत्वबोधकादेवावगमा-दित्यन्धादीनामनधिकारे सर्वाङ्गानुष्ठानशक्तिमत्तामेवाधिकारः इत्युपपादितम् । एष च न्यायो नित्येऽपि तुल्यः । अधिकारस्य सर्वत्र विनियोगानुसारित्वात् । तथाच सर्वशक्त्यधिकरणे पूर्वपक्षसूत्रम् । ''सर्वशक्तौ प्रवृत्तिः स्यात् तथा भूतोपदेशात्'' इति । यदि च कतिपयाङ्गराहित्येऽपि नित्यात् फल-सिद्धिः, तदा काम्येऽपि तथा स्यादविशेषात् । किञ्चैवं विद्याग्निविरहे शूद्रादिकृतमकालकृतं च नित्यं फलसाधनं स्यात् । विद्याग्निकालानामपि अन्याङ्गाविशेषादिति ।

अत्र प्राभाकराः । फलं प्रत्यकरणीभूतस्य भावार्थस्य फलकामनियोज्यककार्ये विषयत्वासम्भवात् फलकरणत्वं तस्यानुसन्धायैव कार्ये विषयत्वनिरूपणमिति काम्ये फलकरणत्वं कार्यं प्रति विषयता-वच्छेदकम् । करणत्वं च साधकतमत्वं तमबर्थश्च प्रकृतेः समग्राङ्गजन्याखण्डोपकाररूपातिशय-विशिष्टत्वम् । तथा चाङ्गानुषङ्गेऽपि अक्रियमाणे समग्राङ्गजन्योपकारसम्पत्तेर्विषयविलये विषयिणोऽपि विलयात् नाङ्गहान्या फलसिद्धिः काम्ये । नित्ये तु फलकामनियोज्याभावात् न तथा । किन्तु कार्यं प्रति विषयतया प्रतीतस्य पश्चात्करणत्वमपि कार्य एव तस्योत्तरकाले कल्प्यते । अकरणक्रियानुपपत्तेः । अङ्गहानावपि नित्ये इव विषयविलयाभावात् इत्याहुः ।

तन्न । काम्ये हि विषयत्वबोधनात् पूर्वं फलकारणत्वबोधः किं श्रौतः उत औपादानिकः । नाद्यः । विमर्शानापेक्षैकपदात्मकश्रुतिप्रमाणकविषयत्वबोधात् विमर्शापेक्षपदान्तरसमभिव्याहारात्मक-वाक्यप्रमाणकफलकरणबोधस्योदीर्यत्वात् । श्रुतेर्वाक्यतो बलवत्त्वात् । न द्वितीयः । उपादानस्य प्रतीतसर्वविषयककार्यानुपपत्तिरूपस्य विषयत्वबोधानन्तरकालीनत्वादिति । उच्यते । 'यावज्जीव-मग्निहोत्रं जुहोति', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'त्यादिषु यावच्छब्दाद्युपबलेन विधिश्रवणात् जीवनं तावन्निमित्तत्वेनावगम्यते । तद्वशेन नैमित्तिकस्याग्निहोत्रादेरवश्यकर्तव्यत्वावगमात् अकरणे च तद्विरोधापातात् । अशक्त्याङ्गहीनस्यापि तस्य युक्तं फलसाधनत्वम् । काम्ये त्वेवं विधिविरोधाभावात् न तथा । एतदेव हि निमित्तस्य रूपम्, यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यमिति । जीवने सत्यग्नि-होत्रादेरवश्यकर्तव्यत्वमप्येतदेव । यज्जीवने सत्यग्निहोत्रादिकृतिरवश्यकर्तारमभिमतेन फलेन संयोज-यतीति कृतीष्टसाधनतैव हि कर्तव्यता नाम । तथाच हीनाङ्गाग्निहोत्रादिकृतिरपि कर्तारं फलेन योजय-त्येवेति युक्तस्तत्राङ्गसङ्कोचः ।

**ननु अधिकारिणा कृतमवश्यं** फलं साधयतीति वक्तव्यम् । अन्यथा शूद्रादिकृतं अकालकृतं च फलसाधनं स्यात् तथा च साग्निहोत्रसविद्यविहितकालजीवनं निमित्तं, 'सायंप्रातर्जुहोती'ति वचनात् । यदेव विद्यया करोतीत्यादेराहवनीये जुहोतीत्यादेश्च तदङ्गत्वावगमाच्चेति शूद्रादिकृतं फलसाधनमेवं सर्वाङ्गोपसंहारशक्तिमानेवाधिकारीति तदीयजीवनमेव निमित्तम् । अतः कथमङ्गहीनं फलसाधनमिति । किञ्च किं जीवनादेर्निमित्तत्वं न तावत् कारणत्वं, तद्धि नियतपूर्ववर्तित्वादिरूपम् । तादृशस्यैव तस्य लोके प्रसिद्धेः । ततश्च अग्निहोत्रादिक्रियायां जीवनादेर्व्यापकत्वप्रतीतावपि तदवश्यकर्तव्यत्वात् । नापि प्रयोजकत्वं तत एव प्रयुक्तिसम्भवे विधिवैय्यर्थ्यापातात् । अस्तु यत्किञ्चिन्निमित्तत्वं तत्किं कर्म प्रति भावनां प्रति वा तद्बोधं प्रति वा फलं प्रति वा अधिकारं प्रति वा तद्बोधं प्रति वा । नाद्यः । स्वरूपसत्तानिमित्तेन कर्मोत्पत्तौ विधिवैय्यर्थ्यात् निमित्तवशाच्च अवैय्यर्थ्याच्च । निमित्तत्वबोधनार्थमेव शास्त्रमिति चेन्न । स्वरूपसत्ताजीवनादिना क्रियासम्भवे तन्निमित्तत्वबोधनानपेक्षणात् । न हि तद्बाधनं विना क्रियाकार्यतादिबोधसत्त्वे क्रियाविलम्बं पश्यामः । अत एव न द्वितीयः । श्रेयःसाधनतादिरूपस्य विधेस्तदजन्यत्वात् । नापि तुरीयः । विधित एव तद्बोधनात् । न पञ्चमः । कर्मण एव तत्सम्भवात् । नापि षष्ठः । अज्ञातेनैव निमित्तेन तत्सम्भवे निमित्तशास्त्रानर्थक्यात् । नापि सप्तमः । अधिकारविधित एव तत्सम्भवात् । किञ्च जीवनादेर्निमित्तत्वे मानं न तावच्चोदनाभावनातदंशत्रयानन्तःपातिनस्तस्य तत् प्रमेयत्वात् । अपि च निमित्ते सति कर्म विधेयम् । कर्मणि सति निमित्तं वा । नाद्यः । फलायापि कर्मण एव विधेयत्वे उद्देश्यद्वयसम्बन्धेन वाक्यभेदापत्तेः । यथा 'यः प्रजाकामो यः पशुकाम' इत्यत्र । न द्वितीयः । अनुपादेयत्वे निमित्तस्याविधेयत्वात् । अपि च 'यावजीवमग्निहोत्रं जुहोति', 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादौ यावच्छब्दवीप्सादिभिरवगम्यमानं व्याप्यत्वं क्रियां प्रति विधिं प्रति फलं प्रति वा न सम्भवति । बाधात् । तथाच गुरुतरं व्यसनमिति ।

अत्राहुः । जीवनादेर्निमित्तत्वमिह विधिव्याप्यत्वमेव विवक्षितम् । विधिश्च कर्तव्यता । सा च कृतीष्टसाधनतैव । पदान्तरसमभिव्याहाराच्चात्र होमादिसम्बन्धिनी तद्व्याप्यत्वमेव विवक्षिता । यावच्छब्दवीप्सादिना जीवनस्यात्रोद्देश्यतयोद्देश्यस्य व्याप्यतेति । व्याप्तिश्च यत्र साग्निसविद्यविहितकालजीवनं तत्राग्निहोत्रकृतिरवश्यमिष्टसाधनमित्यादिरूपा । ततश्चाङ्गाभावेऽपि प्रधानस्वरूपकृतिः फलसाधनमेवेति युक्तः तत्र यथा शक्तिप्रयोगः । काम्ये तु यावच्छब्दाद्युपबन्धाभावान्न तथा । न च निमित्तफलरूपोद्देश्यद्वयसम्बन्धात् वाक्यभेदः । यतो निमित्तद्वयसम्बन्धे वा एकजातीयोद्देश्यद्वयसम्बन्धादेव वाक्यभेदः । नैराकाङ्क्ष्यात् । यथा 'यस्य पिता पितामहो वा न सोमं पिबती'त्यादौ निमित्तद्वयसंम्बन्धात् यः पशुकामो यः पशुकाम इत्यादौ फलद्वयसम्बन्धात् । न तु निमित्तफलरूप-

विजातीयोद्देश्यफलद्वयसम्बन्धेऽपि वाक्यभेदः । आकाङ्क्षासत्त्वात् । भवति हि यस्मिन् सति इदं कुर्यादित्युक्ते किमर्थमित्याकाङ्क्षा तत्रैतदर्थमिति सम्बध्यमानं फलं न वाक्यं भिनत्तीति । न च यथा साग्निजीवनं निमित्तमेवं सर्वाङ्गानुष्ठानशक्तिर्जीवनमेव निमित्तमित्याङ्गाशक्तस्यानधिकारात् न तत्कृति-फलसाधनमित्यङ्गसङ्कोचासिद्धिरित्युक्तमिति वाच्यम् । न हि तच्छक्तिरधिकारिविशेषणं श्रूयते । किन्तु लिङ्गानुष्ठानविधिबलात् कल्प्यते ततश्चाङ्गविधिभिः श्रुत्या अर्थाद्वा यावदङ्गजातमनुष्ठाप्यते तच्छक्ति-रेवाधिकारिविशेषणम् । अङ्गविधयश्च प्रथमवृत्तोपजीव्यप्रधानवाक्यावगतनिमित्ताविरोधेनैव साङ्गा-न्यनुष्ठापयन्ति येन यदा यावत्यङ्गानि अनुष्ठातुं शक्यन्ते तेन तदा तावत्यङ्गान्यनुष्ठेयानीति । तदयं निर्गलितोऽर्थः । यथा श्रुतिनिमित्तानुसारेणाङ्गविधीनां बाधः शक्तिविषयतया सङ्कोचे वा अङ्गोपदेश-बलाद्वा निमित्तस्यैव बाधः । सर्वाङ्गशक्तिमज्जीवनमेव निमित्तमित्येव सङ्कोचो वा कल्प्यः गत्यन्तरा-भावात् तत्रोभयोरबाधसम्भवे बाधयोगादेककर्तृसङ्कोच एवोचितः । स कुत्र इति विचारे अङ्गविधिष्वेव न्यायः प्रधानवाक्यस्योपजीव्यत्वेन प्रथमप्रवृत्तत्वेन च तदविरोधेनैवाङ्गविधीनां सन्निवेशोपपत्तेः न हि निरधिकारा अङ्गविधयः साधिकारप्रधानवाक्यमनपेक्ष्याङ्गेषु चेतनमनुष्ठापयितुं क्षमन्ते । अत एव अङ्ग-विधीनां बहुत्वात् तावता सङ्कोचापेक्षया एकत्र प्रधानवाक्ये निमित्तांशसङ्कोचे लाघवमिति निरस्तम् । बहूनामपि तदुपजीवित्वात् तद्विरोधेनाकिञ्चित्करत्वात् न चैकमेकस्यै शक्तं प्रत्युपादाने अशक्तिं प्रति परित्यागे अङ्गविधिवैरूप्याद्वाक्यभेद इति वाच्यम् । यथाशक्ति कुर्यादित्येकयैव वाचोभङ्ग्या वैरूप्यस्य दुरापस्तत्वात् । अत एव उपादेयेष्वङ्गेषु यथा शक्त्युपबन्धसम्भवादवैरूप्येण विधिप्रवृत्तेः यथाशक्ति-प्रयोगसिद्धिः यद्धि कुर्यादित्युच्यते यथा शक्तीत्युपबध्यते यानि तु स्वभावसिद्धान्येव विधिनोपजीव्यन्ते यथाकालो विद्याग्निश्च तेषामनन्यगतिकविधिबलात् स्वरूपेणैवाधिकारिविशेषणतेति तदेव जीवन-निमित्तमिति कल्प्यते । विद्यावानग्निमान्विहितकाले च जीवन् जुहुयादिति न ह्याहवनीयसम्पादनमपि 'आहवनीये जुहोती'त्यनेनैव विधीयते । येन यथाशक्त्या आहवनीयं सम्पाद्य जुहुयादित्यैकरूप्येण विधिप्रवृत्तिरत्रापि सुलभा स्यात् ततश्च आहवनीये सति तत्र जुहुयात् तदभावे यत्र कुत्रचिदिति वैरूप्यापातात् । नोक्ता गतिरिति 'एवं विद्यया करोति', 'सायंप्रातर्जुहोती'त्यादावपि अङ्गसङ्कोचो दुर्भण इति शूद्रादीनामधिकारो नाप्यकालेऽपि तत्कृतिः फलवतीति दिगिति ।

**न्यायाध्वगामिनां पुंसां तदध्वेक्षणकारणात् ।**
**जयीन्द्रयतिनाऽकारि शुभा न्यायाध्वदीपिका ॥**

*इति श्रीपरमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण*
*विजयीन्द्रभिक्षुणा विरचिता न्यायाध्वदीपिका समाप्ता ॥*

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

## श्रीमद्विजयीन्द्रश्रीपादविरचितः

# उपसंहारविजयः

रक्षोनाथस्य वक्षोभुवि विपुलनखैर्वज्रकल्पैः कृतायां
रक्तस्रोतस्सरस्यां प्रतिफलितमिदं स्वं वपुर्विक्षमाणः ।
स्मृत्वाशं भार्गवाख्यं रघुवरमपि तं रावणं तत्प्रसक्त्या
चैद्यं रुष्टः प्रहृष्टः प्रदिशतु हृदि शं श्रीनृसिंहोऽनिशं नः ॥ १ ॥

सर्वदोषातिदूराय कल्याणगुणशालिने ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ २ ॥

उर्व्यां सत्कर्णतां यान्ति यद्गुणाकर्णने रताः ।
अर्णवं गुणरत्नानां पूर्णबोधं तमाश्रये ॥ ३ ॥

ब्रह्मविन्मुखरङ्गस्थां मध्व ते वाङ्नटीं परराम्[१] ।
विचित्रपदविन्यासैर्मोहयन्तीं भजेऽन्वहम् ॥ ४ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रमक्षोभ्यतपसः फलम् ॥ ५ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये[२] ॥ ६ ॥

मूकोऽपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ स्मृत्वा भवेत्सुखी[३] ॥ ७ ॥

---

१. परान् – क.पा.

२. श्रीमध्वदेशिकाब्धीन्दुं दुर्वादिफणिगारुडिम् । ब्रह्मण्याख्यमुनेः शिष्यं व्यासदेशिकमाश्रये ॥ – क.पा.

३. श्रीसुरीन्द्रगुरोः पादौ स्मारं स्मारं भवेत्सुखम् । – क.पा.

**ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृता-**
**स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।**
**या चानेकविनेयषट्पदततेस्सम्फुल्लमल्ली सदा ।**
**सैषा वाग्विजयीन्द्रसंयमिमणेर्ज्ञानार्थिभिस्सेव्यताम् ॥ ८ ॥**

**गुरुपादोक्तसन्न्यायैरुपक्रमपराक्रमम् ।**
**निराकृत्योपसंहारविजयोऽसौ प्रकाश्यते ॥ ९ ॥**

उपक्रमोपसंहारयोर्यत्र भाति विरुद्धता तत्र मीमांसकैः पूर्वतन्त्रे प्राप्ताप्राप्तबाधविवेकाय श्रुत्यादिभिर्लिङ्गादीनां, प्रत्यक्षेणेतरेषां, प्रमाणैः प्रमाणाभासानां, श्रुत्या स्मृतेः, आप्तस्मृत्याऽनाप्तस्मृतेः, अवगीतया विगीतायाः, अदृष्टार्थतया दृष्टार्थतायाः, श्रुतिप्रभवया लिङ्गादिप्रभवायाः, विधिप्रभवयाऽर्थवादप्रभवायाः, स्मृत्याऽऽचारस्य, अभियुक्ताऽचारेणाऽचारमात्रस्य असन्दिग्धेन सन्दिग्धस्य, बलवदाश्रयेण दुर्बलाश्रयस्य, उपक्रमेणोपसंहारस्य, नियमादृष्टार्थत्वेन अत्यन्तादृष्टार्थत्वस्य, सन्निपत्योपकारित्वेनाऽऽरादुपकारित्वस्य, एकार्थविधानेनानेकार्थविधानस्य, एकशब्दत्वेनानेकशब्दत्वस्य, एकार्थत्वेनानेकार्थत्वस्य, अल्पबाधेन बहुबाधस्य, वेदान्तरविहितेन वेदान्तरोत्पन्नस्य, स्वशाखाविहितेन परशाखाविहितस्य, नैमित्तिकेन नित्यस्य, पुरुषार्थत्वेन द्विविधस्यापि क्रत्वर्थस्य, प्रकरणाधीतेनानारभ्याधीतस्य, परेण पूर्वस्य, वैकृतेन प्राकृतस्य, चोदकाश्रयेण प्रयोगवचनाश्रयस्य, सप्रयोजनेन निष्प्रयोजनस्य, मन्त्रक्रमेण ब्राह्मणक्रमस्य, द्रव्याश्रयेण देवताश्रयस्य, पूर्वाम्नातेन पश्चादाम्नातस्य, भूयसाऽल्पस्य, मुख्येन गौणस्य, विशेषविहितेन सामान्यविहितस्य, निरवकाशेन सावकाशस्य, प्रधानेनाङ्गस्य, प्रयाजधर्मेणाङ्गधर्मस्य बाध इत्यङ्गीकारात्तद्रीत्योपसंहारादुपक्रम एव प्रबल इति केचिदाहुः ॥

भगवत्पादीयास्तन्न सहन्ते । भगवत्पादैः अनुव्याख्याने—

**'उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् ।**
**श्रुत्यादौ पूर्वपूर्वं तु ब्रह्मतर्कविनिर्णयात् ॥'**

इत्यभिधानात्, 'उपक्रमादुपसंहारः प्रबलो व्याख्यानस्य पश्चात्तनन्वनियमात्' इति न्यायविवरणे उपसंहारप्राबल्योक्तेः, उपक्रमादुपसंहार एव बलीयानिति मन्यन्ते ॥

***तत्रोपक्रमप्राबल्यवादिनामयमाशयः—***

सर्वस्यापि शब्दस्य स्वार्थलङ्घने विरोधः कारणम् । स च प्रतियोगिनि दृष्टे ज्ञायते । न च उपक्रमदशायां उपसंहारो विरोधी ज्ञात इत्युपक्रमो मुख्यवृत्तिरेव युक्तः । उपसंहारोऽपि मुख्यवृत्तिश्चेन्न

तेन सम्बध्यते । आकाङ्क्षावशेन हि सम्बन्धो भवति । न च पूर्वप्रतीतस्य स्वविरुद्धार्थे भवत्याकाङ्क्षा । अतः, उपसंहारस्तदनुसारेणैव[1] लक्षणादिकं प्रतिपद्यते । अत एव वेदोपक्रमाधिकरणे अश्वप्रतिग्रहेष्ट्यधिकरणे च उपक्रमानुसारेणेव उपसंहारो नीतः । तद्यथा, तृतीयाध्याये चिन्तितम् ॥ "श्रुतेर्जाताधिकारस्स्यात्", ज्योतिष्टोमे प्रजापतिर्वा इदमेक आसीत् स तपोऽतप्यत, तस्मात्तपस्तेपाना त्रयो देवा अजायन्त, अग्निर्वायुरादित्याः ते तपोऽतप्यन्त, तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा अजायन्त, "अग्ने ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" इत्युपक्रम्य तदुपसंहारे श्रूयते । 'तस्मादुच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैस्साम्ने'ति । तत्र संशयः । किमुच्चैस्त्वादिविधावृगादिशब्दैस्तदभिधेयानां ऋगादीनां ग्रहणमुत वेदानामिति । उपक्रमे वेदशब्दश्रवणादुपसंहारे ऋगादिशब्दश्रवणाच्च । वेदशब्दो हि मन्त्रब्राह्मणसमुदायात्मकस्य काठकादिग्रन्थविशेषस्य वाचकः । 'वेदानधीत्य वेदौ वा वेदं वा यथाक्रममि'त्यादि व्यवहारात् । ऋग्यजुस्सामशब्दास्तु 'तेषां ऋग्यत्रार्थवशेन पादव्यवस्था', 'शेषे यजुःशब्दः', 'गीतिषु सामाख्ये'ति द्वितीयाध्यायस्थसूत्रैस्सपादबद्धापादबद्धमन्त्रगीतिविशेषवाचकत्वेन निर्णीताः । अतो वेदशब्दस्य ऋगादिशब्दानाञ्च विभिन्नार्थकत्वाद्भवति संशयः । उपक्रमोपसंहारयोः विप्रतिपत्तेरेकवाक्यत्वाच्चोभयोरेकविषयत्वेऽवश्यंभाविनि किमुपसंहारस्थविध्युद्देशवशादुपक्रमस्थार्थवादगतवेदशब्दो वैदिकैकदेशऋगादिपरो भवेत् (भवतु) किं वोपक्रमगतार्थवादवशादुपसंहारस्थ विध्युद्देशगतं ऋगादिपदं ऋगादिप्रायवेदपरं भवत्विति ॥

पूर्वपक्षे यस्मादृगादयः प्रजापतिसकाशाज्जातेभ्योऽग्न्यादिभ्यो जातास्तस्मात्प्रशस्तैस्तैरुच्चैष्ट्वादिनियतस्वरयुक्तैरेव कर्म कर्तव्यमिति कर्माङ्गभूतानां ऋगादीनां वेदविशेषानादरेण यत्किञ्चिद्वेदस्थानामुच्चैष्ट्वादिविधानम् ॥ सिद्धान्ते तु 'यस्मादुक्तरूपेभ्योऽग्न्यादिभ्य ऋग्वेदादयो जातास्तस्मादृग्वेदादिभिः क्रियते विधीयते कर्मवृन्दं तस्य प्रशस्तस्योच्चैस्त्वादि कर्तव्यमिति तत्तद्वेदविहितकर्मराशिगुणत्वेनोच्चैष्ट्वादिविधानमिति फलभेदः ॥

तत्र विध्युद्देशस्य प्रधानत्वादप्राप्तविषयत्वेन 'न विधौ परश्शब्दार्थ' इति न्यायाच्च न तत्र लक्षणा । किन्तु अर्थवादस्य गुणानुवादत्वेन लक्षणासहिष्णुत्वाच्च तत्रैव लक्षणा युक्तेति ऋगादिशब्दैस्स्वाभिधेयानां मन्त्रादीनां ग्रहणमिति पूर्वपक्षः ॥

सिद्धान्तस्तु— लब्धात्मनः प्रधानस्य गुणाद् बलीयस्त्वम् । विध्युद्देशस्त्विह ऋगादिविषयत्वेनाऽत्मानं न लभते । उपक्रमगतैर्हि वेदशब्दैरसञ्जातप्रतिपक्षैर्यथाश्रुतार्थेऽवगते, तदुपसंहारगतमुपसञ्जातप्रतिपक्षं ऋगादिपदं यथाश्रुतार्थं सत्तदेकवाक्यतां न प्रतिपद्यते । न हि सम्भवत्येवं स्तुति-

१. तदनुरोधेन बलात् – क.पा.

**विधानयोरन्वयः** । **'यस्मादेवमेते** वेदा जातास्तस्मादृगादीनामुच्चैष्ट्वादि कर्तव्यमिति । तेन ऋगादि-शब्दलक्षणया "**तस्योच्चै ऋग्वेदेन क्रियत**" इत्यादिरूपेण तदनुगुणतयैवाऽत्मलाभः ॥ अतः प्रधान-त्वेऽपि विध्युद्देशस्याऽर्थवादानुसारेणैव लब्धात्मकस्योपक्रमविरोध्यर्थोपस्थापकत्वाभावान्न तदनुसा-रेणोपक्रमगतवेदशब्दस्य ऋगादिषु लक्षणा कल्पनीया । नापि वेदस्तुतेरेव लक्षितलक्षणादिना तदवयव-भूतऋगादिस्तुतौ पर्यवसानं कल्पनीयम् ॥ अप्राप्यविषयत्वञ्चासिद्धम् । उपक्रमे वेदानां प्रस्तावेन वेदसंस्पर्शेन किञ्चिद्विधास्यत इत्यवगते किं तद्विधेयमित्येतावदनवगतमपेक्षितञ्च विध्युद्देशाद्गृह्यत इति विध्युद्देशस्थितानामपि ऋगादिशब्दानामवगतविषयत्वात्तैर्लक्षणया वेदानां ग्रहणमिति ।

तथा तृतीये चिन्तितम् । 'अचोदितञ्च कर्मभेदात्', "प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्छत्, सपर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यत, वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपाला-न्निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति, स एवैनं वरुणपाशान्मुञ्चति" इति श्रूयते ॥

अत्र किमश्वदातुरिष्टिर्विधीयते, उत तत्प्रतिग्रहीतुरिति संशयः । 'उपक्रमे हि प्रजापतिर्वरुणाय प्रतिग्रहीत्रेऽश्वमनयत् ददौ । सः अश्वदाता प्रजापतिः स्वां देवतामश्वदाने सम्प्रदानत्वेनाऽत्मीयदेवतारूपं वारुणमार्छत् प्रापत् । अश्वं दत्वा वरुणग्रहं जलोदरव्याधिपर्यायं, प्राप्तवान् । स प्रजापतिः पर्यदीर्यत तेन व्याधिना परितो दीर्णोऽभूदि'ति प्रजापतेर्दानेन दोषं सङ्कीर्त्य तद्दोषनिर्हरणार्थमिष्ट्यनुष्ठानसङ्कीर्तना-दश्वदातुरियमिष्टिर्विधित्सिता इति गम्यते । उपसंहारे च तत्प्रतिग्रहीतुर्विधीयमाना दृश्यते ।

न च 'स स्वां देवतामार्छत्' इत्यादौ तच्छब्दानां वरुणपरत्वकल्पनादुपक्रमेऽपि प्रतिग्रहीतु-रेवेष्टिर्विधित्सिता गम्यत इति शक्यं वक्तुमिति वाच्यम् । विभक्त्यैकरूपेण तेषां प्रजापतिपरत्वौचि-त्यात् । स्वां देवतामिति च वरुणं प्रत्येव वरुणस्य देवतात्वोक्त्ययोगात् । 'तन्निरवपेत्' इति वरुणस्य वरुणोद्देशेन त्यागासम्भवाच्च । आत्मने सङ्कल्प्यमानस्य द्रव्यस्य स्वत्वनिवृत्त्यसम्भवात् । तस्मादस्ति तावदुपक्रमोपसंहारयोर्विरोधस्फूर्तिः । भाव्यञ्च नयोरविरोधेनैकवाक्यतया । अतः किं विध्युद्देशानुसारेण प्रतिग्रहीतुरियमिष्टिरर्थवादस्तु तथाश्वदानप्रतिग्रहसम्बन्धो गर्हितः, यद्दातुरियमिष्टिरस्यात् किमुत प्रति-ग्रहीतुरिति कैमुत्यतात्पर्येण दूरं नेतव्यः, किं वोपक्रमानुसारेण दातुरेव, प्रतिगृह्णातिस्तु दान एव योजनीय इति सम्भवति संशयः ॥

तत्र पूर्वः पक्षः— वेदोपक्रमाधिकरणे उपक्रमप्राबल्ये स्थितेऽपि नेह ततो निर्णयो युक्तः । तत्र ह्युपक्रमसङ्कीर्तिता वेदा उपसंहारगतैः ऋगादिशब्दैरनुवदितुं शक्यन्ते । वेदैकदेशत्वात् ऋगादीनामुपक्रम

एव 'अग्नेः ऋग्वेदः' इत्यादिना वेदानामृगादिसम्बन्धस्य कीर्तितया नात्यन्तपरित्यक्तोपक्रमार्थत्वाच्च । "ऋग्भिः पूर्वाह्ने दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः, सामवेदेनास्तमये महीयते, वेदैरशून्यस्त्रिभिरेति सूर्यः" इत्यादौ केवलानामृगादिशब्दानां ऋग्वेदादिषु लक्षणायाः वेदे दृष्टत्वाच्च । 'ऋचस्सामानि यजूंषि' इति प्रकृत्य 'सैषा त्रय्येव विद्ये'ति निर्दिष्टस्य त्रयीशब्दस्य 'त्रैविद्योऽयं ब्राह्मण' इति वेदत्रयाभिज्ञनिर्देशे वेदत्रयपरतया लोकानां प्रयोगेण च ऋगादिशब्दानां वेदेषु लक्षणायाः लोकसम्मतत्वाच्च ॥ अत एव तस्मिन्नधिकरणे 'वेदो वा प्रायदर्शनादि'ति सिद्धान्तसूत्रेणोपक्रमप्राबल्योक्त्यनन्तरं "**लिङ्गदर्शनाच्च**" '**त्रैविद्याख्या च तद्विदा**' इति सूत्राभ्यां वेदे लोके च प्रयोगेण लक्षणायाः निरूढत्वं दर्शितम् । न चेह तथा प्रतिगृह्णातिर्दाने दृष्टप्रयोगः प्रत्युत तदत्यन्तविरुद्धार्थ एव । तेन तत्रोपक्रान्तमर्थमुपसंहारगतश्शब्दोऽनुवदितुमर्हतीति तत्रोपक्रमानुरोधेऽप्यत्र न तथेति विध्युद्देशस्य प्राधान्याप्राप्तविषयत्वाभ्यामवगतं प्राबल्यमव्याहतमिति तदनुरोधेनैवोपक्रमो नेतव्य इति ॥

सिद्धान्तस्तु— उपक्रमप्राबल्यन्यायेनैवालब्धात्मनि प्राधान्यस्याप्रयोजकत्वादप्राप्तविषयसत्त्वस्य चासिद्धेरुपक्रम एवाश्वदातुः प्रजापतेर्वरुणग्रहनिर्मोचनहेतुत्वेनेष्टेः प्रशंसावशादश्वदातुरियमिष्टिर्विधास्यत इत्यवगतत्वात् सा दातुरेव । तथाच अर्थवादस्य विधिशक्त्यभावात् तावन्मात्रं ततोऽनवगतं विध्युद्देशाद्ग्राह्यम् । विधिविषयांशस्त्वर्थवादावगत एवेति दान एव प्रतिगृह्णातिर्योजनीयः । प्रतिगृह्णातीति हि प्रतिग्रहकर्तोच्यते । यः प्रतिग्रहहेतुभूतं दानमाचरति सोऽपि प्रतिग्रहकर्तेति व्यपदिश्यत एव । [1]प्रयोजककर्तर्यपि स्वव्यापारद्वारा प्रयोज्यव्यापारकर्तृत्वसत्त्वात्तत्र प्रयोजकव्यापारकर्तृत्वरूपहेतुकर्तृत्वविवक्षायां णिजन्तप्रयोगनियमेऽपि तद्वारकप्रयोज्यव्यापारकर्तृत्वविवक्षयाऽणिजन्तप्रयोगोऽपि न विरुध्यते । न च साक्षात्कर्तृत्व एव तच्छक्तिः लुङ्लृटोरद्यतनानद्यतनसाधारण्येन भूतभविष्यन्मात्र इव कर्तृप्रत्ययानां साक्षात्परम्परासाधारण्येन कर्तृत्वमात्रे शक्त्युपगमात् । दृष्टश्च हेतुकर्तर्यप्यणिजन्तप्रयोगः । यथा स्वामिनि संविधानमात्रकर्तरि साक्षाद्विलेखनमकुर्वत्यपि 'षड्भिर्हलैः कर्षति' इति ॥ ततश्च प्रतिगृह्णातेः कर्षतेरिव साक्षात् कर्तृवचनत्वस्य मुख्यस्वातन्त्र्यविषयतयौत्सर्गिकत्वेऽपि कर्षतेः षड्हलोपादानसामर्थ्यात् प्रयोजककर्तृपरत्ववदस्यापि उपक्रमैकवाक्यतासामर्थ्यात्तत्परत्वमुपपद्यते ॥

यद्यपि **वेदोपक्रमाधि**करणोक्ता लिङ्गदर्शनरूपाभ्युच्चययुक्तिरिह नास्ति । तथापि कर्षतिन्यायेन प्रयोगनिर्वाहादुपक्रमानुरोधेन निर्णयो युक्तः । किञ्च तत्र वक्तव्योऽभ्युच्चयः, उपक्रमे प्रजापतेस्तत्स्रष्टृतया अग्न्यादीनां तत्स्रष्टृतया वेदानाञ्च कीर्तितत्वेनोपक्रमो वेदविषय एवेति निश्चेतुमशक्यत्वात् । तत्र वेदजनकाऽग्न्यादिजनकत्वेन प्रशंसया प्रजापतेर्वा प्रजापतित्वेन वेदाजनकत्वेन च प्रशंसया अग्न्यादीनां

१. हेतुकर्तर्यपि – क.पा.

**वा प्रजापतिसुताग्न्यादिजातत्वेन प्रशंसया वेदानां वा किञ्चिद्विधास्यत इत्यवगते, उपसंहारगताना-मृगादीनाञ्च तेषामन्यतमत्वाभावेन ऋगादिशब्दानां यथाश्रुतार्थासम्भवे तेषामुपक्रान्तेषु प्राजापत्यादिषु 'किं परत्वमवसेयं' इत्यत्र नियामकत्वेन तेषां वेदेषु** लक्षणानिरूढिप्रदर्शनापेक्षणात् । न त्वत्र तदपे-**क्षास्ति । अत्रोपक्रमे वारुणेष्टिर्वरुणग्रहनिर्मोचनहेतुत्वेन प्रशस्यत इति व्यवस्थितस्तुत्यवगमात् । तस्मादिहाप्युपक्रमानुरोधेन निर्णय** इत्युपसंहारादुपक्रमः प्रबल इति ॥

***अत्रास्मद्गुरुचरणाः*—** उपक्रमादुपसंहारो बलीयान् । तस्य तद्व्याख्यानरूपत्वात् । तथाहि—**एकस्मिन्वाक्ये हि प्रथमभागेन क्वचिदर्थे धीस्थे चरमभागस्य तद्विरोधिनोऽप्यवैयर्थ्याय तद्व्याख्यान-रूपत्वं कल्पनीयं, व्याख्यानस्य पाश्चात्यत्वनियमात्** । लोके 'गामानय', 'बलीवर्दमानय' इत्यादौ वेदे **च 'वासः परिधत्ते यत्क्षौमम्' इत्यादौ तथा दर्शनात्** । व्याख्येयस्य च निश्चितप्रामाण्यव्याख्यानानु-**सारेणैवार्थनिर्णयो युक्तः** । 'व्याख्यानतो विशेषप्रतिपत्तिः' इति प्रसिद्धेः । वेदेऽपि 'उग्रं वचो अपा-**वधीरि'त्यादि मन्त्राणामपि** 'अशनया पिपासे ह वा उग्रं वच' इत्यादिनिश्चितप्रामाण्यब्राह्मणरूप-**व्याख्यानानुसारेणैवार्थनिर्णयस्वीकाराच्च** । किञ्चापच्छेदाधिकरणन्यायेन परत्वादुपक्रमादुपसंहारो बली-**यानङ्गीकार्यः** । किञ्चोपसंहारादुपक्रमस्य प्राबल्ये सर्वत्राप्यापातप्रत्ययस्यैव प्राबल्यापत्त्या विमर्शवैय-**र्थ्यम्** । अक्ताधिकरणाद्यनेकविरोधापत्तिश्चेत्याहुः ॥

***अत्र केचित्*—** उपसंहारस्योपक्रमव्याख्यानरूपत्वं व्याख्येयपदोपादानेन स्पष्टमप्रतीते-र्विरोधपरिहाराय कल्प्यम् । तच्च प्रथमश्रुतस्यैवोपक्रमस्य चरमश्रुतोपसंहारव्याख्यानरूपत्वेऽप्यविरो-धोपपत्तेः कल्पकाभावेनायुक्तम् । व्याख्यानस्य पाश्चात्यत्वनियमस्त्वसिद्ध एव । लोके 'पुङ्गवं पश्य, देवनाक्षमानये'त्यादौ प्रथमश्रुतस्यापि चरमश्रुतव्याख्यानरूपत्वदर्शनात् । व्याकरणे च 'वृद्धिरादैच्' इत्यादेः प्रथमश्रुतस्य 'सिचिवृद्धिः' इत्यादिचरमश्रुतसूत्रस्थवृद्ध्यादिपदव्याख्यानरूपत्वदर्शनात् । तस्मात् परस्परविरोधस्थले प्रमाणावगतैकवाक्यत्वनिर्वाहाय परस्यैव पूर्वव्याख्यानरूपत्वकल्पन-मप्रामाणिकमिति नोपसंहारप्राबल्ये व्याख्यानरूपत्वं कारणमित्याहुः ॥

***अत्र ब्रूमः*—** व्याख्येयोपस्थितिं विना व्याख्यानप्रवृत्तिरेव नेत्यविवादम् । तथाचोपक्रमोप-संहारयोर्यत्र विरोधोऽवगतस्तत्र प्रतीतैकवाक्यतानिर्वाहाय विरोधपरिहारस्यावश्यकत्वे तस्य चान्यतर-व्याख्यानरूपत्वाश्रयणेनापि सम्भवेन कस्य किं व्याख्येयमिति विशये तत्रोपक्रम एव व्याख्येयत्वेन स्वीकार्यः, विहिताध्ययनदशायां तस्यैव नियमेन प्रथमोपस्थितत्वात् । न तूपसंहारोऽतथात्वात् । यत्प्रथमोपस्थितं तदेव व्याख्येयं, यच्चरमोपस्थितं तदेव व्याख्यानमिति नियमात् । तथा च विहिता-ध्ययनदशायां चरमप्रवृत्तिकस्यैवोपसंहारस्य व्याख्यानरूपत्वं कल्प्यमिति कथं तदप्रामाणिकम् ?

यद्यपि 'देवनाक्षमानये'त्यादि लौकिकवाक्यं 'वृद्धिरादैच्, सिचिवृद्धि'रित्यादिव्याकरणे 'यतो वा इमानि भूतानि जायन्ते', 'यन्न दुःखेन सम्भिन्न'मित्यादिवैदिकवाक्ये च नियमेन प्रथमोपस्थितस्यापि देवनादिशब्दस्य नियमेन चरमोपस्थिताक्षवृद्धिब्रह्मस्वर्गादिशब्दव्याख्यानरूपत्वदर्शनान्नियमेन प्रथमोपस्थितिरप्यतिप्रसक्ता । तथापि वेदस्यापौरुषेयत्वेन व्याख्यात्रन्तरासम्भवेऽपि लिङ्गादीन्प्रत्यध्ययनविधेर्नियोजकत्ववत्तस्यैव स्वगतशब्दव्याख्यातृत्वमुपेयम् । व्याख्यातुश्च लोके शब्दविशेषरूपव्याख्याने प्रवृत्तिस्तत्कर्तव्यत्वोपस्थितिं विना नेति तदावश्यकत्वे तस्याश्च वस्तुतो व्याख्येयस्य सूत्रभाष्यत्वादिना रूपेणोपस्थितिं विनाऽनिर्वाहात् तन्निर्वाहाय तदपेक्षितव्याख्येयोपस्थितेः प्राथम्यनियमस्तावत्क्लृप्तः । तथैव व्याख्यानस्यापि कर्तव्यत्वोपस्थितेश्चरमत्वनियमश्च । न चैवंविधनियमस्य लोकवेदयोः क्वापि भङ्गोऽस्ति । लोके 'देवनाक्षमानये'त्यादौ 'वृद्धिरादैजि'त्यादौ च व्याख्यातुर्व्याख्येयाक्षवृद्ध्यादिशब्दोपस्थितिप्राथम्यसत्त्वात् । अन्यथा प्रथमं देवनपदप्रयोगस्य 'वृद्धिरादैच्' इत्यादिव्याकरणस्य[1] चानुपपत्तेः । एवं वेदेऽपि 'यतो वे'त्यादौ 'यन्न दुःखेन सम्भिन्नम्' इत्यादौ च व्याख्यातुर्वेदस्य व्याख्येयब्रह्मस्वर्गादिशब्दोपस्थितेः पाठक्रमानुसारेणाप्राथम्येऽप्यर्थक्रमानुसारेण प्राथम्यमस्तीति कल्पनीयम् । लोके तथा कल्पनात् । अन्यथा क्लृप्तहानाक्लृप्तकल्पनाप्रसङ्गात् । न हि लोके व्याख्येयपदोपस्थितिं विना व्याख्यानरूपशब्दविशेषस्य कर्तव्यत्वेनोपस्थितिरस्ति ।

एतावांस्तु विशेषः— लोके 'देवनाक्षमानय' इत्यादौ व्याख्यानरूपपदस्य प्रथमपाठो नादृष्टार्थः । किन्त्वैच्छिकः । वेदे तु 'यतो वे'त्यादौ सोऽदृष्टार्थ एव नैच्छिक इति । एवञ्चोपक्रमोपसंहारस्थले प्रतीतैकवाक्यतानिर्वाहाय स्फुरितविरोधाभासत्वसम्पादनस्यावश्यकत्वे तस्य प्रमाणभूतव्याख्यानं विनाऽनुपपत्तेस्तादृशव्याख्यानकर्तृत्वेन 'यतो वा इमानि भूतानि जायन्ते', 'यन्न दुःखेन सम्भिन्नम्' इत्यादाविव स्वीकृतं वेदं प्रत्यध्ययनकाले विहितादृष्टार्थाध्ययनगोचरानुपूर्व्यनुल्लङ्घनेनैव प्रथमोपस्थितोपक्रम एव व्याख्येयत्वेन चरमोपस्थितोपसंहार एव व्याख्यानत्वेन कल्प्यते । लोके तथाविधयोरेव शब्दयोर्व्याख्येयव्याख्यानत्वकल्पनात् । न चोक्तरीत्या प्रथमोपस्थितस्योपक्रमस्यैव व्याख्येयत्वसम्भवे चरमोपस्थितोपसंहारस्यैव च व्याख्यानत्वसम्भवे एवमेव तत्त्यागो युज्यते । न हि 'यतो वा इमानि भूतानि जायन्ते', 'यन्न दुःखेन सम्भिन्नम्' इत्यादाविवोपक्रमोपसंहारस्थले पाठक्रमानुसारेण प्रथमोपस्थितस्य व्याख्यानरूपत्वं स्फुटप्रतिभासम् । येन तत्रेवात्राप्यर्थक्रममेवाश्रित्य चरमोपस्थितस्यापि व्याख्येयत्वमाश्रयणीयं स्यात् । यद्यपि चोपक्रमोपसंहारयोरुभयोरप्यर्थद्वारकविरोधोपस्थितिदशायां तत्प्रतियोगित्वेन युगपदुपस्थितत्वमविशिष्टं भावाभाववत् । तथापि भावस्य प्रतियोगित्वज्ञानेऽपि

---

१. वृद्ध्यादिसंज्ञाकरणस्य वा – क.पा.

विरोधानुपस्थितिकालीनप्रथमोपस्थितिवदुपक्रमस्यापि व्याख्येयत्वज्ञाने तदनुपस्थितिकालीनप्रथमोपस्थितिरेवापेक्षिता । तादृशोपस्थितेरेव तत्र प्रयोजकत्वादिति न कश्चित्क्षुद्रोपद्रवः ॥

तथा च सन्दिग्धार्थस्य सतः प्रथमोपस्थितस्य व्याख्येयत्वनियमादुपक्रमस्य च तथात्वेन प्रकृते तस्यैव व्याख्येयत्वं कल्प्यते । उपसंहारस्य त्वतथात्वेन तद्व्याख्यानत्वमिति ।

अस्ति चोपक्रमस्य सन्दिग्धार्थत्वम् । तथाहि । वेदशब्दस्य 'वेदं कृत्वा वेदिं करोती'त्यादौ दर्भमुष्टिविशेषेऽप्यविगीतप्रयोगदर्शनेन नानार्थत्वात् । एवं 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छत्' इत्यादावपि तच्छब्दस्य सन्निधिप्राधान्याभ्यां वरुणप्रजापतिपरत्वसम्भवेनोपक्रमस्यास्ति सन्दिग्धार्थत्वम् । 'अक्ताश्शर्करा उपदधाति', 'वासः परिधत्त' इत्यादावपि सामान्यरूपेणाक्षिप्तद्रवद्रव्यशब्दस्य वासश्शब्दस्य च सन्दिग्धार्थत्वं स्फुटम् । 'श्येनेनाभिचरन्यजेते'त्यादावपि वस्तुतः श्येनशब्दस्य पक्षिविशेषे रूढ्या यजिसामानाधिकरण्येन च पक्षिविशेषयागोभयपरत्वसम्भवेन अस्ति सन्दिग्धार्थत्वम् । एवं यदग्नीषोमीयं पशुमालभेते'त्यादावप्युपक्रमस्य सन्दिग्धार्थत्वं द्रष्टव्यम् । तदेवमुपसंहारस्य व्याख्यानरूपत्वं नाप्रामाणिकमिति भवत्येव तदुपक्रमादुपसंहारस्य प्राबल्ये कारणमिति ।

**यत्तु** - यदप्यपच्छेदाधिकरणन्यायेनोपसंहारस्य प्राबल्ये परत्वं कारणमुक्तं - तदपि तुच्छम् । यदि ह्यत्रापच्छेदस्थल इव परमुत्पद्येत तर्ह्येव तस्य पूर्वापमर्देन तद्वदुत्पत्तिरिति स्यात् । न चात्र तस्योत्पत्तिस्सम्भवति । तथाहि– किमत्रोपक्रमबाधकत्वेनाभिमतमुपसंहारजन्यं ज्ञानमुपक्रमार्थान्वितोपसंहारार्थगोचरमुपेयते । किं वा तदनन्विततदर्थगोचरम्[1] । नाद्यः । परस्परविरुद्धार्थयोरुपक्रमोपसंहारयोरन्यतरलक्षणया विरोधसमाधानात्प्राक् सम्भूयकारित्वासम्भवेन तदयोगात् । उपक्रमस्य लक्षणाऽभ्युपगम्यत इति चेन्न । उपक्रमबाधकत्वाभिमतोपसंहारार्थविषयकज्ञानोदयात्प्राक् उपक्रमप्रतीतार्थत्यागे कारणाभावेन तल्लक्षणाकल्पनस्य तद्बाधकत्वाभिमतज्ञानोदयस्य च परस्पराश्रयग्रस्तत्वेन एकस्याप्यसम्भवात् । न द्वितीयः । एकस्मिन्वाक्ये पूर्वपूर्वभागार्थप्रतीत्यनन्तरमुत्तरोत्तरभागस्य पूर्वपूर्वभागार्थान्वितस्वार्थबोधकताया एव व्युत्पत्तिसिद्धतया तदनन्वितोपसंहारार्थविषयकज्ञानासम्भवात् । तथा व्युत्पत्तिनियमानभ्युपगमेऽप्युपक्रमोपसंहारयोर्विध्यर्थवादत्वादिरूपेणैकवाक्यत्वमनुसन्दधतामुपक्रमैकवाक्यत्वानुपपत्त्योपसंहारस्य लक्षणाकल्पनां विना मुख्यार्थबोधासम्भवात् । उपक्रमस्याप्युपसंहारैकवाक्यत्वानुपपत्तिस्तुल्येति चेत् । सत्यम् । उपक्रमदशायामुपसंहारो विरोधी नोपस्थित इति तदेकवाक्यत्वानुपपत्तिर्न स्वरूपसती प्रतिबन्धिका । इह तु ज्ञानानुपपत्तिः प्रतिबन्धिकेति विशेषः ।

---

१. तदनन्वितस्वार्थगोचरं – क.पा.

उपसंहारादप्युपक्रमैकवाक्यत्वमननुसन्दधतां मुख्यार्थबोधः सम्भवतीति चेन्न। तथाप्युपक्रमैकवाक्यत्वे उपसंहारादर्थप्रत्ययकाले वेदपाठक्रमानुसारेण नियमतोऽनुसन्धातुं योग्ये विद्यमाने उपक्रमाश्रवण-तदर्थानवगमतद्भिन्नवाक्यत्वभ्रमात् पुरुषदोषमात्रेणाननुसन्धायमाने सम्भवतस्तस्मिन्ननुसन्धीयमाने वा असम्भवतः प्रत्ययस्यापातप्रत्ययत्वेन तस्योपक्रमबाधकत्वायोगात्। अन्यथा परप्राबल्येऽप्युपक्रमस्य पूर्वत्वमननुसन्दधतां पश्चाच्छ्रुतात्तस्मात्प्रथमश्रुतोपसंहारैकवाक्यत्वाननुसन्धानेन जातस्य ज्ञानस्योप-संहारबाधकत्वापत्त्योन्मत्तकेलिप्रसङ्गात्। न ह्युद्गातृप्रतिहर्त्रपच्छेदयोरिवोपक्रमोपसंहारयोर्यदा यः पश्चा-दुपस्थितस्तदा तेन तत्पूर्वस्य बाध इत्यनियतो बाध्यबाधकभाव इति परेणाप्यङ्गीक्रियते। अतो नात्र परप्राबल्यन्यायावतारः ॥

किन्तु यत्रापच्छेदादौ वस्तुतोऽप्येकवाक्यत्वाभावात् तदनुपपत्त्यभावेन परं निर्दोषज्ञानमुत्पद्यते तत्रैव तस्य परत्वेन पूर्वबाधकत्वम्। यत्र त्वेकवाक्यत्वं तत्र वेदपाठक्रमानुसारेण प्रथमोपस्थितोप-क्रमार्थज्ञानानन्तरं तदेकवाक्यतया प्रतिपन्नस्तदुपसंहारो मुख्यार्थश्चेत्तद्विरुद्धार्थतया न तेनान्वेतुं युक्त इति लक्षणाकल्पनापूर्वकं तदेकवाक्यतयैव तस्यार्थबोधकत्वम्। न तु तद्विसम्प्रतिपत्त्या। उपक्रमा-ननुसन्धाने तद्विसम्प्रतिपत्त्या बोधकत्वसम्भवेऽपि तदानीन्तनज्ञानं दोषजन्यमापातप्रत्ययरूपमेवेति तद्विरुद्धार्थनिर्दोषज्ञानोदयान्न तस्य परत्वेन बाधकत्वाशङ्केति ॥

*तन्न।* तदनन्वितोपसंहारजन्यमुख्यार्थगोचरज्ञानस्यैव परत्वेनोपक्रमबाधकत्वोपगमात्। न च एकवाक्यत्वानुसन्धानदशायां तदनुपपत्तिप्रतिसन्धानेनैव प्रतिबन्धादुपसंहारान्मुख्यार्थगोचरज्ञानमेव न सम्भवतीति कथं तस्योपक्रमजन्यज्ञानबाधकत्वमिति वाच्यम्। एकवाक्यत्वानुपपत्तिज्ञानस्य विषयविरोधाभावेनोपसंहारजन्यतादृशज्ञानोत्पत्तिप्रतिबन्धकत्वायोगात्। न हि उपक्रमोपसंहारयोः परस्परानन्वितपदार्थस्थानाभिषिक्तस्वस्वार्थगोचरज्ञानजनने एकवाक्यत्वाननुसन्धानदशायामिव तदनु-सन्धानदशायामप्यन्यद्बाधकमस्ति। अन्यथैकवाक्यत्वमननुसन्दधतां विरोधप्रतियोगिनोः उपक्रमोप-संहारयोरनुपस्थितत्वेन विरोधस्यैवानुपस्थितावधिकरणारम्भप्रयोजकसंशयासम्भवेन तदनारम्भापत्तेः ॥

किञ्चैवमुपक्रमप्राबल्यमपि दुर्घटम्। उपसंहारार्थान्वितस्वार्थगोचरोपक्रमजन्यज्ञानस्याप्युक्त-रीत्योपसंहारलक्षणया विरोधसमाधानात्प्रागसम्भवात्। उपसंहारलक्षणापूर्वकं विरोधसमाधानानन्तर-मुत्पन्नस्योपसंहारार्थान्वितस्वार्थगोचरोपक्रमजन्यज्ञानस्य बाधकत्वेऽन्योन्याश्रयात्। उपसंहारबाधक-त्वाभिमतोपक्रमार्थगोचरज्ञानोदयात्प्रागुपसंहारप्रतीतार्थपरित्यागे कारणाभावेन तल्लक्षणाकल्पनस्य तद्बाधकत्वाभिमतज्ञानोदयस्य च परस्परसापेक्षत्वात्। उपसंहारार्थानन्वितस्वार्थगोचरोपक्रमजन्य-ज्ञानस्योपसंहारैकवाक्यत्वानुसन्धानदशायां तदनुपपत्तिज्ञानरूपविरोधिन एव सत्त्वेनानुत्पत्तेः। तदननु-

सन्धानदशायां चोपक्रमोत्पन्नज्ञानस्यापातप्रत्ययत्वेनोपसंहाराबाधकत्वात् । अन्यथा तदननुसन्धानदशायामुपसंहारोत्पन्नप्रत्ययस्याप्युपक्रमबाधकत्वापत्तेः । अध्ययनक्रमापन्नोपक्रमार्थगोचरज्ञानस्यैकवाक्यत्वाननुसन्धानदशायामुत्पन्नस्यापातप्रत्ययत्वेऽप्युपसंहारबाधकत्वे च तदननुसन्धानदशायां क्रमिकाध्ययनगोचरोपसंहारोत्पन्नज्ञानस्यापातप्रत्ययत्वेऽपि परत्वेनोपक्रमबाधकत्वापत्तेः । उपक्रमाश्रवणतदर्थानवगमतद्भिन्नवाक्यत्वभ्रमादिरूपपुरुषदोषनिबन्धनत्वेन तस्य अबाधकत्वे च, उपसंहाराश्रवणतदर्थानवगमतदेकवाक्यत्वाननुसन्धानादिरूपपुरुषदोषनिबन्धनत्वेनोपक्रमोत्पन्नप्रत्ययस्याप्युपसंहाराबाधकत्वानुपपत्तेः । उपक्रमैकवाक्यत्वाननुसन्धानदशायामापातप्रत्ययरूपस्याप्युपसंहारजन्यज्ञानस्य परत्वेनोपक्रमाबाधकत्वे यदुक्तं उपक्रमस्य पूर्वत्वमननुसन्दधतां पश्चाच्छ्रुतात्तस्मात्प्रथमश्रुतोपसंहारैकवाक्यत्वाननुसन्धानेन जातस्य ज्ञानस्योपसंहाराबाधकत्वापत्त्योन्मत्तकेलिप्रसङ्गः । न ह्युद्गातृप्रतिहर्त्रपच्छेदयोरिव उपक्रमोपसंहारयोर्यदा यः पश्चादुपस्थितस्तदा तेन तत्पूर्वस्य बाध इत्यनियतबाध्यबाधकभावस्य परेणाप्यनङ्गीकारादिति तदेतदुपक्रमप्राबल्येऽपि तुल्यम् । तत्राप्युपसंहारैकवाक्यत्वाननुसन्धानदशायामापातप्रत्ययरूपस्याप्युपक्रमजन्यज्ञानस्य पूर्वत्वेनोपसंहारबाधकत्वे उपसंहारस्य परत्वमननुसन्दधतां पूर्वश्रुतात्तस्माच्चरमश्रुतोपक्रमैकवाक्यत्वाननुसन्धानेन जातस्य ज्ञानस्योपक्रमबाधकत्वापत्त्योन्मत्तकेलिप्रसङ्गः । न ह्युद्गातृप्रतिहर्त्रपच्छेदयोरिवोपक्रमोपसंहारयोः यदा यः पूर्वमुपस्थितस्तदा तेन तत्परस्य बाध इत्यनियतो बाध्यबाधकभावः परेणाप्यङ्गीक्रियत इत्यस्य सुवचत्वात् । तस्मादुपक्रमैकवाक्यत्वाननुसन्धानदशायां वा तदनुसन्धानदशायां वोपक्रमार्थानन्वितोपसंहारगोचर-ज्ञानोत्पत्तौ बाधकाभावेन तस्योपक्रमबाधकत्वे निर्णेतव्येऽस्त्येव परप्राबल्यन्यायावतारः ॥

**एतेन** यत्रापच्छेदादौ वस्तुतोऽप्येकवाक्यत्वाभावात्तदनुपपत्त्यभावेन परं निर्दोषज्ञानमुत्पद्यते तत्रैव तस्य परत्वेन पूर्वबाधकत्वम् । यत्र त्वेकवाक्यत्वमुपक्रमादिस्थले तत्र वेदपाठक्रमानुसारेण प्रथमोपस्थितोपक्रमार्थज्ञानानन्तरं तदेकवाक्यतया प्रतिपन्नस्तदुपसंहारो मुख्यार्थश्चेत्तद्विरुद्धार्थतया न तेनान्वेतुं शक्त इति लक्षणाकल्पनापूर्वकं तदेकवाक्यतयैव तस्यार्थबोधकत्वम् । न तु तद्विसम्प्रतिपत्त्या । उपक्रमाननुसन्धानदशायां तद्विसम्प्रतिपत्त्याऽर्थबोधकत्वसम्भवेऽपि तदानीन्तनज्ञानं दोषजन्यमापातप्रत्ययरूपमेवेति तद्विरुद्धार्थनिर्दोषज्ञानोदयाभावान्न तस्य परत्वेन पूर्वबाधकत्वाशङ्केति **निरस्तम्** । उक्तरीत्योपक्रमार्थज्ञानस्य तदेकवाक्यत्वानुपपत्त्यनुसन्धानस्य च विषयविरोधाभावेन तस्य तदप्रतिबन्धकतयोपक्रमैकवाक्यत्वानुसन्धानदशायामप्युपक्रमार्थानन्वितमुख्योपसंहारार्थगोचरज्ञानसम्भवे परप्राबल्यन्यायावतारात् । तदेकवाक्यत्वाननुसन्धानदशायामप्युपक्रमादिवोपसंहारादपि तादृशज्ञानोदयसम्भवेन तस्य पूर्वबाधकत्वसम्भवाच्च । वेदपाठक्रमानुसारेणोपसंहारजन्यज्ञानस्यैव पूर्वबाधक-

त्वोपगमेनोक्तातिप्रसङ्गस्याप्यनवकाशात् । उपक्रमाश्रवणादेर्दोषत्वे मानाभावेन तत्कालीनतादृशोपसंहारजन्यज्ञानस्य निर्दोषत्वोपपत्तेश्च । अन्यथोपक्रमजन्यज्ञानस्यापि तादृशस्योपसंहाराबाधकत्वप्रसङ्गस्योक्तत्वाच्च ॥

नन्वन्योन्यनिरपेक्षस्थल एव परप्राबल्यन्यायावतारादुपक्रमोपसंहारयोश्चैकवाक्यतया अन्योन्यसापेक्षत्वेन कथं तत्र तन्न्यायावतार इति चेन्न । उपक्रमोपसंहारयोः पदार्थस्थानीयमुख्यस्वार्थगोचरज्ञानजनने अन्योन्यनिरपेक्षत्वात् ॥

ननूपसंहारजज्ञानस्य घटज्ञानानन्तरभाविपटज्ञानस्येव विषयविरोधाभावेन कथमुपक्रमजन्यज्ञानबाधकत्वमिति चेत्; न हि वयं शुक्ताविदं रजतमिति ज्ञानं प्रति तदनन्तरभावि नेदं रजतमिति ज्ञानस्येवोपक्रमजन्यज्ञानं प्रति तदनन्तरभाव्युपसंहारजज्ञानस्याप्रामाण्यज्ञापकत्वरूपबाधकत्वमभ्युपगच्छामः । येन तद्वदेव विषयविरोधापेक्षा स्यात् । किन्त्वेकवाक्यताबलायातोपक्रमार्थान्वितस्वार्थबोधकत्वनिर्वाहायोपसंहारस्य स्वार्थानाकाङ्क्षितमुख्यार्थादुपक्रमं प्रच्याव्य तदाकाङ्क्षितार्थे तद्व्यवस्थापनरूपम् । न चोपक्रमस्य प्राबल्येऽपीतोऽन्यद्बाधकत्वं सम्भवति । क्वचिच्छ्येनादिवाक्ये सर्वथा स्वार्थप्रच्यावनं, क्वचिच्च 'वासः परिधत्त' इत्यादौ स्वार्थैकदेशप्रच्यावनमित्यन्यदेतत् ॥

यद्यप्यपच्छेदस्थले क्वचिद्विषयविरोधोऽप्यस्ति । तथाप्यप्रामाण्यापादनमुखेन सामान्यतः प्रवृत्तं पूर्वशास्त्रं स्वविरुद्धार्थात्प्रच्याव्य स्वाविरुद्धार्थविशेषे तद्व्यवस्थापकत्वरूपतद्बाधकत्वमुत्तरशास्त्रस्याप्यस्त्येवेति सर्वत्रानुगतमिदमेव बाधकत्वम् । एतावांस्तु विशेषः । यदपच्छेदस्थले विषयविरोधोऽप्रामाण्यापादनमुखेन पूर्वशास्त्रस्य स्वार्थप्रच्यावनहेतुः । उपक्रमादिस्थले तु परस्परनैराकाङ्क्ष्यं वेदपाठक्रमायातपूर्वभागस्य स्वार्थप्रच्यावनहेतुरिति ॥

वस्तुतस्तु लोके वेदे च न बाध एकविधस्सम्भवति । ततश्च बाधशब्दो नानार्थः । अत एव पूर्वमीमांसाशास्त्रे प्राप्ताप्राप्तबाधविवेकाय बाधविषयोऽनेकधा निरूपित इत्युक्तम् । तस्मादुपसंहारस्योपक्रमात्तद्व्याख्यानरूपत्वेन परत्वेन च प्राबल्यमिति स्थितम् ॥

**यदपि** एतेनोपक्रमप्राबल्ये सर्वत्राऽपातप्रत्ययस्यैव प्राबल्यापत्त्या तद्विरुद्धार्थगोचरज्ञानान्तरस्यैवोत्पत्त्यसम्भवेन तदर्थविमर्शवैयर्थ्यापत्तिरित्यपि परास्तम् । पूर्वेण हि परमुत्पत्तिप्रतिबन्धेन बाधनीयम् । न चोपसंहारप्रत्यये उपक्रमैकवाक्यत्वानुपपत्तिवत् श्येनादिवाक्यादापातप्रत्ययानन्तरं न्यायानुगृहीतादापातप्रत्ययविषयविरुद्धार्थविषयकवाक्यार्थज्ञानोत्पत्तौ किञ्चिद्बाधकमस्ति । ततश्च न्यायेन निरुपपत्तिकं पूर्वप्रत्ययं तिरस्कुर्वत्परमुत्पद्यत इति न पूर्वप्राबल्ये एतादृशशङ्कावकाशः ॥

सन्धानदशायां चोपक्रमोत्पन्नज्ञानस्यापातप्रत्ययत्वेनोपसंहाराबाधकत्वात् । अन्यथा तदननुसन्धानदशायामुपसंहारोत्पन्नप्रत्ययस्याप्युपक्रमबाधकत्वापत्तेः । अध्ययनक्रमापन्नोपक्रमार्थगोचरज्ञानस्यैकवाक्यत्वाननुसन्धानदशायामुत्पन्नस्यापातप्रत्ययत्वेऽप्युपसंहारबाधकत्वे च तदननुसन्धानदशायां क्रमिकाध्ययनगोचरोपसंहारोत्पन्नज्ञानस्यापातप्रत्ययत्वेऽपि परत्वेनोपक्रमबाधकत्वापत्तेः । उपक्रमाश्रवणतदर्थानवगमतद्भिन्नवाक्यत्वभ्रमादिरूपपुरुषदोषनिबन्धनत्वेन तस्य अबाधकत्वे च, उपसंहाराश्रवणतदर्थानवगमतदेकवाक्यत्वाननुसन्धानादिरूपपुरुषदोषनिबन्धनत्वेनोपक्रमोत्पन्नप्रत्ययस्याप्युपसंहाराबाधकत्वानुपपत्तेः । उपक्रमैकवाक्यत्वाननुसन्धानदशायामापातप्रत्ययरूपस्याप्युपसंहारजन्यज्ञानस्य परत्वेनोपक्रमाबाधकत्वे यदुक्तं उपक्रमस्य पूर्वत्वमननुसन्दधतां पश्चाच्छ्रुतात्तस्मात्प्रथमश्रुतोपसंहारैकवाक्यत्वाननुसन्धानेन जातस्य ज्ञानस्योपसंहाराबाधकत्वापत्त्योन्मत्तकेलिप्रसङ्गः । न ह्युद्गातृप्रतिहर्त्रपच्छेदयोरिव उपक्रमोपसंहारयोर्यदा यः पश्चादुपस्थितस्तदा तेन तत्पूर्वस्य बाध इत्यनियतबाध्यबाधकभावस्य परेणाप्यनङ्गीकारादिति तदेतदुपक्रमप्राबल्येऽपि तुल्यम् । तत्राप्युपसंहारैकवाक्यत्वाननुसन्धानदशायामापातप्रत्ययरूपस्याप्युपक्रमजन्यज्ञानस्य पूर्वत्वेनोपसंहारबाधकत्वे उपसंहारस्य परत्वमननुसन्दधतां पूर्वश्रुतात्तस्माच्चरमश्रुतोपक्रमैकवाक्यत्वाननुसन्धानेन जातस्य ज्ञानस्योपक्रमबाधकत्वापत्त्योन्मत्तकेलिप्रसङ्गः । न ह्युद्गातृप्रतिहर्त्रपच्छेदयोरिवोपक्रमोपसंहारयोः यदा यः पूर्वमुपस्थितस्तदा तेन तत्परस्य बाध इत्यनियतो बाध्यबाधकभावः परेणाप्यङ्गीक्रियत इत्यस्य सुवचत्वात् । तस्मादुपक्रमैकवाक्यत्वाननुसन्धानदशायां वा तदनुसन्धानदशायां वोपक्रमार्थानन्वितोपसंहारगोचर-ज्ञानोत्पत्तौ बाधकाभावेन तस्योपक्रमबाधकत्वे निर्णेतव्येऽस्त्येव परप्राबल्यन्यायावतारः ॥

**एतेन** यत्रापच्छेदादौ वस्तुतोऽप्येकवाक्यत्वाभावात्तदनुपपत्त्यभावेन परं निर्दोषज्ञानमुत्पद्यते तत्रैव तस्य परत्वेन पूर्वबाधकत्वम् । यत्र त्वेकवाक्यत्वमुपक्रमादिस्थले तत्र वेदपाठक्रमानुसारेण प्रथमोपस्थितोपक्रमार्थज्ञानानन्तरं तदेकवाक्यतया प्रतिपन्नस्तदुपसंहारो मुख्यार्थश्चेत्तद्विरुद्धार्थतया न तेनान्वेतुं शक्त इति लक्षणाकल्पनापूर्वकं तदेकवाक्यतयैव तस्यार्थबोधकत्वम् । न तु तद्विसम्प्रतिपत्त्या । उपक्रमाननुसन्धानदशायां तद्विसम्प्रतिपत्त्याऽर्थबोधकत्वसम्भवेऽपि तदानीन्तनज्ञानं दोषजन्यमापातप्रत्ययरूपमेवेति तद्विरुद्धार्थनिर्दोषज्ञानोदयाभावान्न तस्य परत्वेन पूर्वबाधकत्वाशङ्केति **निरस्तम्** । उक्तरीत्योपक्रमार्थज्ञानस्य तदेकवाक्यत्वानुपपत्त्यनुसन्धानस्य च विषयविरोधाभावेन तस्य तदप्रतिबन्धकतयोपक्रमैकवाक्यत्वानुसन्धानदशायामप्युपक्रमार्थानन्वितमुख्योपसंहारार्थगोचरज्ञानसम्भवे परप्राबल्यन्यायावतारात् । तदेकवाक्यत्वाननुसन्धानदशायामप्युपक्रमादिवोपसंहारादपि तादृशज्ञानोदयसम्भवेन तस्य पूर्वबाधकत्वसम्भवाच्च । वेदपाठक्रमानुसारेणोपसंहारजन्यज्ञानस्यैव पूर्वबाधक-

त्वोपगमेनोक्तातिप्रसङ्गस्याप्यनवकाशात् । उपक्रमाश्रवणादेर्दोषत्वे मानाभावेन तत्कालीनतादृशोपसंहारजन्यज्ञानस्य निर्दोषत्वोपपत्तेश्च । अन्यथोपक्रमजन्यज्ञानस्यापि तादृशस्योपसंहाराबाधकत्वप्रसङ्गस्योक्तत्वाच्च ॥

नन्वन्योन्यनिरपेक्षस्थल एव परप्राबल्यन्यायावतारादुपक्रमोपसंहारयोश्चैकवाक्यतया अन्योन्यसापेक्षत्वेन कथं तत्र तन्न्यायावतार इति चेन्न । उपक्रमोपसंहारयोः पदार्थस्थानीयमुख्यस्वार्थगोचरज्ञानजनने अन्योन्यनिरपेक्षत्वात् ॥

ननूपसंहारजज्ञानस्य घटज्ञानानन्तरभाविपटज्ञानस्येव विषयविरोधाभावेन कथमुपक्रमजन्यज्ञानबाधकत्वमिति चेत्; न हि वयं शुक्ताविदं रजतमिति ज्ञानं प्रति तदनन्तरभावि नेदं रजतमिति ज्ञानस्येवोपक्रमजन्यज्ञानं प्रति तदनन्तरभाव्युपसंहारजज्ञानस्याप्रामाण्यज्ञापकत्वरूपबाधकत्वमभ्युपगच्छामः । येन तद्वदेव विषयविरोधापेक्षा स्यात् । किन्त्वेकवाक्यताबलायातोपक्रमार्थान्वितस्वार्थबोधकत्वनिर्वाहायोपसंहारस्य स्वार्थानाकाङ्क्षितमुख्यार्थादुपक्रमं प्रच्याव्य तदाकाङ्क्षितार्थे तद्व्यवस्थापनरूपम् । न चोपक्रमस्य प्राबल्येऽपीतोऽन्यद्बाधकत्वं सम्भवति । क्वचिच्छ्येनादिवाक्ये सर्वथा स्वार्थप्रच्यावनं, क्वचिच्च 'वासः परिधत्त' इत्यादौ स्वार्थैकदेशप्रच्यावनमित्यन्यदेतत् ॥

यद्यप्यपच्छेदस्थले क्वचिद्विषयविरोधोऽप्यस्ति । तथाप्यप्रामाण्यापादनमुखेन सामान्यतः प्रवृत्तं पूर्वशास्त्रं स्वविरुद्धार्थात्प्रच्याव्य स्वाविरुद्धार्थविशेषे तद्व्यवस्थापकत्वरूपतद्बाधकत्वमुत्तरशास्त्रस्याप्यस्त्येवेति सर्वत्रानुगतमिदमेव बाधकत्वम् । एतावांस्तु विशेषः । यदपच्छेदस्थले विषयविरोधोऽप्रामाण्यापादनमुखेन पूर्वशास्त्रस्य स्वार्थप्रच्यावनहेतुः । उपक्रमादिस्थले तु परस्परनैराकाङ्क्ष्यं वेदपाठक्रमायातपूर्वभागस्य स्वार्थप्रच्यावनहेतुरिति ॥

वस्तुतस्तु लोके वेदे च न बाध एकविधस्सम्भवति । ततश्च बाधशब्दो नानार्थः । अत एव पूर्वमीमांसाशास्त्रे प्राप्ताप्राप्तबाधविवेकाय बाधविषयोऽनेकधा निरूपित इत्युक्तम् । तस्मादुपसंहारस्योपक्रमात्तद्व्याख्यानरूपत्वेन परत्वेन च प्राबल्यमिति स्थितम् ॥

**यदपि** एतेनोपक्रमप्राबल्ये सर्वत्राऽऽपातप्रत्ययस्यैव प्राबल्यापत्त्या तद्विरुद्धार्थगोचरज्ञानान्तरस्यैवोत्पत्त्यसम्भवेन तदर्थविमर्शवैयर्थ्यापत्तिरित्यपि परास्तम् । पूर्वेण हि परमुत्पत्तिप्रतिबन्धेन बाधनीयम् । न चोपसंहारप्रत्यये उपक्रमैकवाक्यत्वानुपपत्तिवत् श्येनादिवाक्यादापातप्रत्ययानन्तरं न्यायानुगृहीतादापातप्रत्ययविषयविरुद्धार्थविषयकवाक्यार्थज्ञानोत्पत्तौ किञ्चिद्बाधकमस्ति । ततश्च न्यायेन निरुपपत्तिकं पूर्वप्रत्ययं तिरस्कुर्वत्परमुत्पद्यत इति न पूर्वप्राबल्ये एतादृशशङ्कावकाशः ॥

**किञ्च परप्राबल्येऽपि न्यायानुगृहीतवाक्यार्थज्ञानानन्तरं न्यायाभासक्षुभितचित्तस्य तदेवापातज्ञानं पुनरपि सम्भवतीति तेन तस्य बाधः** किं न स्यात् । न च तत्र बाधाभिमान इष्ट इति वाच्यम् । वस्तुतो **बाधप्रयोजके परत्वे** सति वास्तवबाधस्यैव भाव्यतया, अभिमानमात्रेणाचरितार्थत्वात् । सन्न्यायोप-बृंहितवाक्यार्थज्ञानस्य तद्विरोधिज्ञानात्परत्वे परं बाधकमिति चेन्न । पूर्वप्राबल्येऽप्येवं वक्तुं शक्यत्वा-दिति ।

**तदपि न ।** उपक्रमस्थलेऽप्येकवाक्यत्वानुपपत्तिज्ञानान्याप्रतिबन्धकत्वस्योक्तत्वात् । अविमर्श-दशायां परस्परविरुद्धार्थकोपक्रमोपसंहारयोरेकवाक्यत्वानुपपत्तिज्ञानस्याधिकरणारम्भप्रयोजकसंशय-मात्रापादकतया उभयसाधारणत्वेनोपसंहारार्थनिर्णयमात्राप्रतिबन्धकत्वात् । अन्यथोपसंहारैकवाक्य-त्वानुपपत्तिज्ञानस्याप्युपक्रमार्थनिर्णयप्रतिबन्धकत्वापातात् । न च उपसंहारैकवाक्यत्वानुपपत्तिप्रति-सन्धानात्प्रागेवोपक्रमेण स्वार्थज्ञानस्य जनितत्वेन स्वरूपसदुपसंहारैकवाक्यत्वानुपपत्तेरप्रतिबन्धकत्वेन तदुत्तरकालीनोपसंहारैकवाक्यत्वानुपपत्तिज्ञानस्य तत्प्रतिबन्धकत्वमेव कथमिति वाच्यम् । उपसंहारे-णाप्युपक्रमैकवाक्यत्वानुपपत्तिज्ञानात्प्रागेव स्वार्थगोचरज्ञानस्य जनितत्वेन तदुत्तरकालीनोपक्रमैक-वाक्यत्वानुपपत्तिज्ञानस्यापि तत्प्रतिबन्धकत्वमेव कथमित्यपि सुवचत्वात् । अन्यथोपसंहारेण स्वार्थ-गोचरज्ञानानुत्पादे [1]विरोधभानासम्भवेन संशयानुपपत्तेरुक्तत्वात् । उपसंहारैकवाक्यत्वानुपपत्तिज्ञान-स्योपक्रमजज्ञानापेक्षयोत्तरकालीनत्वेन तदुत्पत्तिप्रतिबन्धकत्वेनाबाधकत्वेऽपि अपच्छेदन्यायेन तद-प्रामाण्यज्ञापकत्वेन तद्बाधकत्वसम्भवाच्च ॥

नन्वेवं सत्युपक्रमाधिकरणविरोध इति चेन्न । तत्रोपक्रमप्राबल्यमनपेक्ष्य न्यायान्तरेण स्वराणां वेदधर्मत्वनिर्णयसम्भवेनाविरोधात् । तथाहि— न हि तत्रोपक्रमानुरोधेन स्वराणां वेदधर्मत्वनिर्णयः । किन्तु तस्य ऋगादिधर्मत्वे 'ऋच्यध्यूढं साम गीयत' इति वचनादृगाधारगीतिरूपे साम्न्यप्युच्चैस्त्व-'मुच्चैर्ऋचा क्रियेते'त्यत एव सिद्ध्यतीत्युच्चैस्साम्नेत्यस्य वैयर्थ्यापत्तेः । पश्चात्तनतद्विध्यनुरोधेन अत एव **'वेदो वा प्रायदर्शनात्'** इति सूत्रोक्तप्राथम्यरूपप्रायदर्शनेऽपरितोषेण **'धर्मोपदेशाच्च'** इति सूत्रे इदमेव हेतूकृतम् । किञ्चोपक्रमे वेदशब्द'स्त्रयो वेदा अजायन्त, अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद' इत्यभ्यस्तः । अभ्यासश्चोपसंहारादपि प्रबलः, बहुबाधस्यान्याय्यत्वादिति तत एव निर्णयोऽस्तु । एवञ्च 'प्रायवचनाच्चे'त्यादाविव सूत्रस्थप्रायशब्दस्य बाहुल्यमर्थो लभ्यत इति न प्राथम्यं क्लिष्टतया तदर्थ इति कल्पनीयम् ॥

---

१. विरोधज्ञानासम्भवेन – क.पा.

अपि च 'ऋग्वेदमधीत' इत्यादिलौकिकप्रयोगात् 'ऋग्भिः पूर्वाह्ण' इति वैदिकप्रयोगाच्च ऋगादि-शब्दाः तत्तद्वेदवाचका इति नात्रोपक्रमोपसंहारवैरूप्यमपि । येनात्रोपक्रमानुसारेण निर्णयः शङ्क्येत, तस्मान्न वेदोपक्रमाधिकरणविरोध इति ॥

**यत्तु** तत्र न तावत्स्वराणामृगादिधर्मत्वे उच्चैस्साम्नेत्यस्य वैयर्थ्यापत्तेस्तेषां वेदधर्मत्वनिर्णय इति युक्तम् । ऋगनध्यारूढेषु स्तोभाक्षरनिर्वर्त्यगीतिभागेषु उच्चैष्ट्वसिद्ध्यर्थतया तस्य सार्थकत्वात् । तथा सति उच्चैस्साम्नेत्यल्पविषयं स्यादिति चेन्न । अल्पविषयत्वेऽपि विधिवैयर्थ्याप्रसङ्गात् । वेदधर्मत्व-पक्षेऽप्यस्य वाचनिकस्वरान्तरानवरुद्धविधिविषयकत्वस्य परिहारेण प्रवर्तमानस्याल्पविषयत्वस्य वार्तिकादिष्वेवोक्तत्वात् । तस्माद्धर्मोपदेशादित्यभ्युच्चय इति न ततो वेदधर्मत्वनिर्णय इति ॥

**तन्न** । स्वराणामृग्धर्मत्वे, उच्चैस्साम्नेत्यस्य बाधापत्तेः । तस्यैव प्रकृते वैयर्थ्यशब्देन विवक्षित-त्वात् । सङ्कोचस्याप्येकदेशबाधरूपत्वात् । अन्यथा पदादिशास्त्रेणाहवनीयशास्त्रस्य तथाविधबाधा-नापत्तेः । न चैवं ऋक्पदस्य वेदपरत्वे सर्वथा स्वार्थपरित्यागेन बाधस्स्यात् । सर्वथा बाधापेक्षया एकदेशरूपबाधरूपसङ्कोचस्यैवाश्रयणीयत्वादिति वाच्यम् । वक्ष्यमाणरीत्या ऋगादिशब्दानां वेदविशेष-वाचित्वेन बाधप्रसङ्गस्यैवानवकाशात् । न चैवं ऋक्शब्दवत् सामशब्दस्यापि वेदविशेषवाचित्वेन स्वराणामृग्धर्मत्वेऽपि न बाधशङ्कावकाश इति वाच्यम् । सामशब्दस्य गीतिपरत्वे ऋक्शब्दस्य च मन्त्रविशेषपरत्वे सामशब्दस्य सङ्कोचलक्षणबाधस्यावश्यकत्वात् । न च तत्परिहाराय सामशब्द एव वेदपर आश्रीयतामिति वाच्यम् । विनिगमनाविरहेण ऋक्सामपदयोरुभयोरपि वेदपरत्वात् ॥

**एतेन** स्वराणां वेदधर्मत्वपक्षेऽपि वाचनिकस्वरान्तरविधिविषयपरिहारेण प्रवर्तमानस्य 'उच्चै-स्साम्ने'त्यस्य विधेरल्पविषयत्वमवर्जनीयमिति वार्तिकादिष्वेवोक्तमिति सङ्कोचः पक्षद्वयेऽप्यवशिष्ट इति **निरस्तम्** । स्वराणां ऋगादिधर्मत्वे सामशब्दस्य स्तोभाक्षरनिर्वर्त्यगीतिभागमात्रपरत्वेन ऋक्शब्दस्य विशेषविधिविषयव्यतिरिक्तऋङ्मात्रपरत्वेन च सङ्कोचविषयबाहुल्यसद्भावेन बहुबाधात् । वेदधर्मत्वे तु विशेषविधिविषय एव सङ्कोचप्राप्त्या बहुबाधाभावेन विशेषात् ॥

**यदपि** चोक्तम्— नाप्यभ्यासात् स्वराणां वेदधर्मत्वनिर्णय इति युक्तम् । बहुबाधस्यान्याय्य-त्वादिति हि तत्र मूलम् । न चाभ्यस्तवेदशब्दार्थबाधे बहुबाधः । चतुर्णामेव हि वेदशब्दानां तदा लक्षणा स्यात् । ऋगादिशब्दबाधे तु 'अग्नेर्ऋग्वेद' इत्यादौ 'तस्मादुच्चैर्ऋचा क्रियन्त' इत्यादौ च श्रुतानां षण्णां ऋगादि-शब्दानां लक्षणेति बहुबाधस्स्यादिति नात्राभ्यासप्राबल्यम् । वेदशब्दार्थाबाधे हि 'अग्नेर्ऋग्वेद' इत्यादावपि ऋगादिशब्दार्थबाध आवश्यकः भिन्नार्थयोश्शब्दयोस्सामानाधिकरण्यस्यान्यतरलक्षण-

**यैवोपपादनीयत्वात्** । किञ्च 'अग्नेर्ऋग्वेद' इत्यादौ 'तस्मादृचा क्रियते' इत्यादौ च ऋगादिशब्दस्याप्यस्त्यभ्यासः । न च वेदशब्दश्चतुर्वारमावर्तितः ऋगादिशब्दास्तु द्विवारमिति ऋगादिशब्दाभ्यासात् वेदशब्दाभ्यासो गरीयानिति वाच्यम् । उच्चैष्ट्वं ऋग्धर्मो वेदविशेषधर्मो वा उपांशुत्वं यजुर्धर्मो वा वेदविशेषधर्मो वेत्यादिसन्देहत्रयापाकरणाय प्रत्येकवेदशब्दाभ्यासे वक्तव्ये "त्रयो वेदा अजायन्त" इति साधारणोपक्रमगत एकस्तत्तदृगादिशब्दसमानाधिकृत एक इति प्रत्येकं वेदशब्दद्वयस्यैव सम्भवेन साम्यात् । ऋगादिशब्दासमानाधिकृतवेदशब्दस्य भिन्नविषयस्य ऋगादिशब्दार्थनिर्णयेऽनुपयोगात् । तस्मान्नाभ्यासाद्वेदधर्मत्वनिर्णयः शक्यः कर्तुमिति ।

**तन्न** । वक्ष्यमाणरीत्या ऋगादिशब्दानां वेदविशेषवाचित्वेन स्वराणां वेदधर्मत्वे ऋगादिशब्दार्थबाधशङ्काया एवानुदयात् । ऋग्धर्मत्वे तु वेदशब्दार्थबाधस्यावश्यकत्वात् । अभ्यासोक्तेश्च । न केवलमेकस्यैव वेदशब्दस्य मुख्यार्थबाधः । किं तर्हि बहूनामिति ज्ञापनपरत्वात् । न च ऋगादिशब्दानां वेदविशेषवाचित्वे [1]बीजाभावेन पूर्वपक्षानुत्थानादेतदधिकरणारम्भ एव कथमिति वाच्यम् । ऋगादिशब्दानां वेदविशेषवाचित्वं न, किन्तु मन्त्रादिविशेषवाचित्वमित्यभिप्रेत्य तदुत्थानसम्भवात् । वेदविशेषवाचित्वेन सिद्धान्तस्य च सम्भवात् । न च सूत्रस्थप्रायशब्दस्य बाहुल्यार्थत्वं भाष्यकारादिभिर्न स्पृष्टमिति कथं तदाश्रयणमिति वाच्यम् । सूत्रस्यापि प्रत्याख्यानेन भाष्यस्याप्युक्तानुक्तदुरुक्तचिन्तारूपवार्तिकदर्शनेन तदस्पर्शमात्रस्यादोषत्वात् ॥

**एतेन** ऋगादिशब्दानामपि वेदविशेषवाचकत्वादुच्चैष्ट्वादीनां वेदधर्मत्वनिर्णय इत्ययुक्तम् । 'तेषामृग्यत्रार्थवशेन पादव्यवस्था, गीतिषु समाख्या, शेषे यजुश्शब्द' इति शब्दार्थनिर्णयाभियुक्तानादिवृद्धव्यवहारानुसारेण 'ऋच एव मधुकृतः ऋग्वेद एव पुष्पं, यजूंष्येव मधुकृतो यजुर्वेद एव पुष्पं, सामान्येव मधुकृतस्सामवेद एव पुष्पम्' इत्यादि वैदिकप्रयोगानुसारेण च ऋगादिशब्दानां मन्त्रविशेषादिवाचकत्वेऽवश्यमङ्गीकर्तव्ये तत्सम्बन्धविशेषादेव तेषां वेदविशेषेषु लक्षणयापि प्रयोगोपपत्त्या अनेकार्थकल्पनस्यान्याय्यत्वादिति **परास्तम्** ॥

'ऋचस्सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्तस्मादजायत' ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्याद्यविगीतवैदिकप्रयोगबलेन "ऋग्वेदमधीत" इत्यादिलौकिकप्रयोगबलेन 'ऋचस्सामानि यजूंषि' इति प्रकृत्य 'सैषा त्रय्येव विद्या' इति ऋगादिषु प्रयुक्तस्य त्रयीविद्याशब्दस्य 'त्रयीविद्योऽयं ब्राह्मण' इति वेदत्रयपरतया लोकानामविगीतप्रयोगदर्शनेन च, ऋगादिशब्दानां वेदविशेषेषु शक्तेरेव

१. संशयबीजाभावेन – ख.पा. – कुण्डलितः

कल्पयितुमुचितत्वात् । शक्तिकल्पकाविगीतप्रयोगतौल्ये विनिगमकाभावेन वैपरीत्यप्रसङ्गेन च, वेदलक्षकत्वाश्रयणस्यानुचितत्वात् । नानार्थत्वस्याक्षशब्दादाविव प्रमाणे सत्यदोषत्वात् । 'अन्याय्यश्च अनेकार्थत्वमि'ति न्यायस्य साधकतौल्याभावस्थल एव प्रवृत्तेः । न च तेषां 'ऋग्यत्रार्थवशेन पादव्यवस्थे'त्याद्यभियुक्तानादिवृद्धव्यवहार एव ऋगादिशब्दानां मन्त्रविशेषमात्रवाचित्वे विनिगमक इति वाच्यम् । तस्य मन्त्रविशेषवाचकत्वख्यापनमात्रपरत्वेन मानान्तरसिद्धवेदविशेषवाचित्वानिषेधकत्वेनाविनिगमकत्वात् ॥

ननु ऋगादिशब्दानां वेदविशेषवाचित्वे, न वेदत्वं प्रवृत्तिनिमित्तं, अतिप्रसङ्गात्, किन्तु पादव्यवस्थावन्मन्त्रप्रायिकवेदत्वादिकमेव । तथा च नागृहीतविशेषणन्यायेन तादृशमन्त्रविशेषादिष्वेव शक्तिः, नीलादिपदानां रूपविशेषादिष्विवेति चेन्न । तथा सति पादव्यवस्थावत्त्वादेः पादव्यवस्थावन्मन्त्रत्वादेरेव वा ऋगादिशब्दवाच्यत्वापत्त्या धर्मिभूतमन्त्रविशेषणादीनां तद्वाच्यत्वाभावप्रसङ्गात् । न चेष्टापत्तिः । जातिमात्रशक्तिवादिभिरस्माभिर्घटादिपदानां घटादिव्यक्तिष्विव ऋगादिपदानामपि व्यक्तिस्थानीयेषु ऋगादिषु निरूढलक्षणाङ्गीकारेण तस्या एव शक्तिपदेनाभिधानादिति वाच्यम् । एवं वदद्भिर्भवद्भिरुक्तरीत्या वेदव्यक्तिष्वपि ऋगादिपदानां मन्त्रविशेषादिष्विव 'लिङ्गदर्शनाच्च', 'त्रयीविद्याख्या च तद्विदि'ति सूत्राभ्यां वेदे लोके च प्रयोगप्राचुर्येण लक्षणायाः निरूढत्वस्य प्रदर्शितत्वेन निरूढलक्षणायाः स्वीकारेणाविशेषात् ॥

किञ्च पादव्यवस्थावन्मन्त्रप्रायिकत्वादिकमपि नातिप्रसक्तवेदत्वाद्यवच्छेदेन ग्राह्यमित्यविगीतानतिप्रसक्तानादिवृद्धव्यवहारसिद्धग्रन्थविशेषनिष्ठतदवान्तरधर्मावच्छेदेनैव ग्राह्यम् । एवञ्चाऽवश्यकत्वात्तदेव वेदत्वघटितमूर्ति ऋगादिपदप्रवृत्तिनिमित्तमिति काऽनुपपत्तिरिति दिक् । तस्मादुपक्रमप्राबल्यमनपेक्ष्य न्यायान्तरेणैव स्वराणां वेदधर्मत्वनिर्णय इति नोपक्रमाधिकरणविरोधः ॥

नाप्यश्वप्रतिग्रहेष्ट्यधिकरणविरोधः । तत्रापि नोपक्रमानुसारेण दातुरिष्टिरिति निर्णयः, किन्तु कर्माङ्गत्ववशेन । तथाहि— अस्मादधिकरणात्पूर्वतने 'दोषात्त्विष्टिर्लौकिके स्यात्, शास्त्राद्धि वैदिके न दोषस्स्यात्' इत्यधिकरणे ''इयमिष्टिरश्वप्रतिग्रहवतः कर्मणोऽङ्गं न स्वतन्त्रेति स्थितम् । यदैवं स्थितं तदा अङ्गप्रधानानामेकदेशकालकर्तृत्वन्यायात्, यश्च क्रतोः कर्ता तेनैवेयमपि कर्तव्येति सिद्ध्यति । 'क्रतोः कर्ता स स्वामिकर्मपरिक्रय' इति न्यायात् । अश्वस्य दाता न प्रतिग्रहीता । तस्मात्कर्माङ्गत्ववशेन निर्णयः न तूपक्रमानुसारेण । कथमन्यथा मैत्रायणीयशाखायां 'स एषोऽश्वः प्रतिगृह्यते' इति दातुरुपक्रमं विनाऽऽम्नातेयमिष्टिर्दातुरिति सिद्ध्येत् । उक्तञ्च तन्त्रसारे— 'मैत्रायणीयशाखायां दातुरुपक्रमतो-

ऽप्यृते । **कर्माङ्गत्ववशादेव दातुरिष्टिः प्रतीयते**' इति । वार्तिककृतापि 'सा लिङ्गादार्त्विजे स्यात्' इत्येतदधिकरणे सिद्धान्तसूत्रस्थं लिङ्गपदं, अङ्गस्य प्रधानेनैककर्तृकस्य सत एव तदुपकारजनन-सामर्थ्यपरमिति व्यावृत्य कर्माङ्गत्वेन दातुरिष्टिरिति निर्णयः कृतः । गुरुणाप्यधिकान्तराकल्पना-लाघवानुसारेण निर्णयः कृतः, न तूपक्रमप्राबल्येन । यद्युपक्रमगतस्य दातुरिष्टिस्स्यात्तदा अश्वदान-युक्तपौण्डरीकानुप्रवेशात्तत्फलेनैव फलवत्वमित्यधिकारान्तरस्याकल्पनीयत्वाल्लाघवम् । प्रतिग्रहीतु-श्चेत्तस्य फलान्तरं कल्पनीयमिति गौरवं स्यादिति । यद्वा भाष्यकारान्तरैरत्र प्रतिग्रहीतुरियमिष्टिरिति व्यवस्थापितेति वार्तिकादिषूक्तत्वात्, प्राभाकरैरपि "पौण्डरीके श्रूयते" इति कृत्वा चिन्तया इदमधि-करणम् । अन्यथा दातुरिष्टिसिद्धान्तासिद्धेरिति वदद्भिर्वस्तुतः प्रतिग्रहीतुरेवेयमित्याशयस्फुटीकरणात्, याज्ञिकैरपि तथैव स्वीकृतत्वाच्च, प्रतिग्रहीतुरेवेयमिष्टिरस्तु । अतो न क्वापि परेषामुपक्रमप्राबल्यशङ्केति ॥

[1]अत्र **यत्तु** कैश्चिदुक्तम् । अश्वप्रतिग्रहेष्ट्यधिकरणेऽपि न तावत्पूर्वाधिकरणसिद्धकर्माङ्गत्ववशेन दातुरिष्टिरिति निर्णयः, अन्योन्याश्रयापत्तेः । तत्र ह्येतदधिकरणसिद्धं दातुरिष्टिरित्यमुमर्थमपेक्ष्य कर्मा-ङ्गत्वनिर्णयः । यदि ह्यृत्विजः प्रतिग्रहीतुरिष्टिस्स्यात्, तदा तस्याधिकारसिद्धये तद्गाम्येव फलं कल्पनीयमिति कथं यजमानगामिफलं कर्माङ्गं त्वं भजेत् ? । अत एवोत्तराधिकरणन्यायेन दातुरिष्टिरिति स्थिते, इदमधिकरणमारभ्यमिति भाष्यादिषु दर्शितमिति । **तन्न** । न हि पूर्वाधिकरणे एतदधिकरणसिद्धं दातुरिष्टिरित्यमुमर्थमपेक्ष्य इष्टेः कर्माङ्गत्वनिर्णयः । येनान्योन्याश्रयस्स्यात् । किन्तु दानत्वप्रतिग्रह-त्वौदासीन्येन क्रत्वङ्गभूतप्रतिग्रहशब्दार्थनिमित्तकत्वमपेक्ष्य । क्रत्वङ्गभूतप्रतिग्रहशब्दार्थनिमित्तकत्वञ्च वैदिकेष्टेः वैदिकमेव निमित्तं, वैदिकत्वसाधर्म्येण वैदिकमेव निमित्तं बुद्धिस्थं भवतीति न्यायेनैव सेत्स्यतीति न तदर्थमेतदधिकरणसापेक्षता पूर्वाधिकरणप्रवृत्तेः । 'उत्तराधिकरणन्यायेन दातुरिष्टिरिति स्थिते इदमधिकरणमारभ्यम्' इति भाष्यकाराद्युक्तिश्चोपक्रमप्राबल्येन वा कर्माङ्गत्ववशेनैव वा वस्तुगत्या प्रतिग्रहशब्दार्थो दानमित्यभिप्रेत्य ।

ननु "यावतोऽश्वान्प्रतिगृह्णीयात्" इति वाक्ये श्रुतप्रतिग्रहशब्दार्थो यदि मुख्यस्स्यात्, तदा किमिष्टिरेषा लौकिके प्रतिग्रहे वैदिके वेति विचारः पूर्वाधिकरणे पर्यवस्यतीति वाच्यम् । तत्रा-विशेषादुभयत्रेति पूर्वपक्षे लौकिकप्रतिग्रहवद्वैदिकप्रतिग्रहस्यापि विशेषविध्यभावेन 'नोभयतोदतः प्रतिगृह्णाति' इति निषिद्धत्वेन 'दोषवत्त्वाच्छास्त्राद्धि वैदिके न दोषस्स्यात्'' लौकिकप्रतिग्रहनिमि-त्तकतया पूर्वपक्षान्तरकरणं न सङ्गच्छते । विशेषविध्यभावादेव च वेदविहिते वेदविहितमेव बुद्धिस्थं

१. अत्राहुरुपक्रमप्राबल्यवादिनः – ख.पा.

भवतीति न्यायप्रसरात् । क्रत्वङ्गत्वप्रतिग्रहनिमित्तकत्वरूपहेत्वभावेनेष्टेः कर्माङ्गत्वासिध्या सिद्धान्तोऽपि न सङ्गच्छते । एवञ्च, केवलं पुरुषार्थतया पर्यवसिता सती लौकिकवैदिकसाधारणप्रतिग्रहमात्रनिमित्तकैवेयमिष्टिस्स्यादिति । 'तस्माद्यज्ञे प्रतीयेत' इति सिद्धान्तसूत्रमपि न सङ्गच्छते । प्रतिग्रहशब्दस्य लक्षणया दानपरत्वे तु, येयं दातुरिष्टिस्सा किं लौकिकेऽश्वदाने मित्रदायादादिभ्यः स्नेहाद्युपाधिना कृते, 'न केसरिणो ददाति' इति प्रतिषिद्धे दोषनिर्घातार्था स्यात् उत पौण्डरीकयागादिदक्षिणारूपाश्वदाने निमित्ते सति तद्दाननिमित्तकर्माङ्गभूतेति संशये अविशेषादुभयत्रेति प्राप्ते वरुणग्रहदोषश्रवणात्प्रतिषिद्धे लौकिक एव दाने निमित्ता इयमिष्टिः न तु वैदिकेऽपि । 'अन्वहं द्वादशशतानि ददाति' इति 'अश्वसहस्रमुत्तमः' इत्यादिभिः विशेषविहितत्वेन दोषास्पृष्टत्वादिति पूर्वपक्षान्तरमपि सङ्गच्छते । लौकिकाश्वदातुः वरुणग्रहशब्दितजलोदरव्याधिप्रादुर्भावस्यादृष्टत्वेन तन्निवारणस्य फलत्वकल्पनायोगात् । दोषश्रवणस्य सादृश्यनिबन्धनावश्यकर्तव्यतापरार्थवादमात्रत्वात् न तदनुरोधेन लौकिके । किन्तु वैदिक्या इष्टेर्वैदिकमेव निमित्तं भवतीति विहितक्रत्वङ्गभूताश्वदाने निमित्ते इयमिष्टिरिति क्रत्वङ्गभूताश्वदाननिमित्तकत्वेन क्रत्वङ्गत्वमिति सिद्धान्तोऽपि सङ्गच्छते । एवञ्च, ''तस्माद्यज्ञे प्रतीयेत'' इति सिद्धान्तसूत्रमपि सङ्गच्छत इति ॥ अत एव '**सा लिङ्गादार्त्विजे स्यात्**' इति सूत्रानुरोधादृत्विक्कर्मणि प्रतिग्रहरूपनिमित्त एवेयमिष्टिः न तु यजमानकर्मणि दानरूपे निमित्त इति भाष्यकारान्तरमतमप्ययुक्तम् । पूर्वाधिकरणपूर्वोत्तरपक्षसूत्रद्वयानाञ्जस्यापत्तेरिति चेत् ।

**न** । लौकिकप्रतिग्रहस्येव ऋत्विक्कर्तृकवैदिकप्रतिग्रहस्यापि रागतः प्राप्तत्वेन 'नोभयतोदतः प्रतिगृह्णाति' इत्यनेन निषिद्धत्वेऽपि 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीते' इति विहितदक्षिणार्थद्रव्ययाचनरूपभृतिवननप्राप्ताश्वप्रतिग्रहस्य यजमानकर्तृकस्य विशेषतो विहितत्वेनानिषिद्धतया दोषत्वाभावात् । '**शास्त्राद्धि वैदिके न दोषस्स्यात्**' इति पूर्वपक्षसूत्रस्य अत एव वेदविहितस्य वेदविहितमेव निमित्तं बुद्धिस्थं भवतीति न्यायप्रसरात् कर्माङ्गभूतदक्षिणार्थयजमानकर्तृकाश्वप्रतिग्रहनिमित्तकत्वेन कर्माङ्गत्वसम्भवेन 'तस्माद्यज्ञे प्रतीयेत' इति सिद्धान्तसूत्रस्य च सङ्गतेः । तस्मादिष्टेर्दाननिमित्तकत्व इव प्रतिग्रहनिमित्तकत्वेऽपि पूर्वाधिकरणपूर्वोत्तरपक्षावतारसम्भवान्न तदर्थमुत्तराधिकरणन्यायसाध्यदाननिमित्तकत्वनिर्णयापेक्षेति ॥

नन्वेवं पूर्वाधिकरणसिद्धकर्माङ्गत्वेनेष्टेरङ्गप्रधानयोरेकदेशकालकर्तृकत्वन्यायाद्यजमानकर्तृकत्वमात्रसिद्धावपि न तस्यादाननिमित्तकत्वसिद्धिः । उक्तरीत्येष्टेर्दक्षिणादानार्थयजमानकर्तृकाश्वप्रतिग्रहनिमित्तकत्वेऽपि प्रतिग्रहवत्कर्मप्रत्यङ्गत्वोपपत्तेः । अतोऽश्वप्रतिग्रहेष्ट्यधिकरणेनोपक्रमप्राबल्याङ्गीकारं

विनाऽश्वदाननिमित्तकत्वमेवेष्टेः सिद्ध्यतीति चेन्न । पूर्वाधिकरणसिद्धकर्माङ्गत्वेनेष्टेर्यजमानकर्तृकत्वे सिद्धे प्रतिगृह्णातेश्चोक्तरीत्या दानप्रतिग्रहयोरुभयोरपि प्रयोगसत्त्वेन तत्कर्तृकेष्टावुपक्रमावगतं दानं वा निमित्तं प्रतिगृह्णातिमुख्यार्थभूतः प्रतिग्रहो वा निमित्तमिति विशये 'भृतिं वन्वीते'ति वचनबलायाततत्प्रतिग्रहस्य दानार्थत्वेन दानाङ्गत्वावगमाद्विहितदानस्य तत्साध्यत्वेन प्राधान्यावगमात् प्रधानभूतं दानमेव निमित्त-मित्यवधार्यत इति कर्माङ्गत्ववशेनैव दाननिमित्तकत्वसिद्धिप्रसङ्गात् ॥

वस्तुतस्तु उक्तरीत्योपक्रमप्राबल्यासम्भवात् उपसंहारप्राबल्यसम्भवात् अनारभ्याधीताश्वप्रति-ग्रहेष्ट्यधिकरणविषयवाक्योपक्रमे च दानस्याश्रुतत्वात्प्रबलोपसंहारश्रुतप्रतिग्रहशब्दमुख्यार्थस्य त्यागे कारणाभावात् पूर्वाधिकरणविषयकर्माङ्गत्वस्य प्रतिग्रहनिमित्तत्वेऽपि सम्भवाच्च यजमानकर्तृकप्रतिग्रह एवेष्टौ निमित्तत्वेन स्वीकर्तुं युक्तः । किञ्चोपक्रमाधिकरण इवात्रापि नोपक्रमस्योपसंहारविरुद्धता । 'स स्वां देवतामार्च्छदि'त्यादौ तच्छब्दानां वरुणपरत्वेनोपक्रमेऽपि प्रतिग्रहीतुरेवेयमिष्टिर्विधित्सितेत्यवगमात् । न च विभक्त्यैकरूप्येण तेषां प्रजापतिपरत्वमेवोचितम्, अन्यथा 'स्वां देवतामि'ति वरुणं प्रत्येव वरुणस्य देवतात्वोक्तिरयुक्ता स्यात् । तन्निरवपदिति वरुणस्य वरुणोद्देशेन द्रव्यत्यागायोगश्च । न ह्यात्मनि सङ्कल्प्यमानस्य द्रव्यस्य स्वत्वनिवृत्तिर्युज्यते । तथा च कथमत्रोपक्रमोपसंहारयोरविरोध इति वाच्यम् । 'तमेवैकं जानथाऽऽत्मानं, अन्या वाचो विमुञ्चथ, आत्मन आकाशस्सम्भूत' इत्यादौ विभक्त्यैकरूप्या-भावेऽपि 'अमृतस्यैष सेतुः' 'स वा एष पुरुषोऽन्नरसमयः' इत्येतच्छब्देन आत्मशब्दार्थपरामर्शवदत्रापि तच्छब्देन वरुणशब्दार्थपरामर्शौचित्यात् । शाब्दबोधे सन्निधिवद्विभक्त्यैकरूप्यस्यानावश्यकत्वेन अप्रयोजकत्वात् । अन्यथा सन्निहितवरुणशब्दार्थत्यागप्रसङ्गः । सर्वनाम्नः सन्निहितार्थपरामर्शशक्तेः क्लृप्तत्वात् । 'विष्णुर्वा कामयत' इत्यादौ विष्णुशब्दार्थं प्रत्येव विष्णुशब्दार्थस्यैव ''स स्वां देवता-मार्च्छत्'' इत्यादावपि वरुणशब्दार्थं प्रत्येव वरुणशब्दार्थस्य देवतात्वोक्तिसम्भवेन तदबाधकत्वात् । तत्र विष्णुशब्दार्थभेदाश्रयणेऽत्रापि वरुणब्दार्थभेदाश्रयणसम्भवात् ॥

अत एव 'तन्निरवपत्' इति वरुणस्यैव वरुणोद्देशेन स्वत्वनिवृत्तिरूपद्रव्यत्यागासम्भव इति प्रत्युक्तम् । विष्णुशब्दार्थवद्वरुणशब्दार्थेऽपि यजमानादिरूपतया भेदाभेदाश्रयणसम्भवेन स्वत्वनिवृत्ति-रूपत्यागसम्भवात् । तस्मादुपक्रमाधिकरण इवात्रापि नोपक्रमोपसंहारयोर्विरोध इति प्रतिग्रहीतुरेवेय-मिष्टिरिति । एतदेवाभिप्रेत्य **तर्कताण्डवेऽस्मद्गुरुचरणैः** 'यद्वा' इति पक्षान्तरमाश्रितम् । अत एव भाष्यकारान्तरमतमपि इष्टेर्यजमानकर्तृकप्रतिग्रहनिमित्तकत्वपरमेव । इष्टिनिमित्तप्रतिग्रहस्य च प्रकृते 'भृतिं वन्वीते'ति शास्त्रेण यजमानकर्तृकत्वावगतावपि तज्जातीयस्य बहुशो ऋत्विक्सम्बन्धित्वेन सूत्रे प्रतिग्रहस्यार्त्विजत्वोक्तिरप्युपपद्यत इति तदयुक्तत्वकथनमप्ययुक्तम् ॥

**यत्तु** याजकाः प्रतिग्रहीतुरियमिष्टिरिति वदन्तीत्येतत् वयं न जानीम इति, **तदयुक्तम्**। स्वाज्ञात-पदार्थमात्रासिद्धिप्रसङ्गादिति दिक्। तस्मादुपसंहारप्राबल्याभ्युपगमे न काप्यनुपपत्तिः। प्रत्युत तदनभ्युपगमे उपक्रमप्राबल्याभ्युपगमे चापातप्रत्ययस्यैव सर्वत्र प्राबल्यापत्त्या विमर्शवैय्यर्थ्यापत्तिः ॥

**यत्त्वत्र** पूर्वेण परमुत्पत्तिप्रतिबन्धेन हि बाधनीयं, न चोपसंहारजप्रत्ययानन्तरं उपक्रमैकवाक्यत्वानुपपत्तिप्रतिसन्धानवच्छ्येनादिवाक्यादापातप्रत्ययानन्तरं न्यायानुगृहीतवाक्यार्थज्ञानोत्पत्तौ किञ्चित्प्रतिबन्धकमस्ति। ततश्च न्यायेन निरुपपत्तिकं पूर्वज्ञानं तिरस्कुर्वदेव परमुत्पद्यत इति न पूर्वप्राबल्य एतादृशशङ्कावकाश इति केषाञ्चित्समाधानम्। **तदयुक्तम्**। एतावता एकवाक्यत्वानुपपत्तिप्रतिसन्धानमेवोपसंहारज्ञाने प्रतिबन्धकमायातम्। न तूपक्रमजज्ञानमिति, तस्यानुपसञ्जातविरोधितया प्राबल्योत्त्यनुपपत्तेः। किञ्च प्रागेकवाक्यत्वप्रतिसन्धानादुपसंहारेण पदार्थस्थानाभिषिक्तस्वार्थगोचरं ज्ञानं जन्यत इत्यवश्यमभ्युपेयम्। तेन तदजनने एकवाक्यत्वानुपपत्तिप्रतिसन्धानस्यैव दुर्लभत्वापत्तेः। न ह्युपसंहारेणोपक्रमविरुद्धस्वार्थगोचरज्ञानाजनने एकवाक्यत्वानुपपत्तिप्रतिसन्धानं सम्भवति। अत उपक्रमप्राबल्यं वदता इतरनैरपेक्षेणैव तज्जन्यं ज्ञानमुपसंहारजज्ञाने प्रतिबन्धकमिति वाच्यम्। एवञ्च सति, कथं विमर्शजज्ञानवैयर्थ्यं स्यात्। किञ्चोपक्रमप्राबल्यं वदता एकवाक्यत्वानुपपत्तिप्रतिसन्धानं, किं पदार्थस्थानाभिषिक्तोपसंहारजन्यमुख्यार्थज्ञानमुत्पत्तिप्रतिबन्धेन बाधते, किं वोपक्रमोपसंहारमुख्यार्थनिरूपितसंसर्गज्ञानमुत्पत्तिप्रतिबन्धेन बाधते। यद्वोपसंहारमुख्यार्थज्ञानं तन्निरूपितसंसर्गज्ञानं वा। नाद्यः। मुख्यार्थनैराकाङ्क्ष्यप्रयुक्तैकवाक्यत्वानुपपत्तिप्रतिसन्धानस्य युगपदुपक्रमोपसंहारमुख्यार्थोपस्थितिं विनोदयासम्भवेन तदुत्पत्तिप्रतिबन्धकत्वायोगात्। न द्वितीयः। तस्योपक्रमोपसंहारसाधारणतयोपक्रममात्रप्राबल्यासाधकत्वात्। अन्यथा तत उपसंहारस्यैव विनिगमनाविरहेण प्राबल्यापत्तेः। नापि तृतीयचतुर्थौ ॥ तत्रैकवाक्यत्वानुपपत्तेरेवाभावादिति न पूर्वज्ञानस्योत्तरज्ञानं प्रत्युत्पत्तिप्रतिबन्धेन बाधकत्वम्। किन्तु उपक्रमजं ज्ञानं स्वेन महावाक्यार्थज्ञाने जनयितव्ये उपसंहारमुख्यार्थे स्वविषयीभूतमुख्यार्थस्यान्वयबोधप्रयोजकाकाङ्क्षाविरहात्तत्सिद्धये उपसंहारं मुख्यार्थात्प्रच्याव्य ततोऽन्यस्मिन्नाकाङ्क्षानुगुणेऽमुख्ये एवार्थे तात्पर्यवत्तया व्यवस्थापयतीत्येव ह्युपक्रमजज्ञानस्योपसंहारबाधकत्वं वाच्यम्। न ह्युपक्रमस्यैवंविधबाधकत्वेऽनुपसञ्जातविरोधित्वादन्यन्यायस्यापेक्षास्ति। तच्चानुपसञ्जातविरोधित्वमापातप्रत्ययमात्रसाधारणमित्यापातप्रत्ययमात्रस्योपक्रमवत्स्वार्थसत्तानिश्चायकत्वापत्तौ कथं न विमर्शवैयर्थ्यम्। अन्यथाऽऽपातप्रत्ययवदुपक्रमजप्रत्ययेऽपि स्वार्थसत्तानिश्चयरूपत्वसिद्धये न्यायान्तरापेक्षापत्तिरिति सङ्क्षेपः ॥

**किञ्चोपक्रमप्राबल्ये** अक्ताद्यधिकरणविरोधः । **यत्त्वत्र** विरोधसमाधानम् । न तावदक्ताधिकरणविरोधः । 'त्रयो वेदा अजायन्त' इत्युपक्रमे उपसंहारगतऋगादिविरोधिनां वेदानामिव अक्ता इत्युपक्रमे, उपसंहारगतघृतविरोधिनां तैलादीनां प्रतीतेरेवाभावात् । ननु तत्र तैलादीनां शब्दतः प्रतीत्यभावेऽपि शब्दोपात्ताञ्जनक्रिययाऽऽक्षिप्तद्रवद्रव्यविशेषतया प्रतीतिरस्तीति चेन्न । अर्थवादश्रुतघृतस्यैव तत्साधनत्वेनान्वयसम्भवे आक्षेपाऽनवतारात् । शीघ्रप्रवर्तमाननिराकाङ्क्षीकृतेऽर्थे विलम्बितस्य श्रुतिविनियुक्तमन्त्रविनियोगे मन्त्रलिङ्गस्यैवाप्रवृत्तेः ॥ यदि ह्यर्थवादान्वयात्प्राक् विध्युद्देशः पर्यवस्येत् तदा तदाक्षिप्ततैलादिसाधननिर्णयादर्थवादस्तदनुरोधेन नेतव्यः स्यादपि । न त्वेवम् । प्ररोचनां विना विधेः पर्यवसानासम्भवात् । तदुक्तं वार्तिके—

**समाप्यते विधिः कश्चित्कदाचिन्न प्ररोचितः ।**
**घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते ॥** इति ।

तथाच शीघ्रप्रवृत्तप्रत्यक्षश्रुतिप्रापिते घृतरूपविशेषे सति उपक्रमस्थेनापि द्रवद्रव्यसामान्येन तैलादिविशेषो नाक्षिप्यते, नैराकाङ्क्ष्यादिति ।

**तन्न** । तैलादीनामाक्षेपतः प्रतीत्यभावे कोट्यन्तरानुपस्थित्या संशयस्यैवासम्भवेन 'सन्दिग्धे तु वाक्यशेषादि'ति सूत्रविरोधापत्तेः । अर्थवादापरामर्शदशायां विध्युद्देशमात्रपरामर्शिनि अञ्जनसाधनघृततैलादीनामन्यतममित्यन्यव्यवस्थितार्थप्रतीतेरसत्त्वात्सैव सौत्रसन्देहशब्देन गृह्यते । तैलादिविशेषानवधारणात्मकत्वाविशेषादिति चेन्न । तथा सति संशयशब्दस्य मुख्यार्थत्यागापत्तेः ॥

किञ्चैवमुपक्रममात्रपर्यालोचनया लब्धा व्यवस्थितार्थप्रतीतिरुपसंहारलब्धया घृतमात्रप्रतीतिरूपव्यवस्थयाऽवधार्यत इत्यभ्युपगतं स्यात् । तथासति सिद्धं उपसंहारप्राबल्यम् । न चोपक्रमश्रुतार्थस्योपसंहारेणोपमर्द एव तत्प्राबल्यमापद्यते, न तूपक्रमश्रुतार्थोपजीवनेन श्रुत्यन्तरापरामर्शिपुरुषबुद्धिकल्पितार्थस्य तेनोपमर्देऽपि । अन्यथोद्भिदादिवाक्ये यागश्रवणाद्घृतादीनामन्यतममिह द्रव्यमिति कल्पनातिदेशप्राप्तसोमव्यवस्थयाऽवधार्यत इत्युपदेशादतिदेशः प्रबलः स्यात् । न चेष्टापत्तिः । शरोपदेशेनातिदेशिककुशबाधाऽनापत्तेरिति वाच्यम् । साक्षात्परम्परया वा यत्प्रमाणावगतस्य येन प्रमाणेनोपमर्दः क्रियते, तस्य तदपेक्षया दौर्बल्यमित्यविवादम् । तथा चोपक्रमे साक्षाच्छ्रुतस्य तदुपजीवनेनोपसंहारापरामर्शिपुरुषबुद्धिपरिकल्पितार्थस्योपसंहारेणोपमर्दः स्यादेव, तदपेक्षयोपक्रमस्य दौर्बल्यम् । उद्भिदादिवाक्येऽपि यागोपदेशस्य सोमरूपद्रव्यविशेषप्रापकातिदेशापेक्षया दौर्बल्यापादने इष्टापत्तिः । तदवगतयागोपजीवनेन पुरुषबुद्धिपरिकल्पितघृताद्यन्यतमद्रव्यस्य सोमातिदेशेनोपमर्दसत्वात्तत्र विशिष्ट-

द्रव्योपदेशाभावेन तस्यातिदेशापेक्षया दौर्बल्याऽऽपादनस्य कर्तुमशक्यत्वेन प्रतिबन्धनवकाशात् । शराणाञ्च विशिष्योपदेशेन तेषामातिदेशिककुशरूपमर्दाऽसम्भवेन तद्दौर्बल्याप्रसङ्गात् ॥

किञ्चाक्तादिवाक्येऽअनसाधनीभूतद्रवद्रव्यविशेषानुपदेशोऽपि 'वासः परिधत्ते:', 'एतद्वै सर्वदैवत्यं वासो यत्क्षौममि'त्याद्युदाहरणान्तरेषु, उपक्रमे शब्दतः प्रतीतस्य वाससस्सामान्यादेरुपसंहारानुसारेण सङ्कोचोपगमात् उपसंहारप्राबल्यं दुर्वारमेव ॥

नन्वर्थवादानां पदैकवाक्यत्वेऽपि 'गामानय शुक्लामि'त्यत्र गोशब्दस्य शुक्लव्यक्ताविव 'कृष्णं वासः परिधत्त' इत्यत्र वासःशब्दस्य कृष्णव्यक्ताविव चात्रापि विध्युद्देशापन्नसामान्यशब्दस्यार्थवादोक्त-विशेषपर्यवसानं युक्तम् । तत्र गोवासश्शब्दोपात्तं सामान्यं विशेषयितुमेव शुक्लकृष्णसन्निधानमिति तद्वैय्यर्थ्याय गोवासश्रुतिसङ्कोचेऽपि प्रकृते सर्वदैवत्यत्वेन स्तुत्यर्थक्षौमशब्दसन्निधानेन सङ्कोचायोगात् । पदैकवाक्यतायामपि हि सन्निधिमात्रं न सङ्कोचकम्, दुर्बलेन सन्निधिना श्रुतिबाधानुपपत्तेः । किन्तु अनन्यार्थसन्निधिरेवाऽनर्थक्यपरिहाराय श्रुतिसङ्कोचकः । "आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि"ति न्यायात् । अन्यथा [1]सन्निधिमात्रस्य श्रुतिसङ्कोचकत्वे 'अश्वेन गच्छति', 'श्वेतेन पटेन प्रावृत' इत्यत्रापि श्वेतपदसन्निधानेनाश्वश्रुतिसङ्कोचापत्तेरिति चेन्न । "सर्वदैवत्यं वास" इत्यर्थवादस्य स्तुत्यर्थत्वेऽपि तत्रार्थवादे क्षौमपदसन्निधानस्य वासोविशेषणमात्रार्थत्वेनानन्यार्थतया वासःश्रुतिसङ्कोचकत्वासम्भ-वात् । अन्यथा "सर्वदैवत्यं वै वासः" इति वासःस्तुतिसम्भवेन तद्विशेषकक्षौमपदसन्निधानस्य वैयर्थापत्तेः । किं च "वासः परिधत्त" इत्यादिविधावनुष्ठेये स्थितं सामान्यमनुष्ठानाय क्वचिद्विशेषपर्यव-सानमपेक्ष्यते । निर्विशेषसामान्यस्य सकलविशेषाणां वा अनुष्ठातुमशक्यत्वात् । तथा च क्वचिद्विशेषे पर्यवसानमित्यपेक्षायां स यद्यपेक्षितो विशेषः कथमपि श्रुतो न लभ्यते तदाऽऽक्षेपकसामान्यबला-त्तदनुष्ठातृपुरुषबुद्ध्युपस्थापितं विशेषमासाद्य निवृत्तिस्स्यात् । तल्लाभे तु तत्रैव पर्यवसानं युक्तम् । क्लृप्तकल्प्यविशेषोपस्थितिकयोर्विशेषयोः क्लृप्तोपस्थितिकस्यैव लाघवेन ग्राह्यत्वात् । न च वाक्य-विशेषस्थक्षौमादिग्रहणेऽपि तत्राप्यनुष्ठानाय विशेषाकाङ्क्षायां विशेषकल्पनमावश्यकमिति वाच्यम् । तथापि सर्वतो व्यावृत्ते व्यक्तिविशेषेऽनुष्ठानाय ग्राह्ये यावान् विशेषो वाक्यशेषश्रुतो लभ्यते तावान् स एव ग्राह्यः, उपस्थितिविशेषग्रहणे लाघवेन तदुपेक्षाकरणाभावात् ॥

एवं च अन्यार्थस्यापि सन्निधानस्य सत्यामाकाङ्क्षायां श्रुतिसङ्कोचत्वं नायुक्तम् । अत एव "आग्नेय्याऽऽग्नीध्रमुपतिष्ठत" इत्यादावाग्नेयीश्रुतेः स्तोत्रादिकार्यान्तरार्थेन "अग्न आयाहि वीतये"

१. सन्निधानमात्रस्य – क.पा.

**किञ्चोपक्रमप्राबल्ये अक्ताद्यधिकरणविरोधः । यत्त्वत्र** विरोधसमाधानम् । न तावदक्ताधिकरणविरोधः । 'त्रयो वेदा अजायन्त' इत्युपक्रमे उपसंहारगतऋगादिविरोधिनां वेदानामिव अक्ता इत्युपक्रमे, उपसंहारगतघृतविरोधिनां तैलादीनां प्रतीतेरेवाभावात् । ननु तत्र तैलादीनां शब्दतः प्रतीत्यभावेऽपि शब्दोपात्ताञ्जनक्रिययाऽऽक्षिप्तद्रवद्रव्यविशेषतया प्रतीतिरस्तीति चेन्न । अर्थवादश्रुतघृतस्यैव तत्साधनत्वेनान्वयसम्भवे आक्षेपाऽनवतारात् । शीघ्रप्रवर्तमाननिराकाङ्क्षीकृतेऽर्थे विलम्बितस्य श्रुतिविनियुक्तमन्त्रविनियोगे मन्त्रलिङ्गस्यैवाप्रवृत्तेः ॥ यदि ह्यर्थवादान्वयात्प्राक् विध्युद्देशः पर्यवस्येत् तदा तदाक्षिप्ततैलादिसाधननिर्णयादर्थवादस्तदनुरोधेन नेतव्यः स्यादपि । न त्वेवम् । प्ररोचनां विना विधेः पर्यवसानासम्भवात् । तदुक्तं वार्तिके—

**समाप्यते विधिः कश्चित्कदाचिन्न प्ररोचितः ।**
**घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते ॥** इति ।

तथाच शीघ्रप्रवृत्तप्रत्यक्षश्रुतिप्रापिते घृतरूपविशेषे सति उपक्रमस्थेनापि द्रवद्रव्यसामान्येन तैलादिविशेषो नाक्षिप्यते, नैराकाङ्क्ष्यादिति ।

**तन्न** । तैलादीनामाक्षेपतः प्रतीत्यभावे कोट्यन्तरानुपस्थित्या संशयस्यैवासम्भवेन 'सन्दिग्धे तु वाक्यशेषादि'ति सूत्रविरोधापत्तेः । अर्थवादापरामर्शदशायां विध्युद्देशमात्रपरामर्शिनि अञ्जनसाधनघृततैलादीनामन्यतममित्यन्यव्यवस्थितार्थप्रतीतेस्सत्त्वात्सैव सौत्रसन्देहशब्देन गृह्यते । तैलादिविशेषानवधारणात्मकत्वाविशेषादिति चेन्न । तथा सति संशयशब्दस्य मुख्यार्थत्यागापत्तेः ॥

किञ्चैवमुपक्रममात्रपर्यालोचनया लब्धा व्यवस्थितार्थप्रतीतिरुपसंहारलब्धया घृतमात्रप्रतीतिरूपव्यवस्थयाऽवधार्यत इत्यभ्युपगतं स्यात् । तथासति सिद्धं उपसंहारप्राबल्यम् । न चोपक्रमश्रुतार्थस्योपसंहारेणोपमर्द एव तत्प्राबल्यमापद्यते, न तूपक्रमश्रुतार्थोपजीवनेन श्रुत्यन्तरापरामर्शिपुरुषबुद्धिकल्पितार्थस्य तेनोपमर्देऽपि । अन्यथोद्भिदादिवाक्ये यागश्रवणाद्घृतादीनामन्यतममिह द्रव्यमिति कल्पनातिदेशप्राप्तसोमव्यवस्थयाऽवधार्यत इत्युपदेशादतिदेशः प्रबलः स्यात् । न चेष्टापत्तिः । शरोपदेशेनातिदेशिककुशबाधाऽनापत्तेरिति वाच्यम् । साक्षात्परम्परया वा यत्प्रमाणावगतस्य येन प्रमाणेनोपमर्दः क्रियते, तस्य तदपेक्षया दौर्बल्यमित्यविवादम् । तथा चोपक्रमे साक्षाच्छ्रुतस्य तदुपजीवनेनोपसंहारापरामर्शिपुरुषबुद्धिपरिकल्पितार्थस्योपसंहारेणोपमर्दः स्यादेव, तदपेक्षयोपक्रमस्य दौर्बल्यम् । उद्भिदादिवाक्येऽपि यागोपदेशस्य सोमरूपद्रव्यविशेषप्रापकातिदेशापेक्षया दौर्बल्यापादने इष्टापत्तिः । तदवगतयागोपजीवनेन पुरुषबुद्धिपरिकल्पितघृताद्यन्यतमद्रव्यस्य सोमातिदेशेनोपमर्दसत्वात्तत्र विशिष्ट-

द्रव्योपदेशाभावेन तस्यातिदेशापेक्षया दौर्बल्याऽपादनस्य कर्तुमशक्यत्वेन प्रतिबन्धनवकाशात् । शराणाञ्च विशिष्योपदेशेन तेषामातिदेशिककुशैरुपमर्दाऽसम्भवेन तद्दौर्बल्याप्रसङ्गात् ॥

किञ्चाक्तादिवाक्येऽअनसाधनीभूतद्रवद्रव्यविशेषानुपदेशेऽपि 'वासः परिधत्ते:', 'एतद्वै सर्वदेवत्यं वासो यत्क्षौममि'त्याद्युदाहरणान्तरेषु, उपक्रमे शब्दतः प्रतीतस्य वाससस्सामान्यादेरुपसंहारानुसारेण सङ्कोचोपगमात् उपसंहारप्राबल्यं दुर्वारमेव ॥

नन्वर्थवादानां पदैकवाक्यत्वेऽपि 'गामानय शुक्लामि'त्यत्र गोशब्दस्य शुक्लव्यक्ताविव 'कृष्णं वासः परिधत्त' इत्यत्र वासःशब्दस्य कृष्णव्यक्ताविव चात्रापि विध्युद्देशापन्नसामान्यशब्दस्यार्थवादोक्त-विशेषपर्यवसानं युक्तम् । तत्र गोवासश्शब्दोपात्तं सामान्यं विशेषयितुमेव शुक्लकृष्णसन्निधानमिति तद्वैय्यर्थ्याय गोवासश्रुतिसङ्कोचेऽपि प्रकृते सर्वदेवत्यत्वेन स्तुत्यर्थक्षौमशब्दसन्निधानेन सङ्कोचायोगात् । पदैकवाक्यतायामपि हि सन्निधिमात्रं न सङ्कोचकम्, दुर्बलेन सन्निधिना श्रुतिबाधानुपपत्तेः । किन्तु अनन्यार्थसन्निधिरेवाऽनर्थक्यपरिहाराय श्रुतिसङ्कोचकः । ''आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि''ति न्यायात् । अन्यथा [1]सन्निधिमात्रस्य श्रुतिसङ्कोचकत्वे 'अश्वेन गच्छति', 'श्वेतेन पटेन प्रावृत' इत्यत्रापि श्वेतपदसन्निधानेनाश्वश्रुतिसङ्कोचापत्तेरिति चेन्न । ''सर्वदेवत्यं वास'' इत्यर्थवादस्य स्तुत्यर्थत्वेऽपि तत्रार्थवादे क्षौमपदसन्निधानस्य वासोविशेषणमात्रार्थत्वेनानन्यार्थतया वासःश्रुतिसङ्कोचकत्वासम्भ-वात् । अन्यथा ''सर्वदेवत्यं वै वासः'' इति वासःस्तुतिसम्भवेन तद्विशेषकक्षौमपदसन्निधानस्य वैयर्थापत्तेः । किं च ''वासः परिधत्त'' इत्यादिविधावनुष्ठेये स्थितं सामान्यमनुष्ठानाय क्वचिद्विशेषपर्यव-सानमपेक्ष्यते । निर्विशेषसामान्यस्य सकलविशेषाणां वा अनुष्ठातुमशक्यत्वात् । तथा च क्वचिद्विशेषे पर्यवसानमित्यपेक्षायां स यद्यपेक्षितो विशेषः कथमपि श्रुतो न लभ्यते तदाऽक्षेपकसामान्यबला-त्तदनुष्ठातृपुरुषबुद्ध्युपस्थापितं विशेषमासाद्य निवृत्तिस्स्यात् । तल्लाभे तु तत्रैव पर्यवसानं युक्तम् । क्लृप्तकल्प्यविशेषोपस्थितिकयोर्विशेषयोः क्लृप्तोपस्थितिकस्यैव लाघवेन ग्राह्यत्वात् । न च वाक्य-विशेषस्थक्षौमादिग्रहणेऽपि तत्राप्यनुष्ठानाय विशेषाकाङ्क्षायां विशेषकल्पनमावश्यकमिति वाच्यम् । तथापि सर्वतो व्यावृत्ते व्यक्तिविशेषेऽनुष्ठानाय ग्राह्ये यावान् विशेषो वाक्यशेषश्रुतो लभ्यते तावान् स एव ग्राह्यः, उपस्थितिविशेषग्रहणे लाघवेन तदुपेक्षाकरणाभावात् ॥

एवं च अन्यार्थस्यापि सन्निधानस्य सत्यामाकाङ्क्षायां श्रुतिसङ्कोचत्वं नायुक्तम् । अत एव ''आग्नेय्याऽग्नीध्रमुपतिष्ठत'' इत्यादावाग्नेयीश्रुतेः स्तोत्रादिकार्यान्तरार्थेन ''अग्न आयाहि वीतये''

१. सन्निधानमात्रस्य – क.पा.

इत्याद्याग्नेर्यीविशेषसन्निधानेन तत्परतया सङ्कोचोऽभ्युपेयते । अत एव च "एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाश्शतं देयं सहस्रं देयमपरिमितं देयमि"त्याद्याधानदक्षिणाकल्पभेदप्रतिपादकश्रुतावपरिमितशब्दस्य बहुत्वार्थकस्य प्रतियोगिसापेक्षस्वभावत्वेन तदाकाङ्क्षायामेकादिशब्दवद्दक्षिणाकल्पभेदपरतयाऽन्यार्थमपि सहस्रपदसन्निधानं सङ्कोचकमित्यपरिमितपदं सहस्राधिकबहुत्वार्थमिति "अधिकं वा स्याद्बह्वर्थत्वादितरेषां सन्निधानादि"ति सूत्रेण सूत्रकृता सिद्धान्तितम् ॥

यदैवं सर्वथैवानन्वितविध्यन्तरसन्निधानस्यापि आकाङ्क्षावशात् विशेषकत्वं तदा किमु वक्तव्यं स्तावकत्वेनान्वयिनोऽर्थवादस्य तद्विशेषकत्वमिति । "अश्वेन गच्छति", "श्वेतेन पटेन प्रावृत" इत्यादेश्च पौरुषेयतया तत्राश्वपदस्य प्रयोक्तृपुरुषविवक्षापरतन्त्रत्वेन तद्विवक्षितविशेषपरतया न तस्य श्वेतपदसन्निधानं सङ्कोचकमिति न तत्प्रतिबन्ध्यवकाशः । तस्मादन्यार्थेनाप्युपसंहारात्मकार्थवादेन वासश्शब्दस्य क्षौमरूपतद्विशेषे सङ्कोचलक्षणबाधसत्त्वेन तत्प्राबल्यमनिवार्यमिति ।

ननु वासस्सामान्यस्यानुष्ठानाय विशेषसाकाङ्क्षत्वेन तदाकाङ्क्षानुसारेणैव अयमुपसंहारकृतः सङ्कोचः । न तु बलात्कारित इति नोपसंहारेणोपक्रमस्य बाधः । एवमेव "उद्भिदा यजेते"त्यत्र यजिना सामान्यत उपस्थापितस्य द्रव्यस्यानुष्ठानाय विशेषाकाङ्क्षानुरोधेनातिदेशिकसोमरूपविशेषपर्यवसानात्मकसङ्कोचोऽपि नातिदेशेन बलात्कारित इति न तेनोपदेशस्य बाधः । अत एव दशमे अतिदेशादुपदेशस्य प्राबल्येनौपदेशिकशरादिनाऽऽतिदेशिककुशादिबाधव्युत्पादनानन्तरं यत्र "वायव्यं श्वेतमालभेते"त्यादावौपदेशिकस्य श्वेतादेरातिदेशिके छागादौ पर्यवसानं भवति न तेन तस्य बलवतापि बाधनं किं तु तदाकाङ्क्षानुसारेण तत्रैव पर्यवसानमित्युक्तं "नैमित्तिके तु कार्यत्वात्प्राकृते स्यात्तदापत्तेरि"ति सूत्रेण । यस्तु कस्यचित् स्वयमनाकाङ्क्षित एव सङ्कोचो बलादन्येन कार्यते स एव तस्य तत्कृतो बाधः । यथाऽऽहवनीयशास्त्रस्य पदशास्त्रेण बाधः । 'आहवनीये जुहोती'ति शास्त्रेण न होमो विधीयते । येन सकलहोमानामुपादातुमशक्यत्वात् स्वत एव विशेषाकाङ्क्षा स्यात् । किन्त्विदं होमोद्देशेन आहवनीयं विदधाति । तत्र चासङ्कोचेन सकलहोमानुवादः स्वरससिद्धः । अनारभ्याधीतत्वात् । शक्यते हि यथाप्राप्तसकलहोमानुवादस्यास्यानुरोधेन यो यदा कर्तव्यत्वेन होमः प्राप्तः स सर्वोऽपि आहवनीये कर्तुम् । ततश्च आहवनीयशास्त्रस्य स्वयमनाकाङ्क्षित एव सङ्कोचः पदशास्त्रेण बलात्कारित इति स तस्य तत्कृतो बाधः । एवं श्रुतिलिङ्गादिष्वपि । यस्य स्वयमेवाकाङ्क्षितः येन क्रियते न तस्य तत्कृतो बाधः । यथोदाहृताऽग्नेय्यधिकरणेऽपरिमिताधिकरणे च प्रकरणस्थानानुरोधेन श्रुतिसङ्कोचः । तस्मात् स्वत एवाऽऽकाङ्क्षितः सङ्कोचोऽन्यानुसारेण क्रियमाणोऽपि न तत्कृतो बाध इति नात्रोपसंहारेण उपक्रमस्य बाधः ।

किं च अत्रोपक्रमस्याकाङ्क्षाभावेऽपि कांस्यभोजिन्यायादुपसंहारानुसारित्वं युक्तम् । कांस्यभोजिनये हि चिन्तितम् । आग्रयणे ऐन्द्राग्नादीनि मुख्यानि हवींषि, तेषां बर्हिः प्रसूनमप्रसूनं वेति न कश्चिन्नियमोऽस्ति । 'द्यावापृथिव्य एककपालो जघन्यं हविस्तस्य वैश्वदेव्य एककपालप्रकृतिकत्वात्प्रसूनं पुष्पितं बर्हिरि'ति नियमः प्राप्तः । तत्र किमाग्रयणे ऐन्द्राग्न्याद्यनुसारेण अनियतं बर्हिर्ग्राह्यम्, उत द्यावापृथिव्यनुसारेण प्रसूनं बर्हिरिति संशये मुख्यत्वाद्बहुत्वाच्चैन्द्राग्नादीनां तदनुरोधादनियमप्राप्तौ जघन्यस्यापि द्यावापृथिव्यस्य धर्मः प्रसूननियमः आदर्तव्यः । प्रसूनोपादानेऽपि ऐन्द्राग्नादीनां अवैगुण्यादनियमे द्यावापृथिव्यस्य वैगुण्यप्रसङ्गात् । यथा अनियतपात्रभोजिनो गुरोर्नियतकांस्यभोजिनः शिष्यस्य च क्वचिदेकपात्रभोजनप्राप्तौ गुणभूतस्य शिष्यस्यानुरोधेन कांस्यपात्रनियमः आद्रियते तद्वत् । तस्मादाग्रयणेषु पुष्पितमेव बर्हिरिति सिद्धान्त इति । एवमिहापि निर्विशेषसामान्येन व्यवहारायोगादनियमेन यत्र क्वचिद्विशेषे पर्यवस्यतः उपक्रमस्य घृतादिपर्यवसानेऽपि न कश्चिद्विरोधः, घृतादिस्तुतेस्तु सामान्यस्तुतौ पर्यवसानेनाअस्यमित्युपक्रमस्योपसंहारानुसारित्वं न्याय्यमिति चेत् ॥

न । 'आहवनीये जुहोती'त्यादेः पदादिशास्त्रेण बाध इत्यविवादम् । स च बाधस्सङ्कोचरूप इत्यप्यविवादम् । तथा च सर्वत्र लाघवेन विषयसङ्कोचमात्रस्यैव बाधत्वं युक्तं, न त्वनाकाङ्क्षितसङ्कोचस्यैव, गौरवात् । प्रमाणाभावाच्च । अनाकाङ्क्षितसङ्कोच एव बाध आकाङ्क्षितसङ्कोचस्त्वबाध इत्यस्य परिभाषामात्रत्वात् । वैपरीत्येनापि परिभाषासम्भवाच्च । 'अङ्गीकृता ग्लानिर्न दोषाये'ति प्रवादस्याप्यङ्गीकृतत्वसाम्यमात्रेण ग्लानेरदोषाऽऽपादकत्वेन व्यवहारमात्रत्वात् । अन्यथा सहनशक्त्या अङ्गीकृतवृश्चिकवेधादेरबाधत्वापत्त्या मुखदोषाद्यभावत्वप्रसङ्गः । किञ्च विधौ बाधस्य श्रुतस्य सामान्यस्यार्थवादार्पितप्राशस्त्यमादाय शाब्दाकाङ्क्षावशेन प्रथममन्वयबोधस्य निष्पन्नतया न तदर्थमनुष्ठानोपयुक्तपुरुषीयपश्चात्तनव्यक्तिविशेषाकाङ्क्षापेक्षिता । अतोऽर्थवादगतघृतक्षौमादिपदानां विध्यपेक्षितप्राशस्त्यसमर्पकत्वेनैवोपयोगः । **'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत'** इति न्यायात् । न त्वनुष्ठानयोग्यपुरुषाकाङ्क्षितव्यक्तिविशेषसमर्पकत्वेन, तत्र तेषामसामर्थ्यात् । न हि घृतादिपदैरनुष्ठानयोग्यव्यक्तिविशेषाकाङ्क्षाशान्तिस्सम्भवति । ततो घृताद्युपस्थितावपि को वा घृतादिव्यक्तिविशेषो मयानुष्ठेय इति पुरुषाऽऽकाङ्क्षाऽनुवृत्तेः तथा च घृतादिपदैः क्रियमाणो द्रवद्रव्यवासःप्रभृति सामान्यस्य घृतक्षौमादिपरत्वेन सङ्कोचोप्यनाकाङ्क्षितसङ्कोच एवेति स्यादेव सोऽपि बाधः । न च वासःपदार्थसामान्यस्य 'वासःपरिधत्त' इति वाक्यार्थबोधायानुष्ठानाय वा क्षौमादिपदार्थाकाङ्क्षा अपेक्षिता । येनोक्तसङ्कोचोऽप्यबाधः स्यात् । कांस्यभोजिन्यायेनाऽऽकाङ्क्षितसङ्कोचस्येवाऽनाकाङ्क्षितसङ्कोचस्याप्यबाधत्वे च सङ्कोचमात्रस्याप्यबाधत्वापत्त्या पदशास्त्रादिना कृतो आहवनीयशास्त्रादिसङ्कोचोऽप्यबाधः स्यात् ॥

**किञ्च आकाङ्क्षितसङ्कोचस्य स्वार्थैकदेशत्यागात्मकस्याप्यबाधत्वे** "उच्चैः ऋचा क्रियत" इत्यादौ ऋगादिशब्दानामुपक्रमस्थवेदादिशब्देन क्रियमाणस्वार्थत्यागोऽपि बाधो न स्यात् । तेषामप्युपक्रमैकवाक्यत्वाय स्वार्थत्यागस्य आकाङ्क्षितत्वेऽपि प्रधानभूतविध्युद्देशस्थितर्गादिशब्दानामृगादिष्विव वेदेऽप्युक्तरीत्या शक्तिसत्त्वेन, शक्त्यभावेऽप्युभयत्र निरूढलक्षणासत्त्वाविशेषेणानियमेनोभयपरत्वसम्भवेन गुणभूतार्थवादस्थमन्त्रब्राह्मणसमुदायात्मकग्रन्थविशेषरूपवेदवाचिवेदशब्दानुसारेण तत्रापि **कांस्यभोजिन्याय**स्यावतारः सम्भवतीति उपक्रमस्याप्युपसंहाराबाधकत्वापत्त्या तस्योपसंहारापेक्षया पराभ्युपगतं प्राबल्यमपि दत्तजलाञ्जलिः स्यात् । एवमाहवनीयशास्त्रादेः पदादिशास्त्रेण कृतसङ्कोचस्याप्यबाधकत्वप्रसङ्गः । तस्यापि स्वप्रामाण्यसंरक्षणार्थमाहवनीयशास्त्रादिना आकाङ्क्षितत्वादिति ॥

**यत्तु** अक्ताधिकरणे विधौ सन्दिग्धमर्थवादेन अवधार्यत इति हि व्युत्पाद्यम् । न तूपक्रमं सन्दिग्धमुपसंहारेणावधार्यत इति तत्र वाक्यशेषशब्दस्य उपक्रमोपसंहारगतत्वानादरेणार्थवादमात्रपरतावत् । यथोक्तं वार्तिके—

**विधिस्तुत्योस्सदावृत्तिस्समानविषयेष्यते ।**
**तस्मादेकत्र सन्दिग्धं इतरेणावधार्यत** ॥ इति ।

**तन्न** । न वयमुपसंहारत्वेनोपसंहारप्राबल्यमक्ताधिकरणव्युत्पाद्यं ब्रूमः । किं तूपक्रमप्राबल्ये घृतक्षौमपदयोरुपक्रमप्रतीतद्रवद्रव्यवासः सामान्यानुसारेण "**गुणे त्वन्यायकल्पने**"ति न्यायेन सामान्यलक्षकत्वं वा घृतादिस्तुतेरेवाऽष्टकपालादिस्तुतेरेव अवयवद्वारा अवयविद्वादशकपालादिस्तुतौ पर्यवसानवत् सामान्यस्तुतौ पर्यवसानं वा विधिस्तुत्योरैकरूप्यनिर्वाहाय कल्प्यत इति तदधिकरणविरोधः । स च विरोध उपक्रमप्राबल्यपक्षे दुरुद्धर एवेति ॥

**एतेन** 'तेजो वै घृतमि'त्यस्यार्थवादत्वमतिलङ्घ्योपसंहारत्वमपि तस्यास्तीति एतावतैव तत्प्राबल्योपजीवनोत्प्रेक्षायां तत्रोपक्रमप्राबल्योपजीवनमेवोत्प्रेक्षितुं शक्यम् । तथाहि 'अक्ताश्शर्करा' इत्यत्र विधिस्तुत्योरेकविषयतया यथोपक्रमावगतद्रवद्रव्यसामान्यस्य वाक्यशेषे घृतसङ्कीर्तनात् घृतरूपतया अस्ति सङ्कोचः, तथा घृतस्यापि यज्ञान्तर्गताञ्जनक्रियासाधकद्रवद्रव्यविशेषतया अन्वयाददुष्टघृतरूपतयाऽस्ति सङ्कोचः, जात्या संसर्गादिना वा दुष्टस्य घृतस्यायज्ञीयत्वात् । एवं च यद्युपक्रमोपसंहारानुगतयोः द्रवद्रव्यघृतयोरविशिष्टस्सङ्कोचः तथाप्युपक्रमेऽनुष्ठेयतयाऽवगतस्य द्रवद्रव्यसामान्यस्यानुष्ठानाय स्वस्यैव विशेषाकाङ्क्षया सङ्कोचः । उपसंहारे तेजस्त्वेन स्तुतस्य घृतस्य तु न स्वाकाङ्क्षया सङ्कोचः । घृतसामान्येऽप्यौज्ज्वल्यादिगुणतस्तेजस्त्वेन स्तुत्यविरोधात् । किन्तूपक्रमावगताञ्जनक्रिया-

साधनद्रवद्रव्यविशेषतयाऽन्वयानुसारेणैवेत्यलं सुवचमुपक्रमप्राबल्योपजीवनमिति **निरस्तम्**। घृतादिपदानां निषेधबलेनैवादुष्टघृतपरतया सङ्कोचेन, विध्यन्वयबलेनासङ्कोचात्।

किं च ज्योतिष्टोमे तुल्यान्यत्वविशिष्टं हि कारणमिति चतुर्थोपान्त्याधिकरणे दीक्षणीयादीनामिष्टीनां अग्नीषोमीयादीनां पशूनां सोमयागस्य च सन्निधौ "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्याम्नातयजेस्सर्वसन्निहितयागानुवादस्वारस्येन, सर्वेषामेव तेषां फलसम्बन्धप्रतीतावपि वाक्यशेषे "त्रिवृत्पञ्चदशस्सप्तदश एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा" इति ज्योतिश्शब्दितत्रिवृदादिस्तोमसम्बन्धिनः सोमयागस्य विशिष्य कीर्तनात् तत्रैव यजेः पर्यवसानमिति सोमयागस्यैव फलसम्बन्धः। इतरेषां तु **फलवदफलन्यायेन** तदङ्गत्वमिति निर्णीतम्। अत्र ह्युपक्रमे नास्ति स्वतस्सन्देहः दीक्षणीयादयः फलसम्बन्धिनस्सोमयागो वेति। नाप्यव्यवस्थितप्रतीतिरस्ति, दीक्षणीयादिसोमयागान्तानां मध्ये कश्चिदेव फलसम्बन्धीति। अत एव फलार्थानुष्ठानाय को याग उपादातव्य इति विशेषाकाङ्क्षापि नास्ति। सन्निहितसर्वयागानामसङ्कोचेन राजसूयवाक्य इव फलसम्बन्धित्वोपपत्तेः। "राजसूयेन स्वाराज्यकामो यजेते"त्यत्र यजेस्सन्निहितसर्वयागानुवादस्वारस्यानुरोधेन सन्निहितानामनुमत्यादीनामिष्टीनामाग्नेयादीनां पशूनां सोमयागानां चाविशेषेण फलसम्बन्धाभ्युपगमात्। तथापि यदत्र वाक्यशेषानुसारेण सङ्कोचकल्पनं तदुपसंहारप्राबल्येनेति तदप्युपसंहारप्राबल्ये उदाहरणं द्रष्टव्यम्॥

**यत्तु** ज्योतिष्टोमाधिकरणे तावदुपसंहारानुसरणमुपक्रमाकाङ्क्षयैव, उपक्रमश्रुतस्य ज्योतिष्टोमनाम्नो हि यागे प्रवर्तमानस्य किञ्चित्प्रवृत्तिनिमित्तमाकाङ्क्षितम्। न च तदाकाङ्क्षितं समर्पयति। वाक्यशेषे तदवधीर्य 'ज्योतिषामग्नीनां स्तोमः समूहः यस्मिन्नित्यादिदीक्षणीययागाद्यनुवृत्तं किञ्चित्पुरुषबुद्ध्या कल्पयितुं युक्तम्। वाक्यशेषस्तु सोमयागगतमेव प्रवृत्तिनिमित्तं समर्पयति। ज्योतिश्शब्दितत्रिवृदादिस्तोत्रसम्बन्धस्य "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादि"ति वाक्यान्तरेण सोमयाग एव निर्णीतत्वात्। अतो यत्र वाक्यशेषस्तत्र ज्योतिष्टोमनाम, यत्र च तत्तत्र यजिः, क्लृप्तप्रवृत्तिनिमित्तनामपरतन्त्रत्वादाख्यातस्येति उपक्रमाकाङ्क्षानुसार्युपसंहारिकारितः सङ्कोचः। नोपसंहारप्राबल्यकारितः। अत एव यत्र नोपक्रमस्याऽऽकाङ्क्षा न तत्र सत्यप्युपसंहारे विशेषसङ्कीर्तने तदनुसारेणोपक्रमस्य सङ्कोच उपेयते। यथा "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वान्येन यजेत" इत्यत्र अन्यशब्दस्य "यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशस्स तं यस्सप्तदशः स तं य एकविंशः स तम्" इति त्रिवृदाद्येकैकस्तोमक्रतुसङ्कीर्तनेऽपि न तद्विषयतया सङ्कोच उपेयते। उपक्रमस्याकाङ्क्षाविरहेऽपि उसंहारप्राबल्यादेव तदर्पितविशेषपर्यवसानमुपगच्छतस्तत्राप्यन्यशब्दस्य त्रिवृदाद्येकैकस्तोमक्रतुमात्रपरत्वं त्रिवृदादिचतुष्टयान्तर्गतस्तोमयुक्तक्रतुमात्रपरत्वं वा स्यादिति तेषामेव

**ज्योतिष्टोमपाश्चात्यत्वनियमः** सिद्ध्येत् । त्रिवृदादिस्तोमचतुष्टयसम्बन्धरहितानां चतुष्टोमपञ्चविंशाग्निष्टोमादीनां, ज्योतिष्टोमात्पूर्वमप्यनुष्टानं स्यात् । न चेष्टापत्तिः । पञ्चमे "एकस्तोमे वा क्रतुसंयोगात्," सर्वेषां वा चोदकाविशेषात्प्रशंसा स्तोमानाम्" इति पूर्वोत्तरपक्षसूत्राभ्यां सूत्रकृतैवात्र वाक्यशेषानुसारेण सङ्कोचनिरासादिति ।

**तन्न** । ज्योतिष्टोमनाम्नः प्रवृत्तिनिमित्ताकाङ्क्षायामपि सङ्कोचाकाङ्क्षाविरहात्, सङ्कोचनियमस्य च यजेः सन्निहितसर्वपरतया सङ्कोचाकाङ्क्षाया अभावेनोपसंहारप्राबल्येनैव ज्योतिष्टोमनामप्रवृत्तिनिमित्तसमर्पणमुखेन सङ्कोचस्यावश्याभ्युपगन्तव्यत्वात् । उक्तरीत्या लाघवेन सङ्कोचमात्रस्यैव बाधतया तत्र आकाङ्क्षाविरहस्याप्रयोजकत्वाच्च । अन्यथोपक्रमस्याप्युपसंहारबाधकत्वं न स्यात् । उपसंहारस्याप्युपक्रमैकवाक्यत्वनिर्वाहाय स्वमुख्यार्थत्यागस्य तदनुगुणस्वमुख्यार्थनिष्ठत्वस्य चापेक्षितत्वात् ।

नन्वेवं सति "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनाऽनिष्ट्वा अन्येन यजेत" इत्यत्राप्यन्यशब्दस्य "यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशस्स तं यस्सप्तदशः स तं य एकविंशस्स तम्" इत्युपसंहारानुसारेण त्रिवृदाद्येकैकस्तोमक्रतुमात्रपरत्वं त्रिवृदादिचतुष्टयान्तर्गतस्तोमयुक्तक्रतुमात्रपरत्वं वा स्यादिति तेषामेव ज्योतिष्टोमपाश्चात्यत्वनियमः सिद्ध्येत् । न तु त्रिवृदादिस्तोमचतुष्टयसम्बन्धरहितानां चतुष्टोमपञ्चविंशाग्निष्टोमादीनाम् । न चेष्टापत्तिः । पञ्चमे "एकस्तोमे वा कृतसंयोगात्,", "सर्वेषां वा चोदकाविशेषात् प्रशंसास्तोमानाम्" इति पूर्वोत्तरसूत्राभ्यां सूत्रकृतैवात्र वाक्यशेषानुसारेण सङ्कोचनिरासादिति चेन्न । त्रिवृदाद्येकैकस्तोमक्रतोरर्थवादे श्रुतत्वाभावेनान्यशब्दस्य तन्मात्रपरत्वेन सङ्कोचे आपादकाभावात् । त्रिवृदादिचतुष्टयान्तर्गतस्तोमयुक्तक्रतुपरत्वेन सङ्कोचापादने चेष्टापत्तेः । न चैवमधिकरणविरोधः । तत्र ह्येकस्तोमेऽन्यशब्दस्स्यात् बहुस्तोमेऽपि वेति सन्दिह्य "यो हि त्रिवृदन्यं विकृतिरूपं यज्ञं प्राप्नोति स त्रिवृत्स्तोमः तं विकृतिरूपं यज्ञं दीपयति सर्वतो व्याप्त्या प्रकाशयती"ति स्तोमान्तरस्याप्रवेशात् त्रिवृत एव सर्वस्मिन् यज्ञस्वरूपे व्याप्तौ अयमेकस्तोमकः क्रतुर्भवति, एवं पञ्चदशादिस्तोमव्याप्तिरिति त्रिवृदाद्येकैकमात्रस्तोमकक्रतूनामेव "यो वै त्रिवृदन्यमि"त्याद्यर्थवादाद्बुद्धिस्थत्वेन त एवान्यशब्देनोच्यन्ते । एकस्तोमकाश्च षड्रात्रादिष्वहीनेष्वाम्नाताः, "त्रिवृदग्निष्टोमो भवति । पञ्चदश उक्थ्यो भवति" इति । तस्मात्तद्विषय एवान्यशब्द इति पूर्वपक्षं प्रापय्य "स तं दीपयती"त्यत्र प्रकाशकत्वमात्रमुच्यते । तच्च व्याप्तिमन्तरेण सम्बन्धमात्रादप्युपपद्यते । तस्मादग्निष्टोमप्रतियोगितया बहुस्तोमैकस्तोमसाधारणत्वेन श्रूयमाणस्यान्यशब्दस्यैकस्तोमक्रतुमात्रपरत्वेन अन्यशब्दस्य सङ्कोचे हेत्वभावात् सर्वविषयोऽयमन्यशब्द इति सिद्धान्तितम् । एवं च क्वाधिकरणविरोधः । त्रिवृदादिचतुष्टयान्तर्गतस्तोमयुक्तक्रतुमात्रपरत्वस्य अनिराकरणादिति ॥

किञ्च उपसंहारप्राबल्यानभ्युपगमे 'सृष्टीरुपदधाति' इत्यत्र "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः" (पा.सू. ४-४-१२५) इत्यनुशासनात् सृष्टिशब्दवत् मन्त्रोपधेयेष्टकापरस्य सृष्टिशब्दस्य 'यत्सप्तदशेष्टका उपदधाती'त्युपसंहारादौ प्रवृत्तिनिमित्तसमर्पकवाक्यशेषाभावेऽपि वाजपेयोद्भिदादीनामसन्निहितविध्युद्देशश्रुतप्रवृत्तिनिमित्तमादायैव निवृत्ताकाङ्क्षत्ववत् 'श्येनेनाभिचरन्यजेते'त्यादौ तत्समर्पकवाक्यशेषानुसारेण तदनुवाकाम्नातसृष्टिलिङ्गकासृष्टिलिङ्गकमन्त्रोपधेयेष्टकासमुदाये सामान्यरूपेण लक्षणाभ्युपगमो न स्यात्। न च "**आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्**" इति न्यायादेव तत्रोपसंहारप्राबल्यं न तूपसंहारत्वेनेति वाच्यम्। एतन्न्यायावतारस्य उपसंहारदौर्बल्यसिद्ध्यधीनत्वात्। अन्यथा एतन्न्यायेनैव उपक्रमप्राबल्यं न तूपक्रमत्वेनेति वाचाटकवचसोऽवकाशप्रसङ्गात्॥

नन्वेवं सति असृष्टिलिङ्गकमन्त्रोपधेयेष्टकास्तुतीनां इष्टकासाप्तदश्यकीर्तनस्य च सर्वथा बाधः स्यात्। ततो वरमेकस्यैव सृष्टिशब्दस्य लक्षणाङ्गीकारेण बाधाश्रयणम्। **बहुबाधादल्पबाधो बलमिति न्यायादिति** चेन्न। विध्यर्थवादयोर्विधेः प्रधानत्वेन "आत्मार्थे पृथिवीं त्यजेत्" इति न्यायेन प्रधानविधिबाधापेक्षयाऽप्रधानार्थवादानां बहुत्वेऽपि तद्बाधाश्रयणस्यैव न्याय्यत्वात्।

एवं नवमेऽपि 'पत्नीसंयाजान्तत्वं सर्वेषामविशेषात्' इत्यधिकरणे द्वादशाहे श्रुतस्य "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त" इत्यविशेषेण सर्वेषां सौत्यानामह्नां पत्नीसंयाजान्तत्वविधेरसंस्थितो हि तर्हि यज्ञ इति क्रतोरसमाप्तिप्रतिपादकवाक्यशेषानुसारेण येष्वहस्सु क्रतोरसमाप्तिस्तेषामेकादशानामेवाह्नां पत्नीसंयाजान्तत्वविधायकत्वमिति यन्निश्चितं, तदप्युपसंहारप्राबल्यादेव। तदभावे सर्वेषामेवाह्नां पत्नीसंयाजान्तत्वसम्भवेनासन्दिग्धस्योपक्रमस्य सङ्कोचकल्पनायोगात्।

यद्यप्यत्रानपेक्ष्योपसंहारं विध्युद्देशपर्यालोचनयैव प्रागुपक्रमादह्नः पत्नीसंयाजान्तत्वविधिरिति सिद्ध्यति। तथा हि। 'द्वादशाहेन प्रजाकामं याजयेत्' इति द्वादशसोमयागास्सह कर्तव्यत्वेन विहिताः। तत्र तेषां सहत्वसिद्ध्ये पूर्वपूर्वमहः क्वचित्पदार्थेऽवस्थाप्य परं परमुपक्रमितव्यम्। तत्रानियमेन यत्र क्वचन पदार्थेऽवस्थापने प्राप्ते पत्नीसंयाजान्तानि पूर्वपूर्वाण्यहानि कृत्वोत्तरोत्तरमारभेतेत्येवमेकादशानामह्नां पत्नीसंयाजान्तत्वविधौ नियमविधिर्भवति। उत्तमस्याह्नः पत्नीसंयाजान्तत्वविधौ त्वत्यन्ताप्राप्तविधिः स्यात्। अप्राप्तविधानाच्च नियमविधानं बलीयः, विधिलाघवात्। अतो विशेषश्रवणाभावेऽपि पत्नीसंयाजान्तत्वविधिः प्रागुत्तमादह्नः इति सिद्ध्यतीति किमत्रोपसंहारानुसारेणेति। तथापि न तत्प्राबल्यहानिः। अक्ताधिकरणेषु उपक्रमार्थनिर्णायकत्वेन क्लृप्तोपसंहारमात्रपरामर्शदशायां तेनैवात्राप्युपक्रमार्थनिर्णयात्। न ह्यत्र भवदुक्तरीत्या न्यायान्तरेण तदर्थनिर्णयसम्भवमात्रमुपसंहारस्य तदर्थनिर्णायकत्व-

**विघातकम्** । उपायस्योपायान्तरादूषकत्वात् । अन्यथोपक्रमापरामर्शदशायां 'धर्मोपदेशादि'ति न्याया-न्तरेणाप्युपसंहारार्थनिर्णयत्वसम्भवेन तवोपक्रमप्राबल्यमपि न सिद्ध्येत् ॥

एवं **छागपशुन्यायो**दाहरणेनाप्युपसंहारप्राबल्यसिद्धिः । तत्राप्युपक्रमगतपशुशब्दस्य "छागस्य वपाया मेदसोऽनुब्रूहि" इति मन्त्ररूपोपसंहारबलादेव छागरूपविशेषनिष्ठत्वनिर्णयात् । न च तत्रापि सामान्यविधेरनुष्ठापनाय विशेषाकाङ्क्षायां मन्त्रार्पिते विशेषे पर्यवसानाभ्युपगमादाकाङ्क्षितसङ्कोच-त्वान्नात्रोपसंहारेणोपक्रमबाधः । अनाकाङ्क्षितसङ्कोचस्यैव बाधत्वोपगमादिति वाच्यम् । विधेरनुष्ठेय-व्यक्तिविशेषाकाङ्क्षायाः छागस्येति मन्त्रेणाप्यनुपस्थिततया शान्त्यभावात् । छागशब्दस्य छागरूप-विशेषोपस्थापकत्वेऽपि छागरूपसकलविशेषस्याननुष्ठेयतया, तद्व्यक्तिविशेषवद्विध्यनाकाङ्क्षितत्वात् ।

**एतेन** "यदि च यो दीक्षितो यदग्नीषोमीयं पशुमालभेत" इत्ययं विधिः स्वाकाङ्क्षया विनोप-संहारप्राबल्यादेव पशुसामान्यं परित्यज्य मन्त्रार्पितं छागं द्रव्यतया गृह्णीयात्तदाग्नीषोमावपि परित्यज्य "त्वं ह्यग्ने प्रथमो मनोते"ति मनोतामन्त्रार्पितं "उपनयत मेध्यादुर आशासाना मेधपतये मेधमि"-त्यध्रिगुप्रैषगतदेवतापरैकवचनान्तमेधपतिशब्दोपोद्बलितं च केवलाग्निमेव देवतात्वेन गृह्णीयात् । न च इष्टापत्तिः । दशमे मनोताधिकरणे मनोतामन्त्रस्थाग्निशब्दस्यैकदेशद्वारा अग्नीषोमप्रकाशकत्वस्य नवमे मेधपत्यधिकरणे मेधपतय इत्येकवचनस्याग्नीषोमोभयव्यासक्तदेवैतैक्याभिप्रायत्वस्य च, समर्थित-त्वादिति **निरस्तम्** । विधेरनुष्ठेयव्यक्तिविशेषस्याकाङ्क्षितत्वेऽपि छागरूपविशेषस्यानाकाङ्क्षितत्वेनोक्त-दोषस्योभयसमाधेयत्वात् । "अग्नीषोमाभ्यां छागस्ये"ति मन्त्रान्तरे अग्नीषोमपदप्रयोगात्, मेधपति-शब्दस्य क्वचित् शाखान्तरे द्विवचनान्तपाठाच्च विध्यनुगुणमन्त्रसद्भावेन तदनुगुणमन्त्रार्पितविशेषग्रहण-स्यायुक्तत्वात् । अनुगुणमन्त्रानुसारेण अननुगुणमन्त्रस्यापि विध्यनुगुणार्थपरत्वकल्पनाच्च । अन्यथा विरुद्धार्थकमन्त्रद्वयस्य तत्तच्छाखिनामेकत्र विनियोगासिद्धिप्रसङ्गादिति ।

न च द्रव्यविषयेऽपि "इमं पशुं पशुपते त अद्य", "पाशात् पशुं प्रमुञ्चते"त्यनुगुणमन्त्रसद्भावात् अननुगुणमन्त्रार्पितछागग्रहणमपि न स्यादिति वाच्यम् । "इमं पशुम्" इत्यादौ पशुशब्दस्य छागा-च्छागसाधारणलोमवल्लाङ्गूलादिमत्प्राणिमात्रवाचित्वेनाव्यवस्थितार्थतया निर्णायकत्वासम्भवात् । अन्यथा "यदग्नीषोमीयं पशुमालभेते"त्याद्युपक्रमस्थपशुशब्दस्यैव व्यवस्थितार्थत्वेन स्वार्थनिश्चायकत्वे तदनुसारेण छागस्येत्याद्युपसंहाररूपमन्त्रगतपशुविशेषवाचिछागशब्दस्यापि पशुसामान्यपरत्वापत्तेः । किं चेमं पशुं इत्यत्रेममिति सर्वनाम्नः क्लृप्तनियतानुष्ठानोपपादकप्रकृतपरत्वाद्विशेषाकारेण बुद्धिस्थ-त्वातिरेकेण प्रकृतत्वस्य दुर्निरूपत्वात् । छागस्येति मन्त्रानुसारेणैव 'इमं पशुमि'ति मन्त्रस्यापि

छागरूपपशुविशेषपरत्वमुचितमिति 'अग्नीषोमीयं पशुमालभेत'' इति विध्युद्देशगतपशुशब्दस्यापि तत्परत्वमेव न्याय्यमिति । एवं 'श्येनेनाभिचरन्यजेते''त्यत्रापि श्येनशब्दस्य यागनामत्वे, उपसंहारस्य सादृश्यरूपप्रवृत्तिनिमित्तसमर्पकतया निर्णायकत्वादुपसंहारप्राबल्ये इदमप्युदाहरणम् ॥

**यत्त्वत्रापि** श्येनशब्दस्य न्यायान्तरैरेव कर्मनामत्वे सिद्धे, ज्योतिष्टोमनाम्न इव श्येननाम्नोऽपि प्रवृत्तिनिमित्ताकाङ्क्षायां तदपेक्षितसादृश्यरूपप्रवृत्तिनिमित्तसमर्पणे वाक्यशेष उपयुज्यते ॥ वस्तुतस्तत्रोपसंहाररूपत्वं विद्यमानमपि न तन्नामत्वनिर्णयप्रयोजकम् । तथा हि । 'श्येनेनाभिचरन्यजेते'त्यत्र श्येनशब्दस्य रूढ्या पक्षिपरत्वे न तावदयं कर्ममात्रविधिरङ्गीकर्तुं शक्यते, गुणश्रवणवैयर्थ्यापत्तेः । नापि कर्मणि गुणविधिः, फलश्रवणवैयर्थ्यापत्तेः । नापि फलाय गुणविशिष्टकर्मविधिरयम्, विशिष्टविधाने गौरवप्रसङ्गात् । न च फले कर्मणः, कर्मणि च गुणस्य विधिरिति शक्यमभ्युपगन्तुम्, विरुद्धत्रिकद्वयापत्तेः । नापि कर्माश्रित्य फलाय गुणविधिः, विप्रकृष्टविधानस्य धातोरत्यन्तपारार्थ्यस्य चापत्तेः । गत्यन्तरसम्भवे 'सोमेन यजेते'त्यादाविवानन्यगतिकविशिष्टविधित्वादिस्वीकारायोगाच्च । तस्मादुक्तसर्वदोषपरिहाराय श्येनशब्दस्य यागनामत्वे आवश्यके । दैवाद्विद्यमानवाक्यशेषस्य प्रवृत्तिनिमित्तसमर्पकत्वेनाप्यनुसरणमिति ।

**तन्न** । एतावताप्युपसंहारस्य प्रवृत्तेः नामत्वनिर्णायकत्वाहानेः । विध्युद्देशस्थश्येनशब्दस्य रूढ्या पक्षिपरत्वे, एवमयमितीदंशब्दस्य तेनैकार्थे चोपमानोपमेययोरभेदेनोपसंहारोपदर्शितसादृश्यासाङ्गत्यप्रसङ्गात् । न चैतावतेदंशब्दस्य पक्षिपरत्वत्याजनमुखेन, गुणविधित्वाभावमात्रनिर्णायकत्वमुपसंहारस्यागतं, न तु नामत्वनिर्णायकत्वमिति वाच्यम् । साक्षात्तदनिर्णायकत्वेऽपि नामत्वनिर्णायकपरिशेषोपयोगितया तस्य निर्णायकत्वसम्भवात् । अन्यथा न्यायान्तराणामपि साक्षाद्गुणविधित्वाभावमात्रनिर्णायकत्वेनातन्निर्णायकत्वापत्तेः । वस्तुतस्तु 'सिंहोऽयं माणवकः', 'यथा सिंहस्तथायमि'ति लौकिकवाक्ये यथा सिंह इति वाक्यशेषस्येव, 'श्येनोऽयं यागः', 'यथा श्येनस्तथायं याग' इति पर्यवसितवैदिकवाक्येऽपि यथा श्येन इति वाक्यशेषस्यापि प्रवृत्तिनिमित्तप्रदर्शनमुखेन न्यायान्तरनैरपेक्षेणैव नामत्वनिर्णयत्वमव्याहतप्रसरम् । न हि वयं न्यायान्तरस्योपक्रमार्थनिर्णायकत्वं वारयामः । किन्तु उपसंहारस्यापि तन्निर्णायकत्वम् । तच्च प्रकृते न्यायान्तरसद्भावेऽप्यक्षतम् । न चोपसंहारस्यान्यत्र नामत्वानिर्णायकत्वमित्येतावता तत्सत्त्वस्थलेऽपि तस्य तन्निर्णायकत्वं त्याज्यम् । तथा सति तत्प्रख्यत्वादिन्यायानामप्यसार्वत्रिकत्वेनातन्निर्णायकत्वप्रसङ्गात् । आकाङ्क्षिताकाङ्क्षितसाधारण्येन

**मुख्यार्थत्यागमात्रस्य** बाधत्वव्यवस्थापनेनोक्तन्यायान्तराणामिवोपसंहारस्यापि मुख्यार्थत्याजकत्वरूपबाधकत्वस्य दुर्वारत्वात् ।

किञ्च 'वाजपेयेन यजेत', 'उद्भिदा यजेते'त्यादौ प्रवृत्तिनिमित्तसमर्पकवाक्यशेषाभावेऽपि वाजपेयोद्भिदादिनाम्नः सन्निहितविध्युद्देशश्रुतप्रवृत्तिनिमित्तमादायैव निवृताकाङ्क्षावत् 'श्येनेनाभिचरन्यजेते'त्यादौ तत्समर्पकवाक्यशेषसत्त्वेऽपि श्येनादिनाम्नः तन्नैरपेक्ष्येण सन्निहितविध्युद्देशश्रुतयागत्वादिप्रवृत्तिनिमित्तमादायैव निवृत्ताकाङ्क्षत्वसम्भवेनोपसंहारप्राबल्येनैव वाक्यशेषश्रुतश्येनसादृश्यादेः प्रवृत्तिनिमित्तताया व्यवस्थापनीयत्वात् । न च यागत्वमतिप्रसक्तत्वान्न प्रवृत्तिनिमित्तमिति वाच्यम् । श्येनसादृश्यादेरपि तथात्वेन तौल्यात् । किञ्च न्यायान्तराननुसन्धानदशायामुपसंहारस्य गुणविधित्वाभावनिर्णयमुखेन नामत्वनिर्णयोपयोगित्वं दुर्वारम् । अन्यथा न्यायान्तरेष्वप्यन्यतमाननुसन्धानदशायामनुसंहितन्यायस्याप्यनिर्णायकत्वप्रसङ्गः ॥

नन्वेवमुपसंहारस्य प्राबल्याङ्गीकारे 'अवकाभिरग्निं विकर्षती'त्यत्राप्यवकाशब्दस्य 'आपो वै शान्ता' इत्युपसंहारानुसारेण अप्परत्वप्रसङ्गः। अपि च, 'नैवारं चरुमुपदधाती'त्यस्य स्थण्डिलनिर्वृत्त्यौपयिकयथाश्रुतचरूपधानविधानेन निराकाङ्क्षस्य 'बृहस्पतेर्वा एतदन्नं यन्नीवारा' इत्युपधानरूपगुणकर्मानन्वयिदेवतासम्बन्धप्रतिपादकोपसंहारानुसारेण यागविधायकत्वप्रसङ्गः । न चेष्टापत्तिः । ''संयुक्तस्त्वर्थशब्देन तदर्थश्रुतिसंयोगात्'' इति द्वितीयाधिकरणे उपक्रमस्य नैराकाङ्क्ष्याद्वाक्यशेषस्य देवतासमर्पकत्वं निराकृत्य बृहस्पतिपदस्य ब्राह्मणपरत्वाङ्गीकारेणोत्पन्नतया नीवारस्तुतिपरत्वनिर्णयात् तदधिकरणविरोध इति चेन्न । अवकाशब्दस्योपसंहारानुसारेण प्रसक्तस्याप्परत्वस्य विधिबाधप्रसङ्गरूपन्यायान्तरेणैव त्यागोपगमात् । न ह्यपां अवकानामिवाग्निविकर्षणसाधनत्वमुपपद्यते । न चात्रावकाशब्दस्य मुख्यार्थपरत्वमुपक्रमबलकृतम्, येनोपक्रमोपसंहारयोरुपक्रम एव प्रबलः स्यात् । किन्तु विधिबाधरूपन्यायबलकृतमेव । अत एवार्थवादाधिकरणे गुणवादसूत्रेण ''आपो वै शान्ता'' इत्यभिजनस्तुतिद्वारेणावकानामेव स्तुतिरिति विधिस्तुत्योर्वैयधिकरण्यपरिहारकरणमुपपद्यते ॥

**एतेन** 'नैवारचरुश्चर्भवति यदेनमुपदधाती'त्यस्योपसंहारप्राबल्ये ''बृहस्पतेर्वा एतदन्नं यन्नीवारा'' इत्युपसंहारानुसारेण यागविधायकत्वं स्यादिति **निरस्तम्** । भवेदेवं यद्युपसंहारे देवतासम्बन्धः प्रतीयेत । न चैवम् । तत्र बृहस्पतिसम्बन्धप्रतीतावपि प्रकृते बृहस्पतेरेव देवतात्वे मानाभावात् । न ह्यत्र 'आग्नेयोऽष्टाकपाल' इत्यादाविव तद्धितश्रुत्यादिकं देवतात्वनिश्चायकं प्रमाणमुपलभामहे । अत एव न **''संयुक्तस्त्वर्थशब्देने''**त्याद्यधिकरणविरोधः ।

ननु विध्याकाङ्क्षायैवोपसंहारानुसरणं श्येनवाक्य इति मीमांसकानामभ्युपगमवादः । वस्तुतस्तु उपक्रमस्वारस्येनैवोपसंहारस्यैवान्यथानयनं उपसंहारस्य पक्षिपरत्व इव यागपरत्वे आञ्जस्यासम्भवात् । तथाहि । पक्षद्वयेऽपि तावत्तत्रोपमानभागस्य यथा श्येन. पक्षिविशेषः मत्स्यादिकं निपत्यादत्त इत्यर्थः। तत्र मत्स्यादिकमित्यस्याश्रुतत्वेऽपि प्रसिद्धस्यैव दृष्टान्तीकर्तव्यतया तल्लाभादुपमेयभागस्य तु एवमयं यजमानस्य शत्रुं मारयतीत्यर्थः । पक्षिणि यागे चोभयत्रापि शत्रुकर्मकस्य मुख्यस्य निपत्यादानस्यासम्भवात् पक्षिपक्षे फले यागे वा साधनत्वेन विनियुक्तस्य पक्षिणः शत्रोरादाने व्यापारसम्भवात् । यागपक्षे यागपदार्थस्य क्रियात्वेन तत्र निपातनादानक्रिययोः सर्वथैवासम्भवाच्च । एवं च वाक्यशेषस्य पक्षिपरत्वे यथा श्येनः पक्षी निपत्य मत्स्यादिकमादत्ते एवमयं फले यागे वा विनियुक्तः श्येनः पक्षी यजमानस्य शत्रुं मारयतीत्यर्थः । अत्र श्येनपक्षिनिष्ठयोर्लौकिकप्रसिद्धमत्स्यादानविध्युद्देशोपात्तद्विषद्वर्गमारणयोरेवोपमानोपमेयभावः प्रतीयते । न तु श्येनस्यैव श्येनेन, येनाभेदेन सादृश्यानुपपत्तिः । यद्यपि नानयोरत्र समानधर्म उपात्तः, तथापि यथा जले स्वच्छन्दं विहरतो मत्स्यस्य श्येनकृतनिपत्यादानं झटित्यशङ्कितोपस्थितं भवति । तथा तत्कृतं द्विषतो मारणमपीति गम्यसाधारणधर्मोऽस्त्येव । तथा च तस्य यथा "कप्यासं पुण्डीकमेवमक्षिणी"त्यादाविव गम्यसाधारणधर्मेणोपमानोपमेयभावनिर्देशेऽपि न काचिदनुपपत्तिः ।

अवश्यं च तस्य साधारणधर्मस्य गम्यत्वं पक्षान्तरेऽप्यभ्युपगन्तव्यम् । अन्यथा द्विषन्मारणमात्रस्य विध्युद्देशादेवावगतत्वेन वाक्यशेषात् दृष्टान्तबलेन तद्गतशैघ्र्यानवगमे ततः प्रवृत्तिविशेषकरस्तुतिविशेषालाभप्रसङ्गात् । तथा च यथा लोके प्रच्छन्नतया गृहं प्रविश्य प्रच्छन्नतया एव निर्गते चैत्रे तस्य प्रच्छन्नतया गृहप्रवेशमात्रं जानानमन्यं प्रति "यथा देवदत्तो गृहं प्रविष्टः तथैवायं निर्गतः" इति वाक्येन देवदत्तनिष्ठयोरेव प्रवेशनिर्गमनक्रिययोः प्रच्छन्नकृतत्वरूपगम्यसाधारणधर्मेणोपमानोपमेयभाव उच्यते । न तु देवदत्तस्यैव देवदत्तेनेति मुख्य एवोपमानोपमेयभावः । तथात्रापि इत्युपपद्यते । अयमित्यस्य च सन्निहितप्रथमान्तश्येनपदोक्तपक्षिपरत्वे आर्जवं लभ्यते । यागपरत्वे तु वाक्यशेषस्थायमित्यस्य व्यवहितयज्युपात्तकरणपरामर्शित्वेनानार्जवं स्यात् । पक्षियागयोश्च मुख्योपमानोपमेयभावः स्यात् । अनुगतसाधारणधर्माभावेन मुख्यसादृश्यासम्भवात् । पक्षिणि मत्स्यादिकर्मकममुख्यं निपत्यादानं, यागे तु भ्रातृव्यकर्मकमारणमेव शङ्कितोपस्थितिकत्वगुणयोगादुपचरितममुख्यं निपत्यादानमिति । तत्र युक्तं पक्षियागयोरमुख्यमेव सादृश्यम् । न च यागपरत्वपक्षेऽपि पक्षियागगतयोर्मत्स्यादनभ्रातृव्यमारणयोरेवोपमानोपमेयभावोऽस्तीति वाच्यम् । तावता यागे श्येनशब्दप्रवृत्तिनिमित्तस्य श्येनसादृश्यस्यालाभेन उपसंहारानुसारेण श्येनशब्दगौणत्वोक्त्ययोगात् । तस्मादुपक्रमे लाघवाद्यनुसारेण यागमात्र-

विधिनिर्वाहाय श्येनशब्दस्य यागनामत्वसिद्ध्ये प्रवृत्तिनिमित्तापेक्षायामन्यत्र रूढस्य तत्र मुख्यप्रवृत्ति-निमित्तासम्भवेऽपि गौणप्रवृत्तिनिमित्तलाभायोपक्रमाकाङ्क्षानुसारेणैव वाक्यशेषे अयमित्यस्य व्यवहित-करणपरामर्शित्वं, वाक्यशेषस्यामुख्यसादृश्यपरत्वं च कल्पितमिति । तत्रोपक्रमानुसारेणैवोपसंहारो नीत इति तदेवमुक्तं पश्याम इति चेत् ।

न । भवेदेवं यदि उपमानभागस्य यथा श्येनः पक्षी निपत्य मत्स्यादिकमादत्त इत्यर्थः, उपमेयभागस्य च एवमयं श्येनपक्षी यजमानस्य द्विषन्तं भ्रातृव्यं शत्रुं मारयतीत्यर्थः स्यात् । न चैवं सम्भवति । तथा हि । अनुषङ्गसम्भवेऽध्याहारो न कल्प्यते । तथा चोपमानभागस्य यथा वै श्येनः पक्षी द्विषन्तं भ्रातृव्यं निपत्यादत्ते इत्येवार्थो युक्तः । एवं च यदि उपमेयभागस्यापि पक्ष्येवार्थः स्यात्, तदा यथा पक्षी द्विषन्तं भ्रातृव्यं निपत्यादत्ते, एवमयं पक्षी द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्येव महावाक्यार्थः स्यात् । न चायं युज्यते । उपमानोपमेययोः सर्वथा भेदाभावात् । विनापीदं शब्दं वाक्यपरिसमाप्त्या तद्वैयर्थ्यापत्तेश्च । उपमानोपमेययोरसर्वथा भेदाभावे प्रसिद्धेनाप्रसिद्धं बोधनीयमिति न्यायानवतारेण उपमानोपमेययोः प्रसिद्धत्वाप्रसिद्धत्वज्ञापके इवशब्दासामञ्जस्यात् । ततश्च उपमेयभागस्थेदंशब्दो न सन्निहितपक्षिपरः, किन्तु व्यवधानेऽपि यागपर एव । न चैवं निपत्यादानशब्दार्थस्यैकस्योपमानोपमेय-भागयोरसम्भवेन भिन्नभिन्नार्थस्याश्रयणे आवश्यकेऽस्मिन्पक्षे सादृश्यममुख्यं स्यादिति वाच्यम् । एवमयमित्यस्य सन्निहितपक्षिपरत्वेऽपि मुख्यस्योपमेयस्य अलाभसाम्यात् । अत्र निपत्यादानस्येव त्वत्पक्षे उपमेयत्वेन तस्य च मुख्यत्वासम्भवेनौपचारिकत्वावश्यंभावादुक्तरीत्येदंशब्दस्य पक्षिपरत्वा-सम्भवेन यागपरत्वे तत्रैवामुख्यसादृश्यस्य प्रकारान्तरासम्भवेनापतितस्य फलमुखगौरववददोषत्वात् । तस्मादुपसंहारस्य पक्षिपरत्वेनान्यस्यात्रोपक्रमानुसारेण वाक्यशेषो नेतव्यः । किन्तु न्यायान्तरनिरपेक्षेण वाक्यशेषेणैवोपक्रमो नेय इति ।

एवं चतुर्थे "फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वात्" इत्यधिकरणे जातेष्टेः 'पूत एव तेजस्वी'त्यादिवाक्यशेषोक्तं फलमिष्टिकर्तुः पितुरेव, न पुत्रस्य । अन्यगामिफलके कर्मण्यन्यस्य प्रेरणानुपपत्तेरिति प्राप्ते, येन वाक्यशेषेण फलमेतदुपनीयते पुत्रगतमेवोपनीय इति वचनप्रामाण्यात् पुत्रस्यैव फलमिति सिद्धान्तोऽप्युपसंहारप्राबल्येनैव निर्वाह्यः । अन्यथोपक्रमे प्राबल्ये पुत्रे जात इत्य-सत्त्वप्रतीतेस्तदिष्टेः वाक्यशेषानुसारेण पुत्रगतपूतत्वादिफलकामनायाः अधिकारिविशेषणत्वस्यास्वी-कारापत्त्या तद्वाक्यशेषस्यार्थवादमात्रत्वप्रसङ्गादिति ॥

**यत्तु** नात्रोपसंहारप्राबल्यशङ्का । न ह्यत्रोपसंहारेण उपक्रमावगतस्य कस्यचिदुपमर्दः क्रियते । येन तच्छङ्कावसरः स्यात् । किन्तूपक्रमावगतपुत्रजन्मनिमित्तकत्वमनुपमर्द्यैव तेन पुत्रगतं पूतत्वादिफल-

मुपनीयत इति **रात्रिसत्रन्यायेन** वाक्यशेषावगतफलस्यापि स्वीकारादिति ॥ **तन्न** । उपक्रमावगत-पुत्रजन्मवन्मात्राधिकारिकतया प्राप्ताया इष्टेर्वाक्यशेषेण पुत्रगतपूतत्वादिफलोपनायकेन तत्फलकामना-रहितस्यानधिकारित्वावगतेः उपक्रमावगतस्य सङ्कोचलक्षणबाधस्य दुर्वारत्वादिति । अन्यथा पुत्रगत-पूतत्वादिफलकामनारहितेनापि पुत्रजन्मरूपनिमित्तवता, तदिष्ट्यनुष्ठानप्रसङ्गः ॥

**एतेन** वाक्यशेषावगतफलस्वीकारोऽपि विध्याकाङ्क्षयैव । प्रवर्तकस्य विधेः फलविशेषसाधनत्व-ज्ञानं विना पुरुषस्याप्रवृत्त्या प्रवर्तकत्वापर्यवसानादिति **निरस्तम्** । 'उपरागे स्नायादि'त्यादिविधेरिवा-स्यापि प्रवर्तकत्वसम्भवेन विधेः फलाकाङ्क्षाविरहात् । अन्यथोपरागनिमित्तकस्नानविधेरपि प्रवर्तक-त्वान्यथानुपपत्त्या फलविशेषाकाङ्क्षायाः दुर्वारत्वेनाश्रुतफलस्थले सर्वत्र **विश्वजिन्न्यायेन** फलकल्पन-स्यावश्यकतया तादृशनित्यनैमित्तिककर्ममात्रेऽपि संवलिताधिकारप्रसङ्गः । न चेष्टापत्तिः । शौचादि-विरहदशायामिव फलकामनाविरहदशायामपि, नित्यनैमित्तिककर्माननुष्ठानेऽपि प्रत्यवायाभावप्रसङ्गः ।

**किञ्च** विध्याकाङ्क्षावशेनात्र आर्थवादिकफलस्वीकारेऽप्युक्तरीत्योपक्रमावगतार्थसङ्कोचसत्त्वेनोप-संहारकृतोपक्रमबाधो दुर्वारः ॥ **एतेन** अन्यतः पुरुषप्रवृत्तिलिङ्गेन यस्य पर्णमय्यादिवाक्ये विधेः न फलविशेषाकाङ्क्षा । तत्रापि वाक्यशेषे श्रुतस्याऽपापश्लोकश्रवणादेः विहितपर्णमयीत्यादिफलत्वप्रसङ्ग इति **निरस्तम्** । द्रव्यकर्मसंस्कारकर्मसु, 'परार्थत्वात् फलश्रुतिरर्थवादः स्यादि'ति न्यायान्तरेणैवापाप-श्लोकश्रवणादेः अफलत्वनिर्णयेन तदफलत्वस्य विध्याकाङ्क्षाविरहप्रयुक्तत्वाभावात् ।

**एतेनैव** वैश्वानरवाक्येऽप्युपक्रमप्राबल्यमेव सुवचम् । 'यस्मिन् जात' इत्यादिवाक्यशेषे पुत्रेष्टि-पूतत्वभवनयोरुभयोरपि वर्तमानापदेशेन, तुल्यकालत्वप्रतीत्या पूतत्वादेः पुत्रेष्टिफलत्वानवगमेऽपि विधेः प्रवर्तकत्वपर्यवसानाय, फलविशेषाकाङ्क्षयैवाऽश्रुतफलकल्पनाद्वरं श्रुतस्यैव पूतत्वादेः फलत्वविपरिणाम इति यत्पदस्य व्यत्यासेन योजनं णिजर्थसनर्थाद्यन्तर्भावं च कल्पयित्वा यं पूतत्वादियुक्तं पुत्रं भाव-यितुमिच्छति, तस्मिन् जात एतामिष्टिं निर्वपेदिति विपरिणामेन वाक्यशेषस्य फलसमर्पकत्वाभ्युप-गमादिति **निरस्तम्** । 'तरति शोकमात्मवित्', 'ब्रह्मवेद ब्रह्मैव भवति' इत्यादाविव, 'यो घृतं पिबति स पुष्टो भवती'त्यादाविव च 'यस्मिन् जात एतामिष्टिं निर्वपति, स पूतस्तेजस्व्यन्नाद इन्द्रियावीन्पशुमान् भवती'त्यादावपि, समभिव्याहारविशेषेणैव फलफलीभावनिश्चयसम्भवेन तदर्थमुपक्रमस्याऽननुसर्तव्य-त्वात् । अन्यथा समभिव्याहारविशेषस्य फलफलीभावनिश्चयं प्रत्यप्रयोजकत्वे सत्यामप्युपक्रमरूपविधेः फलाकाङ्क्षायामिदमेव फलं, इदमेव च फलीति निर्णये उपक्रमस्य सामर्थ्याभावेनाऽव्यवस्थाप्रसङ्गात् ॥

वस्तुतस्तु, भवेदेवं 'यदि वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात' इत्युपक्रमानुसारेण 'यस्मिन् जात' इति, उपसंहारस्य भवदुक्तरीत्या वचनव्यक्तिकल्पना । न चैवम् । उपक्रमस्येव, उपसंहारस्यापि

विधित्वापत्त्याऽर्थवादत्वभङ्गप्रसङ्गात् । वसन्तादिवाक्यवदुभयरूपत्वाश्रयणे च, गौरवापत्तेः । किन्तु 'यस्मिञ्जातेऽपि एतामिष्टिं निर्वपति स पुत्रः पूतत्वादियुक्तो भवती'ति वाक्यशेषात् वैश्वानरेष्टेः परम्परासम्बन्धेन पूतत्वादिसामानाधिकरण्यमात्रप्रतीतौ, तत्पूतत्वादिकं तत्कुतोऽस्य भवतीति साधनाकाङ्क्षायां, इष्टेश्च तत्पिता किमर्थमिष्टिं करोतीति साध्याकाङ्क्षायामुपस्थितत्वाद्योग्यत्वाच्च तयोरेव साध्यसाधनभावः कल्प्यते । विधिनैरपेक्षेणैव क्लृप्ते साध्यसाधनभावे विधिः स्वस्य प्रवर्तकत्वनिर्वाहाय फलविशेषमाकाङ्क्षमाण; स्वनैरपेक्ष्येणैव साध्यतया क्लृप्तं पूतत्वादिकमेव फलतया स्वीकरोति । यथा अध्ययनविधिः स्वप्रवर्तकत्वनिर्वाहायान्वयव्यतिरेकाभ्यामध्ययनसाध्यत्वेन क्लृप्तमर्थावबोधमेव फलतया स्वीकरोति तद्वत् । तथा च उपक्रमानुसारेणोपसंहारान्यथात्वासम्पादनात् क्व उपक्रमप्राबल्यशङ्कावसरः । प्रत्युत विधिनिरपेक्षवाक्यशेषावगतं इष्टिसाध्यत्वेन क्लृप्तं पूतत्वादिकमेव अध्याहृतकर्मपदोपबन्धं विधेः फलविशेषाकाङ्क्षाशान्तये उपक्रमावगतपुत्रजन्ममात्रनिमित्तत्वोपमर्दपूर्वकं वैधफलत्वेन कल्पनीयमित्युपसंहारबलेनोपक्रमस्यैवान्यथाविपरिणामादुपसंहारप्राबल्यमेव सुवचम् ।

किं च पुत्रेष्टिविधेः फलाकाङ्क्षयैव वाक्यशेषे श्रुतस्य पूतत्वादेः फलत्वनिर्णय इति वदता पुत्रेष्टिविधेरिव पर्णतादिविधेरपि अश्रुतफलत्वाविशेषेण सत्यामेव फलाकाङ्क्षायां वाक्यशेषे श्रुतस्यापापश्लोकश्रवणादेः फलत्वनिर्णयोऽभ्युपेयः । न चैवं सम्भवति । पर्णतादिविधेरव्यभिचरितफलवत्क्रतुसम्बन्धितया निश्चितजुह्वनुवादेन तत्र पर्णतादिविधापितया वाक्यशेषे नैरपेक्षेणैव फलाकाङ्क्षाशान्तेः । एवं चापापश्लोकश्रवणादेः फलत्वप्रसक्तेरेवाभावेन तन्निरासपूर्वकं "न स पापं श्लोकं शृणोती"त्यादिवाक्यशेषार्थवादत्वव्यवस्थापनाय "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इत्याद्यधिकरणानारम्भप्रसङ्गः । न ह्येवंविधेर्विषये तवेव मम विध्याकाङ्क्षयैव फलत्वनिर्णयहेतुः । येनोक्तदोषः स्यात् । किं तु विध्याकाक्षां विनापि समभिव्याहारविशेषादेरपि तन्निर्णयहेतुत्वोपगमादिति ॥

किं च विध्याकाङ्क्षयैवोपसंहारिकफलस्वीकार इति नियमे प्रस्तरप्रहरणे सूक्तवाकमन्त्रगताऽयुरादीनां फलत्वाभ्युपगमो मीमांसकानां न स्यात् । न हि तत्र प्रस्तरप्रहरणविधेः फलाकाङ्क्षाऽस्ति प्रस्तरप्रहरणस्याङ्गतयाऽन्यतः प्रवृत्तिलाभेन तद्विरहात् । किञ्चैवमप्युपसंहारप्राबल्यमेव तत्र दुर्वारम् । विध्याकाङ्क्षां विनापि सूक्तवाकोपसंहारमन्त्ररूपोपसंहारगतायुरादिफलकस्वीकारात् ॥

**यत्त्वत्र** न सूक्तवाकरूपोपसंहारप्रकाश्यत्वेनायुरादीनां फलत्वाभ्युपगमः । किं तु 'सूक्तवाकेन प्रस्तरं प्रहरती'ति तृतीयाश्रुतिविनियुक्तकृत्स्नसूक्तवाकमन्त्रकारणत्वान्यथानुपपत्त्या । न च सूक्तवाकः साक्षात्प्रहरणं तत्साधनं प्रस्तरं वा अन्यद्वा तत्सम्बन्धि प्रकाशयितुं शक्नोति । तत्सम्बन्धियत्किञ्चित्-

प्रकाशकत्वेनैव हि करणत्वं निर्वाह्यमिति सूक्तवाकप्रकाशिताग्न्यादिदेवतानां तादृशायुरादिफलानां च प्रहरणसम्बन्धित्वं कल्प्यत इति ।

**तन्न** । ''कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे'' इत्यादिमन्त्रस्येव सूक्तवाकस्यापि विनियोजकप्रमाणावगतकरणत्वाविशेषेऽपि तत्रेवात्रापि सूक्तवाकस्थायुरग्न्यादिपदानां कर्मसमवेतार्थे विनापि लक्षणां यथाश्रुततदर्थानामायुरादिफलानामग्न्यादिदेवतानां च कर्मसम्बन्धमात्रकल्पनमिति यत्, तत्तूपसहाररूपसूक्तवाकश्रुतपूतमित्युपसंहारप्राबल्यस्यैवमप्यनपायात् । न चैवं तत्रापि श्रुतकरणत्वान्यथानुपपत्तेस्तौल्यादत्रेव यथाश्रुतेन्द्रादिपदार्थस्यैव कर्मसम्बन्धमात्रं किं न कल्प्यं इति वाच्यम् । असम्भवादिति गृहाण । न हि गार्हपत्योपस्थाने इन्द्रः सम्बन्धी सम्भवति । तथा च तत्रेन्द्रपदस्य गार्हपत्यलक्षणां विना तद्घटितमन्त्रस्य कर्मसमवेतार्थप्रकाशकत्वासम्भवेन ऐन्द्र्येति श्रुतकरणत्वानिर्वाह एव । प्रकृतसूक्तवाके तु विनाऽप्यायुरादिपदानां लक्षणां तदर्थानां श्रुतानामेव कर्मसम्बन्धमात्रकल्पने सूक्तवाकस्य लाघवेन 'प्रस्तरं प्रहरती'ति श्रुतकरणत्वं निर्व्यूढमेव । तावतापि तस्य करणत्वोपपादककर्मसमवेतार्थप्रकाशत्वसम्भवात् ।

न चैवं 'उरुप्रथस्वे'ति, 'पुरोडाशं प्रथयति' इति श्रुतकरणत्वान्यथानुपपत्त्या 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्' इति मन्त्रोपात्तयज्ञपतिप्रथनरूपफलस्य 'पुरोडाशं प्रथयति' इति विहितपुरोडाशप्रथनरूपकर्मसम्बन्धकल्पनाप्रसङ्ग इति वाच्यम् । 'उरु प्रथस्वे'त्यस्यार्थवादतया विनियोजकश्रुतित्वासम्भवात् । 'उरु प्रथस्वे'ति मन्त्रस्य तु लिङ्गेनैव प्रथने विनियोगात् । उपसंहारे श्रुतस्यापि यज्ञपतिप्रथनस्य फलत्वेन प्रथनासम्बन्धस्तु प्रथनविधेः अङ्गविधित्वेन फलाकाङ्क्षाविरहात् । न च तस्य फलत्वेन सम्बन्धे मानान्तरमस्ति । न चैवं यज्ञपतिप्रथनस्य पुरोडाशप्रथनफलत्वाप्रसक्त्या भाष्ये तन्निराकरणानुपपत्तिरिति वाच्यम् । वस्तुतोऽर्थवादत्वेन व्यवस्थापितस्योरुप्रथस्वेति वाक्यस्य विनियोजकत्वबुद्ध्या तत्प्रसक्तिसम्भवादिति ॥

एवं दशमे **'न चेदन्यं प्रकल्पयेत् प्रक्लृप्तार्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च'** इत्यधिकरणे अग्निहोत्रं प्रकृत्य श्रुतेन ''जर्त्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात् न ग्राम्यान् पशून् हिनस्ति नारण्यान्'' इति वाक्येन जर्त्तिलगवीधुकशब्दवाच्यारण्येतिलारण्यगोधूमकृतयवाग्वोर्विकल्पेनाग्निहोत्रहोमद्रव्यत्वविधाने लिङ्गविभक्तिबलेन, ग्राम्यारण्यपशुहिंसादिरहिततया तयोः स्तवनेन च प्रतीयमाने 'अथो खल्वाहुरनाहुतिर्वै जर्त्तिलाश्च गवीधुकाश्च', 'पयसाग्निहोत्रं जुहुयात्' इति तदुपसंहारेण तदनन्तरं जर्त्तिलादिप्रतिक्षेपेण तत्र पयस एव द्रव्यत्वविधानदर्शनादेव तद्विध्यैकवाक्यतया

**'जर्त्तिलयवाग्वा वा जुहुयात्'** इत्याद्युपक्रमस्य ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हाणामपि जर्त्तिलगवीधुकानां पयोपेक्षया दुष्टत्वात् पयः प्रशस्तमिति पयःस्तुतिलक्षकत्वप्रदर्शनादेतदप्युपसंहारप्राबल्ये उदाहरणम् ।

न च सूत्रकृता आनर्थक्यहेतुना पयःस्तुतिपरत्वमुक्तम्, नोपसंहारानुसारेणेति कुतस्तत्प्राबल्यशङ्केति वाच्यम् । पयसा सह विकल्पार्थं जर्त्तिलादिविधानसम्भवेनानर्थक्याभावात् । तेन हेतुना **''जर्त्तिलयवाग्वा वा जुहुयात्''** इत्यादेः पयःस्तुत्यर्थत्वासिद्धेः । ''अनाहुतिर्वै जर्त्तिलाश्च'' इत्यादेः जर्त्तिलादिनिषेधरूपत्वमेव, न तु पयःस्तुत्यर्थत्वमिति शङ्कायां विहितजर्त्तिलादिनिषेधस्य ग्रहणाग्रहणवद्विकल्पार्थत्वात् । विकल्पस्य च 'पयसा जुहुयात्' इति द्रव्यान्तरविधानादेवासिद्धेः निषेधानर्थक्यात् । **न हि निन्दान्यायेन** पयोविधिस्तुत्यर्थतयैवेत्यानर्थक्यहेतोः 'अनाहुतिर्वै' इत्यादिभागस्य पयःस्तुत्यर्थत्वावगमकत्वात् ॥ ''**शिष्ट्वा तु प्रतिषेधः स्यात्**'' इति पूर्वाधिकरणे 'अतिरात्रे षोडशिनं गृह्णाती'ति विधाय आम्नातो 'नातिरात्रे षोडशिनं गृह्णाती'त्ययं तत्प्रतिषेधः ॥ न तु 'नानुयाजेषु' इत्यादिवत् पर्युदासादिरूप इत्युक्तेः । तर्हि तद्वदेवा'नाहुतिर्वा' इत्यपि प्रतिषेधः इति शङ्कायां तन्निराकरणाय सूत्रप्रवृत्तेश्च । तथा चास्मिन्सूत्रे ''**शिष्ट्वा तु प्रतिषेधः स्यात्**'' इति पूर्वसूत्रानुषङ्गेण, न चेदन्यं विधिं कल्पयेत्, यद्यत्र प्रत्यक्षो विधिः सन्निहितो न स्यात् । ततः षोडशिग्रहणाग्रहणवत् एकेन शिष्ट्वा परेण प्रतिषेधः स्यात् । इह तु ''पयसाग्निहोत्रं जुहुयात्'' इति विध्यन्तरस्य प्रक्लृप्तत्वात् तच्छेषभूतोऽयमर्थवादः स्यात् । विहितप्रतिषेधफलस्य विकल्पस्य पयोरूपद्रव्यान्तरविधानादेव सिद्धेः प्रतिषेधानर्थक्यादियुक्तेः जर्तिलाद्यनाहुतित्वकीर्तनस्य कथं पयःप्रशंसापरत्वमिति शङ्कायामयं हेतुरुच्यते, परसामर्थ्यादिति । परेणोपसंहाररूपेण पयोविधिनाऽर्थवादत्वेनान्वये सामर्थ्यात् योग्यत्वादिति । तत्साधारण्यादेव 'जर्तिलयवाग्वा जुहुया'दित्यादेः पयोविधिशेषत्वमवश्यं वक्तव्यम् । दृष्टं हि कस्यचिन्निन्दायास्तदितरस्तुतौ पर्यवसानवत् कस्यचिद्विधिस्तुतिपूर्वं तन्निन्दाया अपि सहैव विधिस्तुतिभ्यां इतरस्तुतौ पर्यवसानम् । यथा देवदत्तस्तावदतीव विद्वानित्युक्त्वा, न तस्य बृहस्पतिरपि सम इति च स्तुत्वा सोऽपि यज्ञदत्तमपेक्ष्याविद्वानिति चोक्ते सर्वस्यापि तस्य यज्ञदत्तस्तुतौ पर्यवसानमिति । तथाच पश्चात् पयोविधिदर्शनात् उपक्रमावगतस्य जर्तिलयवाग्वादिविधेस्त्याग इत्युपसंहारप्राबल्यापेक्षणं दुर्वारमिति ॥

**यत्त्वत्र** अनेकादृष्टकल्पनानुबन्धिवाक्यभेदपरिहाराय जर्तिलादिविधित्याग इति न तदर्थमुपसंहारप्राबल्यमाश्रयणीयम् । न हि सम्भवत्येकवाक्यत्वे भेदाश्रयणं युक्तम् । अत एव यत्रानेकविधायकश्रवणं तत्र एकस्यैव विधायकत्वमन्यस्यानुवादकत्वमित्येकवाक्यत्वसम्भवे वाक्यभेदावहो विधिभेदो न

स्वीक्रियते । तद्यथा 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमि'त्यत्र गिरापदकार्ये इरापदविधानादेव गिरापदनिवृत्तिसिद्धेः 'ऐरं कृत्वोद्गेयमि'त्येव विधिः । 'न गिरा गिरेति ब्रूयादि'ति तु तत्प्राप्तगिरापद-निवृत्त्यनुवादः इरापदस्य गिरापदकार्यापत्तिसिद्ध्ये तत्कार्थलक्षणार्थः । न तु गिरापदप्रतिषेधविधिः । अन्यथा गिरापदप्रतिषेधमात्रादिरापदस्याप्राप्तेः 'ऐरं कृत्वोद्गेयमि'त्यस्यापि विधायकत्वापत्त्या वाक्य-भेदप्रसङ्ग इत्युक्तम् । अत एव "न चतुस्त्रिंशदिति ब्रूयात् । षड्विंशतिरित्येव ब्रूयात्" इत्यत्र अश्वमेधे अश्ववङ्क्रीयत्ताप्रकाशनाय पठितायाः "चतुस्त्रिंशद्वाजिनो देवबन्धो वङ्क्रीरश्वस्य स्वधितिस्समेधी"त्यस्या ऋचो न चतुस्त्रिंशदिति प्रतिषेधेन प्राप्तस्य "षड्विंशतिरस्य वङ्क्रय" इति प्राकृतवङ्क्रिमन्त्रस्य यथा-प्राप्त्यनुवादमात्रं "षड्विंशतिरित्येव ब्रूयात्" इति वचनं, न तु प्राकृतमन्त्रे षड्विंशतिपदनियमेऽपि तस्य तात्पर्यम् । तस्यापि विधाने वाक्यभेदप्रसङ्गादिति तूपरगोमृगयोरश्वस्य च वङ्क्रिणा समस्य वचनस्य "षड्विंशतिरेषा वङ्क्रय" इत्येवंरूपस्याबाध उक्तः । एवमिहापि वाक्यभेदपरिहाराय जर्तिलादिवाक्यस्य विधिरूपार्थवादत्वाश्रयणमिति नानेनोपसंहारप्राबल्यसिद्धिरिति ।

**तन्न** । अन्यतमविधित्वस्वीकारेऽपि वाक्यभेदपरिहारसिद्धे विनिगमकाभावे वाक्यभेदप्रसङ्गस्य जर्तिलादिविधित्वत्यागे मानत्वायोगात् । न च वाक्यभेदप्रसङ्गबलेन जर्तिलगवीधुकपयोविधीनामन्य-तमस्यैव विधित्वं, इतरस्य तु सर्वस्य तदर्थवादत्वमिति स्थिते को वा भागोऽत्र विधिः, को वा तदर्थ-वादः इति विशये "पयसाऽग्निहोत्रं जुहुयात्" इत्येव विधिः । इतरस्तु पूर्वो भागः सर्वोऽपि तदर्थवादः । कुतः परसामर्थ्यात् । परेण पयोविधिनाऽर्थवादत्वेनान्वेतुं योग्यत्वादिति विनिगमकमस्त्येव । लोके विधिस्तुतिपूर्वकनिन्दाया विधिस्तुतिभ्यां सह इतरस्तुतौ पर्यवसानदर्शनादिति वाच्यम् ॥ "पयसा जुहुयात्" इति तिङ्विभक्तेरेवोपसंहृतत्वात् उपसंहारबलादेव तस्य विधित्वे इतरभागस्य तदर्थवादत्वेन तच्छेषत्वे स्थिते कथमस्य तदर्थवादत्वमिति जिज्ञासायां लोके विधिस्तुतिपूर्वकं निन्दायास्तदितरस्तुतौ पर्यवसानवत् 'जर्त्तिलयवाग्वा वा जुहुयादि'त्यादेः 'अनाहुतिर्वैजर्त्तिलाश्च गवीधुकाश्चे'त्यन्तस्यापि विधिस्तुतिपूर्वकनिन्दात्वेन परस्परपयोर्विधेः स्तुतौ पर्यवसानयोग्यत्वप्रदर्शनाय 'परसामर्थ्यादि'ति सूत्रकृता हेतूपन्यासात् । न च 'पयसा जुहुयात्' इत्यस्य विधित्वे तावन्मात्रोपसंहारादन्यत् गमक-मस्तीत्युपसंहारप्राबल्यं दुर्वारमिति । अन्यथोपक्रमप्राबल्यवादिनस्तव परमोपक्रमस्थस्य 'जर्तिलयवाग्वा वा जुहुयात्' इत्यस्यैवासञ्जातविरोधित्वेन विधित्वे तदेकवाक्यतानिर्वाहाय, विरुद्धार्थकस्यापि इतर-भागस्य तदनुसारेणान्वयितव्यत्वापत्तौ पयोविधेर्दत्तजलाञ्जलित्वप्रसङ्गः । न हि कस्यापि शब्दस्य विधिशेषस्य लक्षणया तदनुगुणार्थप्रतिपादनमशक्यमिति, 'पयसा जुहुयात्' इत्यस्य स्तावकत्वेनार्थ-वादत्वं दुर्वारमिति ॥

'जर्त्तिलयवाग्वा वा जुहुयात्'' इत्याद्युपक्रमस्य ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हाणामपि जर्त्तिलगवीधुकानां पयोपेक्षया दुष्टत्वात् पयः प्रशस्तमिति पयःस्तुतिलक्षकत्वप्रदर्शनादेतदप्युपसंहारप्राबल्ये उदाहरणम् ।

न च सूत्रकृता आनर्थक्यहेतुना पयःस्तुतिपरत्वमुक्तम्, नोपसंहारानुसारेणेति कुतस्तत्प्राबल्यशङ्केति वाच्यम् । पयसा सह विकल्पार्थं जर्त्तिलादिविधानसम्भवेनानर्थक्याभावात् । तेन हेतुना ''जर्त्तिलयवाग्वा वा जुहुयात्'' इत्यादेः पयःस्तुत्यर्थत्वासिद्धेः । ''अनाहुतिर्वै जर्त्तिलाश्च'' इत्यादेः जर्त्तिलादिनिषेधरूपत्वमेव, न तु पयःस्तुत्यर्थत्वमिति शङ्कायां विहितजर्त्तिलादिनिषेधस्य ग्रहणाग्रहणवद्विकल्पार्थत्वात् । विकल्पस्य च 'पयसा जुहुयात्' इति द्रव्यान्तरविधानादेवासिद्धेः निषेधानर्थक्यात् । **न हि निन्दान्यायेन** पयोविधिस्तुत्यर्थतयैवेत्यानर्थक्यहेतोः 'अनाहुतिर्वै' इत्यादिभागस्य पयःस्तुत्यर्थत्वावगमकत्वात् ॥ ''**शिष्ट्वा तु प्रतिषेधः स्यात्**'' इति पूर्वाधिकरणे 'अतिरात्रे षोडशिनं गृह्णाती'ति विधाय आम्नातो 'नातिरात्रे षोडशिनं गृह्णाती'त्ययं तत्प्रतिषेधः ॥ न तु 'नानुयाजेषु' इत्यादिवत् पर्युदासादिरूप इत्युक्तेः । तर्हि तद्वदेवा'नाहुतिर्वा' इत्यपि प्रतिषेधः इति शङ्कायां तन्निराकरणाय सूत्रप्रवृत्तेश्च । तथा चास्मिन्सूत्रे ''**शिष्ट्वा तु प्रतिषेधः स्यात्**'' इति पूर्वसूत्रानुषङ्गेण, न चेदन्यं विधिं कल्पयेत्, यद्यत्र प्रत्यक्षो विधिः सन्निहितो न स्यात् । ततः षोडशिग्रहणाग्रहणवत् एकेन शिष्ट्वा परेण प्रतिषेधः स्यात् । इह तु ''पयसाग्निहोत्रं जुहुयात्'' इति विध्यन्तरस्य प्रक्लृप्तत्वात् तच्छेषभूतोऽयमर्थवादः स्यात् । विहितप्रतिषेधफलस्य विकल्पस्य पयोरूपद्रव्यान्तरविधानादेव सिद्धेः प्रतिषेधानर्थक्यादियुक्तेः जर्तिलाद्यनाहुतित्वकीर्तनस्य कथं पयःप्रशंसापरत्वमिति शङ्कायामयं हेतुरुच्यते, परसामर्थ्यादिति । परेणोपसंहाररूपेण पयोविधिनाऽर्थवादत्वेनान्वये सामर्थ्यात् योग्यत्वादिति । तत्साधारण्यादेव 'जर्तिलयवाग्वा जुहुया'दित्यादेः पयोविधिशेषत्वमवश्यं वक्तव्यम् । दृष्टं हि कस्यचिन्निन्दायास्तदितरस्तुतौ पर्यवसानवत् कस्यचिद्विधिस्तुतिपूर्वं तन्निन्दाया अपि सहैव विधिस्तुतिभ्यां इतरस्तुतौ पर्यवसानम् । यथा देवदत्तस्तावदतीव विद्वानित्युक्त्वा, न तस्य बृहस्पतिरपि सम इति च स्तुत्वा सोऽपि यज्ञदत्तमपेक्ष्याविद्वानिति चोक्ते सर्वस्यापि तस्य यज्ञदत्तस्तुतौ पर्यवसानमिति । तथाच पश्चात् पयोविधिदर्शनात् उपक्रमावगतस्य जर्तिलयवाग्वादिविधेस्त्याग इत्युपसंहारप्राबल्यापेक्षणं दुर्वारमिति ॥

**यत्त्वत्र** अनेकादृष्टकल्पनानुबन्धिवाक्यभेदपरिहाराय जर्तिलादिविधित्याग इति न तदर्थमुपसंहारप्राबल्यमाश्रयणीयम् । न हि सम्भवत्येकवाक्यत्वे भेदाश्रयणं युक्तम् । अत एव यत्रानेकविधायकश्रवणं तत्र एकस्यैव विधायकत्वमन्यस्यानुवादकत्वमित्येकवाक्यत्वसम्भवे वाक्यभेदावहो विधिभेदो न

स्वीक्रियते । तद्यथा 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमि'त्यत्र गिरापदकार्ये इरापदविधानादेव गिरापदनिवृत्तिसिद्धेः 'ऐरं कृत्वोद्गेयमि'त्येव विधिः । 'न गिरा गिरेति ब्रूयादि'ति तु तत्प्राप्तगिरापद-निवृत्त्यनुवादः इरापदस्य गिरापदकार्यापत्तिसिद्धये तत्कार्यलक्षणार्थः । न तु गिरापदप्रतिषेधविधिः । अन्यथा गिरापदप्रतिषेधमात्रादिरापदस्याप्राप्तेः 'ऐरं कृत्वोद्गेयमि'त्यस्यापि विधायकत्वापत्त्या वाक्य-भेदप्रसङ्ग इत्युक्तम् । अत एव "न चतुस्त्रिंशदिति ब्रूयात् । षड्विंशतिरित्येव ब्रूयात्" इत्यत्र अश्वमेधे अश्ववङ्क्रीयत्ताप्रकाशनाय पठितायाः "चतुस्त्रिंशद्वाजिनो देवबन्धो वङ्क्रीरश्वस्य स्वधितिस्समेधी"त्यस्या ऋचो न चतुस्त्रिंशदिति प्रतिषेधेन प्राप्तस्य "षड्विंशतिरस्य वङ्क्रय" इति प्राकृतवङ्क्रिमन्त्रस्य यथा-प्राप्त्यनुवादमात्रं "षड्विंशतिरित्येव ब्रूयात्" इति वचनं, न तु प्राकृतमन्त्रे षड्विंशतिपदनियमेऽपि तस्य तात्पर्यम् । तस्यापि विधाने वाक्यभेदप्रसङ्गादिति तूपरगोमृगयोरश्वस्य च वङ्क्रिणा समस्य वचनस्य "षड्विंशतिरेषा वङ्क्रय" इत्येवंरूपस्याबाध उक्तः । एवमिहापि वाक्यभेदपरिहाराय जर्तिलादिवाक्यस्य विधिरूपार्थवादत्वाश्रयणमिति नानेनोपसंहारप्राबल्यसिद्धिरिति ।

**तन्न** । अन्यतमविधित्वस्वीकारेऽपि वाक्यभेदपरिहारसिद्धे विनिगमकाभावे वाक्यभेदप्रसङ्गस्य जर्तिलादिविधित्वत्यागे मानत्वायोगात् । न च वाक्यभेदप्रसङ्गबलेन जर्तिलगवीधुकपयोविधीनामन्य-तमस्यैव विधित्वं, इतरस्य तु सर्वस्य तदर्थवादत्वमिति स्थिते को वा भागोऽत्र विधिः, को वा तदर्थ-वादः इति विशये "पयसाऽग्निहोत्रं जुहुयात्" इत्येव विधिः । इतरस्तु पूर्वो भागः सर्वोऽपि तदर्थवादः । कुतः परसामर्थ्यात् । परेण पयोविधिनाऽर्थवादत्वेनान्वेतुं योग्यत्वादिति विनिगमकमस्त्येव । लोके विधिस्तुतिपूर्वकनिन्दाया विधिस्तुतिभ्यां सह इतरस्तुतौ पर्यवसानदर्शनादिति वाच्यम् ॥ "पयसा जुहुयात्" इति तिङ्विभक्तेरेवोपसंहृतत्वात् उपसंहारबलादेव तस्य विधित्वे इतरभागस्य तदर्थवादत्वेन तच्छेषत्वे स्थिते कथमस्य तदर्थवादत्वमिति जिज्ञासायां लोके विधिस्तुतिपूर्वकं निन्दायास्तदितरस्तुतौ पर्यवसानवत् 'जर्त्तिलयवाग्वा वा जुहुयादि'त्यादेः 'अनाहुतिर्वैजर्त्तिलाश्च गवीधुकाश्चे'त्यन्तस्यापि विधिस्तुतिपूर्वकनिन्दात्वेन परस्परपयोर्विधेः स्तुतौ पर्यवसानयोग्यत्वप्रदर्शनाय 'परसामर्थ्यादि'ति सूत्रकृता हेतूपन्यासात् । न च 'पयसा जुहुयात्' इत्यस्य विधित्वे तावन्मात्रोपसंहारादन्यत् गमक-मस्तीत्युपसंहारप्राबल्यं दुर्वारमिति । अन्यथोपक्रमप्राबल्यवादिनस्तव परमोपक्रमस्थस्य 'जर्तिलयवाग्वा वा जुहुयात्' इत्यस्यैवासञ्जातविरोधित्वेन विधित्वे तदेकवाक्यतानिर्वाहाय, विरुद्धार्थकस्यापि इतर-भागस्य तदनुसारेणान्वयितव्यत्वापत्तौ पयोविधेर्दत्तजलाञ्जलित्वप्रसङ्गः । न हि कस्यापि शब्दस्य विधिशेषस्य लक्षणया तदनुगुणार्थप्रतिपादनमशक्यमिति, 'पयसा जुहुयात्' इत्यस्य स्तावकत्वेनार्थ-वादत्वं दुर्वारमिति ॥

**अपि च जर्त्तिलगवीधुकानां** 'अनाहुतिर्वे'त्यनाहुतित्वस्यावान्तरोपसंहारादुपसंहारबलेनैवोपक्रमे **जर्त्तिलयवाग्वादिविधिनिरासोऽङ्गीकार्यः** । किञ्चोपक्रमप्राबल्यवादिनस्तवैव परसामर्थ्यादिति सूत्रावयवस्य, परस्य पयोविधेरर्थवादत्वेन पूर्वेण जर्त्तिलयवाग्विधिनाऽन्वयसामर्थ्यादिति योजनापत्तिरिति दिक् ॥

**एवमर्थैकत्वाधिकरणे** 'यदृचाऽस्तुवत' इत्यस्याकर्तृविशेषणविधिशक्त्यप्रतिबन्धकयच्छब्द- **युक्तस्याप्युपक्रमस्य** 'एवं विद्वान् साम्ना स्तुवीते'ति कर्तृविशेषेण विधिशक्तिप्रतिबन्धकयच्छब्दयुक्तोप- **संहारबलेन, स्वतःप्राप्तमृग्विधित्वं** परित्यज्योपसंहारेण सामविधिशेषत्वस्वीकारात् तदप्युपसंहारप्राबल्ये **उदाहरणं द्रष्टव्यम्** ॥

**यत्तु** तत्रापि वाक्यभेदादिदोषपरिहारार्थमौपसंहारिकसामविधिशेषत्वस्वीकारः । तथाहि– उपक्रमे 'यदृचा स्तुवते तदसुरा नान्ववायन् यत्साम्ना स्तुवते तदसुरा नान्वावयन्नि'ति ऋचा स्तुतिः साम्ना स्तुतिश्चेत्युभयं श्रूयते, न तु ऋचा स्तुतिमात्रम् । विधिस्तूभयत्रापि न श्रूयते । तत्कल्पना चोभयत्रापि न सम्भवति । एकवाक्यत्वसम्भवे वाक्यभेदस्याऽन्याय्यत्वात् । प्रकृते चासुरागमनहेतुत्वेन भयावहतया ऋचा स्तुतिं निन्दित्वा साम्ना स्तुतिर्विधीयत इति वाऽवश्यानामसुराणामपि वशीकरणहेतुत्वेन स्तुत्वा ऋचा स्तुतिं विधाय अग्रे तच्छेषतया, साम्ना स्तुतिरवश्यं वशीकरणासमर्थत्वेन निन्द्यत इति वा एकवाक्यत्वसम्भवात् । न चात्र किञ्चिदन्यतरस्मिन्पक्षे विनिगमकमुपक्रमे दृश्यते । न च तत्र विनिगमकादर्शनमात्रेण वाक्यभेदमुपगम्योभयत्र विधिकल्पनं युक्तम् । असुरान्ववायन्नित्यस्य भयावहत्वेन निन्दापरत्वे, ऋचा स्तुतौ विध्ययोगादवश्यं वशीकरणसमर्थत्वेन स्तुतिपरत्वे तदसमर्थत्वेन निन्द्यमानायां साम्ना स्तुतौ विध्ययोगात् । न चान्ववायन्नित्यस्यावश्यवशीकरणसमर्थत्वेन स्तुतिपरत्वम् । नान्ववायन्नित्यस्य भयावहानागमनहेतुत्वेन स्तुतिपरत्वमिति द्विरूपार्थकल्पनमुचितम् । प्रथमवाक्ये यदभिप्रायेणासुरा अन्ववायन्नित्युक्तं, तन्निषेध एव असुरान्ववायन्नित्यस्य स्वारस्यात् । ततश्च वाक्यभेदस्य ऋचा साम्ना च स्तुत्योर्विकल्पस्योभयोरन्ववायन्नान्ववायन्नित्यनयोः भिन्नार्थकत्वस्य च परिहाराय किमन्यतरत्र विधौ विनिगमकमस्तीति स्वत एवोपक्रमस्य विनिगमकापेक्षायां 'साम्ना स्तुवीत' इति प्रत्यक्षविधेस्तद्विनिगमकत्वेनाश्रयणं, न त्वौपसंहारिकत्वेन प्राबल्यात् । ततश्च तदनुसारेण असुरान्ववायन्नित्यस्य निन्दापरत्वनिर्णयः । अत एव स्तुतौ सन्दिग्धं विनाऽवधार्यत इत्यस्येदमुदाहरणमिति प्राग्दर्शितमिति ।

**तन्न** । सामविधेरेवोपसंहृतत्वेन तद्बलादेव साम्ना स्तुतिविधित्वस्य तदितरभागस्य तत्स्तुतिपरत्वस्य च निर्णय इत्युपसंहारप्राबल्यस्य दुर्वारत्वात् । अन्यत्रोपसंहारत्वेनैव प्राबल्यस्य निर्णीततया

तस्यैवानुगतस्य प्रकृतेऽपि प्राबल्यहेतुत्वसम्भवे दैवादापतितप्रत्यक्षविधित्वस्य तत्राप्रयोजकत्वात् । किञ्चोपक्रमप्राबल्यवादिनस्तव वेदोपक्रमाधिकरणन्यायेनैव "यदृचा स्तुवत" इति परमोपक्रमे ऋक्-सङ्कीर्तनात्तदनुरोधेनैव 'साम्ना स्तुवीते'त्युपसंहारगतसामपदस्य ऋक्पदत्वमावश्यकमिति उपक्रमोप-संहारयोरेकवाक्यतानिर्वाहाय "यदृचा स्तुवते तदसुरा अन्वायन्" इत्यादेस्तत्स्तुतिपरत्वमेवाङ्गीकार्यं स्यात् इति । न ह्यस्य वेदोपक्रमाधिकरणविषयवाक्यात् विशेषं पश्याम इत्येषा दिक् ।

एवमुपसंहारप्राबल्ये सम्भाविताः क्षुद्रोपद्रवाः अनयैव दिशा निरसनीयाः । तस्मात् गुरुचरणोक्त-मुपसंहारप्राबल्यमेव निरवद्यम् । न तु वार्तिकोक्तरीत्या उपक्रमप्राबल्यमिति ।

एवमुत्तरमीमांसायापि "**तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्**" इत्यधि-करणे 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती'ति पञ्चाग्निविद्यागतवाक्ये श्रद्धाशब्दस्य इति तु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्युपसंहारानुरोधेनाप्सु लक्षणया "**प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः**" इति सूत्रेणोक्तत्वादुपसंहारप्राबल्ये तावदुदाहरणं द्रष्टव्यमिति ॥

**यत्त्वत्र**, "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति परमोपक्रमस्थप्रश्नोपपत्तिः । "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नप्रतिवचनैकरूप्योपपत्तिः । श्रद्धाकार्यसोमवृष्ट्यन्नरेतोरूपानन्तराहुतिद्रव्याणां जलप्रचुरत्वोप-पत्तिः । प्रत्ययविशेषरूपायाः श्रद्धायाः स्वोपादानादवच्छिद्य अन्यत्र प्रक्षेपस्यासम्भवेनाहुतिद्रव्यत्व-वर्णनायोगात् श्रद्धाशब्दस्य स्वत एव प्रक्षेपयोग्यद्रव्यपरत्वाकाङ्क्षायां वाक्यशेषसमर्पितास्वप्सु तात्प-र्योपपत्तिः । "श्रद्धा वा आप" इत्यादौ श्रद्धाशब्दस्य अप्सु दृष्टप्रयोगत्वेन तत्र लक्षणोपपत्तिश्च । 'श्रद्धां जुह्वति' इत्यत्र श्रद्धाशब्दस्याप्सु लक्षणाभ्युपगमे मूलं न तूपसंहारमात्रोपपत्तिरिति । **तन्न** । एवमप्युप-संहारोपपत्तेः । सन्दिग्धे तु वाक्यशेषादिति न्यायेनोपक्रमगतश्रद्धाशब्दस्यार्थनिर्णायकत्वानिवारणात् उपायस्योपायान्तरादूषकत्वात् ।

एवं "**अन्यथात्वं च शब्दादिति चेन्नाविशेषात्**" इत्यधिकरणे "हन्तासुरात् यज्ञ उद्गीथेनात्य-यामे"त्युद्गीथोपक्रमेण उद्गीथस्योपास्यत्वे प्रतीयमनेऽपि उपसंहारे 'तेभ्य एष प्राण उदगायत्' इत्यादा-वुद्गातृपरामर्शात् तदनुरोधेनोद्गातुरेव प्राणदृष्ट्योपास्यत्वं नोद्गीथस्येति परेण निर्णयः कृत इति परीत्या तदप्युपसंहारप्राबल्ये उदाहरणम् ॥

**यत्तु** अत्रोपक्रमप्रतीतोद्गीथापरित्यागेनैवोद्गीथगानकर्तृरूपे, उद्गातरि प्राणदृष्टिविधानाभ्युपगमादुप-क्रमस्य लक्षणादिकल्पनां विनोपसंहारसमर्पितविशेषावापमात्रं हि न तेन विरुध्यते । "**अधिकं तु प्रविष्टं**

अपि च जर्त्तिलगवीधुकानां 'अनाहुतिर्वे'त्यनाहुतित्वस्यावान्तरोपसंहारादुपसंहारबलेनैवोपक्रमे जर्त्तिलयवाग्वादिविधिनिरासोऽङ्गीकार्यः । किञ्चोपक्रमप्राबल्यवादिनस्तवैव परसामर्थ्यादिति सूत्रावयवस्य, परस्य पयोविधेरर्थवादत्वेन पूर्वेण जर्त्तिलयवाग्विधिनाऽन्वयसामर्थ्यादिति योजनापत्तिरिति दिक् ॥

**एवमर्थैकत्वाधिकरणे** 'यदृचाऽस्तुवत' इत्यस्याकर्तृविशेषणविधिशक्त्यप्रतिबन्धकयच्छब्दयुक्तस्याप्युपक्रमस्य 'एवं विद्वान् साम्ना स्तुवीते'ति कर्तृविशेषेण विधिशक्तिप्रतिबन्धकयच्छब्दयुक्तोपसंहारबलेन, स्वतःप्राप्तमृग्विधित्वं परित्यज्योपसंहारेण सामविधिशेषत्वस्वीकारात् तदप्युपसंहारप्राबल्ये उदाहरणं द्रष्टव्यम् ॥

यत्तु तत्रापि वाक्यभेदादिदोषपरिहारार्थमौपसंहारिकसामविधिशेषत्वस्वीकारः । तथाहि— उपक्रमे 'यदृचा स्तुवते तदसुरा नान्ववायन् यत्साम्ना स्तुवते तदसुरा नान्वावयन्नि'ति ऋचा स्तुतिः साम्ना स्तुतिश्चेत्युभयं श्रूयते, न तु ऋचा स्तुतिमात्रम् । विधिस्तूभयत्रापि न श्रूयते । तत्कल्पना चोभयत्रापि न सम्भवति । एकवाक्यत्वसम्भवे वाक्यभेदस्याऽन्याय्यत्वात् । प्रकृते चासुरागमनहेतुत्वेन भयावहतया ऋचा स्तुतिं निन्दित्वा साम्ना स्तुतिर्विधीयत इति वाऽवश्यानामसुराणामपि वशीकरणहेतुत्वेन स्तुत्वा ऋचा स्तुतिं विधाय अग्रे तच्छेषतया, साम्ना स्तुतिरवश्यं वशीकरणासमर्थत्वेन निन्द्यत इति वा एकवाक्यत्वसम्भवात् । न चात्र किञ्चिदन्यतरस्मिन्पक्षे विनिगमकमुपक्रमे दृश्यते । न च तत्र विनिगमकादर्शनमात्रेण वाक्यभेदमुपगम्योभयत्र विधिकल्पनं युक्तम् । असुरान्ववायन्नित्यस्य भयावहत्वेन निन्दापरत्वे, ऋचा स्तुतौ विध्ययोगादवश्यं वशीकरणसमर्थत्वेन स्तुतिपरत्वे तदसमर्थत्वेन निन्द्यमानायां साम्ना स्तुतौ विध्ययोगात् । न चान्ववायन्नित्यस्यावश्यवशीकरणसमर्थत्वेन स्तुतिपरत्वम् । नान्ववायन्नित्यस्य भयावहानागमनहेतुत्वेन स्तुतिपरत्वमिति द्विरूपार्थकल्पनमुचितम् । प्रथमवाक्ये यदभिप्रायेणासुरा अन्ववायन्नित्युक्तं, तन्निषेध एव असुरान्ववायन्नित्यस्य स्वारस्यात् । ततश्च वाक्यभेदस्य ऋचा साम्ना च स्तुत्योर्विकल्पस्योभयोरन्ववायन्नान्ववायन्नित्यनयोः भिन्नार्थकत्वस्य च परिहाराय किमन्यतरत्र विधौ विनिगमकमस्तीति स्वत एवोपक्रमस्य विनिगमकापेक्षायां 'साम्ना स्तुवीत' इति प्रत्यक्षविधेस्तद्विनिगमकत्वेनाश्रयणं, न त्वौपसंहारिकत्वेन प्राबल्यात् । ततश्च तदनुसारेण असुरान्ववायन्नित्यस्य निन्दापरत्वनिर्णयः । अत एव स्तुतौ सन्दिग्धं विनाऽवधार्यत इत्यस्येदमुदाहरणमिति प्राग्दर्शितमिति ।

**तन्न** । सामविधेरेवोपसंहृतत्वेन तद्बलादेव साम्ना स्तुतिविधित्वस्य तदितरभागस्य तत्स्तुतिपरत्वस्य च निर्णय इत्युपसंहारप्राबल्यस्य दुर्वारत्वात् । अन्यत्रोपसंहारत्वेनैव प्राबल्यस्य निर्णीततया

तस्यैवानुगतस्य प्रकृतेऽपि प्राबल्यहेतुत्वसम्भवे दैवादापतितप्रत्यक्षविधित्वस्य तत्राप्रयोजकत्वात् । किञ्चोपक्रमप्राबल्यवादिनस्तव वेदोपक्रमाधिकरणन्यायेनैव "यदृचा स्तुवत" इति परमोपक्रमे ऋक्-सङ्कीर्तनात्तदनुसारेणैव 'साम्ना स्तुवीते'त्युपसंहारगतसाम्पदस्य ऋक्पदत्वमावश्यकमिति उपक्रमोप-संहारयोरेकवाक्यतानिर्वाहाय "यदृचा स्तुवते तदसुरा अन्वायन्" इत्यादेस्तत्स्तुतिपरत्वमेवाङ्गीकार्यं स्यात् इति । न ह्यस्य वेदोपक्रमाधिकरणविषयवाक्यात् विशेषं पश्याम इत्येषा दिक् ।

एवमुपसंहारप्राबल्ये सम्भाविताः क्षुद्रोपद्रवाः अनयैव दिशा निरसनीयाः । तस्मात् गुरुचरणोक्त-मुपसंहारप्राबल्यमेव निरवद्यम् । न तु वार्तिकोक्तरीत्या उपक्रमप्राबल्यमिति ।

एवमुत्तरमीमांसायापि "**तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्**" इत्यधि-करणे 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती'ति पञ्चाग्निविद्यागतवाक्ये श्रद्धाशब्दस्य इति तु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्युपसंहारानुसारेणाप्सु लक्षणया "**प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः**" इति सूत्रेणोक्तत्वादुपसंहारप्राबल्ये तावदुदाहरणं द्रष्टव्यमिति ॥

**यत्त्वत्र,** "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति परमोपक्रमस्थप्रश्नोपपत्तिः । "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नप्रतिवचनैकरूप्योपपत्तिः । श्रद्धाकार्यसोमवृष्ट्यन्नरेतोरूपानन्तराहुतिद्रव्याणां जलप्रचुरत्वोप-पत्तिः । प्रत्ययविशेषरूपायाः श्रद्धायाः स्वोपादानादवच्छिद्य अन्यत्र प्रक्षेपस्यासम्भवेनाहुतिद्रव्यत्व-वर्णनायोगात् श्रद्धाशब्दस्य स्वत एव प्रक्षेपयोग्यद्रव्यपरत्वाकाङ्क्षायां वाक्यशेषसमर्पितास्वप्सु तात्प-र्योपपत्तिः । "श्रद्धा वा आप" इत्यादौ श्रद्धाशब्दस्य अप्सु दृष्टप्रयोगत्वेन तत्र लक्षणोपपत्तिश्च । 'श्रद्धां जुह्वति' इत्यत्र श्रद्धाशब्दस्याप्सु लक्षणाभ्युपगमे मूलं न तूपसंहारमात्रोपपत्तिरिति । **तन्न** । एवमप्युप-संहारोपपत्तेः । सन्दिग्धे तु वाक्यशेषादिति न्यायेनोपक्रमगतश्रद्धाशब्दस्यार्थनिर्णायकत्वानिवारणात् उपायस्योपायान्तरादूषकत्वात् ।

एवं "**अन्यथात्वं च शब्दादिति चेन्नाविशेषात्**" इत्यधिकरणे "हन्तासुरात् यज्ञ उद्गीथेनात्य-यामे"त्युद्गीथोपक्रमेण उद्गीथस्योपास्यत्वे प्रतीयमनेऽपि उपसंहारे 'तेभ्य एष प्राण उदगायत्' इत्यादा-वुद्गातृपरामर्शात् तदनुरोधेनोद्गातुरेव प्राणदृष्ट्योपास्यत्वं नोद्गीथस्येति परेण निर्णयः कृत इति परिरीत्या तदप्युपसंहारप्राबल्ये उदाहरणम् ॥

**यत्तु** अत्रोपक्रमप्रतीतोद्गीथापरित्यागेनैवोद्गीथगानकर्तृरूपे, उद्गातरि प्राणदृष्टिविधानाभ्युपगमादुप-क्रमस्य लक्षणादिकल्पनां विनोपसंहारसमर्पितविशेषावापमात्रं हि न तेन विरुध्यते । "**अधिकं तु प्रविष्टं**

**न तु तद्धानिः**" इति न्यायादिति । **तन्न** । उपक्रमप्रतीतोद्गीथस्वरूपमात्रापरित्यागेऽपि तदुपास्यत्वपरित्यागेनोपसंहारे तदुद्गातुरेवोपास्यत्वस्वीकारेण च विरोधात् ।

एवं "**न सङ्ख्योपसङ्ग्रहात्**" इत्यधिकरणे "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमिति" वाजसनेयकाम्नातमन्त्रगतस्य मनुष्येषु रूढस्य पञ्चजनशब्दस्य "**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्, अन्नस्यान्नं मनसो मनो विदुः**" इति **वाक्यशेषसङ्कीर्तितेषु प्राणादिषु** वृत्तिः "प्राणादयो वाक्यशेषात्" इति सूत्रेण निर्णीतेति । इदमपि **परीत्या अत्रोदाहरणं द्रष्टव्यम्** ॥

**यत्तु** "यस्मिन् पञ्च पञ्चजना" इति मन्त्रे पञ्च मनुष्याः परब्रह्मणि सन्तीत्येतावता परब्रह्मणः कस्यचिदुत्कर्षस्याप्रतीतेः पञ्चजनशब्दस्यान्यत्रैव क्वचिदर्थे तात्पर्यमिति सामान्यतोऽवगतौ तद्विशेषाकाङ्क्षायां वाक्यशेषसमर्पितप्राणादिपरिग्रहो न तु तदनुसारेण उपक्रमस्यान्यथानयनमिति । **तन्न** । ज्ञातुरुपासकस्य वा यथाविधि विज्ञानस्योपासनायोगसम्भवे ब्रह्मण्युत्कर्षप्रतीतेरनपेक्षितत्वात् । पञ्चजनशब्देन वाक्यशेषावगतप्राणादिपरिग्रहेऽपि "यस्मिन् प्राणादयः पञ्च सन्ती"ति वाक्यार्थलाभेऽपि ब्रह्मण्युत्कर्षप्रतीत्यभावतादवस्थ्याच्च ।

एवं **पारिप्लवाधिकरणे** "सर्वाण्युपाख्यानानि पारिप्लवे शंसन्ति" इति विध्यनुसारेण "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" युद्धेन च पौरुषेण च "मटचीहतेषु कुरुष्वाटक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे मद्राणक उवास" इत्यादिब्रह्मविद्याङ्गभूतोपाख्यानानामपि पारिप्लवार्थत्वे प्राप्ते "मनुर्वैवस्वतो राजे"त्यादिवाक्यशेषसङ्कीर्तिताख्यानविशेषेषु सर्वशब्दस्य सङ्कोचमभ्युपगम्य तेषामेव पारिप्लवार्थत्वं "**पारिप्लवार्थादिति चेन्नाविशेषितत्वात्**" इति सूत्रेण परैर्निर्णीतमिति तदप्युपसंहारप्राबल्ये उदाहरणं द्रष्टव्यम् ॥

**यत्तु** "सर्वाण्युपाख्यानानि पारिप्लवे शंसन्ति" इत्युपक्रमे सर्वशब्दस्यानन्तशाखागतसर्वाख्यानशंसप्रश्नस्याशक्यतया स्वत एव केनचिदवच्छेदेनाख्यानसामस्त्ये पर्यवसानाकाङ्क्षायां वाक्यशेषसङ्कीर्तिताख्यानसामस्त्ये पर्यवसानम् । नोपसंहारानुसारेणेत्येतदत एव **परास्तम्** । यथा कथञ्चिदुपक्रमगतसर्वशब्दार्थसङ्कोचस्योपसंहारगतत्वेन तत्प्राबल्यावारणात् ।

एवं **दहराधिकरणे** "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्यं, तं चेद् ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तत्र विद्यते यदन्वेष्टव्यं यद्वा विजिज्ञासितव्यमिति, स ब्रूयाद्यावान्वा

अयमाकाशः तावानेषोऽन्तर्हृदयाकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते'' इत्यादिवाक्ये ''तस्मिन्यदन्तरस्तदन्वेष्टव्य''मित्युपक्रमे तस्मिन्नित्यस्याव्यवहिताकाशपरत्वस्वारस्येनाकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वप्रतीतावपि, ''यावान्वा अयमाकाश'' इत्यादिवाक्यशेषे दहराकाशस्य बाह्याकाशसमानपरिमाणत्वादिमहिमवर्णनदर्शनात् । तस्यैवान्वेष्टव्यत्वं परब्रह्मरूपता चेत्युभयं ''**दहर उत्तरेभ्यः**'' इति सूत्रेण परैर्निर्णीतमिति तदप्युपसंहारप्राबल्ये उदाहरणम् ॥

**यत्त्वत्र** दहराकाशस्य परब्रह्मता वाक्यशेषगतश्रुतिलिङ्गभूयस्त्वेन निर्णीता । ''विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वमि''ति न्यायात् । अत एव सूत्रे ''उत्तरेभ्य'' इति बहुवचनेन लिङ्गभूयस्त्वं दर्शितम् । वाक्यशेषे च ''यावान् वा अयमाकाश'' इत्यादिना प्रतिपादितं प्रसिद्धाकाशसादृश्यं ''उभेऽस्मिन्द्यावापृथिवी''त्यारभ्य ''यच्चास्येहास्ति यच्च नास्ति सर्वं तस्मिन्समाहितमि''त्यनेन प्रतिपादितम् । द्यावापृथिव्यग्निवायुसूर्यचन्द्रविद्युन्नक्षत्रादिसकलजगदाधारत्वं ''एष आत्माऽपहतपाप्मा विजरो विमृत्युरि''त्यादिना प्रतिपादितम् । अपहतपाप्मत्वादिति तद्रूपब्रह्मलिङ्गानां भूयस्त्वं स्पष्टमेव ॥ ''एष आत्मा अथ य इहात्मानं'' इत्याद्यात्मश्रुतयश्च सन्ति । गुणसूत्रोक्ताश्च गत्यादयः, तथाच बहूनामेषामनुग्रहाय ''**त्यजेदेकं कुलस्यार्थे**'' इति न्यायेन आकाशश्रुतिरेवैकाऽन्यथा नीयते । बहुबाधस्यान्याय्यत्वात् इति ।

**तन्न** । ''**आत्मार्थे पृथिवीं त्यजेत्**'' इति ततोऽपि बलवता न्यायेन प्रधानविरोधिनां बहूनामपि गुणानां बाधस्यैव न्याय्यत्वात् । उपक्रमोपसंहारैकरूप्यावगतप्रधानवेदान्तप्रतिपाद्याद्वैतविरोधिनामपि तत्तत्पदसमर्पितप्रवृत्तिनिमित्तभूतानां धर्माणां बाधाभ्युपगमात् । सूक्ष्मखदिरादिप्रधानरूपद्रव्यविरोधिनां तक्षणादीनां बहूनामपि बाधस्य पूर्वतन्त्रे ''**द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात्**'' इत्यधिकरणे प्रतिपादनाच्च । ''**विप्रतिषिद्धधर्माणां समवाय**'' इति न्यायो यत्र तुल्यप्रधानानामेव प्रथमचरमभावमात्रं विशेषस्तत्रैव ॥ यत्र तु भूयसामेकस्य च गुणप्रधानभावादिविशेषः न तत्र भूयोऽनुग्रहादरः । यथोदाहृते **द्रव्यसंस्कारविरोधाधिकरणे** । ''तस्माद्वाक्यशेषप्रतिपादितानां लिङ्गानां भूयस्त्वेऽपि तेषां गुणत्वान्नोक्तन्यायेनाऽकाशशब्दार्थस्योपास्यब्रह्मत्वनिर्णयः । किन्तूपसंहारबलादेवेत्यकामेनापि तत्प्राबल्यं वाच्यमिति ।

ननु वेदान्तेष्वद्वैतवदिहोपासनापरे वाक्ये आकाशशब्दितस्य तात्पर्यतः प्रतिपाद्यत्वरूपप्राधान्यासिद्धेः । विधीयमानक्रियाकर्मत्वलक्षणस्य प्राधान्यस्य खदिरादिवद्ब्रह्मलिङ्गभूतेषु गुणेष्वप्यविशिष्टत्वात् ॥ ''अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु

**कामचारो भवती**''ति तेषामप्युपास्यत्वनिर्देशात् । तस्मात् ''दहराकाशो ब्रह्मे''ति **बह्वनुग्रहन्यायेन निर्णयो नोपसंहारप्राबल्येनेति** चेन्न । आकाशशब्दितस्योक्तप्राधान्याभावेऽपि 'यावान्वायमाकाश' इत्यादिवाक्यशेषोपात्ताकाशसादृश्यादिधर्मान् प्रति खदिरस्य तक्षणादिधर्मान् प्रतीव धर्मित्वरूप-प्राधान्यसत्त्वात् । लोकवेदसाधारणतया तस्यैव प्राधान्यप्रयोजकत्वात् । ''**दहर उत्तरेभ्य**'' इति सूत्रे लिङ्गानामुपसंहारगतत्वरूपोत्तरत्वेन निर्णायकत्वाश्रयणेन तथाप्युपसंहारनिर्णायकत्वानपायाच्च ।

किञ्च दहराकाशस्याप्युपास्यत्वे भवतु भूयसाम् इति न्यायेन निर्णयः । ''तस्मिन्यदन्तरिति'' दहराकाशस्यैव उपासना विधीयत इति कुतो वाऽवसीयते । 'यावान्वायमाकाश' इत्यादिना तन्महिम-वर्णनादिति चेन्न । ''पद्मकोशप्रतीकाशमि''त्यादिना दहरपुण्डरीकवर्णनवत्तदन्तर्वर्तिवस्तुप्रतिपत्त्यर्थ-त्वेनापि तत्सम्भवात् । दहराकाशान्तर्वर्ति ततोऽन्यदुपास्यं न सम्भवतीति चेन्न । तदनन्तरमेव ''उभे अस्मिन्द्यावापृथिवी''त्यादिना तदन्तर्वर्तिवस्तुप्रतिपादनेन तस्योपास्यत्वसम्भवात् । द्यावापृथिव्यादे-रुपास्यत्वे 'य इहात्मन' इत्यात्मोपास्तेः फलत्वोपसंहारो विरुध्यत इति चेत्तर्हि तन्मात्रानुसारेण 'तस्मिन्यदन्तरि'त्यादेः दहराकाशरूपपरमात्मोपासनाविधिपरत्वमिति सिद्धमुपसंहारप्राबल्यम् ।

न च 'तस्मिन्यदन्तरि'त्यादेः पुण्डरीकान्तर्वर्तिदहराकाशोपासनाविधिपरत्वं दहराकाशान्तर्वर्ति-वस्त्वन्तरोपासनाविधिपरत्वं वेति सन्दिग्धस्योपसंहारेण निर्णयमात्रं क्रियते, न तु बाध इति वाच्यम् । दहराकाशान्तर्वर्तिवस्त्वन्तरोपासनाविधिपरत्वस्यैव तत्स्वारस्येन अवधार्यमाणतया सन्देहाभावात् । तस्य पुण्डरीकान्तर्वर्तिदहराकाशोपासनाविधिपरत्वे हि तस्मिन्नित्यस्य व्यवहितपुण्डरीकपरामर्शित्वं स्यात् । तच्चाव्यवहितदहराकाशपरामर्शत्वसम्भवे न युक्तम् । दहराकाशस्य पुण्डरीकान्तर्वर्तित्वस्य ''दहरोऽस्मिन्नन्तराकाश'' इत्यनेनैव प्राप्ततया, 'तस्मिन्यदन्तरि'त्यस्य वैयर्थ्यं च स्यात् । तदपि तदप्राप्तदहराकाशान्तर्वर्तित्वपरत्वेन सार्थकत्वसम्भवे न युक्तम् । दहराकाशः पुण्डरीकान्तर्वर्तीत्यस्य निर्ज्ञाततया 'तस्मिन्यदन्तरि'त्युक्त्यनन्तरं 'किं तत्र विद्यत' इति प्रश्नोऽप्यसमञ्जसः स्यात् । तदसा-मञ्जस्यमपि 'तस्मिन्यदन्तरि'त्येतदंशं सम्मुग्धाकारेण दहराकाशान्तर्वर्तिनः कस्यचिदुपासनाविधिपरत्वे तस्य विशिष्यावगत्यर्थः 'किं तत्र विद्यत' इति प्रश्न इति सामञ्जस्यसम्भवे न युक्तम् । यत्पदस्य 'दहरोऽस्मिन्नन्तराकाश' इति पूर्वनिर्दिष्टनिर्ज्ञातपुंलिङ्गाकाशपरत्वे च, 'तदन्वेष्टव्यमि'ति नपुंसकलिङ्ग-मत्यन्तासङ्गतं स्यात् । तस्य प्रश्नान्तरं निर्देक्ष्यमाणाऽनिर्ज्ञातलिङ्गवस्त्वन्तरत्वेन कथञ्चित्साङ्गत्य-सम्भवेऽसङ्गतनपुंसकलिङ्गस्वीकारो न युक्तः ॥ एवमपि 'तस्मिन्यदन्तरि'त्यस्य दहराकाशोपासना-विधिपरत्वमुपगम्यते । तत्तदुपास्तिफलोपसंहारप्राबल्येनेत्येव पर्यवस्यति ।

एवमेव तस्मिन्यदन्तरित्यत्र यद्रामानुजीयं व्याख्यानम्— तस्मिन्नित्यव्यवहितो दहराकाशः परामृश्यते । 'यदन्तरि'ति चास्मिन् कामाः समाहिताः इति प्रश्नान्तरं निर्देक्ष्यमाणं कमनीयतया कामशब्दवाच्यं तदवगतं अपहतपाप्मत्वादिगुणजातमुच्यते । अतो न कश्चित्पूर्वोक्तदोषः । तदन्वेष्टव्यमिति तु तन्मात्रस्योपासना न विधीयते । "अथ य इह आत्मानम्" इत्यादिवाक्यशेषे आत्मनस्तद्गुणानां चोपासनायाः फलवत्त्वोपसंहारात् । किं तु तस्मिन्निति निर्दिष्टो दहराकाशः यदिति निर्दिष्टं तदन्तर्वर्ति गुणजातं चेत्युभयोपासना विधीयते । न च नपुंसकलिङ्गैकवचनान्तेन तच्छब्देन पुंलिङ्गनपुंसकलिङ्गनिर्दिष्टोभयपरामर्शानुपपत्तिः । "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति व्याकरणसूत्रेण नपुंसकानपुंसकयोः नपुंसकैकशेषस्यैकवद्भावस्य चानुशासनादुभयपरामर्शोपपत्तेरिति, तत्रापि नपुंसकैकवचनान्तस्य यत्पदस्य कामशब्दोक्तानेकपरामर्शत्वं तत्पदस्य तस्मिन् यदिति भिन्नविभक्तिनिर्दिष्टोभयपरामर्शित्वं तदेकशेषश्चेति त्रयमिदं क्लिष्टम् । स्वरसतोऽप्रतीयमानमप्युपसंहारप्राबल्येन कल्पनीयमित्युपसंहारप्राबल्यमवर्जनीयमेवेति ॥

ननु "यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्येतावता दहराकाशमहिमवर्णनस्य द्यावापृथिव्यादितदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वसम्भवेऽपि तेषां तदन्तर्गतत्वप्रतिपादनानन्तरमारब्धस्य "एष आत्मा अपहतपाप्मा", "अस्मिन्कामास्समाहिताः", "अथ य इह आत्मानं", "इमाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः", "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" इत्यादिदहराकाशमहिमप्रपञ्चनस्य तदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वासम्भवात् उपासनार्थत्वावश्यम्भावेन तेषामनन्यथासिद्धानां भूयसामनुग्रहानुरोधेन 'तस्मिन्यदन्तरि'त्यादेः दहराकाशस्य अन्वेष्टव्यतया तत्परत्वमवधार्यते । न तु तदुपास्तिफलोपसंहारमात्रानुरोधेन । न 'चैष आत्मेत्यादौ' एतदादिशब्दानां अव्यवहितद्यावापृथिव्यादिपरत्वं शङ्कार्हम् । पुंलिङ्गैकवचनान्तानां तेषां व्यवहितेऽप्याकाश एव स्वारस्यात् ॥ 'उभेऽस्मिन्द्यावापृथिवी'त्यादावाकाशे अवगतस्य समाधानाधारत्वस्य "अस्मिन्कामास्समाहिता" इत्यत्र प्रत्यभिज्ञानाच्च । तथाच भूयोऽनुग्रहानुरोधेन 'तस्मिन्यदन्तरि'त्यत्र तस्मिन्नित्यस्य व्यवहितपुण्डरीकपरामर्शित्वकल्पनं न दोषः । सर्वनाम्नामव्यवहितपरामर्शित्वासम्भवे व्यवहितपरामर्शित्वस्य 'तस्य द्वादशतं दक्षिणे'त्यादौ दृष्टत्वादिति चेन्न । एवमपि तदुपास्तिफलोपसंहारस्योपक्रमगततस्मिन्यदन्तरित्यादेः दहराकाशस्योपास्यत्वपरत्वनिर्णायकत्वात्यागेनोपसंहारप्राबल्यानपायात् । सूत्रकृताऽप्युत्तरेभ्य इत्युपसंहारप्राबल्यस्यैवोक्तेश्च । उपक्रमैकवाक्यतापन्नोत्तरवाक्यस्यैवोपसंहारत्वादिति ॥

वस्तुतस्तु दहराकाशो भूताकाश एव । 'तस्मिन्यदन्तस्तदन्वेष्टव्यमि'ति तु हृत्पुण्डरीकवेश्मान्तर्गतभूताकाशान्तर्गतब्रह्मण एवान्वेष्टव्यत्वपरम्, न दहराकाशस्य । एवञ्च न तत्पदस्य व्यवहितपरामर्शत्वे नपुंसकलिङ्गानुपपत्त्यादिदोषावकाशः । 'तं चेद्ब्रूयुरि'त्यादिः स ब्रूयादित्येतत्पर्यन्तः प्रश्नः । 'दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः' इत्यनुवादस्वारस्येनाक्षेप एव वा, अनुवादे हि हृत्पुण्डरीकवेश्मनः सूक्ष्मत्वं, तदन्तर्गताकाशस्य ततोऽपि सूक्ष्मत्वं हेतुतयोपात्तं प्रतीयते । तदाक्षेपपक्ष एवोपपद्येत । प्रश्नपक्षे तु 'किं तत्र विद्यत' इत्येतावत एव वक्तव्यत्वे न तथोक्तिवैयर्थ्यापत्तेः । स प्रश्नः आक्षेपो वा अन्वेष्टव्यब्रह्मस्वरूपविषयकः, तद्धर्मविषयको वेत्यादिकं [१]शिक्षायामस्माभिः प्रपञ्चितमिति तत्रैवानुसन्धेयम् । अस्मिन्नपि पक्षे 'तस्मिन्यदन्तरि'त्यादेर्वक्ष्यमाणगुणविशिष्टब्रह्मपरत्वं, तादृशब्रह्मस्वरूपप्रतिपादकोत्तरवाक्यसन्दर्भानुसारेणैवेति तत्राप्युपसंहारप्राबल्यात्याग इति दिक् ॥

एवमाकाशाधिकरणेऽप्युपसंहारप्राबल्यं द्रष्टव्यम् । तथाहि तत्र लिङ्गादाकाशश्रुतेः प्रसिद्धाकाशपरत्वत्यागेन ब्रह्मपरत्वनिर्णयो लिङ्गादिति तावदविवादम् । श्रुत्यपेक्षया स्वतो दुर्बलस्य लिङ्गस्य

"दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदापि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥"

इति न्यायेन बलवदुपष्टम्भकृतमेव बलवत्वं वाच्यम् । तत्र न तावदुपक्रमगतत्वं तस्य बलवत्वे हेतुः । उपक्रमप्राबल्यस्य निरस्तत्वात् । उपक्रमे ब्रह्मलिङ्गादर्शनाच्च । न च "अस्य लोकस्य का गतिराकाश इति होवाचे"त्यादिविषयवाक्ये प्रश्नस्थं सर्वलोकगतत्वमुपक्रमगतं लिङ्गमिति शङ्कनीयम् । "अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाचे"ति प्रस्तुतपृथिवीलोकगतिमात्रविषयत्वेन सर्वलोकगतिविषयत्वासिद्धेः । न चास्य प्रश्नस्य पृथिवीमात्रगतिविषयत्वे 'अद्भ्यः पृथिवी'ति श्रुत्यन्तरे तत्कारणत्वेन प्रसिद्धानामपाम् एव गतित्वेनोक्ततया "आकाश इति होवाचे"त्युत्तरासाङ्गत्यमिति वाच्यम् । पृथिवीं प्रत्यपां साक्षात्कारणत्वेऽपि परम्परया आकाशस्यापि कारणकोटिनिविष्टत्वेन सामगतिपरम्परायामन्नकारणत्वेन पूर्वं गृहीता अपो विहाय आकाशो गतित्वेनोक्त इति उपक्रमप्राबल्यवादे तदनुरोधेन तत्साङ्गत्यवर्णनोपपत्तेः । पूर्ववाक्ये "कासां नो गतिरिति । स्वर इति होवाच । स्वरस्य का गतिरिति । प्राण इति होवाच । प्राणस्य का गतिरिति । अन्नमिति होवाच । अन्नस्य का गतिरिति । आप इति होवाच । अपां का गतिरित्यसौ लोक इति होवाच" इति शालावत्यदाल्भ्यप्रश्नप्रतिवचनपरम्परायामन्नगतित्वेनापां गृहीतत्वात् ।

---

१. अद्वैतशिक्षायामित्यर्थः ।

नाप्युपसंहारगतत्वेऽपि भूयस्त्वं प्राबल्ये हेतुः। उपासनापरेऽपि वाक्ये गतिविषयकप्रश्नप्रतिवचन-दर्शनादवान्तरतात्पर्येणाकाशस्य सामगतिपरम्पराविश्रान्तिभूमित्वेन प्रतिपाद्यत्वावगत्या प्रधानत्वेन प्रधानविरोधिनां भूयसामप्यनादरणीयत्वात्। प्रधानश्च श्रुत्यन्तरानुसारेण सर्वकारणत्वसर्वलयस्थानत्व-सर्वतोज्यायस्त्वपरायणत्वपरोवरीयस्त्वानन्तत्वादिलिङ्गानामेव भूयसामप्यन्यथानयनस्योचितत्वात्। आकाशसूत्रे तल्लिङ्गादित्येकवचनस्वारस्येन भूयस्त्वानपेक्षेण केनचिदेव लिङ्गेन श्रुतेरन्यथानयनं विवक्षितमिति प्रतीतेश्च। न चोपसंहारगतत्वेऽपि सर्वकारणत्वादेः अनन्यथासिद्धत्वं प्राबल्ये हेतुः। 'आकाशाद्वायुरि'त्यादिश्रुत्यन्तरसिद्धभूताकाशगतवाय्वादीतरसर्वभूतकारणत्वाभिप्रायेण सर्वकारणत्व-व्यपदेशः। अग्रिमसन्दर्भोऽपि वाय्वादीतरभूतस्थानत्वतदपेक्षज्यायस्त्वादिविषय इति सर्वेषामन्यथा नेतुं शक्यत्वात्।

न च 'आकाशादेव समुत्पद्यन्त' इति सावधारणं कारणत्वं भूताकाशे न सम्भवति। तस्य तेजःप्रभृतिकारणत्वे वाय्वादिकारणान्तरसापेक्षत्वादिति शङ्कनीयम्। ब्रह्मणोऽपि "**वैषम्यनैर्घृण्ये न सापेक्षत्वात्**" इति न्यायेन जगत्सृष्टौ कालादृष्टादिसापेक्षत्वेन साम्यात्। कथञ्चिदवधारणसमर्थनस्य भूताकाशेऽपि सम्भवात्। तस्मात्प्रकारान्तरासम्भवात् उपसंहारगतत्वमेव लिङ्गस्य प्राबल्यहेतुरिति सिद्धमुपसंहारप्राबल्यापेक्षणम्।

ननूपक्रमावगततया उपक्रमोपसंहारैकरूप्यावगततया अन्यथासिद्धतया च प्रबलेनानन्तत्वलिङ्गेन तत्राकाशश्रुतेः ब्रह्मपरत्वनिर्णयः। तथाहि— उपक्रमे पृथिवीलोकं सामगतिपरम्पराविश्रान्तिभूमित्वेन समर्थितवतः शालावत्यस्य पक्षे "अन्तवद्वै किल ते शालावत्य सामे"ति जैवलिना अन्तवत्त्वदोष उद्भावितः। तेनोपक्रम एवैतदवगतं स्वयं जैबलिः अनन्तमन्यत् सामगतिपरम्परापर्यवसानभूमित्वेन विवक्षतीति तदेकरूपश्चोपसंहारः। "अस्य लोकस्य का गतिः" इति शालावत्यपृष्टेन जैवलिना आकाशं गतित्वेनोक्त्वा "स एषोऽनन्तः" तत्रानन्तत्वस्योपसंहृतत्वात्। अनन्यथासिद्धं च अनन्तत्वलिङ्गम्, अनन्तवत्येव भूताकाशे वाय्वादिस्वकार्यापेक्षया अधिककालावस्थायित्वाभिप्रायेण अनन्तत्वव्यपदेश इति **त्रिदशामरत्वन्यायेन** तदनन्यथानयने उपक्रमसङ्कीर्तितान्तवत्त्वदोषपरिहारालाभात्। ततश्च "यथा जामि वा एतद्यज्ञस्य क्रियते। यदन्वञ्चौ पुरोडाशौ उपांशु याजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय। प्रजापतिरुपांशु यष्टव्योऽजामित्वाय। अग्नीषोमावुपांशु यष्टव्यावजामित्वाय" इति वाक्ये उपक्रमे पुरोडाशयागद्वयनैरन्तर्येण जामितादोषसङ्कीर्तनेन तत्परिहाराय तयोर्मध्ये किञ्चि-द्विधित्सतीत्यवगमात्। अजामित्वायेति तद्दोषपरिहारोपसंहारैकरूप्यात्। विष्ण्वादिवाक्येषु याग-

विधिस्वीकारे तद्दोषपरिहाराभावाच्च । तद्दोषपरिहाराय अवान्तरवाक्य एव कल्प्योऽपि यागविधिः स्वीकर्तव्य इति यथा जामितादोषपरिहारानुसारेण विष्ण्वादिवाक्येषु प्रत्यक्षाया अपि विधिश्रुतेरन्यथानयनं तथाऽनन्तत्वानुसारेण आकाशश्रुतेरन्यथानयनमिति चेत् ।

न । 'विष्णुरुपांशु यष्टव्य' इत्यादौ जामितादोषोपक्रमतन्निर्हरणान्तैकवाक्यमध्यस्थानां विष्ण्वादिवाक्यानां विधित्वे प्रतीतैकवाक्यताभङ्गादेरेव बाधकत्वेन जामितादोषपरिहारस्याबाधकतया तस्य दृष्टान्तत्वासम्प्रतिपत्तेः । दार्ष्टान्तिके वा अनन्तत्वलिङ्गस्योपक्रमश्रुतत्वतदवगतत्वासिद्धेः । कथञ्चित्सिद्धौ वोपक्रमप्राबल्यस्य निरस्ततया तद्गतत्वस्य प्राबल्याहेतुत्वात् । "स एषोऽनन्त" इति तस्योपसंहार एव श्रुतत्वेन तद्गतत्वेनैव तत्प्राबल्यस्याङ्गीकर्तव्यत्वात् । स्वतो दुर्बलस्य लिङ्गस्य बलवदाश्रितत्वं विना बलवत्त्वायोगेन तद्बलवत्त्वसिद्ध्यर्थं तदाश्रयीभूतोपसंहारप्राबल्यस्याकामेनाप्यङ्गीकर्तव्यत्वेन वैषम्यात् । किञ्चानन्तत्वलिङ्गस्यानन्यथासिद्धत्वमेव न सम्भवति । श्रुत्यपेक्षया स्वतो दुर्बलस्य तस्य श्रुत्यनुसारेण नयनस्यैवोचितत्वेन श्रुतिप्राप्तभूताकाशस्य स्वकार्यभूतवाय्वाद्यपेक्षया अधिककालावस्थायित्वाभिप्रायेणानन्तत्वसम्भवात् । किञ्चास्तु अनन्यथासिद्धत्वं तस्य, तथाप्युपक्रमोपसंहारान्यतरप्राबल्येऽनुपयुक्तत्वेन प्रकृते अनन्यथासिद्धत्वेन लिङ्गप्राबल्यहेतुत्वस्यानुपन्यसनीयत्वात् ।

किञ्चोपसंहारस्थत्वेनैव लब्धप्राबल्यस्यासङ्कुचितसर्वभूतकारणत्वाद्यन्यतमब्रह्मलिङ्गस्यैवाकाशश्रुतिबाधकत्वम् । नोपक्रमस्थस्य कस्यचिदिति नोपक्रमप्राबल्यशङ्कावकाशः । अत एवोपक्रमोपसंहारैकरूप्यावगतत्वं लिङ्गप्राबल्ये हेतुरिति निरस्तम् । उपसंहार इवानन्तत्वलिङ्गस्योपक्रमे साक्षादवगत्यभावात् । "अन्तवत्किल ते साम" इति दूषणान्यथानुपपत्त्या दूषकाभिप्रायस्थत्वेन कथञ्चिदवगतिसम्भवेऽपि तन्नियमाभावेनाकाशश्रुत्यबाधकत्वात् । दोषोद्भावनदूष्यप्रश्नदूषकोत्तराणां क्रमिकश्रवणेन दूषकाभिप्रायस्थत्वेन तदवगतिनियमासम्भवः । आकाशश्रुतेस्तु प्रथमावगतलिङ्गानुरोधेनैव

'लब्धात्मनः प्रधानस्य बलीयस्त्वं गुणाद्भवेत् ।'
'विध्युद्देशस्त्वलब्धात्मा लब्धात्मानं न बाधते ॥"

इति न्यायेन बाध एव युक्त इति चेन्न । प्रथमावगतत्वमात्रेण प्राबल्यासिद्धेः । अन्यथा भ्रमोत्तरपरीक्षितबाधकज्ञानस्यापि पूर्वभ्रमानुरोधेन बाधाङ्गीकारप्रसङ्गात् ॥

ननु लिङ्गत्वाविशेषे उपसंहारावगतत्वमेव लिङ्गस्य प्राबल्यहेतुः कुत इति चेत् । न । अपच्छेदन्यायेन परत्वादिति ब्रूमः । परत्वस्य च प्राबल्यहेतुत्वं प्रपञ्चितमधस्तात् । एतेनैव सर्वलोकगतित्वलिङ्गस्याप्यनुपसञ्जातविरोधिप्रबलोपक्रमगतत्वेनैव प्राबल्यमिति परास्तम् । तस्यापि लिङ्गस्य 'सर्वाणि ह

वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इत्युपसंहारगतत्वेनैव प्राबल्योपगमात्। उक्तरीत्याऽतिप्रसक्तत्वेनानुपसञ्जातविरोधित्वस्योपक्रमप्राबल्यं प्रत्यहेतुत्वेन तद्गतत्वस्यापि लिङ्गप्राबल्यं प्रत्यप्रयोजकत्वात्। न ह्यत्रोपक्रमगतानि उक्तलिङ्गानि। येन सिद्धान्त्यभिमताकाशश्रुतिबाधप्रकारान्तरेण असम्भवात् तेषामुपक्रमगतत्वेनैव प्राबल्यमुपेयं स्यात्। किन्तु कानिचिदुपसंहारमात्रगतानि, कानिचिदुपसंहारगतानि सन्त्युपक्रमगतान्यपि। एवञ्चोभयविधलिङ्गानामपि अनुगतेनोपसंहारगतत्वेनैव प्राबल्याङ्गीकारो युक्तः॥

ननु भूयसां न्यायेनैव लिङ्गानामत्र श्रुतिबाधकत्वम्। न तूपसंहारावष्टम्भेनेति चेन्न। तावतापि तवोपक्रमस्थत्वलिङ्गप्राबल्यहेतुतासमर्थनस्य असिद्धेः। भूयस्त्वस्य लिङ्गप्राबल्यहेतुत्वाङ्गीकारे "**आकाशस्तल्लिङ्गात्**" इति सूत्रे एकवचनान्तलिङ्गशब्दानुपपत्तिश्च। अपि चाकाशस्य गतित्वेन प्रतिपाद्यतया प्रधानत्वात् "आत्मार्थे पृथिवीं त्यजेत्" इति न्यायविरोधेनात्र भूयसां न्यायस्याऽवतार एव न सम्भवति। न च तत्राऽऽकाशस्य गतित्वसम्बन्ध एव प्रतिपाद्यः न तस्य स्वरूपमिति वाच्यम्। गतित्वसम्बन्धस्यापि केवलस्य तत्र स्वरूपेणाप्रतिपाद्यत्वात्। न चाकाशे गतित्वसम्बन्धस्तद्वाक्यप्रतिपाद्यः। भङ्ग्यन्तरेणाऽऽकाशस्य गतित्वाधारतया प्रतिपाद्यत्वात्। योगेन प्राधान्याङ्गीकारप्रसङ्गात्। विनिगमनाविरहेण विशिष्टस्य प्रतिपाद्यत्वे प्रथमान्तपदोपस्थाप्यत्वेन च, विशेष्यतया विनिगमकमसत्त्वेनाकाशस्य प्रतिपाद्यतया प्राधान्यहानेः। सत्त्वलोकगतित्वादीनां धर्मतया तान् प्रत्याकाशस्य धर्मित्वलक्षणस्यापि प्राधान्यहानेश्च। तस्मादाकाशाधिकरणेऽप्याकाशश्रुतिबाधोपयुक्तलिङ्गप्राबल्यसिद्ध्यर्थमुपसंहारप्राबल्योपजीवनमावश्यकमिति।

**एतेनैव** आकाशाधिकरणेऽपि भूयसां न्यायेनैवाऽऽकाशश्रुतिबाधः। तथाहि— आकाशश्रुतीनामल्पत्वादुपक्रमोपसंहारगतलिङ्गानां सर्वभूतादिश्रुतीनाञ्चाऽऽकाशश्रुत्यपेक्षया बहुत्वात्। तत्राऽऽकाशश्रुतीनां प्रसिद्धभूताकाशपरत्वे भूतश्रुतेश्चाऽऽकाशसाधारणायाः सर्वश्रुतेश्च तत्साधारणसामस्त्यवाचकायाः, आकाशव्यतिरिक्ते सङ्कोचरूपो बाधः कल्पनीयः। 'स एषोऽनन्त' इत्यत्र निषेध्यसमर्पकस्यान्तशब्दस्याल्पकालावस्थायित्वे लक्षणा कल्पनीया। 'आकाशादेवे'त्यवधारणश्रुतेश्च अत्यन्तबाधः कल्पनीयः। अवधारणश्रुतिर्हि उपात्तसजातीयं व्यवच्छिनत्ति। तथाच, आकाशशब्दस्य मूलकारणब्रह्मपरत्वे भूतेषु तादृशकारणान्तराभावात् सङ्गतावधारणश्रुतिरवान्तरकारणरूपभूताकाशपरत्वे तु तेजःप्रभृतिषु वाय्वादीनामपि तादृशकारणानां सत्त्वेन तद्व्यवच्छेदासम्भवादसङ्गता अवधारणश्रुतिः स्यात्। एवमसाधारणधर्मभूततल्लिङ्गोपस्थापकवाक्यान्तर्गतपदश्रुतिबाधोऽप्यवर्जनीयः। एवञ्च भूयसीनां ब्रह्मलिङ्गश्रुतीनामनुग्रहाय अल्पाकाशश्रुतिरन्यथा नेयेति बहुश्रुत्यनुगृहीतत्वेनैव लिङ्गानां

प्राबल्यम् । **नोपसंहारस्थत्वेनेति निरस्तम्** । एतावता विविक्षितविवेकेन बहुश्रुतीनामेवाल्पाकाश-श्रुतिबाधकत्वपर्यवसानेन सौत्रलिङ्गबाधकत्वोक्त्यनुपपत्तेः । भूयसां न्यायेनैव आकाशश्रुतिबाधसम्भवेन उपक्रमगततया त्वदभिमतब्रह्मलिङ्गप्राबल्यासिद्धेश्च । उपायस्योपायान्तरादूषकत्वेनाऽसञ्जातविरोधि-प्रबलोपक्रमाश्रिततयापि लिङ्गप्राबल्याङ्गीकारे, तेनैव न्यायेनोपसंहारस्थतयापि लिङ्गस्य प्राबल्याहानेश्च । तस्मादाकाशाधिकरणेऽपि नोपक्रमप्राबल्योपजीवनशङ्कावकाशः । एवमन्यत्रापि तत्र तत्र सम्भावितानां शङ्काशूकानां निरसनमूहनीयम् । तस्मात्पूर्वमीमांसायामिवोत्तरमीमांसायामप्युपसंहारप्राबल्यमविगीतम् ॥

एवमुपसंहारात्सकृदुक्तिरूपादसकृदुक्तिरूपस्याभ्यासस्य प्राबल्यञ्च । बहुबाधस्यान्याय्यत्वात् । यथा "**आनन्दमयाधिकरणे**" 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति जीवप्रापकोपसंहारात् ब्रह्म-शब्दाभ्यासस्य । सम्मतञ्चैतन्मीमांसकानामपि भूयसामनुग्रहायाल्पबाधं वदताम् ॥

एवमसकृदावर्तस्याप्येकस्य सम्भवपदस्य वाक्यस्य वा सम्भवदनेकार्थस्य स्वारसिकप्राप्तार्थ-त्यागेनावैयर्थ्याया प्राप्तार्थपरताया आवश्यकत्वादभ्यासादप्यपूर्वतायाः प्राबल्यम् । यथा "**इतर-व्यपदेशाद्धिताकरणादिदोषप्रसक्तिः**" इत्यत्र, "जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः । जीवे तु लयमिच्छन्ति न जीवात्कारणं परम्" इति जीवशब्दाभ्यासात् ब्रह्मपरत्वे अपूर्वतायाः । तत्र हि प्रत्यक्षानुगृहीतश्रुत्या पूर्वपक्षः । उक्तञ्च ऐतरेयभाष्ये "तदस्य प्रथमं जन्म, तदस्य द्वितीयं जन्म, तदस्य तृतीयं जन्मे"ति जीवे प्रसिद्धजन्मशब्दाभ्यासेऽपि अपूर्वतया ब्रह्मप्रादुर्भावविषयत्वम् । सम्मतं चैत-न्मीमांसकानामपि । "दध्ना जुहोति, पयसा जुहोति, ऋजुमाघारयति सन्ततमाघारयती"त्यादौ जुहोती-त्यादेरावृत्तावप्यप्राप्तदध्नादावेव तात्पर्यम् । तथाऽप्राप्तार्थवादानामप्राप्तार्थविध्यनुसरणञ्च वदताम् ॥

एवं फलार्थत्वात् सर्वस्य, लोकेऽप्यप्राप्तेऽपि निष्फले तात्पर्यादर्शनात् "प्राप्तेऽपि सफले तात्पर्य-दर्शनाच्चापूर्वतातोऽपि फलस्य प्राबल्यम् । यथा '**असम्भवस्तु सतोऽनुपपत्तेः**" इत्यत्र "असद्वा इदमग्र आसीत् ततो वै सदजायते"त्यस्मात् सतो ब्रह्मणोऽसतः सकाशादुत्पत्तिरूपदोषप्रति-पादकादपूर्वतायुक्ताद्वाक्यादेव "सदेव सोम्येदमग्र आसीत्" इति ब्रह्मणोऽनुत्पत्तिप्रतिपादकस्य फलस्य वाक्यस्य । उक्तं हि **अनुव्याख्याने** "प्रीत्या मोक्षफलत्वाच्च तात्पर्यं नैव दूषणे" इति । उक्तञ्च **विष्णुतत्त्वनिर्णये** "घातयन्ति हि राजानो राजाहमिति वदन्तम् । ददति च सर्वमभिप्रेतं गुणोत्कर्षं वदतः" इत्यादिना अपूर्वतायुक्तादप्यभेदवाक्यात् सफलभेदवाक्यस्य प्राबल्यम् । सम्मतञ्चैतन्मीमांस-कानामपि । अङ्गप्रधानवाक्ययोरपूर्वतायां सत्यामपि निष्फलस्य सफलाङ्गत्वम् । तथा निष्फलाङ्गवाक्ये फलवत्प्रधानवाक्यानुसरणम् । तथा 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादेरिव "अग्निहोत्रं जुहुयात्

स्वर्गकाम" इत्यस्य उत्पत्त्यादिपरत्वसम्भवे "अग्निहोत्रं जुहोती"त्यस्य कर्मान्तरविधिपरत्वे अपूर्वतायां सम्भवत्यामपि फलाभावप्रसङ्गेनाऽधिकारवाक्यबोधितफलयुक्तकर्मोत्पत्तिमात्रपरत्वं च वदताम् ॥

एवं फलमात्रात्करणाकरणयोरिष्टानिष्टकथनादिरूपार्थवादस्य प्राबल्यम् । यथा "उत्क्रमिष्यत **एवंभावादित्यौडुलोमिः**" इत्यत्र काम्यकर्मसु श्रुतात्पश्वादिफलात् "कर्मणा ज्ञानमातनोति, ज्ञानेनामृतीभवति, अथामृतानि कर्माणि प्लवा ह्येतेऽदृढा यज्ञरूपा" इत्याद्यर्थवादस्य । न हि कर्मणां प्लवा इत्यादिना निन्दितकाम्यरूपेण कर्तव्यता । किन्तु "कर्मण्येवाधिकारस्ते मा फलेषु कदाचने"त्याद्यनुसारेण सर्वापेक्षा च यज्ञादिश्रुतेरिति न्यायेन 'कर्मणा ज्ञानमि'त्यादिना स्तुतज्ञानसाधनरूपेणैव । सम्मतश्चैतन्मीमांसकानामपि निर्वीतवाक्यस्यानुष्ठानसौकर्यवत्वेन सप्रयोजनवत्त्वेऽपि "देवलक्ष्ममेव तत्कुरुत" इति सार्थवादकोपवीतवाक्यानुसारं वदताम् ॥

एवं सार्थवादस्याप्यनुपपन्नेऽर्थे तात्पर्याऽदर्शनादुपपन्ने च तद्दर्शनादुपपत्तेः, सर्वमूलत्वादर्थवादादपि प्राबल्यम् । यथा '**पृथगुपदेशात्**' इत्यत्र सार्थवादाभेदश्रुतितः "भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः" इति सोपपत्तिकभेदश्रुतेः । उक्तञ्चैतदनुव्याख्याने—

**"युक्तो युक्तश्च यत्रार्थो आगमस्य प्रतीयते ।**
**स्यात्तत्र युक्त एवार्थः**" इति ।

सम्मतश्चैतन्मीमांसकानामपि 'न ह्यशङ्कनीयमर्थं विधिरपि विदधाति' इति वदताम् । न च तात्पर्यनिर्णयाय श्रुत्युक्तायाः तदनुक्ताया वा उपपत्तेरपेक्षायामनपेक्षितत्वरूपप्रामाण्यहानिः । किन्तु निर्णीते तस्मिन्नर्थे निर्णयाय तदपेक्षायाम् अन्यथातात्पर्यनिश्चयाय विचारमपेक्षमाणो वेदो प्रमाणं स्यात् । **हेतुवन्निगदाधिकरणे** 'तेन ह्यन्नं क्रियत' इत्यत्राप्रामाण्यापत्त्या हेतुत्यागो न तावद्भट्टरीत्या । नापि प्राभाकरविवरणरीत्या । तन्मते "तेन ह्यन्नं क्रियत" इत्यादेः प्रामाण्यमुपेत्य हेतुपरत्वमित्येव पूर्वपक्षकरणात् । सिद्धान्ते च दर्वीपिठरादिना आनुमानिकेन प्रत्यक्षस्य शूर्पस्य विकल्पप्रसङ्गात् । शूर्पस्य होमसाधनतायां, अन्नकरणत्वस्य हेतुत्वत्यागः । न त्वप्रामाण्यापत्तिभयात् । नापि निबन्धनरीत्या । "**न** ह्यत्रानुयाजा इज्यन्त" इत्यादौ यत्र यत्रानुयाजाभावस्तत्र तत्राष्टगृहीताभाव इति व्याप्तेः सत्त्वेन अनुयाजाभावस्याष्टगृहीताभावे हेतुत्वेनान्वयोपगमात् । **रक्तपटन्यायेन** च स्तुताविव हेतावप्याकाङ्क्षोत्थापनात् । हेतुत्वोपपादकव्याप्त्यादेश्च अलौकिकसुखस्वरूपस्वर्गोपपादकदेहादेरिव शब्देनैव आक्षेपात् । मानान्तरानपेक्षत्वोपपत्तेः । तद्रीत्यैव अयुक्तत्वात् । एतेन **अर्थवादाधिकरणे** निबन्धने विवरणे च "वायुर्वै क्षेपिष्ठा देवता" इत्याद्यर्थवादानां हेतुत्वेनान्वयादप्रामाण्ये प्राप्ते, सिद्धान्ते प्रामाण्याय

**हेतुत्वत्यागोक्तेः तद्विरोध इति निरस्तम्** । तात्पर्यनिर्णयाय हेतुत्वापेक्षायामप्रामाण्यानापत्तेः । अर्थ-निर्णयाय **तदपेक्षायाः** त्वन्मतेऽप्यभावात् । तस्मात् 'उपक्रमादिलिङ्गानामि'त्यनुव्याख्यानोक्तोपक्रमा-दितात्पर्यलिङ्गानां परबलीयस्त्वमेव युक्तम् । न तु मीमांसकादिरीत्या पूर्वपूर्वबलीयस्त्वमिति सिद्धम् । **एतच्चोपक्रमादिकं स्वार्थे शब्दविधया प्रमाणमपि तात्पर्ये लिङ्गविधयैव प्रमाणम्** । इदं एतत्परं अबाधे सति एतदुपक्रमत्वादित्यादिरूपेणापि तत्प्रवृत्तिसम्भवात् ।

**नन्वत्र** आवश्यकत्वात् बाधकसामान्याभावस्यैव तात्पर्यलिङ्गत्वसम्भवे, तदुपक्रमवत्त्वात् तद-भ्यासवत्त्वादित्यादिविशेष्यभागो व्यर्थः । न चेष्टापत्तिः । तथा सति उपक्रमादेस्तात्पर्यलिङ्गत्वा-सिद्धिप्रसङ्गात् । **समन्वयसूत्रभाष्ये** भगवत्पादैः

**"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णयः ॥"**

इति तेषां तत्त्वोपगमात् ।

न चैवं बाधकसामान्याभावस्य साधकसामान्याभावेन सत्प्रतिपक्षसम्भवेनाऽसाधकत्वमिति वाच्यम् । तदस्फुरणदशायामेव तस्य प्रवृत्तेः । अन्यथा विशेष्यभागदानेऽपि तेन सत्प्रतिपक्षा-वारणादिति चेन्न । तात्पर्यबाधकवदुपक्रमाद्यन्यत्वे सति उपक्रमत्वादित्यादेरेव लिङ्गत्वेन विवक्षणा-दिति । उपपत्तिस्तु स्वार्थ इव तात्पर्येऽपि लिङ्गरूपैव "भिन्नोऽचिन्त्यः परम" इति श्रुतिस्थ-परमशब्दार्थः जीवसङ्गाद्भिद्यते पूर्णत्वादिति पूर्णत्वरूपोपपत्तिः स्वार्थे भेद इवायं विमतो जीवसङ्ग-प्रतियोगिकः परमात्मानुयोगिको भेदः "भिन्नो जीवः परमो जीवसङ्गात्" इति श्रुतितात्पर्यगोचरः, एतच्छ्रुत्युक्तपूर्णत्वरूपोपपत्तिमत्त्वादिति तदुपपत्तेस्तात्पर्येऽपि लिङ्गतया प्रवृत्तेरिति ॥

**अत्रेयं व्यवस्था** । यत्रैकस्यार्थस्योपक्रममात्रे उपसंहारमात्रे वा तत्र तन्मात्रादुपक्रमादिमात्रेऽर्थे तात्पर्यम्, यत्र तूभयत्र तदविरोधलक्षणैकरूप्यादुभयानुगुणे तात्पर्यम् । अत एव **'प्रमाणलक्षणे'** भगवत्पादैः— 'उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्चे'ति तदैकरूप्यं पृथगुक्तम् । उपक्रमोपसंहारावित्यत्र प्रत्येकविवक्षया विशकलितोपक्रमोपसंहाराविव समुदायविवक्षया तदैकरूप्यमपि विवक्षितम् । 'भाष्यटीकायां' तदैकरूप्यस्य पृथगनुक्तिस्तु अन्यत्रोक्तत्वादित्यविरोधः ।

**ननूपक्रमादीनां** कथं लिङ्गविधया तात्पर्यनिश्चायकत्वम् ? तथात्वे 'प्रजापतिर्वरुणायाश्वमनयत्' इत्यादावुपक्रमात्, दातुरिष्टिरुपसंहारात् प्रतिग्रहीतुरिति अव्यवस्थाप्रसङ्गात् । 'यजमानः प्रस्तरः', 'सोमेन

यजेत', 'तत्त्वमसी'त्यादेः प्रस्तरयजमानाद्यभेदे सत्यामप्यपूर्वतायां तात्पर्यादर्शनात् । 'यो वेदाहं ब्रह्मास्मी'ति 'स इदं सर्वं भवती'त्यादेः फलवत्त्वेऽपि तात्पर्याभावात् । 'प्रातः प्रातरनृतं ते वदन्ति पुरो दया जुह्वति येऽग्निहोत्रमि'त्यादेर्निन्दार्थवादत्वेऽप्यकर्तव्यत्वपरत्वादर्शनादिति चेदुच्यते । नित्यनिर्दोषतया सामान्यतः सिद्धप्रमाणभावानामुपक्रमोपसंहारादिरूपवैदिकवाक्यानामविचारदशायां परस्परविरुद्धार्थत्वेन प्रतीतानामप्यनाप्तोक्तलौकिकवाक्यानामिव वस्तुतो न विरुद्धार्थत्वमित्यविवादम् । तथा प्रतीतमात्रञ्च विचारेण दूरीकर्तव्यमित्यप्यविवादम् । तच्चोपक्रमादिषु उत्तरोत्तरापेक्षया पूर्वपूर्वप्राबल्याश्रयणे वा पूर्वपूर्वापेक्षयोत्तरोत्तरप्राबल्याश्रयणे वेत्यन्यदेतत् । एवं चोपक्रमादीनां वह्न्यादीन् प्रति धूमादीनामिव तात्पर्यं प्रति व्याप्यत्वं तावद्दुर्वारम् । न चोक्तरीत्योपक्रमादिसत्त्वेऽपि तात्पर्याभावेन व्यभिचारे कथं तद्व्याप्यत्वमिति वाच्यम् । बाधकाभावस्योपक्रमादिविशेषणत्वेन विशिष्टस्य तस्य तात्पर्यव्याप्यत्वात् । तथाच व्याप्त्यनुसन्धानदशायामुपक्रमादीनां कथं स्वव्यापकीभूततात्पर्याव्यापकत्वम् । एवमेव तेषां तात्पर्यप्रमापकत्वेन व्याख्येयव्याख्यानरूपतथाविधलौकिकानां वाक्यानामप्युपक्रमादिभिस्तत्तदर्थे तात्पर्यप्रमित्यङ्गीकारो न स्यात् । न च लौकिके वक्त्रुपदेशेन वा तन्मूलव्याख्यानेन वा तत्तदर्थे तात्पर्यप्रमितिः, न तूपक्रमादिविशेषैरिति वाच्यम् । वक्तरि तात्पर्यमनुपदिश्य नष्टेऽपि लौकिकवाक्येषु तात्पर्यधीदर्शनात् । तन्मूलकव्याख्यानेऽप्युपक्रमादिविशेषैरेवान्ततस्तात्पर्यस्य निश्चेतव्यत्वाच्च । एवञ्च लौकिकवाक्येषु तात्पर्यप्रमापकत्वेनानुसर्तव्योपक्रमादिविशेषाः कथं वैदिकवाक्येषु नानुसर्तव्याः । अन्यथा क्लृप्तहानादिप्रसङ्गादिति । तदुक्तं चन्द्रिकायाम्—

"व्याख्यातृवचनानां यैर्लिङ्गैस्तात्पर्यनिर्णयः ।
उपक्रमाद्यैस्तैरेव श्रुतितात्पर्यनिर्णयः ॥" इति ।

ननु तात्पर्यस्य प्रकृतवाक्यार्थविषयस्य निश्चयः किं शाब्दबोधहेतुत्वेनाश्रीयते, किं वा एवमेव । न द्वितीयः । फलान्तराभावेन वाक्यार्थोपस्थित्यहेतुतात्पर्यनिश्चयाय उपक्रमादिलिङ्गानुसरणवैयर्थ्यात् । न प्रथमः । प्रकृतवाक्यार्थोपस्थितिं विना तादृशतात्पर्यस्यैव निश्चेतुमशक्यत्वात् । प्रकृतवाक्यार्थोपस्थितेश्च तात्पर्यनिश्चयसाध्यत्वेन तस्य च तादृशवाक्यार्थोपस्थित्यधीनत्वेनाऽन्योन्याश्रयात् । न च मानान्तरेण तदुपस्थितिः । वैदिकवाक्यार्थस्य मानान्तरागोचरत्वात् । अन्यथा वाक्ये पिष्टं पिष्टं स्यादिति चेन्न । प्राग्वाक्यप्रवृत्तेर्निश्चयरूपवाक्यार्थोपस्थितेरसम्भवेऽपि संशयरूपतदुपस्थितेः सम्भवेन ताम् आदायैव इदं पदं एतत्पदार्थसंसृष्टपरं तदुपक्रमादेः, गामानयेत्यादिवाक्ये आनयेत्यादिपदवत्, इत्यनुमानेन विनापि वाक्यार्थनिश्चयं प्रकृतवाक्यार्थतात्पर्यनिश्चयसम्भवेनोक्तदोषानवकाशादिति । ततश्चोप-

क्रमादीनां स्वार्थे शब्दविधया प्रमाणभूतानामपि लिङ्गविधया तात्पर्ये प्रामाण्यमव्याहतप्रसरमिति सिद्धम् ॥

एवञ्चोपक्रमादिषूक्तरीत्या पूर्वपूर्वपिक्षयोत्तरोत्तरप्राबल्यादुत्सर्गतस्तदनुसारेणैव वाक्यार्थतत्त्वनिर्णय इति स्थिते, बाधकाभावात् उपक्रमादिलिङ्गनिर्णीततात्पर्यकसकलवेदादिसदागमैः परममुख्यवृत्त्या श्रीहरिरेव प्रतिपाद्यत इति सिद्धम् । तथाच श्रुतिस्मृतयः 'सर्वे वेदा यत्रैकं भवन्ति', 'सर्वे वेदा यत्पद-मामनन्ति', 'अहं विजानामि विविक्तरूपः', 'न चास्ति वेत्ता मम चित्सदाहम्', 'वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्', 'वचसां वाच्यमुत्तमम्', 'वेदे रामायणे चैव पुराणे भारते तथा । आदा-वन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इत्याद्याः । तथा पारमर्षं सूत्रम् "**ॐ तत्तु समन्वयात् ॐ**" इति ॥

सुरेन्द्रमुनिशिष्येण विजयीन्द्राख्यभिक्षुणा ।
कृतोऽयमुपसंहारविजयः [1]श्रीनयासये ॥

ये नित्यं पदवाक्यमानसरणीसञ्चालनालङ्कृता
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
या चोत्कृष्टविनेयषट्पदततेस्सम्फुल्लमल्ली सदा
सैषा वाग्विजयीन्द्रसंयमिमणेर्ज्ञानार्थिभिः सेव्यताम् ॥

श्रीव्यासदेशिकेभ्यो नमः ॥

*श्रीमत्सुरेन्द्रपूज्यपादशिष्येण श्रीमद्विजयीन्द्रभिक्षुणा विरचितः*
*उपसंहारविजयः सम्पूर्णः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



१. विजयो मध्वतुष्टये – क.पा. (श्रीरवासये इति भाति ।)

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

पदवाक्यप्रमाणपारावारपारीणचतुःषष्टिकलाप्रवीणसर्वतन्त्रस्वतन्त्र-
श्रीमद्विजयीन्द्रतीर्थयतिवरेण्यविरचितः

# श्रीमन्मध्वसिद्धान्तसारोद्धारः

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमो विजयते ॥

## पदवाक्यप्रमाणपारावारपारीणचतुःषष्टिकलाप्रवीणसर्वतन्त्रस्वतन्त्र-श्रीमद्विजयीन्द्रतीर्थयतिवरेण्यविरचितः

# श्रीमन्मध्वसिद्धान्तसारोद्धारः

सत्यस्य जगतः स्रष्टा पाता हर्ता नृकेसरी ।
लक्ष्मीवान् विजयीन्द्रस्य मङ्गलानि दिशेत् सदा ॥ १ ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
क्रियते मध्वसिद्धान्तसारोद्धारः सतां मुदे ॥ २ ॥

ननु कथं जगतः सत्यत्वम् । तत्र मानाभावात् । प्रत्युत नेह नानेत्यादिश्रुत्या 'तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा' इत्यादिस्मृत्या दृश्यत्वाद्यनुमानेन च तस्य मिथ्यात्वसिद्धेरिति चेत् । उच्यते । उत्पत्तिज्ञप्त्योः ज्ञानप्रामाण्यं स्वत इति तावत् उभयसम्प्रतिपन्नम् । बाधके सत्येव तत्त्यागो नान्यथेत्यपि । एवमप्रामाण्यं परत इत्यपि । तत्र ज्ञानस्य प्रामाण्यं नाम यत्र विशेष्ये विशेषणस्य सम्बन्धो विद्यते तत्र विशेष्ये तस्य विशेषणस्य तत्सम्बन्धावगाहित्वरूपम्, नान्यत् । तन्निश्चयादेव निष्कम्पव्यापाराच्च । ज्ञानस्य अप्रामाण्यं नाम यत्र विशेष्ये यस्य विशेषणस्य यत्सम्बन्धो न विद्यते तत्र विशेष्ये तस्य विशेषणस्य तत्सम्बन्धावगाहित्वम् । [1]तच्छरीरप्रविष्टं विशेषणसम्बन्धस्य विद्यमानत्वं प्रामाण्ये योग्यार्थेषु नियमेन सजातीय-विजातीयसंवादाभ्यां सजातीयविजातीयविसंवादा-भावाभ्यां च सुज्ञानम् । एवमप्रामाण्ये विशेषणसम्बन्धस्य विशेष्ये अविद्यमानत्वमपि नियमेन सजातीयविजातीयविसंवादाभावाभ्यां (सजातीयविजातीयसंवादाभावाभ्यां च) सुज्ञानमिति वेदितव्यम् । ज्ञानेषु संवादिविसंवादिप्रवृत्तिजनकतावच्छेदकत्वेन प्रामाण्याप्रामाण्यशब्दितावुक्तरूपविशेषावेव

१. तत्र प्रामाण्यशरीरप्रविष्टं

अवश्यमुपेयौ । अन्यथा तादृशप्रवृत्त्योः आकस्मिकतापत्तेः । ज्ञानकारणेषु तु इदं प्रमाणम् इदं तदाभास इति व्यवस्था च न स्यात् । न चैवम् । एतद्व्याख्यायाः सर्वसम्प्रतिपन्नत्वात् ।

ननु प्रामाण्यशरीरप्रविष्टं विशेषणविशेष्यसम्बन्धस्य विद्यमानत्वापरपर्यायं सर्वमेव दुर्वचमिति चेत् । किं ततः ? द्रव्यत्वपृथिवीत्वघटत्वादेर्निर्वचनाभावेऽपि अखण्डधर्मत्ववत् भावाभावपदार्थमात्रसाधारणस्य अस्तीतिप्रतीतिव्यवहारालम्बनत्वेन सर्वानुभवसिद्धस्य निर्वचनाभावेऽपि अखण्डधर्मत्वोपपत्तेः । इक्षुक्षीरमाधुर्यवत्तस्य निर्वचनाभावेऽपि तस्य सत्यत्वोपपत्तेश्च । निर्वचनाभावस्य पुरुषाशक्तिप्रयुक्तत्वेन विषयमिथ्यात्वानापादकत्वात् । अन्यथा स्वक्रियाव्याघातात् । न हि अर्थमिथ्यात्वं निश्चिन्वन् तत्साध्यतया किञ्चित् स्वयमेव परिकल्प्य तदर्थितया तत्र निष्कम्पं प्रवर्तमानो दृष्टचरः । न हि यन्निर्वक्तुं न शक्यते तन्मिथ्येति वा (न ?) सत्यमिति वा नियमोऽस्ति । इक्षुक्षीरमाधुर्यादावेव व्यभिचारात् । न हि तन्माधुर्यादौ निर्वचनाभावापराधेन मिथ्येतिप्रतीतिव्यवहारौ कस्यापि स्तः । अन्यथा निर्वचनाभावेन जगत् ब्रह्म वा निस्स्वरूपं स्यादिति वाचाटवचसोऽवसरप्रसङ्गात् । जगत्कारणत्वादिधर्मखण्डनमुखेन पराभिमतब्रह्मणोऽपि दुर्वचत्वेन मिथ्यात्वापत्तेश्च । धर्मखण्डनमुखेन विना धर्मिस्वरूपमात्रखण्डनस्य दुश्शकत्वेन तत्खण्डनस्यैव धर्मिस्वरूपखण्डनरूपतया उपगन्तव्यत्वात् । पराभिमतब्रह्मणोऽपि धर्मखण्डनमुखेन खण्डनीयत्वेऽपि सद्रूपत्ववत्, जगतोऽपि सत्यत्वादिधर्मखण्डनमुखेन खण्डनसम्भवेऽपि सद्रूपत्वोपपत्तेश्च । तदनिर्वचनमात्रेण तत्प्रयोज्यव्यवहारेण स्वसाक्षिसिद्धवैचित्र्याक्षतेश्च । यत्र विशेषणसम्बन्धः प्रतिपन्नः तत्र विद्यमानो योऽत्यन्ताभावः, तदप्रतियोगित्वमेव तस्य विद्यमानत्वमित्यपि सुवचत्वाच्च । शुक्तिरूप्यादेः बाध्यत्वेन सद्विविक्तत्वरूपमिथ्यात्वमङ्गीकुर्वतापि यत्र यद्रूपं प्रतिपन्नं तत्र विद्यमानो योऽत्यन्ताभावः तत्प्रतियोगित्वमेव तस्य मिथ्यात्वमिति तद्बाध्यत्वस्य तत्रात्यन्ताभावविद्यमानत्वघटितमूर्तित्वेन वक्तव्यतया तत्रात्यन्ताभावस्य विद्यमानत्वमेव किमिति पृच्छन्तं प्रति तदाधारत्वेन प्रतीतत्वमात्रं तदित्युक्तौ तादृशबाध्यत्वस्य तत्स्वरूपे ब्रह्मण्यतिप्रसक्ततया तदाधारत्वेन प्रमितत्वं तस्य तदित्येवोक्तौ प्रमितत्वस्य विशेष्ये विशेषणसम्बन्धस्य विद्यमानत्वघटितमूर्तितया आत्माश्रयप्रसङ्गेन तदन्यस्यैव अखण्डस्य तस्य प्रवृत्त्यादिव्यवहारवैचित्र्योपपादकत्वेन अवश्यमुपेयत्वाच्च । अन्यथा विद्यमाने एवार्थे जायमानं ज्ञानं प्रमितिः, न त्वन्यथेति ज्ञानगतप्रमितित्वस्य विषयविद्यमानत्वप्रयोज्यत्वं न स्यात् । तस्मात् भावमात्रे भावत्ववत् तद्विशेषे द्रव्यत्वपृथिवीत्वादिवत्, अभावमात्रे अभावत्ववत्, तद्विशेषे प्रागभावत्वप्रध्वंसत्वादिवच्च भावाभावरूपपदार्थमात्रे विद्यमानत्वापरनामकं सत्त्वमखण्डोपाधिरूपमेव । न च तत्र मानाभावः । इदं विद्यते इदं च विद्यते, इदमस्ति, इदं चास्ति, इदं सत् इदं च सत् इत्याद्यनुगतप्रतीति-

व्यवहारयोः सत्त्वात् । न च प्रामाणिकत्वरूपोपाधिनैव तन्निर्वाह इति वाच्यम् । तस्य प्रमाणप्रवृत्तिनियामकत्वे च आत्माश्रयप्रसङ्गः । तदन्यस्य तथात्वे अन्योन्याश्रयादिप्रसङ्गश्च । प्रामाणिकत्वस्य प्रमाकरणत्वसाधकतमत्वादिरूपयोग्यायोग्यरूपानेकपदार्थघटितमूर्तित्वेन उपनायकप्रमाणावतारनैयत्याभावेन घटः सन् घटोऽस्ति इत्यादिप्रत्यक्षप्रतीतेः झटित्यसम्भवेन तन्निर्वाहाय पृथिवीत्वघटत्वादिवत् सत्त्वस्य अखण्डधर्मत्वस्यावश्यमुपेयत्वाच्च । धर्मान्तररूपेणैव तत्प्रतीतिव्यवहारनिर्वाहात्, तदतिरिक्ताखण्डधर्मानङ्गीकारे द्रव्यत्वपृथिवीत्वघटत्वाद्यखण्डधर्माणामनङ्गीकारप्रसङ्गः । द्रव्यत्वादिसमनियतैर्गुणाश्रयत्वोपादानत्वगन्धवत्त्वकम्बुग्रीवादिमत्त्वादिधर्मैरेव सखण्डोपाधिरूपैः तत्र तत्रानतिप्रसक्तप्रतीतिव्यवहारयोरुपपत्तेरिति सुवचत्वाच्च । न चैवमपि सत्त्वस्यात्माश्रयेण सत्त्वरहितत्वेनासत्त्वप्रसङ्गः । तत्रापि सत्त्वान्तराङ्गीकारे तत्राप्येवमिति अनवस्थाप्रसङ्ग इति वाच्यम् । प्रमेयत्वे प्रमेयत्वमितिवत् अभिधेयत्वे अभिधेयत्वमितिवत्, दृश्यत्वं दृश्यमितिवच्च, सत्त्वमस्ति सत्त्वं सत् इत्यबाधितप्रतीत्या सत्त्वस्यापि स्वाश्रयत्वोपगमात् । सिद्धविषयत्वेन आत्माश्रयस्य अदोषत्वात् । अत एव बीजाङ्कुरयोः कार्यकारणभावेऽन्योन्याश्रयादिरदोष इति न्यायविदामभ्युपगमः ।

एतेन शुक्तिरूप्यादेः अन्यत्र सत्त्वे मानाभावात् क्वचित् शुक्त्यादिरूपोपाधौ प्रतिपत्तिसत्त्वेऽपि विशेषदर्शनानन्तरं बाधदर्शनेन तत्रापि तस्य असत्त्वनिर्णयात्, सार्वत्रिकनिषेधप्रतियोगित्वरूपेण असत्त्वस्यैव सिद्धेः, जगतश्च ब्रह्मवत् तथाविधनिषेधाप्रतियोगित्वेन सिद्धतया तदेव सत्प्रतीतिव्यवहारयोः आलम्बनमस्तु । ब्रह्मणि तस्यैव तथाविधप्रतीतिव्यवहारालम्बनताया क्लृप्तत्वात् । क्लृप्तेन तेनैव जगत्यपि सत्त्वप्रतीतिव्यवहारोपपत्तौ अखण्डोपाधिरूपसत्त्वाङ्गीकारेण तदुभयोपपादने गौरवात्, क्लृप्तहानादिदोषप्रसङ्गादिति निरस्तम् । अस्यापि प्रतियोगिदिशि योग्यायोग्यानन्तपदार्थप्रवेशेन तत्प्रतीतिविलम्बेन प्रतीतिविलम्बानपायात् । घटादियोग्यपदार्थे इन्द्रियसम्प्रयोगसमनन्तरमेव अविलम्बेन घटः सन् घटोऽस्ति इत्यादितत्सत्त्वप्रतीतेरानुभविकत्वेन तन्निर्वाहाय सत्त्वाखण्डधर्मत्वस्यावश्यमुपेयत्वात् । अन्यथा तदंशे नियमेन सत्त्वप्रतीतिकाले सर्वदापि उपनायकप्रमाणावतारकल्पनाप्रसङ्गात् ।

न चैवमनुगतप्रतीतिव्यवहारौ यत्र यत्र वर्तेते तत्र सर्वत्रापि तन्निर्वाहाय सत्यपि सखण्डोपाधिरूपधर्मान्तरे अखण्डधर्मस्यापि स्वीकारप्रसङ्गः । सखण्डोपाधेः अनेकपदार्थघटितमूर्तित्वेन तदपेक्षया अखण्डोपाधेः लघुशरीरत्वात् । दूरे गत्वा परम्परासम्बधात् अखण्डोपाधेरेव सखण्डोपाधित्वात् । साक्षात्सम्बन्धबाधके सत्येव परम्परासम्बन्धस्योपेयत्वात् । अत एव परम्परासम्बन्धसम्बद्धजातिरेव अखण्डोपाधिरिति वदन्तीति वाच्यम् ।

**तथाविधप्रतीतेः व्यवहारस्य** च अविलम्बेन उदये प्रमाणसद्भावेन इष्टापत्तेः । तदभावे च **विलम्बितप्रतीतिव्यवहारयोः** विलम्बितोपस्थितिकसखण्डोपाधिनैव उपपादनीयत्वात् । **प्रयोजक-तथात्वकल्पनयोः** प्रयोज्यतथात्वसिद्ध्यधीनत्वात् ।

**एतेन प्रामाण्यस्वतस्त्वपक्षे** घटज्ञानप्रमात्वपटज्ञानप्रमात्वादेः इदं घटज्ञानं प्रमेत्याद्यनुगताविल-म्बितप्रतीतिव्यवहारयोरानुभाविकत्वेऽन्यत्र प्रमात्वस्य घटत्ववति घटत्वप्रकारकत्वादिरूपोपाध्यन्तरस्य सतोऽपि **अखण्डस्य भावेन प्रमात्वरूपस्य** स्वीकारप्रसङ्ग इति निरस्तम् । **इष्टापादनात्** । न च प्रमा-त्वभ्रमत्वयोः अखण्डधर्मत्वे योग्यव्यक्तिवृत्तित्वेन स्वतस्त्वपरतस्त्वाभ्यां विवादाभावप्रसङ्गः । सर्वत्र **प्रमात्वभ्रमत्वयोः** ज्ञानत्वादिवत् निश्चयसम्भवेन निष्कम्पप्रवृत्तिनिवृत्त्योरविलम्बापत्तेश्चेति वाच्यम् । **प्रमात्वादीनामखण्डत्वेन** व्यक्तिग्रहणयोग्यतान्तर्भूतयोग्यताकत्वेऽपि रजतत्वादाविव तत्र दोषात् **अज्ञानसंशयविपर्ययसम्भवेन** तन्निश्चयस्य असार्वत्रिकत्वेन प्रवृत्तिनिवृत्त्योः क्वचिद् विलम्बोपपत्तेः । तद्वति तत्प्रकारकत्वरूपोपाधीनां तद्व्यञ्जकत्वेन तन्निश्चयविलम्बेन तन्निश्चयविलम्बोपपत्तेश्च । अत एव ब्राह्मणत्वादिजातेः विशिष्टमातापितृजन्यत्वादिव्यञ्जकधर्मविलम्बात् निश्चयविलम्बोऽनुभवसिद्धः । स्वतस्त्वपरतस्त्वाभ्यां विवादविषयत्वस्य प्रमात्वादिशब्दिताखण्डधर्मव्यञ्जकत्वेन स्वीकृतेषु तद्वति तत्प्रकारकत्वादिधर्मेषूपगमेन तद्विवादाभावानापत्तेश्च । किञ्च अत्र न भ्रमत्वादिप्रतिबन्धी युक्ता । प्रमात्वस्य स्वरूपप्रकारविषयमात्रघटितमूर्तित्वेन तदुपनायकस्य व्यवसायस्य अनुव्यवसायकाले नियमेन सत्त्वेन तस्यैव विलम्बेन प्रामाण्योपस्थितिरूपानुव्यवसायनिर्वाहकत्वेन तेनैव निर्व्यूढस्य अनुव्यवसायस्य उक्तसखण्डोपाध्यतिरिक्तघटज्ञानप्रमात्वादिरूपाखण्डोपाध्यनपेक्षत्वेन वैषम्यात् । तस्मात् यत्र यत्रानन्यथासिद्धाविलम्बितानुगतप्रतीतिव्यवहारौ अनुभवसिद्धौ स्तः तत्र सर्वत्रापि तदालम्बनत्वेन अखण्डधर्मोऽकामेनापि स्वीकार्यः । तत्समनियतसखण्डधर्मोऽपि प्रमाणसिद्धत्वात् दुरपह्नव इति न तेन तस्यान्यथासिद्धिरिति न किञ्चिदनुपपन्नम् ।

केचित्तु घटोऽस्ति, पटोऽस्ति, घटः सन् पटः सन्, घटो विद्यते पटो विद्यते इति प्रत्यक्षादि-प्रमाणसिद्धस्य घटादेः लट्प्रत्ययान्तशब्देन व्यवहारात् लटश्च वर्तमाने लट् इति पाणिनिस्मृत्यनुसारेण वर्तमानकालार्थत्वात्, तत्तत्पदार्थाधारकालवृत्तिकालत्वातिरिक्तस्य काले वर्तमानत्वस्य अनिरूपणात्, पदार्थानां तादृशकालसम्बन्धित्वमेव सत्त्वम् । न चैवं सत्यविलम्बेन सत्त्वप्रतीत्युपपादनासम्भवः, कालस्यायोग्यत्वेन उपनायकप्रमाणावतारनियमापातात् इति वाच्यम् । कालस्य बहिरिन्द्रियविषय-त्वोपगमेन अयोग्यत्वासिद्धेः । गुणकर्मादिप्रत्यक्षेषु अनुगतप्रयोजकासम्भवात् तत्तद्गुणकर्मत्वादिकं यथा प्रयोजकम्, एवं द्रव्यमात्रप्रत्यक्षे अनुगतैकप्रयोजकासम्भवात् तत्तद्द्रव्यत्वमेव प्रयोजकमुपेयम् ।

अत एवात्मा प्रत्यक्षः, तत्प्रत्यक्षत्वे आत्मत्वस्य प्रयोजकत्वात् । तथाच कालप्रत्यक्षत्वे वर्तमानकालत्वस्य लाघवात्, कालत्वं चाप्रयोजकमिति न काचिदनुपपत्तिः । न च द्रव्यमात्रप्रत्यक्षे गुणकर्मादिप्रत्यक्षे चानुगतैकप्रयोजकासम्भवात् तत्राननुगतमेव तत्तद्गुणकर्मत्वादिकं प्रयोजकमस्तु, एवमन्तर्बहिर्द्रव्यप्रत्यक्षमात्रेऽनुगतप्रयोजकासम्भवात् अननुगतमात्मत्वादिकमेव प्रयोजकमस्तु, बहिर्द्रव्यप्रत्यक्षमात्रे चानुगतस्य महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य प्रयोजकस्य सम्भवात्, सति त्यागायोगात् । तस्य बहिर्द्रव्यकालेऽभावात् घटादिवत् कथं तस्य प्रत्यक्षत्वमिति वाच्यम् । बहिर्द्रव्यप्रत्यक्षत्वस्य नीलघटत्वादिवत् अर्थवशसम्पन्नत्वेन कार्यतानवच्छेदकतया अनुगतकारणानपेक्षणात् । नीलसामग्रीघटसामग्रीभ्यां मिलिताभ्यां जायमानो घटो यथा अर्थवशसम्पन्नः, एवं प्रत्यक्षसामग्रीबहिर्देशद्रव्योभयसम्बन्धसामग्रीभ्यां मिलिताभ्यां जायमानमपि बहिर्द्रव्यप्रत्यक्षमर्थवशसम्पन्नमेव । एवञ्च कथं तन्निर्वाहाय अनुगतकारणापेक्षा । तस्मात् बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति द्रव्यस्य न महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वेन कारणत्वमुपेयम् । तथाच यथा आत्मप्रत्यक्षे तत्तदात्मत्वं प्रयोजकम्, एवं कालप्रत्यक्षे वर्तमानकालत्वं प्रयोजकमिति न किञ्चिदनुपपन्नम् । यथाकार्यं सामग्री कल्प्या । कार्यं चेह घटोऽस्तीति घटाद्यस्तिताग्राहकं प्रत्यक्षमविलम्बेन जायमानमनुभवसिद्धम् । तदस्तिता च तस्य स्वाधारकालसम्बन्ध एवेति तन्निर्वाहाय सामग्र्यां कल्प्यायां कालातिरिक्तबहिर्द्रव्यप्रत्यक्षत्वमेव कार्यतावच्छेदकम्, तत्कारणतावच्छेदकं च बहिर्द्रव्यत्वसमानाधिकरणोद्भूतरूपवत्त्वमित्येव कल्पयितुमुचितम् । सामग्रीकल्पनस्य प्रमाणप्रतिपन्नकार्यनिर्वाहार्थत्वात् । अन्यथा बहिर्द्रव्यप्रत्यक्षमात्रे महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं (कारणं स्यात्) (तस्मात्) । सिद्धकार्यानुरोधेनैव सामग्रीकल्पनम् । न तु स्वकल्पितसामग्र्यनुरोधेन कार्यापादनमित्येव त्वदुक्तिपर्यवसानात् । तस्मात् कालस्य घटादिवत् बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं अप्रत्यूहमिति स्थितम् ।

उक्तप्रयोजकाभावात् कालस्य बहिरिन्द्रियायोग्यत्वमितिपक्षेऽपि आकाशवत् तस्य साक्षिसिद्धत्वात्, साक्षिणश्च स्वरूपज्ञानत्वेन सदा सत्त्वेन उपनायकावतारविलम्बाभावात् । साक्ष्युपनीत एव कालो घटादिप्रत्यक्षेण भासते इति न काचिदनुपपत्तिः । अत एव घटोऽयम्, पटोऽयमित्यादिप्रत्यक्षोदये तत्र इदानीं घटोऽस्ति न वेति घटोऽस्ति नास्त्येवेति वा तत्तद्विशेष्यवर्तमानत्वे संशयविपर्ययाभावः सर्वसम्प्रतिपन्नः । यद्यपि बहि(रन्त)र्गोचरद्रव्यप्रत्यक्षमात्रे लाघवात् महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वमेव प्रयोजकमिति स्वीकर्तुमुचितम् । न चैवं वाय्वाकाशयोः अप्रत्यक्षत्वप्रसङ्गः । आत्मनः सुखदुःखादिकमादायेव तयोरपि तथाविधस्पर्शशब्दावादाय तद्वत्त्वानपायादिति वाच्यम् । इष्टापादनात् । अत एव वायौ प्रत्यक्षत्वविवादो मीमांसकैरुक्तप्रयोजकसत्त्वान्निराक्रियते । न च तथाप्याकाशस्य

शब्दलिङ्गानुमेयत्वेन अप्रत्यक्षत्वात् तत्रोक्तं प्रयोजकमपि प्रसक्तमिति वाच्यम् । जातिबधिरस्य शब्दज्ञानाभावेन तदनुमानासम्भवेन आकाशज्ञानासम्भवेन हस्तप्रसारानुपपत्तेः । अत एव शब्दादपि न तं प्रत्याकाशसिद्धिः । तथाच तदनुपपत्त्या आकाशस्य प्रत्यक्षत्वं अकामेनापि स्वीकार्यम् । तद्विषयकं प्रत्यक्षं चक्षुरादिजन्यं न भवतीति चेत् किं ततः ? साक्षिणेव तत्सिध्युपपत्तेः । तत्र प्रत्यक्षप्रयोजकस्योक्तस्य सत्त्वात् । तच्च प्रयोजकं काले नास्तीति कथं तस्य प्रत्यक्षत्वोपगम इति । तथापि जात्यन्धस्य देशकृतपरत्वापरत्वज्ञानाभावात् कालकृतपरत्वापरत्वज्ञानस्याप्यभावेन तल्लिङ्गककालानुमानासम्भवात्, व्युत्पत्त्यभावदशायां शब्दादपि तन्निश्चयासम्भवाच्च, तस्य साक्षिणैव कालसिद्धिर्वाच्या । न हि इदानीमत्रेदमस्तीति तदीयं घटादिवर्तमानत्वगोचरं प्रत्यक्षमाकस्मिकम् । न च तदीयत्वगिन्द्रियादिजन्यज्ञानेऽपि वर्तमानकालोऽनुपनीतः उत्पत्तुमर्हति । न च मानान्तरेण तदुपनयः सम्भवति । तथा च परिशेषात् साक्षिणैवोपनीतः स कालस्तत्र भासत इत्यकामेनापि तत्र स्वीकार्यम् । न च उक्तप्रयोजकाभावात् आकाशवत् कालस्य साक्षिप्रत्यक्षविषयत्वं कथमुपपद्यत इति वाच्यम् । गुणकर्मादौ आत्मनि च अनुगतप्रयोजकाभावेऽपि यथा कार्यबलात् अननुगतमपि तत्र गुणत्वादिकं प्रत्यक्षत्वप्रयोजकमास्थितम्, तथा कार्यबलेनैव द्रव्यप्रत्यक्षमात्रेऽनुगतप्रयोजकाभावेऽपि वर्तमानकालत्वं तत्प्रयोजकमास्थेयम् । कार्यानुपपत्तेः सर्वत्र बलवत्त्वात् । अत एवोक्तम्, 'कार्यानुपपत्तिरपि साक्षिणि प्रमाणम्' इति वदन्ति, इति किमनुपपन्नम् ?

तथाच ब्रह्मजगतोः कालसम्बन्धित्वमेव सत्त्वमिति कथं तयोः ब्रह्मैव सत् न जगच्च, तच्च तद्विलक्षणमिति पराङ्गीकार इति न जानीमः ।

इदं च सत्त्वं असद्व्यावृत्तमेव, नृशृङ्गं कदापि नास्ति इति असतः कालत्रयासम्बन्धित्वस्यैवानुभवात् । न ह्येवं जगति कालत्रयासम्बन्धित्वं कुतश्चित् प्रमाणादवसीयते । सादौ सान्ते च घटादौ वर्तमानत्वस्य अबाधितप्रतीतिसिद्धत्वात् । सादावनन्ते ध्वंसेऽपि तथैव कालसम्बन्धस्य अनुभवसिद्धत्वात् । प्रागभावस्य प्रतियोगिकालासम्बन्धित्वेऽपि पूर्वकालसम्बन्धित्वस्यानुभवात् । अन्योन्यात्यन्ताभावयोः सदातनत्वस्य सर्वानुभवसिद्धत्वात् । अयोग्याकाशादेरपि 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिश्रुत्या सकलदेशसम्बन्धवत् सकलकालसम्बन्धस्यावगमात् । न हि देश इव कालः सर्वशब्दार्थो नेत्यस्ति । अत एव अस्तीत्येवोपलब्धव्यः, असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरित्यादिश्रुत्या ब्रह्मणोऽपि कालसम्बधित्वरूपमेव सत्त्वम्, तदन्यस्य नृशृङ्गादेरसत्त्वं तदसम्बन्धिरूपमित्यावेद्यते तदसम्बन्धित्वेन असत्पदार्थानङ्गीकारे कालासम्बन्धित्वरूपासत्त्वेन ब्रह्म जानतः, तदसम्बधित्वेन नृशृङ्गादितुल्यतया निन्दनं न स्यात् ।

एतावांस्तु विशेषः । तुर्यं तत् सर्वदृक् सदा, अहमेकः प्रथममासम्, वर्तामि च भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादिश्रुत्या ब्रह्मणः सर्वकालसम्बन्धित्वमावेद्यते । तदतिरिक्तस्य वियदादेस्तु सृज्यप्रपञ्चस्य 'इदं वा अग्रे नैव किञ्चनासीत्' इत्यादिश्रुत्या 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुत्या च उत्पत्तिविनाशौ प्रतिपाद्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिश्रुत्या ब्रह्मणः तत्सम्बन्ध-कथनात् अविद्यमाने प्रवेशासम्भवात्, तदन्यथानुपपत्त्या प्रागभावध्वंसकालान्यकाल एव तस्य विद्य-मानत्वमवगम्यत इति । ततश्च लाघवात् कालसम्बन्धित्वमेव सत्त्वम्, तदसम्बन्धित्वमसत्त्वमित्याहुः ।

यत्तु कालसम्बन्धित्वमाधारतया, तदसम्बन्धित्वमसत्त्वमित्यङ्गीकारे आत्माश्रयेण कालस्य स्वाधारतया तदसम्बन्धित्वात् सत्त्वं न स्यादिति चेन्न । सर्वत्र देशः सदा कालः इत्यबाधितप्रतीत्या देशस्येव कालस्यापि स्वाधारत्वात् सिद्धविषयत्वेन आत्माश्रयस्य अदोषत्वात् । 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुत्या कालस्य कालाधारत्वावेदनात् । न हि तत्र अग्रशब्दार्थः कालो नेत्यस्ति । न वा आसीच्छब्दार्थः सन्नेति । अनद्यतनकालो ह्यासीच्छब्दार्थः । अनद्यतने लङ् इति पाणिनीय-स्मरणात् । अभियुक्तैः अद्यतनशब्दस्य अतीतायाः रात्रेः प्रथमयामद्वयात् अर्वाक्, आगामिन्याः रात्रेः प्रथमयामद्वयं यावान् कालः सोऽद्यतन इत्यर्थवर्णनात् । इदंशब्दस्य प्रमाणसिद्धवस्तुमात्रार्थत्वेन कालस्यापि तदर्थत्वेन प्रवेशाच्च । एतेन शुक्तिरूप्यादौ 'इदं रूप्यमत्रास्ति' इति देशकालसम्बन्ध-प्रतीतगोविषाणमस्तीति वाक्यादिव विशेषादर्शनदशायां शशविषाणमस्तीतिवाक्यात् शशविषाणादौ कालसम्बन्धप्रतीतेश्च कालसम्बन्धित्वरूपं सत्त्वं न असद्व्यावृत्तमिति निरस्तम् । प्रतीतिमात्रेण अर्थ-सत्त्वस्य मया अनुपगमात् । अबाधितप्रतीत्यैव तत्सत्त्वोपगमात् । न हि शुक्तिरूप्यादौ शशविषाणादौ च अबाधितप्रतीतिरस्ति । विशेषदर्शनानन्तरं इयं शुक्तिरेव, न तु कदापि रजतम्, शशीयं विषाणं कालत्रयेऽपि न इति बाधस्य सर्वानुभवसिद्धत्वात् । अत एव अग्रे इयं शुक्तिरेव कुतः रजतात्मना अभात् इति तद्भाने कारणचिन्तानन्तरं रजतसादृश्यादेः तत्कारणत्वमवसीयते । न हि एवमिदंशब्दार्थे जगति अग्रे कालसम्बन्धित्वेन नित्यनिर्दोषश्रुतिप्रतिपन्ने ततोऽप्यधिकबलत्वेन प्रमाणेषु प्रसिद्धं तद्बाधकं प्रमाणं किमपि उपलभामहे ।

ननु 'नैवेह किञ्चनाग्र आसीत्, इदं वा अग्रे नैव किञ्चनासीत्' इति श्रुत्यैव इदंशब्दार्थे जगति कालासम्बन्धित्वावेदनात्, जगतः कालसम्बन्धित्वे बाधकाभावः असिद्ध इति चेन्न । प्राक्कालवाच्यग्र-पदसमभिव्याहारात् जगतः (कालसम्बन्धित्वे बाधकाभावः) उत्पत्तेः प्राक्कालासम्बधित्वस्यैव तच्छ्रु-त्यर्थत्वेन अस्याः श्रुतेः जगतः सदेवेत्यादिश्रुतिप्रतिपन्नकालसम्बन्धित्वे बाधकत्वायोगात् । न च प्रागभावकाले प्रतियोगिनः अभावात् सदेवेत्यादिना जगतः प्राक्कालसम्बन्धावेदने विरोध इति वाच्यम् ।

असद्वा इदमग्र आसीत् तद्धीदं तर्ह्यव्याकृतमासीत् इत्यादि श्रुत्यन्तरानुसारेण अव्याकृतस्य जगतः सदेवेत्यादिश्रुत्या प्राक्कालसम्बन्धावेदनेन अविरोधात् । अत एव जगतः कालसम्बन्धित्वे सत्त्वमङ्गीकृत्य, 'तद्धैक आहुः असदेवेदमग्रे' इत्यादिश्रुत्या केषाञ्चिद्रीत्या जगतः कारणम् असदेवास्तु इत्याशङ्क्य तत्रैव 'कथमसतः सज्जायेत' इति तद्रीत्या अनुपपत्तिमुक्त्वा कार्यकारणयोरुभयोरपि तुल्यवत् सत्त्वमुक्तम् । किञ्च यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति इति श्रुत्या भूकर्तृकजनेः तत्कर्तृकस्थितेः तत्कर्तृकलयादेश्च वर्तमानकालसम्बन्धित्वावेदनात् कालसम्बन्धित्वरूपं सत्त्वं दुर्वारम् । न हि निर्दोषश्रुतिप्रतिपन्नं तच्छुष्कानुमानमात्रेण बाधार्हम् । तथा भूतशब्दस्य प्रातिपदिकत्वेन प्रातिपदिकार्थमात्रस्य तदर्थत्वात्, भूतशब्दार्थमात्रस्य प्रपञ्चस्य सदर्थत्वमवश्यमुपेयम् । तदनुपगमे भूतानि – इति प्रथमाविभक्तिः न स्यात् । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति पाणिनीयस्मृत्या सन्मात्रादिष्वर्थेषु प्रथमाविभक्त्यनुशासनात् । अत एव प्रातिपदिकार्थः सत्तेति अभियुक्ता व्याचक्षते । न च प्रमाणाबाध्यत्वमेव सत्त्वम् । तस्य कालसम्बन्धित्वसमनियतत्वेऽपि लाघवेन कालसम्बन्धित्वस्यैव सत्पदप्रवृत्तिनिमित्तत्वात् । न हि घटत्वसमनियतं पृथुबुध्नोदराकारत्वं, इत्येतावता घटत्ववत् घटपदप्रवृत्तिनिमित्तं भवति । प्रमाणस्य लघुन्येव वस्तुनि पक्षपातात् । न च बाधितस्य निस्स्वरूपत्वेन कालसम्बन्धित्वायोगात् तदुपपादकतया बाधाभावः आवश्यकः इति वाच्यम् । इत्थं तदुपपादनेऽपि गौरवेण बाधकाभावस्य सत्पदप्रवृत्तिनिमित्तत्वायोगात् । तस्मात् कालासम्बन्धित्वमसत्त्वम्, तत्सम्बन्धित्वमेव सत्त्वमिति जगतः सत्स्वरूपत्वेन सत्त्वसिद्धिः । तत्र चोदाहृतप्रत्यक्षादिकं प्रमाणमिति, तत्र प्रमाणाभावोऽप्यसिद्ध इति सिद्धम् ॥

नन्वस्तु ब्रह्मजगतोः साधारणं कालसम्बन्धित्वरूपम्, अखण्डरूपं वा असद्व्यावृत्तं सत्त्वम् । न हि जगति तन्नेत्यभ्युपगमः, न वा सत्ताजातिवत् अखण्डरूपं तन्नेति, किन्तु अबाध्यत्वरूपमेव सत्त्वं शुक्तिरूप्यादाविव जगति नेत्येवास्मदभ्युपगम इति चेन्न । अप्रातिभासिकत्वेन असद्विलक्षणत्वेन च ब्रह्मणीव जगत्यपि अबाधितत्वस्य सिद्धेः । अबाध्यत्वं हि बाध्यत्वाभावः । बाध्यत्वं च प्रतिपन्नोपाधौ केनचिदस्तीति प्रतिपन्नस्य प्रमाणेन तत्र तेनैव सम्बन्धेन नास्तीति प्रतिपन्नत्वमेव । प्रतिपन्नोपाधौ अस्तीति प्रतिपन्नस्य सतः तत्रैव तेनैव सम्बन्धेन प्रमाणेन नास्तीति प्रतिपन्नत्वमिति यावत् । न ह्येवं जगति सम्भवति । जगद्धा(ज्ज्ञा)नस्य भ्रमत्वे सत्येव एतत्सम्भवेत् । न हि जगद्धा(ज्ज्ञा)नस्य भ्रमत्वे किमपि मानमस्ति । तथाहि— न तावद्योग्यं जगच्छब्दार्थे घटोऽयं, स्तम्भोऽयं, नीलो घटः, शुक्लः पटः, घटश्चलति, पटश्चलति, अयं वह्निः इदं काष्ठं दहति, वह्निरुष्णः, शीतं जलम्, इदमत्रास्ति, इदमत्र नास्तीत्यादिप्रात्यक्षिकप्रतीतेः नियमेन असन्दिग्धप्रवृत्तिजनन्याः, तथैव सजातीयसंवादरहितायाः वंशो

चाक्षुषोरगप्रत्यक्षवत् शङ्खे पीतत्वप्रत्यक्षवत् शुक्तिरङ्गवङ्गादिषु रजतवङ्गरङ्गादिप्रत्यक्षवच्च दोषजन्यत्वेन भ्रमत्वमङ्गीकारार्हम्, तद्वत् [1]क्लृप्तदोषाजन्यत्वात् तदन्यदोषजन्यत्वकल्पनस्य भ्रमत्वनिश्चयाधीनत्वेन अन्योन्याश्रयात्। नायमुरगः किन्तु वंश एव शङ्खो न पीतः किन्तु श्वेत एव, इदं न रजतं किन्तु शुक्तिरेव, नायमुरगः किन्तु वंश एवोरगात्मनाऽभात्, श्वेत एव शङ्खः पीतत्वेन अभात्, इयं शुक्तिरेव रजतात्मना अभात् इत्यादिप्रतीतिवत् घटादौ, नायं घटः किन्तु अघटः एव, अयं घट एव पटात्मनाऽभात्, घटः सन्न किन्तु असन्नेव सदात्मनाऽभात् इत्यादिप्रात्यक्षिकबाधादर्शनेन तत्र तादृशबाधेन भ्रमत्वकल्पनाया असम्भवेन प्रमाणप्रतिपन्ने भ्रमत्वनिर्वाहाय क्लृप्तदोषासम्भवेऽपि, अक्लृप्त एव कश्चिद्दोषोऽवश्यं कल्पनीय इत्युक्तेरपि अनवकाशात्।

एतेन अयं घटः एतद्घटभिन्नः घटत्वात् ज्ञेयत्वात् घटान्तरवदित्याद्यनुमानेन एतद्घटस्य, एतद्घट-भिन्नत्वसिद्धिः। तत्र प्रत्यक्षेण जायमाना घटादिप्रतीतिः भ्रान्तिरेव, तद्भ्रान्तित्वनिर्वाहाय क्लृप्तदोषस्य योग्यानुपलब्ध्या अभावनिश्चयेऽपि दोषान्तरमवश्यं कल्पनीयम्। अप्रामाण्यापरनामकभ्रान्तित्वस्य परतस्त्वेन दोषप्रयोज्यत्वनियमादिति निरस्तम्॥

वह्न्यौष्ण्यानुमानवत् घटे घटभिन्नत्वानुमानस्यापि क्लृप्तदोषाजन्यपरिक्षितस्वतःप्रमाणभूत-घटत्वग्राहिप्रत्यक्षबाधितत्वेन घटभिन्नत्वासाधकत्वात्। अनुमानस्य स्वतःप्रमाणमूलकत्वं विना स्वातन्त्र्येण असम्भवेन स्वविषयानिश्चायकत्वाच्च। अन्यथा सुरापानममृतत्वसाधनं पानत्वात् सोम-पानवत् इत्याद्यनुमानेन सुरापानस्यापि अमृतत्वसाधनत्वसिद्ध्यापत्तेः। न सुरां पिबेत् इति श्रुति-बाधितत्वात् तस्य तदुपायत्वासिद्धौ च प्रकृतेऽपि उदाहृतप्रत्यक्षविरोधात् घटत्वाद्यनुमानेन अघट-त्वासिद्धिरिति स्यात्।

एतेनैव साक्षात्कारिभ्रमविषयत्वस्य अधिष्ठानयाथात्म्यगोचरसाक्षात्कारिविपरीतदर्शनमेव विरोधि। दिङ्मोहादौ तथा दर्शनात्। तथाच सदाद्याकारगोचरप्रत्यक्षभ्रमाविषयस्य घटादियोग्य-जगतः नेदानीं बाधो दृश्यते। तदधिष्ठानयाथात्म्यगोचरदर्शनाधीनविपरीतदर्शनस्य इदानीमनुदयात् तदनुदयश्च अनाद्यविद्यारूपदोषेण प्रतिबन्धात् इति (तु) प्रत्यूढम्। (निराकृतम्)

एतत्कल्पनायाः सदाद्याकारकजगद्भानभ्रमत्वसिद्ध्यधीनत्वेन अन्योन्याश्रयात्। किञ्च साक्षा-त्कारिभ्रमविषयशुक्तिरूप्यादेः साक्षात्कारिविपरीतदर्शनेन बाधः तदैवोपलभ्येत यदा शुक्त्याद्यधि-ष्ठानगतकालपृष्ठत्रिकोणत्वादिविशेषदर्शनेन तद्भ्रमे अप्रामाण्यशङ्का वा तन्निर्णयो वा जायते। तथाच तेनैव न्यायेन सदाद्याकारिप्रत्यक्षादिभ्रमविषयस्य जगतः बाधमिच्छता परेण तदधिष्ठानगतविशेष-

१. क्लृप्तदोषजन्यत्वात् तदजन्यदोषजन्यत्वकल्पनस्य

**दर्शनेन तद्गोचरभ्रमे अप्रामाण्यशङ्का** वा तन्निश्चयो वा प्रथमं जायते तदनन्तरं अनुमानेन शब्देन वा **तद्बाधकज्ञानोदय इति स्वीकार्यम्** । नान्यथा । न चैवं परेण स्वीकर्तुं शक्यते । तेन जगदध्यासा-**धिष्ठानस्य निर्विशेषत्वेनैव अङ्गीकारात्**, मध्ये विशेषदर्शनानङ्गीकाराच्च । न हि अप्रामाण्यशङ्काशून्य-सदाद्याकारजगद्गोचरप्रत्यक्षानुमानशब्दजन्यज्ञाने जागरूके अनुमानान्तरेण शब्दान्तरेण वा तद्विरोधि-ज्ञानान्तरं उत्पत्तुमर्हति येन तज्जगद्भानबाधकं स्यात् ।

एतेन रज्जौ प्रत्यक्षतः सर्पभ्रमे सत्यपि नायं सर्पः इत्याप्तवाक्यात् तद्बाधकशाब्दप्रमा विशेष-**दर्शनादिकं विनैव जायत इत्यपास्तम्** ।

**सर्पभ्रमे अप्रामाण्यशङ्कां** विना नायं सर्प इति शब्दात् तज्जननासम्प्रतिपत्तेः । किञ्च नायं सर्प इति **शब्दस्य आप्तोक्तत्व**(आप्तोक्तशब्दविषयत्व)निश्चयं विना सर्पभ्रमवतः न ततो निष्कम्पप्रवृत्तिः । न वा तत्प्रयुक्तभयकम्पादिनिवृत्तिरिति सर्वं सम्प्रतिपन्नम् । वक्तुराप्तिश्च प्रकृतवाक्यार्थगोचरयथार्थज्ञानं वा भ्रमप्रमादादिदोषराहित्यं वा नान्यत् । एवञ्च तादृशशब्दविषयत्वरूपविशेषदर्शनमस्त्येव श्रोतुरिति तेन सर्पज्ञाने अप्रामाण्यशङ्का वा तन्निश्चयो वा जायत एव । नायं सर्प इति वाक्यात् असर्पत्वबुद्ध्या बाधः **नान्यथेति किमनुपपन्नम्** । किञ्च अयं सर्प इति अप्रामाण्यशङ्काशून्यसर्पत्ववैशिष्ट्यावगाहिनिश्चये सति **कथं नायं सर्प इति शब्दात् इयमसर्पत्वधीः** । शाब्दबोधे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वात् । किञ्च तस्याप्रतिबन्धकत्वेऽपि शब्दादसर्पत्वधीर्जायमाना ग्राह्याभावावगाहिनिश्चयकालीनाहार्यरूपैव स्यात् । किमतो यद्येवमिति चेत् नायं सर्प इति ज्ञानापादितभयकम्पादिनिवर्ति(र्त)का न स्यात् । असर्पत्वाज्ञान-निवृत्तिश्च न स्यात् । सर्पहननाद्यनुकूलोद्यमश्च स्यात् । न हि सर्वं रजतमित्याहार्यज्ञानवान् रजतार्थि-तया सर्वत्र प्रवर्तत इत्यस्ति । तथाच नायं सर्प इति वाक्यादपि असर्पधीर्जायमाना अनाहार्यरूपैव वाच्या । विषयाभावात् प्रमारूपा च । सा च पूर्वोत्पन्नसर्पत्वनिश्चये यावन्नाप्रामाण्यशङ्काऽधीयते तन्निश्चयो वा (आधीयते) तावत्स्वात्मानमलभमाना तत्राप्रामाण्यशङ्काकारणं कल्पयतीति अकामेनापि स्वीकार्यम् । किञ्च प्रामाण्यस्वतस्त्वपक्षे निश्चितप्रामाण्यादेवार्थनिश्चयात् सर्वत्र निष्कम्पप्रवृत्तिरिति स्थिते शब्दजन्यासर्पत्वज्ञानात् तथाविधादेव प्रवृत्त्यादिकं वाच्यम् । प्रामाण्यनिश्चयश्च तदैव सम्भवेत् यदा विरोध्युपस्थितितत्सामग्र्योरसमवधानम् । प्रामाण्यमपि तदैव ज्ञानं यत्प्रकारकं तत्प्रकारत्व-मर्थस्य । न च रज्जौ सर्पत्ववैशिष्ट्यावगाहिनि समानविषये ज्ञाने जागरूके असर्पत्ववैशिष्ट्यावगाहिज्ञानं भवितुमर्हति । कथमेवं शब्दाज्जायमानमसर्पत्वज्ञानं निश्चितप्रामाण्यं सम्भवतीति न जानीमः । भवितव्यं च तेन अवश्यम् । अन्यथा उक्तकार्यानिर्वाहात् । एवञ्च एवंविधस्थले तन्निर्वाहाय अस्मद्रीतिरेवा-श्रयणीया । रीत्यन्तरासम्भवात् ।

केचित्तु प्रामाण्यस्वतस्त्वस्य आवयोः औत्सर्गिकत्वात् यज्ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्प्रतिबन्धिकेति न्यायात् प्रामाण्यविरोध्युपस्थितितत्सामग्रीसत्त्वदशायां प्रामाण्यग्रहो न सम्भवतीत्युपेयम् । एवञ्च नायं सर्प इति शब्दोत्थज्ञानेऽपि प्रामाण्यग्रहोऽसम्भवीति पूर्वोत्पन्नसर्पज्ञाने अप्रमारूपेऽपि ज्ञानग्राहकसामग्र्या प्रामाण्यग्रहस्य निश्चितत्वेन तेन असर्पत्वज्ञानप्रामाण्यविरोध्युपस्थितिसत्त्वात् । न च अप्रमापि प्रमेत्येवं गृह्यते इत्युपगमात्, सर्पज्ञाने विरोधिप्रामाण्यनिश्चयसत्त्वेऽपि असर्पत्वज्ञाने तदभावात् । तत्र प्रामाण्यनिश्चये किं बाधकम् ? न हि भिन्नविषये बाधकत्व सम्भवतीति वाच्यम् । एकस्यामेव रज्जौ सर्पत्ववैशिष्ट्यावगाहिज्ञानवत् असर्पत्ववैशिष्ट्यावगाहिज्ञानस्य स्वीकारात् । समानविषयत्वस्य सत्त्वात् । ज्ञानं यत्प्रकारकं तस्य स्वविषये तद्वत्त्वातिरेकेण प्रामाण्याभावात् । अत एव प्रामाण्यसंशयः तद्वत्त्वसंशयपर्यवसन्नः इति न्यायविदः ।

न च रज्जौ प्रत्यक्षतः सर्प इति ज्ञाने विरोधिनि (निश्चितप्रामाण्ये) जागरूके शब्दात् असर्प (नायं सर्पः) इति धीरेव न सम्भवतीति वाच्यम् । अयोग्यता निश्चयस्य शाब्दबाधाप्रतिबन्धकत्वात् । अन्यथा जल्पकथायां वादिप्रतिवादिनोः विरुद्धार्थप्रतिज्ञावयवात् परस्परविरुद्धार्थनिश्चयवत्त्वेन तदर्थगोचरज्ञानासम्भवात् तदीयन्यायवाक्यप्रयोगो बधिरकलहवद्व्यर्थः स्यात् । तस्मात् शब्दात् असर्पत्वज्ञानेन निश्चितप्रामाण्येन सर्पज्ञानस्य बाधमिच्छता तदपेक्षया प्राबल्यमवश्यमुपेयम् । न्यूनबलेन वा समबलेन वा तद्विषयापहारमुखेन बाधासम्भवात् । तस्मात् निर्दोषशब्दत्वादिरूपविशेषदर्शनेन सर्पज्ञाने अप्रामाण्यशङ्कायां तन्निश्चये वा सत्येव नायं सर्प इति शब्दात् आप्तोक्तत्वेन निश्चितात् पुनःपुनः सूक्ष्मेक्षिकया परामर्शेन रज्जौ असर्पत्वव्यापारान्तरनिश्चयसहकृतात् अधिकबलात् सर्पज्ञानबाधकं अनाहार्यरूपमेव असर्पत्वज्ञानं जायते । तथापि तदाहार्यकल्पनमकिञ्चित्करम् । अत एव नायं सर्प इति वक्तारं प्रति किमेवमेवोच्यते किं वा सम्यग्विचार्योच्यते इति पृच्छन्तः श्रोतारो लोके बहुलमुपलभ्यन्त इत्याहुः ।

तथाच उक्तरीत्यैव योग्यजगत्प्रत्यक्षे योग्यानुपलब्ध्या क्लृप्तदोषाजन्यत्वेन निश्चिते नियमेन विसंवादरहिते सजातीयविजातीयसंवादवति च तेन तेन रूपेण तत्तदर्थगोचरे प्रामाण्यस्वतस्त्वात् निश्चितप्रामाण्ये जागरूके अत एव अप्रामाण्यशङ्काशून्ये अनादिकालमारभ्याद्यपर्यन्तं विरोधिप्रत्यक्षरहिते सति अनुमानेन शब्देन वा तदन्यथात्वगोचरधियः असम्भवात् ब्रह्मवत् अबाध्यत्वं किं नोपेयम् ? साधकबाधकप्रमाणभावाभावयोः अविशेषात् । एतेन विशेषशब्दार्थस्य करचरणवक्रकोटरादिरूपतया अनवगतत्वात् पुरुषस्थाण्वादौ अतथात्वेन भ्रमे साक्षात्कारात्मनि अननुगततत्तद्विशेषदर्शनस्य यथा अप्रामाण्यशङ्काधायकत्वं निश्चयाधायकत्वं वा तथा जगदध्यासाधिष्ठानभूते ब्रह्मणि वस्तुतो निर्विशेषतया अतदात्मनि तदात्मतया ज्ञानगोचरे निर्विशेषत्वरूपविशेषस्य सत्त्वात् तस्य अखण्ड-

ब्रह्मणि चिन्मात्रत्वेन तत्सविशेषत्वानापादकत्वात् । श्रुतिविशेषेण तादृशविशेषस्य दर्शने जाते तेन योग्यायोग्यजगद्वत्तया तदात्मतया च ब्रह्मगोचरे श्रुतिजन्ये ज्ञाने अप्रामाण्यशङ्कायां तन्निश्चये वा (आहिते) जगदबाध्यत्वं निष्प्रत्यूहम् ।

एतेन – नेति नेति, नेह नानास्ति किञ्चन, एकमेवाद्वितीयम्, अन्यदेव तद्विदितादथोऽविदितादधि, न ह्यस्ति द्वैतसिद्धिः, आत्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव, नात्र काचन भिदास्ति, नैवात्र काचन भिदास्ति, अत्र भिदामिव मन्यमानः शतधा भिन्नः, मृत्योः स मृत्युमाप्नोति, यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः इत्यादिश्रुतिविशेषैः बाधकज्ञानोदयः सम्भवतीति निरस्तम् । तथापि श्रुतिजन्यज्ञानात् जगत्प्रत्यक्षस्य भ्रमत्वासिद्धेः । तदैव हि तस्य भ्रमत्वं सम्भवति यदि योग्यायोग्यप्रपञ्चस्य प्रत्यक्षतो ब्रह्मणि प्रसक्तिः स्यात् । अयोग्यस्य सर्वथा प्रत्यक्षतोऽप्रसक्तेः । योग्यस्य सतोऽपि ब्रह्मणि अप्रसक्तेश्च । केवलो निर्गुणश्चेत्यादिविशेषनिषेधश्रुतीनामपि नेति नेतीत्यादिश्रुतिवत् त्वद्रीत्या बाधकश्रुतित्वेन तासां ब्रह्मसप्रपञ्चत्वावेदकश्रुतिभिरिव आसां ब्रह्मनिर्विशेषत्वावेदकश्रुतीनामपि तत्सविशेषत्वावेदकश्रुतिभिः सत्प्रतिपक्षितत्वेन ब्रह्मनिर्विशेषत्वप्रत्यायकत्वासम्भवाच्च । ब्रह्मनिष्प्रपञ्चत्वज्ञानेन तत्सप्रपञ्चत्वावेदकश्रुतिजन्यज्ञाने ब्रह्मनिर्विशेषत्वज्ञानेनोक्तरीत्या विशेषदर्शनात्मकत्वरहितेन ब्रह्मसविशेषत्वावेदकश्रुतिजन्यज्ञानेऽपि अप्रामाण्यशङ्कायाः तन्निश्चयस्य वा आधानासम्भवात् । न हि स्वयमलब्धात्मकेन तेन तदाधानं कर्तुं शक्यम् । न हि सति प्रतिबन्धके इतरकारणसमवधानसत्त्वेऽपि तत्कार्यत्वाभिमतं स्वात्मानं लभमानं दृष्टचरम् । ब्रह्मणि प्रपञ्चविधितन्निषेधयोः गुणविधितन्निषेधयोः आकारविधितन्निषेधयोश्च षोडशिग्रहणतन्निषेधवाक्योदितापूर्वतादिरूपतात्पर्यलिङ्गत्वेन अप्रामाण्यकारणाभावेन च तुल्यबलवत्त्वात् तयोरेकेनापरस्य सर्वात्मना बाधायोगात् । व्यवस्थितविषयत्वाश्रयेण तुल्यवत् प्रामाण्योपगमस्यैव उचितत्वाच्च । किञ्च निषेधस्य यथाकथञ्चित् विना प्रसक्तिमयोगेन ब्रह्मणि वियदादिप्रपञ्चस्य गुणानामाकाराणां च मानान्तरेण प्रसक्त्यभावेन श्रुत्यैव प्रसक्तिर्वाच्या । एवञ्च निषेधप्रवृत्तेः प्रसञ्जकप्रमाणप्रवृत्तिं विना अयोगेन उपजीव्यतया प्रसञ्जकप्रमाणस्यैव प्राबल्यमापतितमिति तदनुसारेणैव उपजीवकप्रमाणस्य प्रामाण्यमुपपादनीयम् । न तु उपजीवकानुरोधेन उपजीव्यप्रामाण्यमिति कथं निषेधप्रमाणेन विधायकप्रमाणस्य सर्वथा बाधः । शुक्तौ इदं रूप्यमिति ज्ञानस्य उपजीव्यस्य सतोऽपि यद्यपि नेदं रजतमिति ज्ञानेन बाधो दृश्यते तथापि तस्य यदंशे उपजीव्यत्वं तदंशे तस्य न तेन बाधः । यदंशे तस्य च तेन बाधः न तदंशे तस्योपजीव्यत्वमिति अविरोधः । यद्यपि चाधिकरणज्ञानवत् प्रतियोगिज्ञानस्यापि प्रतियोगिज्ञानत्वादिना कारणतया बाधकज्ञानं प्रत्युपजीव्यत्वमविशिष्टम् । तथापि दोषजन्यत्वविशिष्टमुपजीव्यत्वमिदं रजतमिति ज्ञानस्येदमंश इव न निषेध्यरजतांश इति विशेषविवक्षया तस्यानुपजीव्यत्वोक्तिरिति, अविरोधः ।

ननु योग्ये जगति घटः सन्, पटः सन्, घटः स्फुरति, पटः स्फुरति इदं सुवर्णं प्रियं इदञ्च प्रियमिति प्रत्यक्षप्रतीतेर्घटादिसत्त्वं स्फुरणत्वं प्रियत्वं च विषय इति सर्वानुभवसिद्धम्। तच्च सत्त्वादिकं ब्रह्मगतमेव न घटादिरूपजगद्गतम्। सत्यं ज्ञानमनन्तं ब्रह्म, नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या सद्रूपत्वज्ञानरूपत्वादेः ब्रह्मलक्षणत्ववर्णनात्। ब्रह्म किं लक्षणकमिति प्रश्नोत्तरत्वेन प्रवृत्तस्य सत्यं ज्ञानमनन्तं, नित्यं विज्ञानमानन्दं ब्रह्मेत्यादेः तल्लक्षणप्रतिपादनपरत्वावश्यम्भावात् सत्त्वादिकं ब्रह्मलक्षणमवश्यमुपेयम्। तल्लक्षणं भगवदितरव्यावृत्तमेव तल्लक्षणत्वमर्हति, न त्वन्यथा। न च अतिव्याप्त्यव्याप्त्यसम्भवि वा लक्षणं भवितुमर्हति। न च वाच्यं ब्रह्मलक्षणभूतं सत्त्वादिकं कथं घटादिनिष्ठतया प्रतीयत इति। शुक्तीदंत्वस्य शुक्तिरूप्य इव ब्रह्मसद्रूपत्वादेः घटादिनिष्ठत्वेन प्रतीतिसम्भवेन कथन्ताऽनवकाशात्।

ननु शुक्तौ इदं रूप्यमिति ज्ञानानन्तरं नेदं रजतमिति विशेषदर्शनोत्थबाधकज्ञानेन तद्रजतज्ञानस्य भ्रमत्वावधारणेन तत्राध्यस्तरजतगतत्वेन प्रतीतेदंत्वस्य बाधानुरोधेन तदध्यासाधिष्ठानशुक्तिनिष्ठत्वाश्रयणं युक्तम्। प्रकृते तु न तथाऽऽश्रयणं युक्तम्। तथाऽऽश्रयणं च तदैव युक्तं भवेत् यदि सन् घट इत्यादिप्रत्यक्षप्रतीतिः भ्रमो भवेत्। तद्भ्रमत्वं च तदैव सिध्येत् यद्यत्र घटादेः सद्रूपत्वबाधकं भवेत्। अन्यथा अन्योन्याश्रयादिति चेन्न। सत्यत्वादेः ब्रह्मलक्षणत्वान्यथानुपपत्तेरेव बाधकत्वात्। तदाहुः—

**अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।**
**आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥** इति।

तथाच ब्रह्मव्यतिरेकेण सच्चिदानन्दस्वरूपस्य वस्तुनोऽभावात् घटाद्यर्थे प्रतीयमानं सत्त्वादिकं ब्रह्ममात्ररूपमेवेत्युपेयम्। तस्य घटादिसम्बन्धभानं च घटादेस्तादृशे ब्रह्मण्याध्यासिकसम्बन्धस्वीकारेणैवोपपादनीयमिति कथं घटादौ सत्त्वादिग्राहिप्रत्यक्षस्य तद्बाधकप्रमाणत्वेनाभिमतायाः नेह नानेत्यादिश्रुतेः न समानविषयत्वम्। सति च समानविषयत्वे कथं तत्सत्त्वादिग्राहिप्रत्यक्षस्याभ्रमत्वम्। एवं 'तत्त्वमसि, नान्योऽतोऽस्ति द्रष्टा' इत्यादिप्रत्यग्ब्रह्माभेदावेदकतद्भेदनिषेधकश्रुतेः नाहमीश्वरः नाहं सर्वज्ञः, नाहं चिन्मात्रं इत्यादिप्रत्यक्षस्य च विरुद्धार्थविषयत्वं समानविषयत्वं च स्फुटम्, उक्तरीत्या तद्भेदज्ञानस्य भ्रमत्वम्, तद्भेदस्य अध्यस्तत्वं च। तथाच अनयोरेकं बाध्यं विरुद्धार्थग्राहित्वादितिन्यायेन श्रुतिप्रत्यक्षयोरन्यतरबाधावश्यम्भावे तत्र श्रुतेरपौरुषेयतया नित्यनिर्दोषतया च तत्परत्वेन च अपच्छेदन्यायेन परत्वेन च प्राबल्यात् बाधकत्वम्। प्रत्यक्षस्य तु सम्भावितदोषत्वेन निषेध्यसमर्पकत्वेन पूर्वतया दुर्बलत्वेन बाध्यत्वमिति मदभ्युपगम इति चेन्न।

सत्यं ज्ञानमित्यादिश्रुत्या अबाध्यत्वरूपसत्त्वस्य ब्रह्मलक्षणरूपत्ववर्णनात् 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति, तानि ह वा एतानि त्रीणि अक्षराणि, सत् ति यमिति। तद्यत्सत् तदमृतम्, अथ

यत् ति तन्मर्त्यम्, अथ यद् यं तेनोभे यच्छति, यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित् स्वर्गं लोकमेतीति' छन्दोगश्रुत्या (छां. अ. ८,खण्डः १, वाक्यं ७ [८-५-३]) फलरूपतात्पर्यलिङ्गवत्या मुक्तामुक्तनियामकत्वेन यत् सत्यशब्दार्थत्वेनोक्तं तस्यैवेह सत्यशब्दार्थस्य ब्रह्मलक्षणत्ववर्णनात्, वेदे वैदिकस्यैवार्थस्य अन्तरङ्गबाधकं विना ग्राह्यत्वात् । अत एव पञ्चदशान्याज्यानि भवन्ति 'उग्रंवचोऽपावधीं त्वेषं वचो अपावधीम्' (पू.मी. अ. २, पा. १, अनुषङ्गाधि. १७) इत्यादौ यदाजिमीयुस्तदाज्यानामाज्यत्वम्, अशनाया पिपासे ह वा उग्रं वच इत्यादिना वेदे तेनोक्तस्यैवार्थस्य ग्रहणम् । न च सत्यनामनिर्वचनस्य उपासनार्थत्वेन प्रवृत्ततया प्रकरणान्तःस्थितत्वेन च निर्णीतस्य कथं ब्रह्मलक्षणं वक्तुं प्रवृत्तवाक्यगतसत्यशब्दार्थत्वेन वाच्यम् । तथापि मुक्तामुक्तनियामकत्वस्य सत्यशब्दार्थत्वेन वेदोक्तत्वानपायात् । अथ कस्मादुच्यते परं ब्रह्मेति यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेतीति प्रकरणान्तरगतनिरुक्तेरपि ब्रह्मविदाप्नोति परमित्यादौ सर्वैरपि ब्रह्मशब्दार्थनिर्णयहेतुत्वेनाश्रयणाच्च । लोक-वेदाधिकरणन्यायस्य कण्ठतो वेदार्थविषयत्वात् अत एव कश्छन्दसां योगमावेद धीर इति वेदतात्पर्यगोचरार्थस्य दुर्विभाव्यत्वेनोक्तिः सङ्गच्छते । न चैवं यच्चिकेत सत्यमित्तन्न मोघम्, ऐतदात्म्यमिदं सर्वं तत्सत्यमित्यादिवेदगतसत्यशब्दस्यापि वेदे वैदिकार्थस्यैव ग्राह्यत्वादिति न्यायेन मुक्तामुक्तनियामकत्वार्थः किं न स्यादिति वाच्यम् । वेदे वैदिकार्थस्यैव ग्रहणमित्यस्यौत्सर्गिकत्वात् । प्रकृते च सत्यशब्दस्य शुक्तिरूप्यादिव्यावृत्तब्रह्मजगत्साधारणभ्रमविषयत्वाभावप्रतीतिविषयत्वरूपाबाध्यत्वापरपर्यायसत्यत्वार्थकत्वनिर्वाहाय तन्न मोघम् इति अमोघत्ववर्णनासम्भवेन च तत्परत्वस्य त्यागात् । सदेव सोम्येदमग्र आसीत्, कथमसतः सज्जायेत इत्यादिश्रुत्यन्तरेण ब्रह्मणोऽपि अबाध्यत्वरूपसत्त्वसिद्धेश्च ।

एवं तुर्यं तत् सर्वदृक् सदा इति ब्रह्मापरोक्षज्ञानस्य सदा प्रामाणिकसर्वविषयकत्वश्रवणात् तदनुसारेण सत्यज्ञानादिवाक्यगतज्ञानपदमपि तादृशज्ञानरूपत्वरूपं ब्रह्मणो लक्षणान्तरमपि नातिप्रसक्तम् । एवं अनन्तत्वमपि लक्षणान्तरं युक्तम् । नित्यं विज्ञानमानन्दं ब्रह्मेत्यत्रापि नित्यो नित्यानां चेतनश्चेतनानामिति श्रुत्यनुसारेण अनन्याधीनं नित्यत्वं ब्रह्मणो लक्षणम्, विज्ञानपदमपि उक्तरीत्या ज्ञानविशेषपरमिति तद्रूपत्वमपि तस्यानतिप्रसक्तं लक्षणान्तरम्, एवम् आनन्दपदस्यापि स एको ब्रह्मण आनन्दः, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति इत्यादिश्रुतिपर्यालोचनया ब्रह्मानन्दस्य अपरिमितत्वलाभात्, तादृशानन्दपरत्वेन तादृशानन्दरूपत्वमपि तस्य लक्षणान्तरमिति सिद्ध्यति । न हि एवंविधलक्षणवाक्यार्थसम्पत्तौ तदनुरोधेन कथं योग्यायोग्यस्य जगतः भ्रमाविषयत्वेन प्रमितिविषयत्वरूपाबाध्यत्वासिद्धिः । तत्सिद्धौ (जातः अबाध्यत्वसिद्धौ) च जगदन्तःपातिनो योग्यस्य घटादेः सच्चिदानन्दरूपब्रह्मण्यध्याससिद्धिः तदसिद्धौ च प्रत्यक्षतः

प्रतीयमानघटादिकं सर्वं ब्रह्मरूपाधिष्ठानगतमेव आरोपितरजते शुक्तीदंत्ववत् घटादिनिष्ठतया भातीति पराङ्गीकारः कथमिति न जानीमः ।

किञ्च घटस्सन् पटस्सन् इत्यादियोग्यजगद्गोचरप्रत्यक्षस्य यावत्प्रबलप्रमाणान्तरेण भ्रमत्वनिश्चयो न तावत् सच्चिदानन्दरूपस्य त्वदभिमतब्रह्मणोऽधिष्ठानत्वसिद्धिः । तथा घटादिनिष्ठतया प्रतीयमान-सत्त्वादेः न तथाविधाधिष्ठानगतत्वसिद्धिरिति तदुभयसिद्ध्यर्थं उक्तप्रत्यक्षस्य केनापि प्रबलप्रमाणान्तरेण भ्रमत्वनिश्चयो भवतीति वाच्यम् । न हि तथा वक्तुं शक्यते । तथाविधप्रमाणान्तराभावात् । एतच्छ्रुत्यैव तत्सिद्ध्यङ्गीकारे अन्योन्याश्रय इत्युक्तम् । अपि च नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मा-दाहुर्वेदा इति, न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्, नावेदविन्मनुते तं बृहन्तम् इत्यादिश्रुत्या औपनिषदः पुरुषः, (तंत्वा) औपनिषदं पुरुषं पृच्छामि इत्यादिश्रुत्या च इन्द्रियग्राह्यत्वं प्रतिषिध्य ब्रह्मणो वेदैकसमधिगम्यत्ववर्णनात्, चाक्षुषत्वप्रयोजकरूपादिराहित्येन चक्षुरयोग्यत्ववर्ण-नाच्च तस्य घटस्सन् इत्याद्यैन्द्रियकप्रत्यक्षप्रतीतिविषयत्वस्वीकारः परकीयः कथमुपपद्यते इति न जानीमः । न हि अयोग्ये यागादिजन्यातिशये योग्यपदार्थाध्यासः ऐन्द्रियको भवन् दृष्टचरः । किञ्च त्वदीयजगन्मिथ्यात्वसाधनानुमानं घटादियोग्यजगत्सत्त्वग्राहिप्रत्यक्षबाधितमिति मयोक्ते, वर्तमान-मात्रग्राहिप्रत्यक्षस्य त्रिकालाबाधितत्वरूपसत्त्वग्राहित्वासम्भवेन तद्बाधितत्वोद्भावनं त्वदीयमनुपपन्नमिति वदन्तं मां प्रति वदता त्वयापि ब्रह्मगततादृशसत्त्वस्य तदध्यस्तघटादिगतत्वेन प्रत्यक्षविषयत्वाङ्गीकारे व्याहत्यापत्त्या तस्य प्रत्यक्षाविषयत्वमेवोपेयमिति किमधिकमाचरितम् ।

ननु चक्षुरयोग्यस्याकाशस्यापि योग्याभ्रनक्षत्रसम्बन्धितया तज्जन्यप्रत्यक्षविषयत्वं दृश्यते । तथा चक्षुरयोग्यस्य राहोस्तद्योग्यचन्द्रसम्बन्धेन चाक्षुषत्वं दृश्यत इति चेत् (न) । साभ्रनक्षत्रत्वेन प्रभामण्डलस्यैव चाक्षुषप्रत्यक्षविषयत्वेनाकाशस्य तद्गोचरत्वासिद्धेः । राहोश्च महत्त्वसमानाधिकरणो-द्भूतनीलरूपवत्त्वेनायोग्यत्वासिद्धेः । चन्द्रोपरागाभावकाले चक्षुषा तदनुपलम्भस्येन्द्रियसम्प्रयोगाभावेन व्यञ्जकाभावेन प्रतिबन्धकसद्भावेनोपपत्तेः । तेषां कार्यैककल्प्यत्वेनाभावावधारणात् । अन्यथा योग्यार्थ-सम्बन्धित्वेन धर्मादेर्योग्यनयनगोलकादिसम्बन्धेन च चक्षुरिन्द्रियादेश्च प्रत्यक्षत्वप्रसङ्गः । अत एव सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थित इत्यादिपराङ्गीकारः प्रत्यूढः (निराकृतः) । तस्माच्छ्रुतिप्रत्यक्षयोः समानविषयत्वाभावात् अपच्छेदन्यायेन प्रबलया परया श्रुत्या पूर्वस्य दुर्बलस्य प्रत्यक्षस्य बाध इत्युक्त-मयुक्तम् । प्रमाणानां समानविषयत्वे एव प्राबल्यदौर्बल्यप्रयुक्तबाध्यबाधकभावनिर्णयावसरात् ।

यत्तु न्यायामृते उपक्रमाधिकरणन्यायेन श्रुत्यपेक्षया प्रत्यक्षप्राबल्यसमर्थनं गुरुचरणैः कृतं तत्तु समानविषयत्वमभ्युपेत्य कृतमिति न तद्विरोधः । एतेनैव तत्त्वमसि नान्यदतोऽस्ति द्रष्टेत्यादि

**तत्पदार्थाभेदतद्भेदनिषेधकश्रुतेस्तद्भेदग्राहिप्रत्यक्षापेक्षया** परत्वेनापच्छेदन्यायेन प्रबलत्वात् तया **तद्भेदग्राहिप्रत्यक्षबाध** इति पराङ्गीकारः प्रत्यूढः (निराकृतः) । परत्यैव तच्छ्रुतिप्रत्यक्षयोः **समानविषयत्वाभावात्** । तत्त्वम्पदलक्षितशोधितचिन्मात्राभेदतद्भेदनिषेधयोरेव परेण तच्छ्रुतितात्पर्य-गोचरार्थत्वोपगमात्, तस्य वेदैकसमधिगम्यत्वेन प्रत्यक्षागोचरत्वात् । प्रत्यक्षस्य विशिष्टोपहित-विषयत्वेन विशिष्टोपहितचैतन्ययोरविशिष्टानुपहितचैतन्यादन्यत्वेन भिन्नविषयत्वात् । तद्भेदस्य श्रौतनिषेधाविषयत्वेन पारमार्थिकत्वापत्तेश्चेति दिक् ॥

**यद्यपि**, त्वम्पदार्थजीवे तत्पदार्थाद्ब्रह्मणो, नाहमीश्वर इत्यादिप्रत्यक्षेण भेदो विषयीक्रियते । तत्त्वमसि, नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुत्या तत्पदार्थेन ब्रह्मणा त्वम्पदार्थे जीव एवाभेदो बोध्यते एव । भेदश्च निषेध्य एवेति श्रुतिप्रत्यक्षयोः समानविषयत्वमिति प्रतिभाति । तत्त्वमस्ययमात्मा नान्यो-ऽतोऽस्ति द्रष्टेत्यादिश्रुतिशरीरग्राहिश्रोत्रजन्यप्रत्यक्षस्य प्रमात्वेन विना प्रसिद्धानुपूर्वीरूपश्रुतिशरीरा-सिद्धेस्तत्प्रामाण्येऽवश्याभ्युपेयं यथावच्छ्रुतिसिद्धार्थमङ्गीकृतप्रमाणभावेन श्रोत्रप्रत्यक्षेणोपजीव्य-सजातीयतया प्रामाण्यग्राहितयाऽप्युपजीव्येन प्रबलेनोपक्रमाधिकरणन्यायेनासञ्जातविरोधितया श्रुति-लिङ्गाधिकरणन्यायेन शीघ्रगामितया सामान्यविशेषन्यायेन विशेषविशिष्टतया च प्रबलेन तत्पदा-र्थाद्ब्रह्मणः त्वम्पदार्थे जीवे नाहमीश्वरो, नाहं सर्वज्ञो, नाहं चिन्मात्रमिति भेदग्राहिणा श्रुत्यपेक्षयापि, अनाद्यनन्तत्वेन दोषाजन्यतया तत एवोत्तर(एवचरम)वृत्तिवत् स्वतःप्रमारूपेण साक्षिप्रत्यक्षेण विरो-धात् । देवदत्त त्वं सिद्धोऽसि अद्वितीयोऽसि भूपतिरिति लौकिकप्रमाणवाक्यस्य परीक्षितप्रत्यक्ष-विरोधेन गौणार्थत्वाश्रयणवत् गौणार्थत्वाश्रयणस्यैवोचितत्वेन श्रुतिप्रत्यक्षयोः समानविषयत्वासिद्धे-रिति दिक् ॥

अपि च यदा 'न तौ पशौ करोती'त्यत्र पशुयागे इतिकर्तव्यताकाङ्क्षया अनुमितस्यापि पशौ करोतीति चोदकस्य न तेन सर्वात्मना बाध इति आश्रितं, तदा किमु वक्तव्यं विधिनिषेधशास्त्रयोः द्वयोरपि प्रत्यक्षयोः निषेधशास्त्रेण विधायकशास्त्रस्य सर्वात्मना बाधो न ह्याश्रयणीय इति । तदाहुः— सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । यद्यपि ब्रह्मसप्रपञ्चत्वाद्यावेदकश्रुतीनां लिङ्लोट्तव्यादि-विधिप्रत्ययान्तसमभिव्याहाराभावात् स्वर्गकामो यजेतेत्यादिवत् नाप्रवृत्तप्रवर्तकत्वरूपं विधित्वम्, तथापि अज्ञातज्ञापनलक्षणविधित्वं प्रवर्तकाप्रवर्तकसाधारणमस्त्येव ।

किञ्च उपक्रमाधिकरणन्यायेन अनुपसञ्जातविरोधितया श्रुतिलिङ्गाधिकरणन्यायेन शीघ्रगामितया सामान्यविशेषन्यायेन सावकाशनिरवकाशन्यायेन निरवकाशतया प्रभूताल्पत्वन्यायेन भूयस्त्वेन च

ब्रह्मसप्रपञ्चत्वाद्यावेदकश्रुतीनामेव प्राबल्यमस्तीति तदनुसारेणैव निषेधशास्त्रप्रामाण्योपपादनमुचितम् । न तु अतथाभूतदुर्बलतन्निषेधशास्त्रानुसारेण तासां प्रामाण्योपपादनम् (उचितम्) ।

एतेन ब्रह्मसप्रपञ्चत्वाद्यावेदकश्रुतीनां व्यावहारिकप्रपञ्चादिविषयतया सावकाशत्वम्, तन्निषेधक-श्रुतीनां पारमार्थिकतन्निषेधविषयतया भिन्नविषयत्वम्, अनन्यविषयतया न सावकाशत्वं चेति तुल्यवत् प्रामाण्यं नानुपपन्नमिति निरस्तम् । व्यावहारिकस्य बाध्यविशेषतया तद्विषयत्वेन प्रामाण्यनिर्वाहस्यैवा-सम्भवात् । न हि सर्वथा बाधरहितार्थकत्वरूपं प्रामाण्यं बाध्यविशेषविषयत्वेन उपपादयितुं शक्यम् । व्यावहारिकशब्देन ब्रह्मवत्पारमार्थिकत्वोक्तौ च विवादपर्यवसानात् ।

ननु अनाद्यनन्ते ब्रह्मणीव प्रमाणेन कालत्रयाबाध्यत्वम् अतथाभूते जगति कथमुपपद्यते । अतो बाधाभावतरतमभावप्रयुक्तं तारतम्यं प्रामाण्येऽप्यवश्यमुपेयम् । तथाच जगज्ज्ञाने विषयाबाधो न त्रैकालिक इति तादृशविषयघटिततया तत्र प्रामाण्यं व्यावहारिकमित्युच्यते । तद्विषयभूतं जगदपि तथेत्युच्यत इति चेन्न । एवंविधबाधस्य प्रातिभासिकशुक्तिरूप्यादिसाधारणतया तस्यापि व्यावहारिक-त्वापत्तेः । तज्ज्ञानस्यापि व्यावहारिकप्रामाण्यापत्तेश्च । किञ्च एतावता ब्रह्मणोऽबाध्यत्वस्य प्रमाणो-त्पन्नज्ञानेन केनापि कदापि न निवृत्तिः । तदितरस्य जगतस्तु केनापि प्रमाणजन्यज्ञानेन कदाचित् कालविशेषे निवृत्तिरिति तदुक्त्यर्थः पर्यवसितः । तथाच ब्रह्मैव नित्यम्, तदितरत् सर्वमनित्यमिति भङ्ग्या तात्पर्यगोचरार्थो लभ्यते एवमपि विवादपर्यवसानमेव । न हि ब्रह्मैव नित्यमिति मयोपेयते । किञ्च ज्ञानस्य प्रामाण्यं नाम तस्याबाधितार्थकत्वमेव नान्यत् । अबाधितार्थकत्वं च बाधितार्थविषय-कत्वाभावः । विषयस्य बाधितत्वं नाम भ्रमरूपज्ञानविषयत्वमेव । ज्ञानस्य भ्रमत्वप्रमितिश्च सजातीय-विजातीयविसंवादात्, सजातीयविजातीयसंवादाभावाच्च जायते । एतादृशप्रमित्या विषयीकरणाभावेन हि विषयस्य बाधितत्वाभावो भवति । सोऽभावः यद्यत्यन्ताभावः तदा नित्यानित्यपदार्थमात्रसाधारण इति तद्वत्तया ब्रह्मवज्जगदपि स्यादेवाबाध्यमिति कथं तस्य पराभिमतव्यावहारिकत्वम् । कथं वा तद्विषयकस्य ज्ञानस्य प्रामाण्यं व्यावहारिकमिति न जानीमः । ज्ञानेन जगतो निवृत्तिर्बाध इति तु निरसिष्यते ॥

एतेन ब्रह्मसप्रपञ्चत्वाद्यावेदकश्रुत्यपेक्षया तन्निष्प्रपञ्चताद्यावेदकश्रुतीनामुपजीवकतया परत्वेन अपच्छेदन्यायेन प्रबलत्वात्, निष्प्रपञ्चत्वाद्यावेदकश्रुतिभिः तासां बाध इति निरस्तम् । एवं हि ब्रह्मसप्रपञ्चत्वादिश्रुतीनां प्रतियोगिसमर्पकत्वेन तन्निषेधश्रुतिभिः एकवाक्यता समाश्रिता स्यात् । किमतो यद्येवमिति चेन्न । तथासति अपच्छेदन्यायाविषयत्वापत्तेः । उपक्रमाधिकरणन्यायविषय-त्वापत्तेश्च । अत एव—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥

इति तन्त्रवार्तिके अन्योन्यनिरपेक्षाणामित्युक्तिः ।

ननु सप्रपञ्चत्वाद्यावेदकश्रुतीनां प्रतियोगिसमर्पकत्वेनोपजीव्यतया तन्निषेधकश्रुतिभिः एकवाक्यता तदैवाश्रयणीया स्यात् यदि तन्निषेधकश्रुतिषु प्रतियोगिसमर्पकं न स्यात् । अस्ति च नाना किञ्चन द्वितीयपदम् । अत एव 'न तौ पशौ करोती'त्यत्र ताविति निषेध्याज्यभागसमर्पकशब्दस्य सत्त्वात्तत्कर्तव्यताबोधकचोदकैकवाक्यता । अत एव च नार्षेयं वृणीते इत्यत्र प्रसज्यप्रतिषेध इति पूर्वपक्षे अयमिति निषेध्यसमर्पकस्य सत्त्वान्न चोदकैकवाक्यता । एवञ्च प्रसज्यप्रतिषेधस्थले विकल्पाश्रयणं सङ्गच्छेत । अन्यथा एकवाक्यत्वे अर्थद्वयाभावेन विरोधमूलविकल्पावसर इति चेन्न । नेह नानास्ति किञ्चन एकमेवाद्वितीयमित्यादिश्रुतिभिः नानाकिञ्चनादिपदेन निषेध्यमनूद्य तन्निषेधः क्रियते इत्यङ्गीकुर्वता अनुवादस्य पुरोवादं विनाऽयोगेन पुरोवादतया ब्रह्मसप्रपञ्चत्वाद्यावेदकश्रुतीनामङ्गीकर्तव्यतया निषेधश्रुतीनां तत्सापेक्षत्वेन तथाप्यपच्छेदन्यायाविषयत्वतादवस्थ्यात् ।

किञ्च निषेधश्रुतिगतनानाकिञ्चनादिपदानां स्वप्रदृष्टब्रह्मसप्रपञ्चत्वाद्यनुवादित्वमादाय ब्रह्मसप्रपञ्चत्वनिषेधकश्रुतीनां तादृशप्रपञ्चनिषेधपरत्वेनाप्युपपत्त्या तासामप्रातिभासिकजाग्रत्प्रपञ्चाबाधकत्वप्रसङ्गतादवस्थ्यात् स्वतुल्यबलब्रह्मसप्रपञ्चत्वादिविधायकश्रुतिविहितसप्रपञ्चत्वादीनां ब्रह्मणि ताभिरप्रसक्ततया निषेधायोगेन निषेधस्य प्रसक्तिपूर्वकत्वनियमनिर्वाहाय उक्तरीत्या स्वप्नस्य तत्प्रसक्तित्वौचित्यादिति किमधिकमाचरितम् ।

किञ्च तन्निषेधश्रुतिषु विद्यमानस्य नञः संसर्गाभाववाचित्वेन तन्मुख्यार्थस्य तस्य प्रागभावत्वप्रध्वंसाभावत्वादिना रूपेण नानात्वेन तद्विशेषात्यन्ताभावापरसम्बन्धं सहते । नृशृङ्गाद्यभावस्तु स्वदेशे सर्वत्र प्रतियोगिसम्बन्धं न सहत इति द्विविधोऽप्यत्यन्ताभावोऽनुभवबलेनैव सिद्धत्वात् दुरपह्नवः । न चैवं प्रागभावप्रध्वंसयोः समयविशेषसंसर्गात्यन्ताभावेनैव कृतकार्यतया अनभ्युपगमप्रसङ्ग इति वाच्यम् । प्रागभावस्य स्वकाले प्रतियोगिस्वरूपासहिष्णुत्वस्वभावतया तेन तस्य कृतकार्यत्वासिद्धेः । कपालादौ घटादेः प्रतियोगिनः प्रागुत्पत्तेः तत्र तत्संसर्गे मानाभावात् । अन्यथा घटादेरुत्पत्तिरेव न सिद्ध्येत् । तत्र तत्संसर्गस्यैव उत्पादविनाशौ इति स्यात् । न चैवं, घटादेरनाद्यनन्तत्वप्रसङ्गात् । एवं ध्वंसोऽपि तदतिरिक्तोऽङ्गीकार्यः । ध्वंसस्य स्वोत्पत्तेः पूर्वं स्वदेशे प्रतियोगिसम्बन्धसहिष्णुत्वेऽपि स्वकाले कदापि तत्र तदसहिष्णुत्वात् । ध्वंसस्य मुद्गरप्रहारादिजन्यत्वात् । समस्तविशेषसंसर्गा-

त्यन्ताभावस्य तदजन्यत्वेन तयोः भेदावश्यम्भावाच्च । प्रतियोगिजनकत्वप्रतियोगिजन्यत्वाभ्यां प्रागभावप्रध्वंसाभावयोरन्योन्यविलक्षणयोः तज्जन्यत्वरहितान् समयविशेषसंसर्गिघटात्यन्ताभावात् भेदस्य दुर्निरसत्वाच्च । न हि घटाद्यपसारणस्थले प्रतीयमानो घटाद्यभावः तत्प्रागभावो भवितुमर्हति । उत्पन्नस्य सतो घटस्य प्रागभावासम्भवात् । सम्भवे वा इतरकारणकलापसम्पत्तौ प्रागुत्पन्नस्यापि घटादेः पुनरुत्पत्तिप्रसङ्गाच्च । न चैवम्, अनुभवविरोधात् । न च अदृष्टसामग्रीविलम्बात् । दृष्टकारणकलापसम्पत्तौ न तद्विलम्बेन कार्यविलम्बो दृष्टः । तस्मादुक्तरीत्या ब्रह्मसप्रपञ्चत्वाद्यावेदकश्रुतीनां तन्निषेधत्वेन त्वदभिमतश्रुतीनां च विरोधेनैव तुल्यवत्प्रामाण्योपपत्तेस्तन्निषेधश्रुतिभिः तासां न बाध इति सिद्धम् ।

किञ्च ब्रह्मणः कालस्येव जगदाधारताप्रयोजकसम्बन्धेन भावाभावात्मकप्रामाणिकपदार्थाधारत्वमवश्यमुपेयम् । न च ब्रह्मणो जगदाधारत्वे मानाभावः । "य उ त्रिधातु पृथिवीमुतद्यामेको दाधार भुवनानि विश्वा । एष सेतुर्विधरणः । एषां लोकानामसम्भेदाय । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः", इत्यादिश्रुतिस्मृतिभिः तस्य जगदाधारत्वसिद्धेः । न हि जगदाधारताप्रयोजकसम्बन्धेन ब्रह्माधारोऽत्यन्ताभावः स्वप्रतियोगिबाध्यत्वापादकः । न हीदानीं काले स्वप्रतियोगिभूतघटसमानाधिकरणत्वेन प्रमाणसिद्धो घटात्यन्ताभावः तद्घटस्य शुक्तिरूप्यात्यन्ताभावप्रतियोगिनः शुक्तिरूप्यस्येव मिथ्यात्वापादको दृष्टचरः । तथाच ब्रह्मणि श्रुत्या विहितस्य वियदादिप्रपञ्चस्योक्तरीत्या निषेधाभावेन तया बाधाभावात्, वेदैकसमधिगम्येऽर्थे प्रत्यक्षबाधितत्वस्यादर्शनात्, नित्यनिर्दोषश्रुत्या ब्रह्मणि विहितस्य श्रुत्याद्यवष्टम्भरहितशुष्कानुमानेन बाधासम्भवात्, शङ्कानर्हत्वाच्च, विशिष्य बाधसामान्याभावावधारणात् तस्य विद्यमानत्वापरपर्यायं अबाध्यत्वरूपमपि सत्त्वं दुर्वारम् ।

एतेन विषयविद्यमानत्वे सिद्धे तद्विषयकज्ञानस्य प्रमात्वसिद्धिः । तत्सिद्धौ च तद्विषयस्य विद्यमानत्वसिद्धिरिति अन्योन्याश्रय इत्यपास्तम् । विषयविद्यमानत्वस्य विषयाविनाभूतसंवादिप्रवृत्त्यादिरूपव्यवहारान्यथानुपपत्त्यैव सिद्ध्या तत्सिद्धेः प्रमितत्वसिद्धिमात्राधीनत्वात् । अन्यथा प्रामाण्यसन्देहात् प्रवृत्तस्य विषयाव्यभिचारिस्वप्रवृत्त्यादिव्यवहारेण तद्विषयविद्यमानत्वनिश्चयाभावप्रसङ्गात् । न चैवम्, अनुभवविरोधात् । किञ्च असत्प्रतिभासिकव्यावृत्तनियतप्रमाणप्रवृत्तिविषयतावच्छेदकम् अवश्यमुपेयम् । अन्यथा तादृशप्रमाणप्रवृत्तेराकस्मिकत्वं स्यात् । अग्न्यादौ औष्ण्योर्ध्वज्वलनादेः तत्स्वभावत्वेऽपि सामग्रीविशेषतेजस्त्वादिरूपप्रयोजकप्रयोज्यत्वस्य दर्शनेन दृष्टानुसारिकल्पनायाः निर्निबन्धनत्यागायोगेन प्रमाणानां स्वभाव एतादृश इति वाचोयुक्तेः अनवसरदुःस्थत्वात् । अन्यथा प्रतिकर्मानिरूपणप्रसङ्गाच्च । अन्विष्यमाणं स्वस्वरूपत्वापरनामकम् अर्थगतम् अस्ति, विद्यते, सदिदम् इत्यादिव्यवहारालम्बनं विद्यमानत्वमेव । अत एव पूर्वतन्त्रे शिष्टाकोपाधिकरणे

वेदं कृत्वा वेदिं करोतीति वेदकरणानन्तरं वेदिकरणरूपक्रमप्रापकप्रत्यक्षश्रुतेः क्षुत आचामेत् इत्यादि-क्षुतादिनिमित्तकाचमनकर्तव्यत्वावेदकस्मृत्यपेक्षया विरोधाधिकरणन्यायेन प्राबल्यमाशङ्क्य स्मृतेः श्रुत्यपेक्षया जात्या दौर्बल्येऽपि आचमनपदार्थरूपधर्मिविषयतया क्रमरूपपदार्थधर्मपरश्रुत्यपेक्षया प्राबल्यमुक्तम् ।

अयमत्र निर्गलितोऽर्थः । स्वयं दुर्बलस्यापि प्रमाणस्य प्रामाण्यनिर्वाहः प्रधानभूतविषयालम्बनकृत इति श्रुतपदार्थानामनुष्ठेयत्वेन प्राप्तौ सत्यामेव केन क्रमेण तेषामनुष्ठानमिति क्रमरूपधर्माकाङ्क्षेति क्रमस्य धर्मिरूपपदार्थप्राप्त्यधीनप्राप्तिकत्वेन तदपेक्षया उपसर्जनत्वमिति यावत् । एतेन मानाधीना मेयसिद्धि-रिति लोकप्रवादोऽपि व्याख्यातः । तत्र सिद्धिशब्दस्य निश्चयपरत्वात् । अत एव अक्षपादः 'प्रमाणादिषोडशपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम' इति आदावसूत्रयत् । तेष्वपि 'प्रमाणाधीना सर्वेषां व्यवस्थितिरि'ति भाष्यग्रन्थोऽपि व्याख्यातः । इयञ्च व्यवस्था न केवलं मयैवोपेया । किन्तु ब्रह्मैव तत्त्वावेदकप्रमाणगोचर इत्यभ्युपगच्छता परेणापि । अन्यथा तदेव तादृशप्रमाणगोचरः न इतरदि-त्यङ्गीकारस्य निर्निबन्धनत्वापत्तेः । तथाच तदन्विष्यमाणं विद्यमानत्वमेवापतितम् ।

एतावांस्तु विशेषः । किञ्चित् कदाचिदेव स्वरूपेण विद्यते । किञ्चित्तु सर्वदेति तत्र विद्यमानत्वमेव लाघवात् प्रमाणप्रवृत्तिविषयतावच्छेदकम् । न तु सर्वदा विद्यमानत्वं गौरवात् ।

अपि च शुक्तिरजतयोर्वस्तुगत्या शुक्ताविदं रजतमिति भ्रमविषयत्वाविशेषेऽपि तत्र बाधकप्रमाणं निषेध्यत्वेन रजतमेव विषयीकरोति न तु शुक्तीदमंशमित्यविवादम् । तत्र किं नियामकमिति गवेषणायां वस्तुगत्या (यत्) आरोपविशेष्यादन्यत्वे सति आरोपितत्वमेव लभ्यते । आरोपितत्वं च तज्ज्ञानस्य. सजातीयविजातीयप्रमाणविसंवादात्, तादृशप्रमाणसंवादविरहाच्च अवधार्यते । तत एव तस्य दोष-प्रयोज्यत्वमपि निश्चीयते । अप्रामाण्यस्य परतस्त्वात् भ्रमस्यैव अप्रमाणरूपत्वात् । भ्रमत्वनिर्वाहाय पुरुषगतस्य रागस्य विषयगतरजतसादृश्यादेर्वा दोषत्वं कल्प्यते । दोषेण विना तदनिर्वाहात् । ज्ञान-सामान्यसामग्र्यामधिकदोषानुप्रवेशात् अप्रमेति स्वीकारात् । दोषत्वजात्यभावेन भ्रमत्वप्रयोजकस्यैव दोषशब्दार्थत्वात् । अत एव क्वचित् कश्चिद्दोष इत्यभ्युपगमः । एवं शुक्तीदमंशस्यापि निषेध्यत्वेन बाधकप्रमाणविषयत्वे प्रमितत्वभ्रमाधिष्ठानत्वप्रयोजकत्वेनावश्यमुपादेयाविद्यमानत्वमेवान्विष्यमाणं नियामकं लभ्यते । शुक्तीदमंशविषये तस्यैव रजतभ्रमस्य सजातीयविजातीयसंवादादेः सकाशात् प्रमितत्वं निश्चीयते । अधिष्ठानत्वमपि तद्गतविशेषदर्शनाधीनबाधकप्रमाणावतारात् अवसीयते । अत एव भ्रमः सर्वोऽपि प्रकारांशे भ्रमः धर्म्यंशे त्वभ्रम इति तान्त्रिकाभ्युपगमः । प्रत्यधिष्ठानं तदेव भवति । स्वयं न क्वाप्यारोपितम् । आरोपितशुक्तिरूप्यादेः आरोपाधिष्ठानत्वस्य क्वाप्यदर्शनात् । अत एव

अनारोपितत्वात् सदेकरस्वभावं ब्रह्मचैतन्यमेव भ्रमाधिष्ठानमिति पराभ्युपगमः । यद्यपि अन्यथाख्यातिवादे आरोपितमेवाप्रसिद्धम् । अनिर्वचनीयख्यातिवादेऽपि ब्रह्मेतरस्य सर्वस्यापि आरोपितत्वात् तदितरत् अनारोपितमप्रसिद्धमेव । संसारदशायां चैतन्यस्यापि विशिष्टाकारेणोपहितत्वाकारेण वा आरोपितत्वात् । जडे चैतन्यमपि अनारोपितमप्रसिद्धमेव । तथापि आत्मानात्मप्रपञ्चयोः साधारणम्, असदन्यत्वे सति आगन्तुकदोषजन्यभ्रमाजन्यत्वमुभयसम्प्रतिपन्नं सुप्रसिद्धम् । तत एव च धर्मोऽधिष्ठानत्वेऽपि प्रयोजक इति तद्धर्मोपासनमावश्यकमिति स्थितम् । तथाच योग्ये जगच्छब्दार्थे घटादौ घटस्सन् पटस्सन् घटोऽस्ति पटोऽस्ति घटो विद्यते पटो विद्यते, भूतले घटाभावोऽस्ति चत्वरे घटाभावोऽस्ति इत्यादिबाधरहितप्रत्यक्षादिना घटादौ सत्त्वसिद्धेः तत्र प्रमाणाभावः असिद्धः । न च इदं सत्त्वं शुक्तिरूप्येदंत्ववत् अधिष्ठानगतमेव । तथाच शुक्तौ इदं रूप्यम् इति प्रत्यक्षवत् घटस्सन् इत्यादिप्रत्यक्षं अन्यथासिद्धमिति न तेन घटादेः सत्त्वसिद्धिरिति, अनन्यथासिद्धस्यैव प्रमाणस्य स्वविषयसाधकत्वात् इति वाच्यम् । एतत्कल्पनायाः तद्ज्ञानभ्रमत्वसिद्ध्यधीनत्वेन अन्योन्याश्रयात् । तद्वदत्र बाधकाभावेन वैषम्यात् । योग्यानुपलब्ध्या बाधकाभावनिर्णयात् । निर्णयेन बाधशङ्कानुदयात् । भ्रमत्वस्य बाधकप्रमाणैककल्प्यत्वात् अन्यथा निष्कम्पप्रवृत्तिः क्वापि कस्यापि न स्यात् । तत्प्रवृत्तिसंवादादेः निर्निबन्धनत्वापत्तेश्च । शुक्तिरूप्यादिज्ञाने क्वचिद्बाधदर्शनमात्रेण बहुवित्तव्ययायाससाध्ये लौकिके वैदिके वा कर्मणि निष्कम्पप्रवृत्तिप्रयोजकज्ञानेऽपि बाधशङ्कायाः असम्भवात् ॥ नियामकं विना बाधकत्वेनाभिमते ज्ञानेऽपि बाधशङ्कासम्भवेन भ्रमत्वशङ्कापत्त्या बाध्यत्वाभिमतापेक्षया विशेषाभावेन इदं बाध्यम् इदं बाधकमिति व्यवस्थाऽनुपपत्तेश्च । विशेषदर्शनस्यापि ज्ञानत्वेन बाधशङ्काग्रस्ततया भ्रमत्वापत्त्या तज्जन्यत्वस्यापि ज्ञाने बाधकत्वानियामकत्वात् । तस्मात्स्वक्रियाव्याघातादिना मूर्च्छां प्राप्तेन परेण जगद्ज्ञाने प्रत्यक्षादिजन्ये योग्यानुपलब्ध्या अनुव्यवसायसामग्रीविरहात् स्वत एव बाधकाभावनिर्णयो दोषजन्यत्वाभावनिर्णयश्चावश्यमुपेयः । अन्यथा स्वक्रियाव्याघातादिना बहुविप्लवापत्तेः । क्वचित्तु वस्तुतः प्रमायामेव कुतश्चिद्धेत्वाभासात् बाधकशङ्कायां सत्यां वा बाधभविष्यत्त्वशङ्कायां वा सत्यां, तया भ्रमत्वशङ्कायां दोषजन्यत्वशङ्कायां वा सत्यां भ्रमत्वरूपबाधनिश्चये वा सति तेन भ्रमत्वनिश्चये, दोषजन्यत्वनिश्चये वा भ्रमरूपे सति प्रामाण्यविरोध्युपस्थापकसामग्रीसमवधानात् प्रतिबन्धात् तद्वति प्रथमं साक्षिणा तत्प्रामाण्यनिश्चयासम्भवेऽपि भ्रमत्वसम्भवात्, प्रयोजनान्तरमुद्दिश्य कुतश्चित्कारणविशेषाद्वा तत्रैव प्रवृत्तस्य दैवात् परीक्षासहिष्णुफलपर्यन्तप्रवृत्तिसंवादे सति, तेन शङ्काविधूननस्य (तद्भ्रमत्वनिश्चयेऽपि) भ्रमत्वनिश्चयस्य च सम्भवात् । तदनन्तरमेवाप्रतिबन्धेन साक्षिणा तत्रापि प्रामाण्यनिश्चयो न दुर्लभः । तद्ज्ञानविषयस्य परमते चरमवृत्तिविषयस्येवानारोपितं सत्त्वमपि न दुर्लभम् । प्रमात्वस्य स्वाधारज्ञानविषयसत्त्वमन्तरेणानिर्वाहात् । यत्र च ज्ञाने सर्वथा बाधो न वृत्तः

फलव्यतिरेकेण पर्यन्तपरीक्षासहिष्णुः तत्र तद्विषयासत्त्वं मयाप्युपेयत एव। न हि शुक्तौ रूप्यज्ञाने सति तादृशबाधेन तद्विषयस्यासत्त्वमनङ्गीकुर्वन्नभ्रान्त इत्युच्यते। अपि चान्यथासिद्धत्वमिह भ्रमत्वमेव वाच्यम्। न त्वन्यत्। भ्रमत्वं च क्लृप्तदोषजन्यत्वेन वा प्रबलबाधकेन वा स्वीकार्यम्। न हि घटादि-सत्त्वे घटत्वपटत्वादिग्राहिप्रत्यक्षादेः तथाविधबाधकं किमप्युपलभामहे। क्लृप्तदोषजन्यत्वं वा। न हि क्वचित्प्रत्यक्षादौ दोषजन्यत्वं वा बाध्यत्वं वा दृष्टमित्येतावता सर्वत्र प्रत्यक्षादौ समर्थप्रवृत्तिजनके सजातीयविजातीयसंवादवति योग्यानुपलब्धिबाधितं दोषजन्यत्वं बाध्यत्वं वा स्वीकारार्हम्। सहचार-दर्शनमात्रस्यातत्कल्पकत्वात्। अक्लृप्तदोषकल्पनस्य बौद्धादिरीत्या वेदे तज्जन्यचरमवृत्तौ च सम्भ-वात्। ज्ञानत्वाविशेषेण तद्विषयत्वाविशेषेण च चरमवृत्तितद्विषययोरभ्रमत्वाबाध्यत्वयोरापत्तेश्च। किञ्चैवं ज्ञानप्रामाण्यं, उत्पत्तिज्ञप्त्योः स्वत इति परकीयोक्तिः रिक्ता स्यात्। प्रमाणत्वाभिमतजन्यज्ञानमात्रेऽपि, प्रमाणाभासजन्यज्ञाने दोषजन्यत्वस्य दृष्टत्वेनैतज्जन्यत्वास्वीकारात्।

इदानीं प्रत्यक्षादिना बाधानुपलम्भेऽपि कालान्तरे बाधो भवितेति स्वीकुर्वता परेणाप्रामाण्यस्य स्वतस्त्वं प्रामाण्यस्य तु न तदिति स्वीकारापत्तेश्च। अन्यत्र क्लृप्तदोषं विना जगज्ज्ञानमात्रेऽप्रामाण्यस्य ज्ञानसामान्यसामग्रीमात्रप्रयोज्यत्वास्वीकारात्।

न हि बहुकालं बाधावतारं विना भ्रमानुवृत्तिमात्रेण तद्विषयस्यानारोपितं सत्त्वमङ्गीकारार्हम्। तथा पराभ्युपगमो वा, तदनङ्गीकारे च अप्रामाण्यं दुष्परिहरम्। तृतीयप्रकाराभावात्। यावद्बाधं प्रामाण्य-मित्यङ्गीकारे शुक्त्यादौ रूप्यज्ञानस्यापि प्रामाण्यमित्यङ्गीकारापातात्। शुक्तिरूप्यादिज्ञाने अविलम्बेन बाधावतारः। जगज्ज्ञाने विलम्बेन बाधोदय इति वैषम्यमिति चेन्न। तथाप्यर्थस्वतस्त्वसत्यत्वनियत-प्रामाण्यानिर्वाहात्। बाधितार्थकमथ च प्रमाणमित्यस्य शूद्रोऽयं ब्राह्मण इतिवत् व्याहतत्वात्। एक-ज्ञानस्य विरुद्धोभयरूपत्वासम्भवात्। अत एव प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकमित्यादि-पराङ्गीकारः प्रत्यूढः। जगज्ज्ञाने वस्तुतो बाधितार्थ एव चरमवृत्तिपर्यन्तं अबाधितार्थत्वप्रयुक्तप्रामाण्य-प्रतीतिव्यवहारमात्रमिति तदर्थपर्यवसानात्। एतावतापि ब्रह्मज्ञानपर्यन्तमनुवर्तमानजगज्ज्ञानस्य भ्रमत्वा-वारणात्। अप्रामाण्यस्य लाघवेन दोषमात्रप्रयोज्यतया आगन्तुकदोषजन्यं ज्ञानं अप्रमाणम्, अनागन्तु-काविद्यारूपदोषजन्यं ज्ञानं न तथेत्यङ्गीकारायोगाच्च।

ननु जगज्ज्ञाने सजातीयप्रमाणसंवादनियमात् तादृशप्रमाणविसंवादाभावनियमाच्च दोषजन्यत्वा-विशेषेऽपि आगन्तुकदोषजन्यभ्रमापेक्षया वैलक्षण्यसत्त्वात् वैचित्र्यं तावत् सर्वानुभवसिद्धम्। तदेव वैचित्र्यं च अस्माभिः व्यावहारिकं प्रमाणमित्युच्यते। न तु प्रतीतिमात्रात् व्यवहारमात्राद्वेति चेत्,

न । तादृशवैचित्र्यस्य अस्मदुक्तविद्यमानत्वापरनामकपारमार्थिकसत्त्वं विना अयोगेन विवादपर्यवसानात् । तादृशसंवादविसंवादाभावयोः अबाध्यत्वव्याप्तत्वेन तस्यापि तत एव सिद्धेः । एवंविधसंवादविसंवादाभावयोः स्वाप्नप्रपञ्चसाधारणत्वेन परेण तावन्मात्रेण जगज्ज्ञाने प्रातिभासिकप्रपञ्चज्ञानव्यावृत्तव्यावहारिकप्रामाण्यशब्दितवैचित्र्याभ्युपगमायोगाच्च ।

एतेन जगज्ज्ञानप्रामाण्योपपादनाय परेषां सत्ताद्वैविध्यतत्त्रैविध्याङ्गीकारौ प्रत्यूढौ ।

ननु तवापि स्वाप्नजाग्रत्प्रपञ्चयोः वैलक्षण्यं न स्यात्, संवादविसंवादयोः अविशेषात् इति चेन्न । स्यादेव, जाग्रत्प्रपञ्चवत्तस्यापि मया पारमार्थिकत्वाङ्गीकारात् । जाग्रत्प्रपञ्चस्य स इदं सर्वमसृजत इति श्रुत्येव स्वाप्नप्रपञ्चस्यापि, (च) अथ रथान् रथयोगान् पथः सृजते इत्यादिना ईश्वरसृष्टत्ववर्णनात् । न चैवं जाग्रत्प्रपञ्चस्य 'स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता' इति श्रुत्या स्वप्नसारूप्यस्य स्वाभिमतपक्षत्वोक्तिः 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रेण स्वाप्नादिवैलक्षण्योक्तिश्च न स्यादिति वाच्यम् । स्वाप्नजाग्रत्प्रपञ्चयोः मायिकामायिकप्रपञ्चयोश्च प्रमाव्याप्तशरीरत्वेन पारमार्थिकत्वेन च साम्यस्य श्रुत्या पक्षान्तरत्वोपन्यासेन पारमार्थिकत्वसाम्यस्वीकाराविरोधित्वात् ।

अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः ।
स्वप्नादिसाम्यं जगतः ..................॥

इति स्मृत्यनुसारेण साम्यश्रुतेरस्मदुक्तार्थपरत्वस्यैव उचितत्वाच्च । स्वाप्नजाग्रत्प्रपञ्चयोः प्रातिभासिकत्वव्यावहारिकत्वाभ्यां वैलक्षण्यं अङ्गीकुर्वता परेणपि श्रुत्या मतान्तरत्वेन स्वाप्नादिसारूप्योपन्यासस्य अस्मदुक्तरीत्यैव समर्थनीयत्वात् । सौत्रवैधर्म्योक्तेरपि आन्तरत्वबाह्यत्वाभ्यां प्रतिनियतपुरुषग्राह्यत्वतदभावाभ्यां निश्शेषसावशेषविनाशाभ्यां तात्कालिकोत्पत्तिविनाशतदभावाभ्यां च वैधर्म्यप्रतिपादनपरत्वात् इत्यलं प्रसक्तानुप्रसक्त्या ।

ननु साधकं विना ज्ञानस्य प्रामाण्ये मानाभावात् जगज्ज्ञानमात्रस्य बाधितार्थकतया अप्रामाण्ये निर्णीते तदन्यथानुपपत्त्या अन्यत्र क्लृप्तदोषस्य तत्र अनुपलब्धावपि दोषः कश्चित् कल्पनीयः, न हि दोषत्वं जातिरस्ति ? क्वचित् कश्चित् दोष इत्यभ्युपगमात् । एवञ्च जगज्ज्ञाने अप्रामाण्यस्य ज्ञानसामान्यसामग्रीमात्रप्रयोज्यत्वाभावात् न तस्य स्वतस्त्वप्रसङ्गः । बाधेन अप्रामाण्ये निर्णीते तन्निर्वाहाय ज्ञानसामान्यसामग्रीकदोषानुप्रवेशाङ्गीकारात् यदि च ज्ञानसामान्यसामग्र्या दोषविनाकृतं ज्ञानं उत्पद्यमानं अप्रमाणमेव समुत्पद्यत इत्यङ्गीक्रियेत तदैव परम्, अप्रामाण्यस्य स्वतस्त्वप्रसङ्गः । नान्यथेति चेत् । न । एवमपि जगज्ज्ञानमात्रस्य शुक्तिरूप्यादिज्ञानवत् बाधितविषयतया अप्रामाण्यावारणात् ।

**तदवारणे च प्रामाण्यायोगात् । दोषविनाकृतसामग्र्यभावेन अप्रामाण्यस्वतस्त्वानिवारणात् । अप्रमाणं प्रमाणमित्यस्य व्याहतत्वात् ।**

किञ्चैवं प्रत्यक्षानुमानादिवत् एतस्यापि बाधितार्थत्वेन अप्रामाण्यप्रसङ्गः । बौद्धाद्यागमाविशेष-प्रसङ्गश्च । न हि बाधितार्थत्वाविशेषे वेद एव प्रमाणम्, न तु बौद्धाद्यागम इति व्यवस्था सम्भवति । किञ्चैवं जैमिनिना वेदमात्रस्याप्रामाण्यकारणभ्रमादिदोषमूलकत्वनिरासाय महता यत्नेन अपौरुषेयत्व-समर्थनं कृतम् । अनेन वेदे कर्मकाण्डदेवताकाण्डयोः बाधितार्थत्वेन अप्रामाण्यम्, ब्रह्मकाण्डेऽपि उपास्यब्रह्मपरवेदान्तभागस्यैव अबाधितार्थत्वेन प्रामाण्यमिति पराङ्गीकारे किं मूलमिति न जानीमः । न हि वह्निव्याप्तो(प्यो) धूमः पक्षधर्मोऽपि सन् क्वचिद्वह्निसाधकः क्वचिन्नेति दृष्टचरम् । अन्यथा वैपरीत्यापत्तेः ।

किञ्च साधकबाधकाभावसाधारण्येन ज्ञेयब्रह्मपरवेदान्तभागस्य लक्षणया निर्विशेषब्रह्मपरत्व-मङ्गीकृत्य प्रामाण्यसमर्थनवत् कर्मकाण्डादेरपि निर्विशेषकर्मादिस्वरूपपरत्वमङ्गीकृत्य अबाधितार्थ-कत्वरूपप्रामाण्यसमर्थनस्यैव न्याय्यत्वेन तत्त्यागेन ज्ञेयब्रह्मपरवेदान्तस्यैव तथा प्रामाण्यस्वीकारो निर्मूलः । नेह नानास्ति किञ्चन एकमेवाद्वितीयमित्यादिश्रौतनिषेधविषयत्वाविशेषे ब्रह्मव्यतिरिक्तं जगदेव बाधगोचरः, न तु ब्रह्मेत्यत्र विशेषहेत्वभावेन कर्मकाण्डदेवताकाण्डयोरिव उपास्यब्रह्मपरवेदान्तस्यैव च निर्विशेषत्वेन श्रुतिप्रतिपन्नज्ञेयब्रह्मपरवेदान्तस्यापि भागशः बाधितार्थत्वेन अप्रामाण्यं तावद्वज्रलेपा-यितमिति सर्वथैव परपक्षे वेदप्रामाण्यायोगः, अप्रामाण्यापत्तिश्च । न हि इह घटे कश्चन पटो नास्ति इति निषेधः, आधारभूतघटनिषेधो भवतीत्यस्ति, न वा सविता अद्वितीय इत्युक्ते सविता द्वितीयत्वेन निषेधगोचरो नेत्यस्ति । सवितुः स्वापेक्षया द्वितीयत्वाभावेऽपि यत्किञ्चिदपेक्षया द्वितीयत्वसम्भवात् । तस्मात् परीत्या प्रत्यक्षानुमानादीनां कृत्स्नस्य वेदस्य च प्रामाण्यं दुरुपपादम् । प्रत्युत अप्रामाण्या-पत्तिरित्यस्मद्रीत्यैव च प्रामाण्यतदभावव्यवस्था वाच्या । एवञ्च जगतः सत्यत्वे कथं प्रमाणाभाव इति न जानीमः ।

किञ्च ज्ञानं प्रमारूपम् अप्रमारूपं चेति द्वैविध्यं यन्मते सम्भवति तद्रीत्यैव ज्ञानसामान्यसामग्र्यां अधिकदोषानुप्रवेशे ततोऽप्रमा, तदप्रवेशे तु ज्ञानसामान्यसामग्र्या ज्ञानं जायमानं कारणान्तरनैरपेक्ष्येण प्रमारूपमेव जायत इति प्रमात्वस्य स्वतस्त्वं अप्रामाण्यस्य तु परतस्त्वमिति व्यवस्था उपपद्यते । न ह्येवं परमते ज्ञानद्वैविध्यं सम्भवति येन उक्तव्यवस्था वादिरीत्यैव उपपद्यत इति उच्यते । किन्तु लोकवेदाभ्यां जायमानयोरुभयोरपि कल्पितविशिष्टोपहितोपलक्षितविषयतया संसर्गसङ्गिज्ञानत्वेन

तद्विषयतया भ्रमत्वशब्दिताप्रामाण्यावश्यम्भावेन तयोः ज्ञानयोः ऐकविध्यमेवापन्नमिति आगन्तुकानागन्तुकदोषयोरपि ज्ञानसामान्यसामग्र्यन्तर्गतत्वेन दोषाघटितज्ञानसामग्र्या एवासम्भवात् । लोकवेदजन्यज्ञानयोरुभयोरपि अप्रामाण्यं ज्ञानसामान्यसामग्रीमात्रप्रयोज्यं जातम् इति परमते बाह्यमत इवाप्रामाण्यस्वतस्त्वं दुर्वारम् ।

ननु ब्रह्मगतधर्ममात्रस्य सामान्यतो विशेषतश्च धर्ममात्रनिषेधस्य वैयर्थ्यमिति स्थिते प्रमाणस्वाभाव्यात् शब्दतत्संसर्गज्ञानोदयेऽपि तत्संसर्गांशे तात्पर्याभावेन तात्पर्यविषयत्वेन पर्यवसितस्याखण्डचैतन्यमात्रस्य अबाधिततया तदंशे अबाधितार्थकत्वरूपप्रामाण्यस्य दोषनिरपेक्षज्ञानसामान्यसामग्रीप्रयोज्यत्वं भवति । अत एव यत्परः शब्दः स शब्दार्थ इति वदन्ति । न हि लक्षणोक्त्यर्थं प्रवृत्तात् उद्देश्यरूपात् प्रमाणप्रमेयेत्यादिरूपात् प्रमाणसंसर्गो न प्रतीयत इत्यस्ति । किन्तु स तात्पर्यविषयोऽन्य इत्येव । अत एव व्यावृत्तकर्मातात्पर्यकलक्षणोद्देश्यकशब्दः उद्देश्यशब्दार्थ इति वदन्ति । तथाच तवाभिमतभ्रमवत् मम एकमपि ज्ञानं विषयभेदेन दोषसापेक्षज्ञानसामान्यसामग्रीजन्यम्, तन्निरपेक्षज्ञानसामान्यसामग्रीजन्यं चेति अंशभेदेन बाधितार्थकत्वरूपाप्रामाण्याबाधितार्थकत्वरूपप्रामाण्ययोः उभयोरपि परतस्त्वस्वतस्त्वे सङ्गच्छेते इति न तदर्थं ज्ञानद्वैविध्यमवश्यमङ्गीकर्तव्यमिति चेन्न ।

दत्तोत्तरत्वात् । 'नेह नानास्ति किञ्चन, एकमेवाद्वितीयम्, अलक्षणमदुःखं असुखं समं' इत्यादिना पराभिमताखण्डस्वरूपब्रह्मचैतन्यस्यापि निषिद्धत्वेन प्रपञ्चवद्बाधिततया तदंशेऽपि वेदान्तजन्यज्ञानस्य बाधितविषयत्वरूपाप्रामाण्यानिवारणात् । न हि चैतन्यं किञ्चनशब्दार्थो नेत्यस्ति । न वा द्वितीयशब्दार्थो नेति । न च लक्षणशब्देन तटस्थलक्षणमेवोच्यत इति युक्तम् । सङ्कोचकप्रमाणाभावात् । अन्यथा नेह नानास्ति किञ्चन, एकमेवाद्वितीयं, केवलो निर्गुणश्च, विभुं चिदानन्दमरूपमद्भुतम्, अस्थूलमनणु इत्यादौ किञ्चनाद्वितीयादिशब्दानां प्रातिभासिकजगद्वैषम्यनैर्घृण्यादिहेयगुणप्राकृतरूपपरिमाणपरत्वेन सङ्कोचः किं न स्यात् ।

अखण्डब्रह्मस्वरूपनिषेधे सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि सत्यत्वादिविधिवत् तद्व्यतिरिक्ताप्रातिभासिकजगत्स्वरूपनिषेधेऽपि ऐतदात्म्यमिदं सर्वम्, तत्सत्यम्, विश्वं सत्यम्, यच्चिकेत सत्यमित् तन्न मोघम्, याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः, सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये, सत्यकर्माणमूतये इत्यादितत्सत्यत्वविधिविरोधिसत्त्वतौल्यात् अध्यारोपापवादन्यायेन एतादृशश्रुतयः तत्सत्यत्वनिषेधाय तदनुवदन्ति इति चेत् ।

तर्हि सत्यं ज्ञानमनन्तं इत्यादिश्रुतिरपि तथा अलक्षणमित्यादिनिषेधाय ब्रह्मसत्यत्वादिवादिनीति वाचाटवचसोऽवकाशप्रसङ्गात्, ब्रह्मसत्यत्वस्य मानान्तरेण अप्राप्तिरिति साम्यात् । किञ्च यस्मिन् द्यौः

पृथिवी चान्तरिक्षम् इत्यादिश्रुत्यैव ब्रह्मणि द्युभ्वाद्यायतनत्वादेः प्राप्तत्वेन मानान्तरेण अप्राप्ततया नेह नानेत्यादिना किञ्चनादिशब्दैरनूद्य निषेधः सर्वथा अयुक्तः । अन्यथा, अतिरात्रे षोडशिनं गृह्णातीत्यस्य षोडशिग्रहणानुवादित्वं नातिरात्रे षोडशिनं गृह्णातीत्यस्य तन्निषेधत्वं च किन्न स्यात् । विशेषहेत्व-भावात् । विस्तृतं चैतदन्यत्र ॥

अपि च लोकवेदजन्यज्ञानमात्रस्योक्तरीत्या प्रमाप्रमोभयरूपत्वस्वीकारः परकीयोऽनुपपन्नः । शुक्तिरूप्यादिज्ञानस्य भ्रमत्वेनानुभवस्योभयसम्प्रतिपन्नस्यापि प्रमात्वाप्रमात्वप्रसङ्गात् । तस्यापि शुक्तिरूप्यादिकमस्तीत्यबाधिताधिष्ठानभूतचैतन्यविषयत्वात् । ज्ञानमात्रस्योभयरूपत्वे तत्कारणी-भूतप्रत्यक्षानुमानादीनां प्रमाणत्वेनैव तान्त्रिकसम्प्रतिपत्तिर्निर्मूला च स्यात् । ''सर्वप्रत्ययवेद्ये च ब्रह्म-रूपे व्यवस्थित' इति पराभ्युपगमात् । भ्रमस्य विसंवादिप्रवृत्तिजनकत्वनियमात् ।

ननु बाध्यविषयत्वेनाभिमतत्वा(भ्रमत्वा)विशेषेऽपि प्रातिभासिकव्यावहारिकविषयविषयकत्वेन ज्ञानयोः विसंवादिसंवादिप्रवृत्तिजनकत्वमुपपद्यत इति चेन्न ।

व्यावहारिकत्वस्य दीर्घकालीनभ्रमविषयत्वातिरिक्तस्य दुर्वचत्वात् । ब्रह्मज्ञानमात्रबाध्यत्वानाग-न्तुकदोषजन्यत्वादिना तस्य सुवचत्वेऽपि, तावन्मात्रेण नियमेन संवादिप्रवृत्तिमात्रजनकत्वानिर्वाहात् । अन्यथा दीर्घकालानुवृत्तशक्तिरूप्यादिभ्रमतोऽपि तथा तादृशप्रवृत्तिजनकत्वप्रसङ्गात् । तस्मात् लोक-वेदजन्यज्ञानयोः नियमेन संवादिप्रवृत्तिजनकतया प्रमारूपत्वमेव न त्वप्रमारूपत्वमपि । शुक्तिरूप्यादि-ज्ञानस्य अप्रमारूपत्वमेव, नियमेन विसंवादिप्रवृत्तिजनकत्वात् इत्येव तत्त्वम् । वेदजन्यज्ञानात् यथा प्रवृत्तिसंवादो दृष्टचरः तथा इष्टापूर्तादौ बहुवित्तव्ययायाससाध्ये नियमेन प्रेक्षावतां निष्कम्पप्रवृत्तेः तत्संवादोऽप्यवश्यं कल्पनीय इति न किञ्चिदनुपपन्नम् ।

किञ्च 'तं बृहस्पतिरुदयाजयत् ततोऽजयत् (यजत्) स स्वाराज्यमगच्छत् तमिन्द्रो बली तु मामनेन याजयेत्, तेनेन्द्रमयाजयत् सोऽग्रं देवतानामपर्येत् अगच्छत् स्वाराज्यम्' इत्यादिश्रुत्यैव तत्तत्कर्मफलश्रुत्यैव फलपर्यन्तप्रवृत्तिसंवादः प्रतिपाद्यत इति । एवञ्च प्रमाणतदाभासव्यवस्था सर्व-सम्प्रतिपन्नापि समर्थिता भवति । अन्यथा प्रवृत्तिवैचित्र्येऽपि तत्प्रयोजकत्वेन प्रमात्वाप्रमात्वरूप-विलक्षणधर्मानङ्गीकारे ज्ञानमात्रम् अप्रमेत्यस्य, यू स्त्र्याख्यौ नदी इत्यादिवत् परिभाषामात्रत्वप्रसङ्गात् । तथाच प्रमात्वं विषयसत्त्वघटितमूर्तिकं आपतितम् इति कथं जगतः सत्त्वमप्रामाणिकमिति न जानीमः ।

एतेन विशिष्टाकारगोचरज्ञानमात्रं भ्रमः बाधितविषयत्वात्, अखण्डार्थनिष्ठवेदान्तजन्यनिष्प्रकारकज्ञानमेव प्रमा अतथात्वात् (बाधितविषयत्वाभावात्) तथाच ज्ञानद्वैविध्यमपि अविशिष्टम्। एवञ्च प्रामाण्याप्रामाण्ययोः स्वतस्त्वपरतस्त्वे अप्युपपन्ने। न च ज्ञेयब्रह्मनिष्ठवेदान्तात् निष्प्रकारकज्ञानाङ्गीकारे मानाभावः। शब्दानुमानयोः सप्रकारकज्ञानैकपरत्वस्वाभाव्यात्। अन्यथा स्वभावव्याकोपापत्तिरिति वाच्यम्। 'तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुरिति, तमेवं विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इत्यादिसावधारणश्रुतेरेव तत्र मानत्वेन शब्दमात्रस्य तथाविधस्वभावासिद्धेः। अवधारणेन मोक्षसाधनभूते ज्ञाने ब्रह्मव्यतिरिक्तविषयत्ववारणात्। अत एवान्या वाचो विमुञ्चथ इति नान्यः पन्था इति वाक्यशेषः। तथाच वेदान्तजन्यं ज्ञानम् अखण्डचैतन्यमात्रविषयतया आपतितं निष्प्रकारकमेव पर्यवस्यतीति निरस्तम्।

'तमेवं विद्वान् अमृत इह भवति' इत्यादिश्रुत्या एवंशब्दघटिततया सप्रकारकज्ञानस्यैव मुक्तिसाधनत्वावेदनेन तदविरोधाय अवधारणस्य भिन्नक्रमतायाः वक्तव्यत्वात्। न चैवं वाक्यशेषविरोधः। (तत्र व्यवच्छेदार्थतया) मोक्षसाधनीभूतब्रह्मज्ञाने ब्रह्मेतरपदार्थस्य प्रकारतयैव विषयत्वप्रापणेन अविरोधात्। अत एव 'तमेवैकं जानथ तमेवं विदित्वा, तमेवं विद्वान्, तद्विजिज्ञासस्व दृश्यते त्वग्र्यया बुद्ध्या' इत्यादौ मोक्षसाधनज्ञाने ब्रह्मणः प्राधान्येन प्रकारित्वेनैव (धर्मित्वेन) विषयत्वमिति व्यवस्थापयितुं कर्मणिप्रत्ययाः। तस्मात् वेदान्तान्निष्प्रकारकज्ञाने नोदाहृतश्रुतयो मानम्।

किञ्च मोक्षसाधनीभूतज्ञानस्य निष्प्रपञ्चकत्वे (निष्प्रकारकत्वे) यतो वा इमानि भूतानि जायन्ते यस्सर्वज्ञः सर्ववित्, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, एष नित्यो महिमा ब्राह्मणस्य, सत्यः सो अस्य महिमा, य आत्मा अपहतपाप्मा विजरो विमृत्युः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः, इत्यादिब्रह्म(णो)जगत्कारणत्वादिप्रतिपादकानां वैयर्थ्यप्रसङ्गः। ब्रह्मविदाप्नोतिपरमित्यादिश्रुत्या ब्रह्मज्ञानस्य मोक्षसाधनत्वे विहिते केन रूपेण ब्रह्मज्ञानं मोक्षसाधनम् इत्याकाङ्क्षायां तत्प्रकारप्रदर्शनार्थं तासां श्रुतीनां प्रवृत्तेः। अत एव सहस्रशीर्षा पुरुष इत्यादौ सहस्रशीर्षत्वादिधर्मान् प्रतिपाद्य तमेवं विद्वान् अमृत इह भवतीति ब्रह्मकर्मक(प्रमिरूप)मोक्षसाधने ज्ञाने तद्धर्माणां प्रकारत्वेन उपयोगं वक्तुं तत्र एवंशब्दः प्रकारवाची। न च उपासनार्थमेव वेदे सहस्रशीर्षत्वादिधर्माणामुपन्यासः, न तु ज्ञानार्थमिति युक्तम्। 'तमेवं विद्वान् तद्विजिज्ञासस्व स विजिज्ञासितव्यः' इत्याद्युक्तेः विरोधप्रसङ्गात्। न हि वेदे ज्ञानार्थत्वे विवादोऽस्ति। ब्रह्मधर्मप्रतिपादकानेकश्रुतिवाक्यवैयर्थ्याङ्गीकारापेक्षया तमेवैकं जानथ आत्मानमित्यादिश्रुतावधारणमात्रस्य भिन्नक्रम(त्व)स्यैव उचितत्वात्।

किञ्च सप्रकारकज्ञानस्य मोक्षं प्रत्यनुपायत्वे ब्रह्मविदाप्नोति परमिति ब्रह्मज्ञानस्य परप्राप्तिसाधनत्वमुक्त्वा किंप्रकारकं ब्रह्मज्ञानं मोक्षोपाय इत्याकाङ्क्षायां यो वेद निहितं गुहायामिति गुहानिहितत्वप्रकारप्रतिपादनं न स्यात् ।

अपिच उक्तरीत्या परेण वेदान्तवाक्यात् निष्प्रकारकज्ञानोदयस्वीकारेऽपि न तस्य उत्पत्तिज्ञप्त्योः प्रामाण्यस्वतस्त्वोपपादकत्वं सम्भवति । तान्त्रिकाणां च तद्वति तत्प्रकारकत्वतद्वतितद्वैशिष्ट्यावगाहि-(ज्ञान)त्वरूपप्रामाण्यस्यैव निष्कम्पप्रवृत्तिप्रयोजकस्य स्वतस्त्वपरतस्त्वाभ्यां विवादविषयत्वाङ्गीकारात् । न हि निष्प्रकारक(ब्रह्म)ज्ञाने तद्वतितत्प्रकारकज्ञानत्वादिकं प्रामाण्यं सम्भवति । विशेष्यावृत्त्यप्रकारकज्ञानत्वादिरूपप्रामाण्यस्य सम्भवेऽपि (तस्य) स्वतस्त्वपरतस्त्वाभ्यां विवादाविषयत्वात् ।

किञ्च वेदान्तवाक्यात् आकाङ्क्षादिमतः प्रथमं सविकल्पोदयानन्तरं किं निर्विकल्पोदयः स्वीक्रियते किं वा ततः प्रागेव श्रुतमात्रात् तस्मात् । नाद्यः । सविकल्पकज्ञानस्य स्वसमानजातीयविशिष्टज्ञानान्तरसामग्रीत्वेन तदनन्तरं निष्प्रकारकज्ञानसामग्रीबाधेन बाधितत्वात् । न द्वितीयः । श्रवणादिकं विनापि श्रुतमात्रात् वेदान्तादेव मोक्षसाधनीभूतनिष्प्रकारकब्रह्मज्ञानसम्भवेन श्रवणमननाद्यनुसरणवैयर्थ्यात् । न हि अध्ययनकाले प्राक् सङ्गतिग्रहात्, प्राक् च आकाङ्क्षादिज्ञानात् ज्ञेयब्रह्मनिष्ठवेदान्तानां अध्येतुः ब्रह्म श्रवणपथं (न) गच्छतीत्यस्ति ।

किञ्चैवं न ज्ञेयब्रह्मपरवेदान्तात् प्रथमं निर्विकल्पकज्ञानोदयः सम्भवति । मीमांसातः पूर्वं लक्षणाकल्पनाद्यभावात् । किञ्चैवं व्याप्त्याद्यनुसन्धानाभावकाले दृष्टमात्रात् धूमादिलिङ्गादपि विशिष्टानुमितेः प्राक् निष्प्रकारकवह्न्यादिगोचरानुमितिरपि किं न स्वीकार्या, विशेषहेत्वभावात्; अनुमानस्य विशिष्टज्ञानैकफलकत्वस्वाभाव्यात् तदस्वीकारस्तु तत एव शब्दस्यापि समः ।

किञ्च घटादौ प्रत्यक्षेण निर्विकल्पकज्ञानमुत्पद्यत इति स्वीकारः विशिष्टज्ञानसामग्रीत्वेनैव क्लृप्त इति वेदान्तात् निर्विकल्पकमुत्पद्यमानं विशिष्टज्ञानसामग्रीत्वेनैव स्वीकर्तुमुचितम्, न तु संसारापादकाज्ञाननिवृत्तिहेतुत्वेन । तथा (सति) क्लृप्तहानाक्लृप्तकल्पने प्रयोज्येते, न हि निष्प्रकारकज्ञानादज्ञाननिवृत्तिः क्वापि दृष्टचरी । प्रत्युत इयं शुक्तिरेव न तु रजतं इति सप्रकारकज्ञानादेव सा दृष्टा ।

ननु ब्रह्मणि तदितरस्य सर्वस्य श्रुत्यैव प्रसज्य निषेधात् तयैव श्रुत्या पुनः स्वनिषिद्धतदितरवैशिष्ट्यस्य बोधने तस्या असदर्थकत्वेन अप्रामाण्यं प्रसज्यत इति श्रुतेः तदबोधकत्वं वेदप्रामाण्यवादिना सर्वेणापि स्वीकार्यम् । सर्वथा बाधकत्वे च अप्रामाण्यमेवापतितमिति निष्प्रकारकज्ञानमेव वाच्यम् । प्रकारान्तरेण तदसम्भवादिति चेन्न । तथापि ब्रह्मणि वेदान्तानां तदितरसर्वनिषेधवैशिष्ट्य-

बोधकत्वविशिष्टतया तज्जन्यज्ञानस्य निष्प्रकारकत्वानुपपत्तेः। तद्वैशिष्ट्यबोधे तात्पर्याभावे च ब्रह्मणि श्रुतिविहितस्य सर्वस्य ब्रह्मवत् पारमार्थिकत्वापत्तेः।

एतेन ब्रह्मणि वियदादिप्रपञ्चनिषेधस्य गुणकर्मादिनिषेधस्य च अखण्डब्रह्ममात्रत्वेन तदावेदक-श्रुतीनां तन्मात्रप्रकारकबोधाजनकत्वेन अखण्डार्थत्वं अबाधितार्थतया प्रामाण्यं चोपपद्यते। ब्रह्मज्ञानस्य निष्प्रकारकत्वमपि ईदृशमेवास्माकमभिमतमिति निरस्तम्।

निषेधस्य अखण्डचिन्मात्रत्वाङ्गीकारे तस्य निर्विशेषत्वेन निषेधत्वानुपपत्तेः। निषेधत्ववत एव निषेधरूपत्वात्। निषेधरूपस्य त्रैकालिकात्यन्ताभावरूपतया विशेषत्वे तस्य तद्वत्त्वाङ्गीकारे निर्वि-शेषत्वस्यापि विशेषत्वेन तद्वत्त्वे निर्विशेषत्वानुपपत्तेश्च। प्रपञ्चनिषेधस्य ब्रह्ममात्रपरत्वे मानाभावाच्च। तत्राद्वैतश्रुतिरेव मानमिति चेत्। तथासति जगन्निषेधवत् तन्निवृत्तिरपि तन्मात्ररूपा स्यात्। न चेष्टा-पत्तिः। निषेधनिवृत्त्योरुभयोरपि इदानीमिव प्रपञ्चरूपप्रतियोगिसहिष्णुत्वेन उत्तरकालेऽपि तत्सहिष्णु-तया निषेधनिवृत्तिशब्दयोः संज्ञामात्रत्वापातात्। अविद्यानिवृत्तेरपि तन्मात्रत्वेनासाध्यतया निर्वि-कल्पकरूपस्यापि ब्रह्मज्ञानस्य तदुपायत्वायोगेन वेदान्तश्रवणादिना तत्साधनस्य वैयर्थ्यात्। अविद्या-निवृत्तेरनाद्यनन्तचिन्मात्ररूपत्वाङ्गीकारे भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतिविरोधश्च स्यात्। काल-विशेष एव तथाज्ञानात् तन्निवृत्तिरिति प्रतिपादनात्। सर्वाद्वैतवादे पूर्वकाल इवेदानींकाल इव चोत्तर-त्रापि ब्रह्मणः सकाशादुत्पत्तिस्थितिलयवत्तया जगतः प्रवाहाङ्गीकारप्रसङ्गेन प्रवाहतोऽनादित्वं प्रवाहतो-ऽनन्तत्वमपि स्वीकृतं स्यादिति, किमद्वैतवादिनाधिकमाचरितमिति न जानीमः।

तस्मात्परपक्षे श्रवणादिसाध्यपराभिमतब्रह्मज्ञानस्य निष्प्रकारकस्यापि निष्फलत्वात्तत्सामग्र्य-निरूपणाच्चासम्भव इति स्थिते, सप्रकारकवेदान्तजन्यज्ञानस्य च प्रत्यक्षादिजन्यज्ञानवत् कर्मकाण्डा-दिजन्यज्ञानवच्च बाधितविषयत्वेनाप्रामाण्यमेवापतितमित्युक्तरीत्या बाह्यमत इवागन्तुकानागन्तुक-दोषत्वेनाभिमतज्ञानकारणमपि ज्ञानसामान्यसामग्र्यनुप्रविष्टत्वेन प्रमाप्रमाभेदेन ज्ञानद्वैविध्यासम्भवेन च प्रमाणत्वाभिमतं यच्च यावच्च तज्जन्यं ज्ञानं सर्वमप्येकविधमेवापन्नमिति परमतेऽप्यप्रामाण्यस्य स्वतस्त्वं प्राप्तमिति सिद्धम्। ततश्च प्रामाण्यं स्वत इति तु तदीयं वाचो रिक्तमेवेति दिक्॥

पारमार्थिकत्वातिरिक्तजगन्निषेधनिवृत्त्योरङ्गीकारे तु यद्यप्युक्तदोषाः कतिचित्परपक्षे परिहृता भवन्ति। तथाप्यद्वैतश्रुतिविरोधस्तदवस्थः। निषेधस्य पारमार्थिकस्य द्वितीयस्याङ्गीकारात्। ब्रह्मेतर-सर्वनिषेधश्रुतिजन्यज्ञानस्य ब्रह्मणि (तद्विशिष्ट)तद्वैशिष्ट्यावगाहितया संसर्गसङ्गिसखण्डार्थत्वप्रसङ्गश्च। संसर्गसङ्गिसम्यग्धीहेतुत्वस्यैव गिरां सखण्डार्थत्वात्। निषेधश्रुतीनां तदतिरिक्तविषयत्वेन सङ्कोचे च

प्रत्यक्षादिप्रमाणप्रतिपन्नवियदादिप्रपञ्चातिरिक्तप्रातिभासिकप्रपञ्चविषयत्वेन तासां सङ्कोचः किं नाश्रयितव्यः । बाधके सति तदतिरिक्तविषयत्वेन सङ्कोचस्य न्यायप्राप्तत्वात्, तथाच औत्सर्गिकज्ञानप्रामाण्यस्वतस्त्वनिर्वाहाय प्रत्यक्षादिप्रमाणसिद्धघटपटादिजगत्सत्यत्वनिरसनं दुष्करमिति जगत्सत्यत्वे प्रमाणाभावोऽसिद्ध इति स्थितम् ।

किञ्च ब्रह्मणि स्वेतरसर्वनिषेधश्रुतीनाम् अप्रसक्तप्रतिषेधपरत्वप्रसङ्गः । श्रुत्यन्यप्रमाणेन ब्रह्मणि तत्प्राप्त्यभावात् । श्रुत्यैव तत्प्राप्त्यङ्गीकारे च श्रुत्यैव प्राप्तस्य तयैव तन्निषेधाङ्गीकारापत्तेः । न चैवम्, श्रुतिविहितस्य षोडशिग्रहणादेरपि श्रुत्यैव स्वरूपेण निषेधाङ्गीकारप्रसङ्गात्, अविशेषात् प्रपञ्चविधिनिषेधयोरिव षोडशिग्रहणतन्निषेधयोरपि अव्यवस्थितविषयत्वेन प्रामाण्योपपादनसम्भवेन व्यवस्थितविषयत्वेन तत्प्रामाण्योपपादनकारणानुपपत्तेः ।

ननु व्यवस्थितविषयत्वेन तुल्यवत् प्रामाण्योपपादनस्य सम्भवेन प्रतियोगिसमर्पकत्वमात्रेण तदुपपादनमन्याय्यम् । अबाधेनैवोपपत्तौ बाधस्यान्याय्यत्वादिति चेत् ।

ब्रह्मणि ब्रह्मेतरविधिनिषेधश्रुत्योरपि व्यवस्थितविषयत्वेन तुल्यवत् प्रामाण्योपपादनापत्तेः । तत्र तथोपपादनं न सम्भवतीति चेत् एकस्मिन्नेव वृक्षे संयोगतदभावग्राहकप्रमाणयोः अवच्छेदकभेदेन, एकस्मिन्नेव द्रव्ये पाकेन रक्तमुत्पन्नं नीलं नष्टमिति उत्पादविनाशग्राहकप्रमाणयोः तत्तद्रूपविशेषविषयत्वेन, एकस्मिन्नेव देशे तथैव एकस्मिन्नेव काले घटादिसत्त्वतदभावाग्राहकप्रमाणयोः जगदाधारताप्रयोजकसम्बन्धेनैव, एकस्मिन्नेव भूतले संयोगेन घटवति समवायेन तद्रहिते तत्सत्त्वतदभावग्राहकप्रमाणयोः सम्बन्धभेदेनैव, एकस्मिन्नेव देवदत्ते अत्र दण्डी पुरुषोऽस्ति, तत्र स नास्तीति तदस्तित्वनास्तित्वग्राहकप्रमाणयोः विशेषणीभूतदण्डासत्त्वादिनेव च ब्रह्मणि तदितरविधिनिषेधश्रुत्योरपि अवच्छेदकभेदादिना तुल्यवत्प्रामाण्योपपादनसम्भवेन श्रुतेः प्रमाणान्तरप्राप्तानुवादित्वमङ्गीकृत्य निषेधार्थत्वोक्तेरनुचितत्वात् । अपूर्वतालक्षणतात्पर्यलिङ्गस्य सर्वत्राविशेषेऽपि निषेध एव श्रुतितात्पर्यगोचरः विधानं तु न तथेति स्वीकारायोगाच्च । ब्रह्मणो निरंशत्वेऽपि तत्र ज्ञानतदभावयोरिव ब्रह्मेतरसर्वसत्त्वतदभावयोरसम्भवेन ज्ञानतदभावयोः ग्राहकप्रमाणयोरिव ब्रह्मणि तदितरसत्त्वतदभावग्राहकप्रमाणयोरपि तुल्यवत् प्रामाण्योपपत्तेश्च । अपरिच्छिन्ने ब्रह्मणि परिच्छिन्नाविद्यावच्छेदेन तदितरसर्वप्रपञ्चः, तदनवच्छेदेन तदत्यन्ताभाव इति तदुभयोपपत्तेः । 'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।' इत्यादिश्रुतिस्मृतिपर्यालोचनया दिक्कालयोरिव ब्रह्मणोऽपि जगदाधारताऽवगमात् । ब्रह्मणि तदितरसत्त्वनिषेधश्रुत्योः

जगदाधारताप्रयोजकसम्बन्धेन तूभयसत्त्वविषयत्वोपपत्त्या निषेधश्रुतेः अबाधकत्वोपपत्तिमात्रनिषेध्य-लाभेन अवयवसामान्याभावासिद्ध्या तस्मात्तस्यावयवभूतेन 'व्याप्तं सर्वमिदं जगत्', 'पादोऽस्य विश्वा भूतानि' इत्यादिश्रुतिप्रतिपन्नावयवरूपावच्छेदकभेदसत्त्वाच्च । न तत्समश्चाभ्यधिकश्च दृश्यते, तस्माद्धान्यन्न परः किञ्च नास, नान्यत्किञ्चन मिषत्, मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय इति श्रुतिस्मृति-पर्यालोचनया ब्रह्मणि तदितरनिषेधस्मृतेः तत्समत्वतदधिकत्वविषयत्वमित्यादिधर्मविशिष्टनिषेधस्य च सविशेषणे हीति न्यायेन उदाहृतश्रुत्याप्यविरोधेन विशेषणमात्रविषयत्वोपपत्तेश्च । न चैवं निषेध्य-समर्पकपदानामुक्तधर्मविशिष्टे लक्षणा स्यादिति वाच्यम् । इष्टापादनात् । न च लक्षणायां मानाभावः । नित्यनिर्दोषश्रुतिविहितस्य सर्वथानिषेधायोगस्यैव तत्र मानत्वात् । विरोधिप्रमाणसद्भावे सामान्यतो निषेधस्य 'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः' इत्यादौ दृष्टविरोधपरिहाराय 'रूपात् प्रायात्, दूरभूय-स्त्वात्' (जै.सू.अ. १, पा. २, सू. ११-१२) इत्यादिना भगवता जैमिनिना दृशेः भूम्ना दर्शनरूप-विशिष्टवत्त्वं लक्षणया स्वीकृत्य न तन्निषेध इत्यङ्गीकारात् ।

किञ्च निषेधश्रुतीनां ब्रह्मेतरसर्वबाधकत्वं सर्वथा अनुपपन्नम् । बाधकत्वं हि बाध्यत्वाभिमतं यदधिकरणत्वेन प्रतिपन्नं तदधिकरणनिष्ठतदत्यन्ताभावप्रत्यायकत्वेनैव निर्वाह्यम् ।

न चैतत् परमते सम्भवति । अत्यन्ताभावस्य चिन्मात्रत्वेन स्वीकृतस्य तदाश्रितत्वासम्भवात् । मानान्तराभावाच्च । अखण्डचिन्मात्रस्य वेदैकसमधिगम्यत्वात् । वेदान्तानामखण्डचिन्मात्रपरत्वेन तादृशचैतन्ये तदितरात्यन्ताभाववैशिष्ट्यपरत्वे अखण्डार्थत्वक्षतेः, अद्वैतक्षतेश्च । भावैकस्वभावस्य चिन्मात्रस्य स्वेतरसकलश्रुतिप्रतियोगिकात्यन्ताभावरूपत्वानुपपत्तेश्च । अभावत्वात्यन्ताभावत्वरूप-धर्मवत्तया सविशेषत्वापत्तेश्च । तद्रहितत्वे च तन्नाममात्रत्वापत्तेः । सर्वदा स्वेतरसकलप्रपञ्चरूप-प्रतियोगिसहिष्णुत्वात् असङ्गत्वश्रुतिविरोधेन अत्यन्ताभावस्य चैतन्यविशिष्टत्वाङ्गीकाराच्च ।

किञ्च अद्वैतश्रुत्यविरोधाय प्रपञ्चनिषेधस्य च चैतन्यमात्ररूपत्वाङ्गीकारे तन्निवृत्तेः तत्प्रतियोगि-कान्योन्याभावस्य च तद्रूपत्वं किं नाङ्गीकार्यम् । तन्निषेधाश्रयणत्वे नेह नानेतिवत् तदाश्रयत्वे तरति शोकमात्मवित्, अन्यदेव तद्विदितात् इत्यादिश्रुतेः सत्त्वात् । किञ्च तत्त्वमसि अयमात्मा ब्रह्मेतिवत् ऐतदात्म्यमिदं सर्वं स एवेदं सर्वं ब्रह्मैवेदं सर्वं आत्मैवेदं सर्वमिति श्रुतिसत्त्वात् जीवब्रह्माभेदवत् सर्वभेदोऽपि किं नाङ्गीकार्यः । अद्वैतश्रुत्यविरोधस्य क्वचिदभेदे सामानाधिकरण्यम्, क्वचिद्बाधाय असामानाधिकरण्यमिति वैरूप्याश्रयणेन उपपादनापेक्षया अवैरूप्येणैव तदुपपादनस्य न्याय्यत्वात् । जडाजडयोरभेदो न सम्भवतीत्यस्य शुष्कयुक्तिमात्रत्वेन नित्यनिर्दोषाद्वैतश्रुत्यपरिपन्थित्वात् । तत्त्व-

मसीत्यादिजीवब्रह्माभेदपरश्रुत्यपेक्षया स एवेदं सर्वमित्यादिश्रुतेः सावधारणत्वेन प्रबलतया सैव श्रुतिःभेदे सामानाधिकरण्यपरा तत्त्वमसीत्यादिश्रुतिस्तु बाधायां सामानाधिकरण्यपरेति वैपरीत्यापत्तेश्च । एवञ्च नान्योऽतोऽस्ति द्रष्टेत्यादिद्रष्ट्रन्तरनिषेधिका श्रुतिरनुकूलिता भवति । एवमतोऽन्यदार्तमिति श्रुतिरपि ।

किञ्च प्रत्यक्षादिविरोधस्यानादरणीयत्वात् नित्यनिर्दोषाद्वैतश्रुत्या तत्त्वमादिपदमुख्यार्थभेद एव किं न स्वीकार्यः । न चैवं मुख्यार्थभेदपरत्वे ब्रह्मणो निर्विशेषत्वभङ्गप्रसङ्गः । तत्तद्विशेषाणामपि स एवेदं सर्वमित्यादिसावधारणश्रुत्या ब्रह्मात्यन्ताभेदावेदनेन निर्विशेषत्वाक्षतेः । तदतिरिक्तविशेषाङ्गीकार एव तद्विरोध इति दिक् ।

अपि च अस्तु ब्रह्मेतरस्य सर्वस्य श्रुत्या ब्रह्मणि निषेधः, स्वदेशकालयोस्तु तस्य केन निषेधः ? न हि निषेधश्रुतेः तत्रापि निषेधव्यापारं पश्यामः । न च ब्रह्मणो जगदुपादानत्वात्तत्रैव तदवस्थानात्तत्र च तन्निषेधे तस्य बाध्यत्वं निष्प्रत्यूहमापतितमिति वाच्यम् । तथापि अनाद्यविद्यादिकं प्रति तस्यानुपादानतया ब्रह्मण्यनिषेध्यत्वेन अविद्यादेरबाध्यत्वप्रसङ्गनादवस्थ्यात् ।

अपि च 'मायां तु प्रकृतिं विद्यात्, अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' इत्यादिश्रुत्या ब्रह्मण एव अविद्याया अपि जगदुपादानत्वावेदनाद्वियदादिप्रपञ्चस्य नेह नानेत्यादिश्रुत्या ब्रह्मणि निषेधेऽपि अविद्यायामनिषेधात् प्रपञ्चस्याबाध्यत्वं दुर्वारम् । एवं देशकालयोरप्यनिषेधात् तदबाध्यत्वं निष्प्रत्यूहम् । न हीदानीं घटः, अत्र भूतले घट इत्याद्यबाधितप्रतीत्या घटादेर्देशकालौ न सिध्यत इत्यस्ति ।

किञ्च संयुक्तमेतत्क्षरमक्षरं च, व्यक्ताव्यक्तं भरते विश्वमीशः, मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव इत्यादिश्रुतिस्मृतिभिर्वियदादिप्रपञ्चस्य ब्रह्मणि संयोगवर्णनान्न तस्य जगदुपादानत्वं युज्यते । उपादानोपादेययोः संयोगस्य क्वाप्यदर्शनात् । अत एव तत्र अध्यासिकः सम्बन्ध इति प्रत्यूढः ।

अपि च जगतः सत्यब्रह्मोपादानकत्वे जगदपि सत्यं स्यात् । उपादेयस्य उपादानस्वभाववत्त्वनियमात् । न चैवं, ब्रह्मवत्तस्याबाध्यत्वप्रसङ्गात् । इष्यते च त्वया तद्बाध्यत्वमिति । अपि च न वियदादिः बाध्यत्वं सोढुमर्हति । शुक्तिरूप्यादेरिव सार्वत्रिकनिषेधप्रतियोगित्वे एव बाध्यत्वं स्यान्न त्वन्यथा, देशकालविशेषे सतः ततोऽन्यत्र विद्यमाननिषेधप्रतियोगित्वेऽपीदं बाधितमिति प्रतीतिव्यवहारयोरभावात् ।

किञ्च ज्योतिष्टोमाद्युपाधौ स्वर्गादिसाधनत्वादेः श्रुतिप्रतिपन्नस्यागम्यागमनाद्युपाधौ नरकसाधनत्वस्य श्रुतिप्रतिपन्नस्य केनापि प्रमाणेनानिषेधात्तस्याबाध्यत्वं दुष्परिहरम्। सर्वस्य ब्रह्मणि निषेध्यत्वेन सर्वान्तर्गतस्य स्वर्गसाधनत्वादेर्ब्रह्मणि श्रुत्या निषेधेऽपि ज्योतिष्टोमादौ तस्यानिषेधात्। अयमेव न्यायः प्रपञ्चासाधारणधर्मेषु सर्वेष्वप्यनुसन्धेयः। तस्माद्धीमात्रं प्रमितिमात्रं वा यथा न बाधस्तथा निषेध्यत्वेन धीमात्रं वा प्रमितिमात्रं वा न बाधः। तत्सत्त्वेऽपि तत्प्रतीतिव्यवहारयोरभावात्। नापि संयोगदेशे उपादानदेशे वा निषेध्यत्वेन धीः प्रमितिर्वा। गुणकर्मादेः संयोगदेशाभावात्। सत्तादिपरापरजातेरनाद्यविद्यादेश्च उपादानदेशाभावात्। घटादेश्च संयोगदेशे समवायसम्बन्धेन, उपादानदेशे संयोगादिसम्बन्धित्वेन प्रतीतेः प्रमितेश्च सत्त्वेन तयोरबाधात्। न हि तत्सत्त्वमात्रेण तत्र बाध्यत्वप्रतीतिव्यवहारौ दृष्टचरौ। तादात्म्यारोपानन्तरं नेदं रजतं किन्तु शुक्तिरेवेयमिति प्रतीत्या अध्यस्तादधिष्ठानस्य भिन्नत्वधिय एव बाधत्वानपायेन तत्राव्याप्तेश्च। अङ्गुल्यवष्टब्धचक्षुषा चन्द्रदीपादौ भेदाध्यासानन्तरं तत्राभेदधिय एव बाधत्वोपलम्भाच्च। नेह नानास्ति किञ्चनेति श्रुत्यनुसारेण अन्यदेव तद्विदितादित्यादि श्रुत्यनुसारेण च परेण, यस्मिन् द्यौः इत्यादिश्रुतेः 'स एवेदं सर्वम्' इत्यादिश्रुतेश्च संसर्गतादात्म्यरूपसम्बन्धाभ्यां ब्रह्मणि वियदादिप्रपञ्चप्रसञ्जनस्योपेयत्वाच्च। नापि प्रतिपत्तिविषयीभूतसकलसम्बन्धेन स्वरूपेण सार्वत्रिकत्रैकालिकनिषेधे प्रतियोगित्वेन धीप्रमितिर्बाधः। ब्रह्मणोऽपि बाध्यत्वप्रसङ्गात्। आकाशवत्सर्वगतश्च नित्यः, यच्च किञ्चित् जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः, स एवाधस्तात्, इत्यादिश्रुतिपर्यालोचनया अदृश्ये अनात्म्ये अनिरुक्ते अनिलयने अभयं प्रतिष्ठां विन्दते, असङ्गो ह्ययं पुरुष इत्यादिश्रुतिपर्यालोचनया, स्वे महिम्नि प्रतिष्ठित इत्यादिश्रुतिपर्यालोचनया, अलक्षणमितिश्रुतिपर्यालोचनया च तस्मिन्नपि तथाविधनिषेधप्रतियोगित्वधीलाभात्। तथाविधप्रमितेरपि लाभाच्च। नाप्यन्यथाज्ञातस्य[1] सम्यग्विज्ञातत्वं बाधः। तत एव तद्धैक आहुः। असदेवेदमग्र आसीत् इति शून्यवादिमतानुवादिश्रुत्या असत्त्वेन अन्यथाज्ञातस्य जगत्कारणस्य ब्रह्मणः कथमसतः सज्जायेत इति श्रुत्या सत्कार्यं प्रति कारणत्वान्यथानुपपत्तिप्रदर्शनमुखेन सत्त्वेन सम्यग्विज्ञातत्वलाभात्। शुक्त्यादेरपि प्राग्विशेषदर्शनाद्रजतात्मना ज्ञातस्य विशेषदर्शनानन्तरं नेदं रजतम्, किन्तु शुक्तिरित्यादिप्रत्यक्षेण रजतत्वाद्यभाववत्तया शुक्तित्वादिना सम्यग्विज्ञातत्वात्। न हि ब्रह्म वा शुक्त्यादिर्वा बाध्यत्वेन त्वयेष्यते। बाधावधेरधिष्ठानत्वेन अबाध्यत्वोपगमात्। नापि अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाध इति विवरणरीत्या,

१. नापीत्यादि – मायावादिमतरीत्या एवं वक्तुं न शक्यम्। स्वमतरीत्या तु एतत्सम्भवति।

मसीत्यादिजीवब्रह्माभेदपरश्रुत्यपेक्षया स एवेदं सर्वमित्यादिश्रुतेः सावधारणत्वेन प्रबलतया सैव श्रुति-र्भेदे सामानाधिकरण्यपरा तत्त्वमसीत्यादिश्रुतिस्तु बाधायां सामानाधिकरण्यपरेति वैपरीत्यापत्तेश्च । एवञ्च नान्योऽतोऽस्ति द्रष्टेत्यादिद्रष्ट्रन्तरनिषेधिका श्रुतिरनुकूलिता भवति । एवमतोऽन्यदार्तमिति श्रुतिरपि ।

किञ्च प्रत्यक्षादिविरोधस्यानादरणीयत्वात् नित्यनिर्दोषाद्वैतश्रुत्या तत्त्वमादिपदमुख्यार्थभेद एव किं न स्वीकार्यः । न चैवं मुख्यार्थभेदपरत्वे ब्रह्मणो निर्विशेषत्वभङ्गप्रसङ्गः । तत्तद्विशेषाणामपि स एवेदं सर्वमित्यादिसावधारणश्रुत्या ब्रह्मात्यन्ताभेदावेदनेन निर्विशेषत्वाक्षतेः । तदतिरिक्तविशेषाङ्गीकार एव तद्विरोध इति दिक् ।

अपि च अस्तु ब्रह्मेतरस्य सर्वस्य श्रुत्या ब्रह्मणि निषेधः, स्वदेशकालयोस्तु तस्य केन निषेधः ? न हि निषेधश्रुतेः तत्रापि निषेधव्यापारं पश्यामः । न च ब्रह्मणो जगदुपादानत्वात्तत्रैव तदवस्थानात्तत्र च तन्निषेधे तस्य बाध्यत्वं निष्प्रत्यूहमापतितमिति वाच्यम् । तथापि अनाद्यविद्यादिकं प्रति तस्यानुपा-दानतया ब्रह्मण्यनिषेध्यत्वेन अविद्यादेरबाध्यत्वप्रसङ्गतादवस्थ्यात् ।

अपि च 'मायां तु प्रकृतिं विद्यात्, अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' इत्यादिश्रुत्या ब्रह्मण एव अविद्याया अपि जगदुपादानत्वावेदनाद्वियदादिप्रपञ्चस्य नेह नानेत्यादिश्रुत्या ब्रह्मणि निषेधेऽपि अविद्यायामनिषेधात् प्रपञ्चस्याबाध्यत्वं दुर्वारम् । एवं देशकालयोरप्यनिषेधात् तदबाध्यत्वं निष्प्रत्यूहम् । न हीदानीं घटः, अत्र भूतले घट इत्याद्यबाधितप्रतीत्या घटादेर्देशकालौ न निषिध्यत इत्यस्ति ।

किञ्च संयुक्तमेतत्क्षरमक्षरं च, व्यक्ताव्यक्तं भरते विश्वमीशः, मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव इत्यादिश्रुतिस्मृतिभिर्वियदादिप्रपञ्चस्य ब्रह्मणि संयोगवर्णनान्न तस्य जगदुपादानत्वं युज्यते । उपा-दानोपादेययोः संयोगस्य क्वाप्यदर्शनात् । अत एव तत्र अध्यासिकः सम्बन्ध इति प्रत्यूढः ।

अपि च जगतः सत्यब्रह्मोपादानकत्वे जगदपि सत्यं स्यात् । उपादेयस्य उपादानस्वभाववत्त्व-नियमात् । न चैवं, ब्रह्मवत्तस्याबाध्यत्वप्रसङ्गात् । इष्यते च त्वया तद्बाध्यत्वमिति । अपि च न वियदादिः बाध्यत्वं सोढुमर्हति । शुक्तिरूप्यादेरिव सार्वत्रिकनिषेधप्रतियोगित्वे एव बाध्यत्वं स्यान्न त्वन्यथा, देशकालविशेषे सतः ततोऽन्यत्र विद्यमाननिषेधप्रतियोगित्वेऽपीदं बाधितमिति प्रतीति-व्यवहारयोरभावात् ।

किञ्च ज्योतिष्टोमाद्युपाधौ स्वर्गादिसाधनत्वादेः श्रुतिप्रतिपन्नस्यागम्यागमनाद्युपाधौ नरकसाधनत्वस्य श्रुतिप्रतिपन्नस्य केनापि प्रमाणेनानिषेधात्तस्याबाध्यत्व दुष्परिहरम्। सर्वस्य ब्रह्मणि निषेध्यत्वेन सर्वान्तर्गतस्य स्वर्गसाधनत्वादेर्ब्रह्मणि श्रुत्या निषेधेऽपि ज्योतिष्टोमादौ तस्यानिषेधात्। अयमेव न्यायः प्रपञ्चासाधारणधर्मेषु सर्वेष्वप्यनुसन्धेयः। तस्माद्धीमात्रं प्रमितिमात्रं वा यथा न बाधस्तथा निषेध्यत्वेन धीमात्रं वा प्रमितिमात्रं वा न बाधः। तत्सत्त्वेऽपि तत्प्रतीतिव्यवहारयोरभावात्। नापि संयोगदेशे उपादानदेशे वा निषेध्यत्वेन धीः प्रमितिर्वा। गुणकर्मादेः संयोगदेशाभावात्। सत्तादिपरापरजातेरनाद्यविद्यादेश्च उपादानदेशाभावात्। घटादेश्च संयोगदेशे समवायसम्बन्धेन, उपादानदेशे संयोगादिसम्बन्धित्वेन प्रतीतेः प्रमितेश्च सत्त्वेन तयोरबाधात्। न हि तत्सत्त्वमात्रेण तत्र बाध्यत्वप्रतीतिव्यवहारौ दृष्टचरौ। तादात्म्यारोपानन्तरं नेदं रजतं किन्तु शुक्तिरेवयमिति प्रतीत्या अध्यस्तादधिष्ठानस्य भिन्नत्वधिय एव बाधत्वानपायेन तत्राव्याप्तेश्च। अङ्गुल्यवष्टब्धचक्षुषा चन्द्रदीपादौ भेदाध्यासानन्तरं तत्राभेदधिय एव बाधत्वोपलम्भाच्च। नेह नानास्ति किञ्चनेति श्रुत्यनुसारेण अन्यदेव तद्विदितादित्यादि श्रुत्यनुसारेण च परेण, यस्मिन् द्यौः इत्यादिश्रुतेः 'स एवेदं सर्वम्' इत्यादिश्रुतेश्च संसर्गतादात्म्यरूपसम्बन्धाभ्यां ब्रह्मणि वियदादिप्रपञ्चप्रसञ्जनस्योपेयत्वाच्च। नापि प्रतिपत्तिविषयीभूतसकलसम्बन्धेन स्वरूपेण सार्वत्रिकत्रैकालिकनिषेधे प्रतियोगित्वेन धीप्रमितिर्बाधः। ब्रह्मणोऽपि बाध्यत्वप्रसङ्गात्। आकाशवत्सर्वगतश्च नित्यः, यच्च किञ्चित् जगत्सर्वं दृश्यते श्रूतयेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः, स एवाधस्तात्, इत्यादिश्रुतिपर्यालोचनया अदृश्ये अनात्म्ये अनिरुक्ते अनिलयने अभयं प्रतिष्ठां विन्दते, असङ्गो ह्ययं पुरुष इत्यादिश्रुतिपर्यालोचनया, स्वे महिम्नि प्रतिष्ठित इत्यादिश्रुतिपर्यालोचनया, अलक्षणमितिश्रुतिपर्यालोचनया च तस्मिन्नपि तथाविधनिषेधप्रतियोगित्वधीलाभात्। तथाविधप्रमितेरपि लाभाच्च। नाप्यन्यथाज्ञातस्य[1] सम्यग्विज्ञातत्वं बाधः। तत एव तद्धैक आहुः। असदेवेदमग्र आसीत् इति शून्यवादिमतानुवादिश्रुत्या असत्त्वेन अन्यथाज्ञातस्य जगत्कारणस्य ब्रह्मणः कथमसतः सज्जायेत इति श्रुत्या सत्कार्यं प्रति कारणत्वान्यथानुपपत्तिप्रदर्शनमुखेन सत्त्वेन सम्यग्विज्ञातत्वलाभात्। शुक्त्यादेरपि प्राग्विशेषदर्शनाद्रजतात्मना ज्ञातस्य विशेषदर्शनानन्तरं नेदं रजतम्, किन्तु शुक्तिरित्यादिप्रत्यक्षेण रजतत्वाद्यभाववत्तया शुक्तित्वादिना सम्यग्विज्ञातत्वात्। न हि ब्रह्म वा शुक्त्यादिर्वा बाध्यत्वेन त्वयेष्यते। बाधावधेरधिष्ठानत्वेन अबाध्यत्वोपगमात्। नापि अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाध इति विवरणरीत्या,

---

१. नापीत्यादि – मायावादिमतरीत्या एवं वक्तुं न शक्यम्। स्वमतरीत्या तु एतत्सम्भवति।

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥

इति सुरेश्वरवार्तिकरीत्या च ज्ञानेन सविलासाविद्यानिवृत्तिर्बाध इति युक्तम् । सवद्वैतपक्षे अविद्यानिवृत्तेः ब्रह्मचैतन्यमात्रत्वेन ज्ञानजन्यत्वानुपपत्तेः । अविद्यानिवृत्तिवत् अविद्याकार्यस्य वियदादेरविद्यानिवृत्तिजन्यनिवृत्तिप्रतियोगित्वेन तन्निवृत्तेरपि ज्ञानजन्यत्वे मानाभावाच्च । लोके उपादेयनिवृत्तेः उपादाननिवृत्तिमात्रेण दर्शनात्, ज्ञानजन्यत्वादर्शनात् दृष्टानुसारिकल्पनाया एव आश्रयणीयत्वात् । यतो ज्ञानमज्ञानस्यैव निवर्तकमिति त्वदभ्युपगमाच्च । न च तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुत्या वियदादिप्रपञ्चस्यापि ज्ञानान्निवृत्तिवर्णनात् तत्र मानाभावोऽसिद्ध इति वाच्यम् । तथासति विश्वमायाशब्दे द्वन्द्वाश्रयणप्रसङ्गात् । न चैवम् । मायाशब्दवैयर्थ्यप्रसङ्गात् । विश्वशब्देन तदर्थान्तर्गतमायाया अपि लाभात् । गोबलीवर्दन्यायेन आनर्थक्यपरिहाराश्रयणस्य अनन्यगतिकत्वात् । विश्वा चासौ माया चेति कर्मधारयाश्रयणे लाघवाच्च । न च मायायाः एकत्वेन अस्मिन्नपि पक्षे विश्वशब्दवैयर्थ्यमित्यविशेष इति वाच्यम् । इन्द्रो मायाभिः पुरुरूप ईयते इति श्रुत्या मायाबहुत्वावगमेन तदवैय्यर्थ्यात् । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति स्मृत्यनुसारेण मायामात्रनिवृत्तेरेव ज्ञानसाध्यत्वावगमात् । मायां तु प्रकृतिं विद्यात् इत्यादौ एकवचनस्य जात्यभिप्रायत्वोपपत्तेः । कार्यवैचित्र्यदर्शनेन तदुपपादकतया उपादानवैजात्यावश्यम्भावाच्च । गुणादिरूपोपादेयवैचित्र्यस्य उपादानवैचित्र्यं विना निमित्तवैचित्र्येण अनिर्वाहेऽपि घटपटादिद्रव्यरूपोपादेयवैचित्र्यस्य उपादानवैचित्र्येणैव निर्वाह्यत्वाच्च । एवञ्च यावन्ति ज्ञानानि तावन्ति अज्ञानानीति पराभ्युपगमः सङ्गच्छते । तस्मात् ज्ञानाज्ञानयोरेव साक्षाद्विरोधात् ज्ञानादज्ञानस्येव न तत्कार्यस्य प्रपञ्चस्य निवृत्तिरिति कथं तस्य बाध्यत्वमिति न जानीमः । न हि उपादाननिवृत्त्या निवर्तमानं बाध्यमित्युच्यते ।

यद्यपि 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्, तरति शोकमात्मवित्, भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिश्रुत्या नामरूपात्मकप्रपञ्चस्य ज्ञानान्निवृत्तिरावेद्यते, तथापि यथा नद्यः स्यन्दमाना इति श्रुतौ दृष्टानुसारेण विहाय विमुक्तपदस्वारस्येन च नामरूपात्मकप्रपञ्चस्य निवृत्तिर्निवेद्यते इत्येव स्वीकार्यम्, तस्य अपदार्थत्वात् अवाक्यार्थत्वाच्च । न हि नदीशब्दार्थस्य प्रवाहविशेषस्य समुद्रे अनुप्रवेशमात्रेण नाशो भवितुमर्हति । सप्तनदीसङ्गमे तददर्शनात् । समुद्रवत् प्रवेशपदेन तत्तन्नदीनां यथापूर्वं नामरूपवत्त्वादिदर्शनाच्च । मेलनस्थले वृद्ध्यादेरुपलम्भाच्च । न हि क्षीरनीरयोर्मेलने अन्यतरनाशो भवति । अत एव हंसाः नीरांशं परित्यज्य

क्षीरांशमेव पिबन्ति इति अविगीतलोकप्रवादः । किन्तु दृष्टान्ते दार्ष्टान्तिके चोभयत्र स्फुटतरविवेकादर्शनात् तत्प्रयुक्तव्यवहाराभावमात्रम्, अस्तशब्दस्वारस्यात्, अस्तशब्दस्यादर्शनवाचित्वात् । न हि अस्तं गतः सविता इत्यस्य सवितृनिवृत्तिरर्थः । न चैवं विहाय विमुक्तशब्दयोः मुख्यार्थत्यागप्रसङ्गः । त्यागमोक्षावेव हि तन्मुख्यार्थाविति वाच्यम् । अणुरपि विशेषोऽध्यवसायकर इति न्यायेन दृष्टान्तानानुगुण्यात् । विहाय विमुक्तपरस्वारस्यत्यागापेक्षया विहायविमुक्तपदस्वारस्याश्रयणे अस्य ज्यायस्त्वात् । मत्पक्षे दृष्टान्तानुगुण्यानपायात् । न चैवं त्वत्पक्षे मुक्तस्य सांसारिकनामरूपानुवृत्तिप्रसङ्ग इति वाच्यम् । वाक्यान्तरबलेन तदननुवृत्तिसिद्धेः । उदाहृतश्रुतेः तत्रौदास्यात् (औदासीन्यात्) तरति शोकमात्मवित् इति श्रुत्यापि ब्रह्मज्ञानेन शोकनिवृत्तिमात्रप्रतिपादनेन अविद्याकार्यवियदादिप्रपञ्चनिवृत्तेः अप्रतिपादनात् । भिद्यते हृदयग्रन्थिरित्यादिश्रुत्यापि तदप्रतिपादनाच्च । किञ्च अस्तु वा अविद्यातत्कार्ययोः ज्ञानान्निवृत्तिः । न हि तावता अविद्यातत्कार्ययोः बाध्यत्वसिद्धिः । न हि सुहृद्दर्शनात् निवर्तमानं दुःखं शुक्तिरूप्यादिवत् बाध्यमित्युच्यते । अन्यथा परिभाषामात्रत्वप्रसङ्गात् । न चैवंविधपरिभाषाकरणे किमपि प्रयोजनं पश्यामः । न च तत्करणस्य (ब्रह्म)निर्विशेषत्वसिद्धिरेव प्रयोजनमिति युक्तम् । प्रपञ्चनिवृत्तेः ब्रह्मातिरिक्तत्वे पारमार्थिकत्वे च तयैव ब्रह्मणः सविशेषत्वापत्तेः (सद्वितीयत्वापत्तेः) । तन्मात्रत्वे च उक्तवक्ष्यमाणरीत्या संसारप्रवाहस्यानादित्ववत् अनन्तत्वापत्तेः । ज्ञानसाध्यत्वेन ज्ञानासाधकपुरुषार्थत्वानुपपत्तेश्च । न चेष्टापत्तिः । 'अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' इति त्वदभ्युपगमविरोधात् । न च ज्ञानत्वोपलक्षितात्मस्वरूपस्य ज्ञानसाध्यपुरुषार्थत्वोपगमात् नोक्तदोष इति वाच्यम् । ज्ञानस्य श्रवणादिसाध्यत्वेऽपि स्वसाध्यत्वाभावेन आत्मस्वरूपमात्रस्य अनाद्यनन्तत्वेन सर्वात्मना साध्यत्वाभावेनोक्तदोषानिस्तारात् । न च चरमवृत्त्युपलक्षितात्मस्वरूपं ज्ञानसाध्यमिति त्वयाऽभ्युपगन्तुं शक्यम् । त्वया श्रवणादीनां ज्ञानरूपत्वानभ्युपगमात् । चरमवृत्तेश्च साध्यत्वेऽप्यपुरुषार्थत्वात् । सुखदुःखाभावेतरत्वात् । ब्रह्मरूपावच्छिन्नसुखानुभवरूपत्वेन कथञ्चित् पुरुषार्थत्वेऽपि नित्यपुरुषार्थत्वानुपपादनात् । अत एव चरमवृत्त्युपलक्षितात्मस्वरूपस्य उपान्त्यज्ञानरूपवृत्तिसाध्यत्वेन ज्ञानसाध्यपुरुषार्थत्वमुपपद्यत इति निरस्तम् । चरमवृत्त्युपलक्षितात्मस्वरूपस्य वृत्तेः पश्चादिव पूर्वमपि सत्त्वेन पुरुषार्थत्वाङ्गीकारायोगाच्च । तस्माद्विवरणरीत्या वार्तिकरीत्या च ज्ञानेन सविलासाविद्यानिवृत्तिर्बाध इत्ययुक्तम् ।

यत्तु 'ज्ञानेन सविलासाविद्यानिवृत्तिरेव बाधः । नेदं रजतं किन्तु शुक्तिरेवेति ज्ञानेन रजतादिरूपविलासाहितशुक्त्यज्ञाननाशे सति तदज्ञानकार्ये रजते तद्भाने च बाधितत्वधीव्यवहारदर्शनात् । न च सविलासाविद्यानिवृत्तेर्ब्रह्मचैतन्यमात्रत्वेन ज्ञानसम्भवादित्युक्तमिति वाच्यम् । अविद्यावत्तद्विलासभूत-

**वियदादिप्रपञ्चवच्च तन्निवृत्तेरपि ब्रह्मचैतन्यादन्यत्वोपगमात्। न चैवमद्वैतश्रुतिविरोधः। तस्याः ब्रह्मवत्पारमार्थिकत्वाभावेन** तद्विरोधानवकाशात्। परमार्थभूतद्वितीयाङ्गीकार एव तद्विरोधात्। **न चैवमविद्यानिवृत्तेर्मिथ्यात्वे** अविद्यावत्तत्कार्यवच्च ज्ञानान्निवृत्तिः स्यात्। मिथ्याभूतस्य ज्ञाननिवर्त्यत्वनियमादिति वाच्यम्। मोक्षस्य नित्यपुरुषार्थत्वावेदकनित्यनिर्दोषप्रबलश्रुत्यनुसारेण यन्मिथ्या तज्ज्ञानेन निवर्तत इति नियमे तदविद्यानिवृत्त्यतिरिक्तं यन्मिथ्या तज्ज्ञानेन निवर्तत इति सङ्कोचाभ्युपगमेन अविरोधात्। "**अविद्यास्तमयो मोक्षः सा संसार उदाहृतः**" इति मोक्षस्य मया अविद्यानिवृत्तिरूपत्वोपगमात्। अस्यानर्थहेतोः प्रहाणाय इति भाष्याच्च। तदाहुः– **हेतूच्छेदे पुरुषव्यापारादिति**।

तदपि अत एवापास्तम्। स यथा अनन्तोऽयमाकाशः, एवमनन्त आत्मा वेदितव्यः, आकाशवत् सर्वगतश्च नित्यः एष नित्यो महिमा ब्राह्मणस्य, गौरनाद्यन्तवती, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, एषोऽश्वत्थः सनातनः इत्यादितादृशविशेषश्रुतिबलेन आकाशादीनां जन्यत्वमनभ्युपगम्य तथा मिथ्यात्वं चाभ्युपगम्य अद्वैतश्रुत्यविरोधस्य अङ्गीकारप्रसङ्गात्। उक्तनियमस्य तद्व्यतिरिक्तविषयत्वे तदविरोधस्य विनाशनियमात्। पृथिवी अप्सु प्रलीयते, आपस्तेजसि लीयन्ते तेजो वायौ प्रलीयते, वायुराकाशे लीयते, आकाशमिन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ विलीयन्ते, भूतादिर्महति विलीयते, महान् अव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देवे एकीभवति इति पृथिव्यादीनामिव आकाशस्य तमःशब्दार्थभूताविद्यायाश्च लयश्रवणात्। भूमानं प्रकृत्य अथ यदल्पं तन्मर्त्यमिति भूम्नोऽन्यस्य सर्वस्य मर्त्यत्वश्रवणात्, अतोऽन्यदार्तम् इति ब्रह्मणोऽन्यस्य सर्वस्य आर्तिशब्दितनाशश्रवणात्। न च 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इति अज्ञाननाशावेदकस्मृतेः, विपर्ययेण तु क्रमोऽत उपपद्यते च इति आकाशादिलयक्रमावेदकसूत्राच्च तन्नित्यत्वावेदकश्रुतीनां वायुश्चान्तरिक्षं च एतदुभयममृतं, सैषाऽनस्तमिता देवता यद्वायुः इति वाय्वमृतत्वावेदकश्रुतिवत् आप्रलयकालस्थायित्वरूपमेव नित्यत्वमर्थ इति वाच्यम्। उदाहृतानुमानश्रुतिस्मृतिसूत्राणां उत्पत्तिविनाशवद्भूताकाशविषयत्वेन आकाशवत् सर्वगतश्च नित्यः इत्यादिश्रुतीनां च तदन्याव्याकृताकाशविषयत्वेन अविरोधात्। 'न चाकाशानेकत्वे मानाभावः। न चोदाहृतश्रुतिरेव तत्र मानम्। अन्योन्याश्रयात्। एकविषयत्वे लाघवात्। धर्म्यन्तरकल्पनायां गौरवादि'ति वाच्यम्। अन्तर्यामिब्राह्मणं यः पृथिव्यां तिष्ठन्नित्यारभ्य मध्ये योऽन्तरिक्षे तिष्ठन्नित्यादिकमुक्त्वा य आकाशे तिष्ठन्नित्यादिना पृथिव्यादिभिस्सह पठितादन्तरिक्षशब्दितादाकाशादस्याकाशस्य पृथगुक्तेरन्योन्याश्रयाद्यनवकाशात्। प्रमाणवतो गौरवस्याप्यादरणीयत्वाच्च। अत एव आलोकविरोधितमःशब्दापेक्षया अन्यः, 'यदा तमः तन्न दिवा न रात्रिः तमो वा इदमेकमास, तत् परेणेरितं विषमत्वं

प्रयाति, तम आसीत्, आसीदिदं तमोभूतम्' इत्यादिश्रुतिस्मृत्यावेदितो मायाप्रकृत्यादिशब्दापरनामक-जगदुपादानभूततमःशब्दार्थोऽप्युपगम्यते। न चैवं वायुद्वैविध्याङ्गीकारेऽनन्यथासिद्धं प्रमाणमस्ति, सैषा-नस्तमिता देवता यद्वायुरिति देवताशब्दसमभिव्याहृतश्रुत्यन्तरानुसारेण, वायुश्चान्तरिक्षं चैतदुभय-ममृतमिति श्रुतिगतवायुशब्दस्य देवताशब्दसमभिव्याहृतपरत्वेन तदमृतत्वस्येष्टत्वात्। तमः परे देवे एकीभवतीति श्रुतेः तमःशब्दार्थभूतप्रकृतेः कुण्डे नीरं क्षीरं भवतीतिवत् परदेवशब्दार्थस्य श्रुतपदार्था-न्तरेण सह सम्बन्धविशेषरूपैक्यसम्पत्तिर्भवतीत्यर्थवत्त्वेन तल्लयपरत्वासिद्धेः। अन्यथा प्राक्प्रस्तुत-लयशब्दं विहाय एकीभवतीति च्विप्रत्ययान्तशब्दान्तरोपादानं तत्र श्रुतौ न स्यात्। ज्ञानेन तु तदज्ञानं येषां नाशितम्, इति स्मृतौ अज्ञानशब्दस्य तत्त्वज्ञानविरोध्यज्ञानकार्यसंशयविपर्ययपरत्वेन मायाप्रकृ-त्यादिशब्दितपराभिमताज्ञानपरत्वासिद्धेः। अन्यथा विरोधाधिकरणन्यायविरोधात्[1]। विश्वमायानिवृत्ति-रितिश्रुतेः मायामेतां तरन्ति ते इति तद्धानरूपस्मृत्यनुसारेण स्वकार्यवैमुख्यप्रतिपादनपरत्वेन माया-निवृत्तिप्रतिपादनपरत्वासिद्धेः। किञ्च भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतौ सर्वशब्दपर्यायविश्वशब्द-सामानाधिकरण्यस्वारस्यनिर्वाहाय मायाशब्दस्य मायाकार्यभूतवियदादिप्रपञ्चपरत्वाश्रयणमेव युक्तम्। न तु मायापरत्वाश्रयणम्; तस्याः एकत्वेन विश्वशब्दार्थत्वानुपपत्तेः। न ह्येकस्मिन्नेवार्थे सर्वशब्दपर्याय-विश्वशब्दस्याविगीतप्रयोगोऽस्ति। कारणवाचिशब्दस्य कार्येष्वभेदोपचारात् प्रयोगो बहुलमुपलभ्यते लोकवेदयोः, सूक्ष्मं वासः स्वर्गः, दधित्रपुसं प्रत्यक्षो ज्वरः, नड्वलोदकं पादरोगः, ब्राह्मणोऽस्य मुख-मासीत् सर्वं खल्विदं ब्रह्मेत्यादिषु। एवञ्च निवृत्तिशब्दो ध्वंसपर एव। तस्य परमात्मनोऽभिध्यानात् सङ्कल्परूपात् योजनात् उपायात्, तत्त्वभावात् तत्त्वानां पदार्थानां भावात् स्वभावात्, ल्यब्लोपनिमित्ता पञ्चमी, तत्तत्पदार्थस्वरूपमनतिक्रम्य विश्वस्य सर्वस्य मायाकार्यस्य निवृत्तिः इति विश्वशब्दस्य माया-कार्यपरत्वाश्रयणमेव युक्तम्। न ह्येकस्या मायायाः परमात्मसङ्कल्पेन निवृत्तौ पुनस्तेन निवर्त्यमाया-न्तरमस्ति, येन पुनःपुनश्चान्तेत्यर्थकभूयश्चान्ते इतिशब्दस्य स्वारस्यत्यागः स्यात्। न हि मायाया अनेकत्वे मानमस्ति। अजामन्त्रस्य अजामित्येकवचनेन ग्रहैकत्ववत् तदेकत्वमविवक्षितमित्याशङ्क्य तन्निरासायैकमिति कण्ठतः तदेकत्वाभिधानात्। मायां तु प्रकृतिं विद्यात्, तस्मिंश्चान्यो मायया सन्निरुद्ध इत्यादौ बहुलं एकवचनान्तप्रयोगदर्शनाच्च। न चैवम् इन्द्रो मायाभिः पुरुरूप ईयते इति श्रुतौ तद्बहु-त्वोक्तिर्न स्यादिति वाच्यम्। उदाहृतानेकवाक्यानुरोधेन अत्र बहुवचनश्रवणस्य जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामिति पाणिनिस्मरणानुरोधेन नेयत्वात्। अ इति पदात् आन् इति बहुत्वश्रवणस्येव अत्रापि बहुत्वश्रवणस्योपपत्तेश्च। इन्द्रो मायाभिरित्यत्र मायाशब्दस्य तान् यज्ञस्य मायया इत्यादाविव

१. विरोधे त्वनपेक्ष

शक्त्यपरनामकसामर्थ्यपरत्वेन तद्बहुत्वपरत्वेनाविरोधाच्च । अथ यदल्पं तन्मर्त्यम्, अतोऽन्यदार्तमिति श्रुतिगताल्पान्यशब्दयोः सामान्यविशेषन्यायेन नित्यत्वेन विशेषशास्त्रे प्रतिपन्नाकाशादिव्यतिरिक्त-परत्वेनाविरोधादिति दिक् ।

न चैवं विचित्रजगदुपादानभूतमायायाः एकत्वे तत्कार्यभूतजगद्वैचित्र्यानुपपत्तिः । घटपटादि-विचित्रद्रव्यरूपोपादेयस्य मृत्तन्त्वादिरूपोपादानेनैव निर्वाहदर्शनात् । न हि विचित्रं कार्यभूतं द्रव्यं तादृशोपादानं विना भवद् दृष्टचरम् । न च परस्परविरुद्धमुपादानगतवैचित्र्यं तदनेकत्वं विनोपपद्यते । तथाच मायाप्रकृत्यविद्यातमश्शब्दितजगदुपादानैकत्वमुपपत्तिविरुद्धमिति वाच्यम् । जगदुपादानस्यै-कत्वे जगद्रूपविचित्रानन्तकार्यनिर्वाहस्य तद्गततादृशानन्तशक्तिभिर्निर्वाहोपगमात् । उपादानस्यैक-त्वेऽपि विचित्रसहकारिसम्पत्त्या तेन विचित्रानेककार्यस्य सम्भवतः बहुलमुपलम्भात् । एकस्यैवान्नस्य सहकारिविशेषसम्पत्तौ जीवनकारणत्वमरणकारणत्वादेर्दर्शनात् । एकेनैव दुग्धेन सहकारिविशेषसम्प-न्नेन दध्यामिक्षावाजि-नादिद्रव्यरूपविचित्रकार्यदर्शनात् । तथाच स्मृतिः

'शक्तयः सर्वभावानामचिन्त्या ज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः' ॥ इति ।

नन्वेवं कार्यवैचित्र्योपपादनेऽपि प्रमाणप्रतिपन्नोपादाननिवृत्तियुक्तोपादेयनिवृत्तिनिर्वाहवज्जगदुपा-दानभूतमायायाः निवृत्तिरवश्यमभ्युपेयेति चेन्न ब्रह्म जगदुपादानमिति पक्षे तन्निवृत्तिं विनैव, अनादि-नित्या माया जगदुपादानमिति पक्षेऽपि तन्निवृत्तिं विनैव तदुपादेयवियदादिजगन्निवृत्तेर्निमित्तविशेष-निवृत्त्या सूपपादत्वात्, द्वित्वादिनाशस्यापेक्षाबुद्ध्यादिरूपनिमित्तविशेषनिवृत्त्यधीननिवृत्तिकत्वदर्शनात् । तन्तुरूपोपादाननाशं विनापि पटरूपोपादेयस्य तन्त्वतिरिक्ततत्संयोगनिवृत्त्यधीननिवृत्तिकत्वदर्शनाच्च ।

किञ्च अनादिमायया सुप्तो यदा जीवः प्रबुध्यते इति श्रुत्या मायायाः अनादित्ववर्णनादनादे-र्भावस्य सतः निवृत्तिप्रतियोगित्वनियमादपि मायाया अनित्यत्वसिद्धिः । न च यतः प्रसूता जगतः प्रसूतिरिति श्रुत्या जगतः प्रसूतिशब्दितायास्तस्याः परमात्मनः सकाशात्प्रसववर्णनादनादित्वमसिद्ध-मिति वाच्यम् । पुत्रप्रसववदवस्थाविशेषविशिष्टत्वस्य तत्र प्रसवशब्दार्थत्वेनाविरोधात् । अन्यथा मायाया भावकार्यत्वेनोपादानसापेक्षतया तदुपादानान्तरस्वीकारापत्त्याऽनवस्थापत्तेः । श्रुतानादित्वस्य त्यागा-पत्तेश्च । तस्माज्ज्ञानेन सविलासाविद्यानिवृत्तिर्बाध इति पराङ्गीकारोऽनुपपन्नः ।

एतेन शुक्तितत्त्वसाक्षात्कारेण तदज्ञानस्य तद्विलासभूतरूप्यादिना वर्तमाने प्रविलीनेन वा सह तस्य निवृत्तौ बाधप्रतीतिव्यवहारदर्शनात्, क्लृप्तत्वात् प्रकृतेऽपि ब्रह्मतत्त्वसाक्षात्कारेण तादृशाविद्या-

निवृत्तिर्बाध इति स्वीकार्यम् इत्यपास्तम्। शुक्तितत्त्वसाक्षात्कारेण शुक्त्यज्ञानं निवृत्तम्, रजतभ्रमो निवृत्त इतिवत् रजतं निवृत्तमित्यननुभवेन शुक्त्यज्ञानाद्रजतमुत्पन्नमित्यननुभवेन च रजतस्य तद्विलासत्वायोगेन तादृशाविद्यानिवृत्तिर्बाध इत्यकल्पनात्। न हि शुक्त्यज्ञानतज्ज्ञानाभ्यां रजतोत्पत्तितन्निवृत्ती कस्याप्यनुभवसिद्धे। न च योग्यानुपलब्धिबाधिते कथं कथमपि कल्पनार्हे।

किञ्च शुक्तौ क्लृप्तरजतसामग्रीबाधात्तत्र तदुत्पत्तिर्बाधिता। न हि रजतावयवाघटिता रजतसामग्री नामास्ति। न च विशेषादर्शनदशायामिदं रजतमिति तत्र रजतस्यापरोक्ष्यं सर्वानुभवसिद्धम्। न हि तद्रजतेन्द्रियसम्प्रयोगं विनोपपद्यते। इन्द्रियसम्प्रयोगश्च नाविद्यमानेन रजतेन भवितुमर्हतीति तदर्थं तद्विद्यमानत्वमवश्यमुपेयम्। तदेव विद्यमानत्वं स्वयं तदुत्पत्तिं विनानुपपद्यमानं सत्तत्र तामाक्षिपति। आक्षिप्ता सा स्वयं सामग्रीं विनानुपपन्नेति तत्सामग्रीमाक्षिपति। आक्षेपात्सिध्यन्ती च तत्सामग्री क्लृप्तसामग्र्यतिरिक्तैव सिद्ध्यति। अन्यथा वृश्चिकाद्वृश्चिकवद् गोमयात्तदुत्पत्तिर्नाङ्गीक्रियेतेति वाच्यम्। रजतापरोक्षस्य विनापि तत्सन्निकर्षं क्लृप्तदोषादिसहकारिसामर्थ्याच्छुक्तीदमंशाभिन्नविषयत्वेनोपपत्तेः। अञ्जनादिसहकारिसामर्थ्याद् भुवोऽन्तःप्रवेशोऽतिदूरे महायत्नेनाप्युद्धर्तुमशक्यतया निक्षिप्तनिध्याद्यापरोक्ष्यस्य च विनापि चक्षुःसंयोगं दर्शनात्। **एतावांस्तु विशेषः**। तत्र रजतापरोक्षज्ञानं जायमानं विषयाभावादप्रमा। निध्याद्यपरोक्षज्ञानं तु जायमानं विषयसद्भावात्सजातीयविजातीयसंवादाच्च प्रमेति।

अपि च प्रातिभासिकरजतानुभवसंस्कारं विना न शुक्त्यादौ रजतभ्रम इति सर्वानुभवसिद्धम्। सोऽपि भ्रमः न संस्कारोद्बोधं विनेति संस्कारोद्बोधोऽपि न शुक्तिगतचाकचक्यादिरूपरजतसादृश्यज्ञानं विनेति। एवञ्च तत्सादृश्यज्ञानेनोद्बुद्धसंस्कारः प्रागनुभूतरजतं स्मारयतीति तत्स्मृतिविषयरजतविषयत्वेनैव रजतभ्रमसम्भवे तन्निर्वाहाय रजतविद्यमानत्वादिकमकल्प्यमेव। न ह्युपस्थितपरित्यागेनानुपस्थितस्वीकारो युज्यते। न हि रजतस्मृतेः पूर्वं तत्र तदनुभवसामग्र्यस्ति येन स्मृतिसामग्रीतोऽनुभवसामग्री बलवतीति न्यायेन तदनुभवसामग्र्या स्मृतिसामग्र्याः निरोधे स्मृतेरेवासम्भवेन रजतोपस्थितिरेव दुर्लभेत्युच्येत।

किञ्च विशेष्यज्ञानं विशेष्येन्द्रियसन्निकर्षः तदुभयासंसर्गाग्रहः भेदाग्रहो व्यावर्तकधर्माग्रहश्चेत्यादिरूपा हि विशिष्टापरोक्षज्ञानसामग्री सत्यरजतसाक्षात्कारस्थले क्लृप्ता। प्रकृते न सा भ्रमस्थलेऽस्तीत्यारोपितरजतस्यापरोक्षत्वं दुर्लभम्। न च रजतापरोक्षज्ञाने रजतेन्द्रियसंयोगस्य विशेषसामग्रीत्वेन सत्यस्थले क्लृप्तस्य प्रकृतेऽभावात् सामान्यसामग्र्याः विशेषसामग्रीमादायैव कार्यार्जकत्वात्कथं तदभावे रजतापरोक्षज्ञानमुत्पत्तुमर्हतीति वाच्यम्। भूतले रजताभावः इति रजतरूपप्रतियोगिविशिष्टाभाव-

प्रत्यक्षस्य रजतेन्द्रियसंयोगं विनाऽप्युत्पत्तिदर्शनेन तस्य रजतप्रत्यक्षे विशेषसामग्रीत्वासिद्धेः । कुतश्चिद्देशाद्देशविशेषं प्राप्ते देवदत्ते स एवायं देवदत्त इति प्रत्यभिज्ञारूपप्रत्यक्षस्य तत्र स्वशरीरप्रविष्टदेशेन्द्रियसंयोगं विनापि तद्विषयत्वदर्शनेन तदिन्द्रियसंयोगस्य व्यभिचारेण तत्प्रत्यक्षसामग्रीत्वासिद्धेश्च । न च ततः उभयत्र प्रतियोगितदभावांशे स्मरणमितरांशे ग्रहणमिति ज्ञानद्वयमिति वाच्यम् । तथासत्यभावस्य रजतप्रतियोगिकत्वासिद्धिप्रसङ्गात् । तद्देशस्थेन देशविशेषस्थदेवदत्तस्याभेदासिद्धिप्रसङ्गाच्च । न चैवमिन्द्रियासन्निकृष्टस्य तज्जन्यज्ञानविषयत्वेऽतिप्रसङ्गः । आवश्यकेन्द्रियसन्निकर्षवति विशेष्ये दोषप्रयोज्योपस्थितविशेषणासंसर्गाग्रहादेरेव तद्भञ्जकत्वात् अपि च प्रमाणसिद्धकार्यनिर्वाहाय सामग्री कल्प्यते । कार्यं च इदं रजतमिति विशिष्टप्रत्यक्षं इदं रजतं जानामि इत्यनुव्यवसायेन सत्यस्थलसाधारण्येन सिद्ध्यति । **एतावांस्तु विशेषः** । तेन सिद्ध्यद्विशिष्टप्रत्यक्षं क्वचिद्विषयाबाधात् प्रमाणम् । क्वचिच्च बाधात् तदप्रमाणमिति । एवञ्च तत्र भ्रमप्रमासाधारणविशिष्टप्रत्यक्षसामग्रीत्वेनान्विष्यमाणा अव्यभिचारितया विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षादिरूपा उक्तैव तत्सामग्री लभ्यत इति किमनुपपन्नम् । अन्यथा प्रथमं सत्यरजतस्थले सामग्रीकल्पननियमाभावात् असत्यरजतभ्रमस्थल एव प्रथमं यदा तत्सामग्री निर्णीता सैव तत्र क्लृप्ता सामग्री सत्यरजतस्थले नास्तीति तत्रैव ग्रहणस्मरणात्मकं स्वरूपतो विषयतश्चागृहीतभेदं प्रवृत्त्यादिव्यवहारहेतुरिति वैपरीत्यापत्तिः ।

किञ्च रजतप्रत्यक्षं जायमानं तद्विशेषणकं तद्विशेष्यकं चेति द्वयमनुभवसिद्धम् । तदुभयं चक्षुरिन्द्रियव्यापारानन्तरं जायते नान्यथेत्यपि । तत्रापि कुड्यादिना व्यवहिते रजते सत्यपि चक्षुर्व्यापारे तन्न जायत इत्यपि । तथाच अन्वयव्यतिरेकाभ्यां कुड्यादिव्यवधानेन विघटनीयचक्षुर्व्यापारोत्पाद्यमिति प्रसङ्गभञ्जकं किञ्चिदस्तीत्यनुमीयते । तदेव चेन्द्रियसन्निकर्ष इत्युच्यते । स हि सत्यरजतादिविषयवद्योग्यः । एवञ्चानतिप्रसक्तकार्यनिर्वाहाय कल्प्यमान एव सन्निकर्षशब्दार्थ इति पर्यवसितम् । तथाविधसन्निकर्षत्वं च प्रमाणप्रतिपन्नकार्यनिर्वाहायावश्यमङ्गीकार्ये विशेषणज्ञानदोषतद्धेतुकासंसर्गाग्रहादिष्वन्यतमस्य, विनिगमकाभावात्तेषां सर्वेषां वा कल्प्यमिति न तत्प्रत्यक्षसामग्री दुर्लभा । यदि च प्रतियोगिविशिष्टाभावप्रत्यक्षोक्तप्रत्यभिज्ञयोः प्रतियोग्यंशे तत्तांशे च इन्द्रियसंयोगजन्यतावच्छेदकरजतविशेष्यकप्रत्यक्षत्वापेक्षया सामान्यरूपतया लघुत्वात् रजतविषयकप्रत्यक्षत्वमेवेति तत्सामग्रीबाधात् एकमेव तत्प्रत्यक्षं प्रतियोग्यादिगोचरसंस्कारजन्यम्, तत्स्मरणात्मकम्, अभावाद्यंशे ग्रहणात्मकमिति स्वीक्रियेत तथैवेदंरजतमिति भ्रमोऽप्येक एव ग्रहणस्मरणात्मकोऽस्तु । तथाऽप्यन्यथाख्यात्यनपायात् । आविद्यकरजतासिद्धिश्च ।

किञ्च, असंसर्गग्रहे भेदग्रहे व्यावर्तकधर्मग्रहे वा सति इतरेतरसामग्रीसम्पत्तावपि न भ्रमो जायत इति तदभावस्यैव तद्धेतुत्वं सिद्ध्यति। तत्र त्वदभिमताज्ञानसत्त्वेऽपि (तत्तदभिमताज्ञानस्य) विशेषादर्शनानन्तरमसंसर्गभेदव्यावर्तकधर्माणां ग्रहस्य जायमानत्वेन तद्धेतुत्वेन तत्प्रागभावस्योपादेयत्वात् क्लृप्तस्य तस्यैव रजतोपादानत्वसम्भवेन तदुपादानत्वेन अक्लृप्तस्य शुक्त्यज्ञानस्यानभ्युपेयत्वात्, गौरवात्, धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायेन क्लृप्तस्य संसर्गादिग्रहप्रागभावस्यैव रजतोपादानत्वमात्रकल्पनौचित्यात्। अभावस्योपादानत्वमदृष्टमिति चेन्न। त्वदभिमताज्ञानस्यापि तददृष्टमिति प्रतीतिव्यवहारालम्बनतया साम्यात्। नन्वतिरिक्तप्रागभाव एव नास्तीति चेत् तथापि इदं कार्यमत्र नासीन्नास्ति (न) भविष्यतीति त्वदभिमतस्य मदभिमतप्रागभावातिरिक्तस्यैव समयविशेषसंसर्गात्यन्ताभावादेस्तदुपादानत्वसम्भवेन तथापि त्वदभिमताज्ञानस्यानन्यथासिद्धकार्याभावेन तस्य (भावरूपाज्ञानस्य) तदुपादानत्वस्य चानभ्युपेयत्वात्। घटवति भूतले घटो नास्तीति भ्रमनिर्वाहाया भावाध्यासं प्रत्युपादानतया भावरूपाज्ञानस्येव अभावरूपाध्यासं प्रत्यभावरूपाज्ञानस्यैवोपादानतया स्वीकारौचित्याच्च।

किञ्च परीक्षकेष्वभियुक्तै रजतत्वेन यथावत् परीक्षिते निर्णयात्मन्यनाहार्ये शुक्तिरङ्गादिविषयकप्रत्यक्षे जागरूके सति तद्वये इदं सर्वं रजतमिति जायमानस्य परीक्षासहिष्णवाहार्यरजतगोचरापरोक्षभ्रमस्य अपरोक्षत्वान्यथानुपपत्त्या तद्विषयस्य विद्यमानताया अवश्याभ्युपेयत्वेन तद्विषयीभूतरजतस्याज्ञानं विना क्लृप्तसामग्र्यैवोत्पत्तिर्वाच्या। एवञ्च पराभिमताज्ञानस्य भ्रममात्रहेतुत्वं कथमिति न जानीमः। न हि भ्रमत्वावच्छिन्नं कार्यं प्रति व्यभिचारापरपर्यायाभिमताज्ञानं तत्कारणं भवितुमर्हति। एवं स्फटिकलौहित्यभ्रमस्य दर्पणे मुखभ्रमस्य च ग्राह्याभावावगाहिनि ज्ञानविरोधिनि जागरूके सत्यपि जायमानत्वात् सोऽप्यज्ञानं विना क्लृप्तसामग्र्यैव जायत इति व्यभिचारान्नाज्ञानस्य तद्धेतुत्वम्। न हि जपाकुसुमादिग्रीवादिरूपोपाधिसन्निधानात् प्राक् स्फटिके दर्पणे च ग्राह्याभावावगाह्यज्ञानविरोधिप्रत्यक्षं नेत्यस्ति। न च उपाध्यभावसहितस्फटिकादितत्त्वज्ञाननिवर्त्यं अज्ञानान्तरं तत्र लौहित्यादिभ्रमहेतुरिति शक्यमभ्युपगन्तुम्। तस्यापि उपाधिसन्निधानात् प्राक् सत्त्वेन तेन तदज्ञाननिवृत्त्यवश्यम्भावात्। अन्यथा स्फटिकं दर्पणादिकं च यथावन्न जानामीति तदज्ञानानुभवप्रसङ्गात्। त्वया दुःखादिवदज्ञानस्य ज्ञातैकसत्त्वाङ्गीकारात्। एतेन यावन्ति ज्ञानानि तावन्त्याज्ञानानीति पराभ्युपगमः प्रत्यूढः। एतत्कल्पनाया अज्ञानस्य भ्रममात्रं प्रति हेतुत्वसिद्ध्यधीनत्वेन अन्योन्याश्रयात्।

किञ्च रजतस्याविद्योपादानकत्वे मृदुपादानके घटादौ मृद्घट इत्यादिप्रतीतिव्यवहारवत् शुक्त्यज्ञानं रजतमिति प्रतीतिव्यवहारप्रसङ्गः । मृदादिवदज्ञानस्यापि योग्यत्वात् । न हि तथा प्रतीतिव्यवहारौ कस्यापि स्तः ।

अपि च विशेषदर्शनानन्तरं शुक्तिरेव रजतात्मना अभादिति प्रतीतिव्यवहारयोः सर्वानुभवसिद्धत्वेन शुक्तेरेव रजतोपादान(विवर्त)त्वं तद्भ्रमाधिष्ठानत्वं च स्वीकर्तुमुचितम् ।

किञ्च शुक्तिं न जानामीत्यनुभवस्य शुक्तिज्ञानाभावविषयत्वमेव वाच्यम् । शुक्तेर्जडत्वेन स्वतः-प्रकाशप्रसक्तिरहिततया त्वया तद्विषयकभावरूपाज्ञानानङ्गीकारात् । स्वतःप्रसक्तप्रकाशनिह्नवाय हि तदङ्गीक्रियते न कुलधर्मतया । न च शुक्त्यवच्छिन्नं तदुपहितं वा चैतन्यं रजतं प्रति विवर्ताधिष्ठान-तयोपादानम् । तदावरकाज्ञानं तु परिणामितया रजतोपादानमिति मयोपेयत इति वाच्यम् । शुक्ति-विषयत्वेनानुभूयमानाज्ञानस्य तदवच्छिन्नचैतन्यविषयत्वेन तदुपहितचैतन्यविषयत्वेन च व्याख्याना-योगात् । अनुभवव्याख्यानस्यातिप्रसङ्गापादकत्वेनानादरणीयत्वात् । अन्यथा शुक्तिं जानामीति शुक्ति-विषयत्वेन अनुभवसिद्धशुक्तिज्ञानस्यापि तदवच्छिन्नचैतन्यविषयत्वेन व्याख्यानापत्तेः । शुक्त्यव-च्छिन्नस्य तदुपहितस्य वा चैतन्यस्य रजताधिष्ठानत्वे तद्रजतावच्छिन्नस्य तदुपहितस्य वा चैतन्य-स्याध्यस्तत्वप्रसङ्गाच्च । शुक्त्यवच्छिन्नचैतन्यमज्ञानविषय इति पक्षे शुक्तेर्जडत्वेऽप्यज्ञानविषयत्वा-नपायात् । अवच्छिन्नविषयस्यावच्छेदकविषयत्वनियमात् । शुक्त्युपहितचैतन्यमज्ञानविषय इति पक्षेऽप्यज्ञानस्य जडविषयत्वावारणात् । उपहितस्यागन्तुकत्वेनानागन्तुकानुपहितमुख्यब्रह्मचैतन्या-दन्यत्वात् । उपहितस्य बाधः(धे), तदेव तदधिष्ठानत्वेन स्वीकार्यमिति शुक्तिरेव रजतभ्रमाधिष्ठानं भवेत् । तदुपादानं च, न त्वन्यत् । अपि वा संसर्गाग्रहादिप्रयोजकस्य दोषस्य रजतोत्पत्तिसामग्रीशरीर-प्रवेशमङ्गीकुर्वताऽपि तत्समसमयं चक्षुरन्वयव्यतिरेकानुविधायितदपरोक्षज्ञानमपि स्वीक्रियते । तस्य भ्रमत्वमपि । तथाच भ्रमत्वापरनामकाप्रामाण्यपरतस्त्वनिर्वाहाय स दोषः तदपरोक्षज्ञानं प्रत्येव हेतुरिति स्वीकारो युक्तः । न तु रजतं प्रत्यपि । रजतापरोक्षस्य त्वन्मते वृत्त्युपहितचैतन्यरूपसाक्षित्वेन तस्या-गन्तुकतया तन्निर्वाहाय सामग्र्यवश्यम्भावात्, चक्षुरन्वयव्यतिरेकानुविधायित्वेन रजतापरोक्षस्य इदं रजतं चक्षुषा पश्यामीत्यनुभवबलेन चाक्षुषत्वस्यैवोपेयत्वेन साक्षिरूपत्वासिद्धेश्चेत्यलं पल्लवेन ।

किञ्च अध्यस्तशुक्तिरजतादिकं तदैव उत्पद्यते, उत्पन्नं सद्विलीयते चेति स्वीकर्तुमशक्यम् । यदि भ्रमप्रमासाधारणं सर्वमप्यपरोक्षज्ञानं एकजातीयविषयेन्द्रियसन्निकर्षघटितसामग्र्यैवोत्पद्यत इति नियमः प्रमाणसिद्धः स्यात् । न चैवं नियमे प्रमाणमस्ति । द्रव्यापरोक्षज्ञाने द्रव्येन्द्रियसंयोगस्य द्रव्य-

निष्ठगुणकर्माद्यपरोक्षज्ञाने तदिन्द्रियसंयोगासम्भवेन तदन्यस्यैव स्वीकारात् । चत्वरनिष्ठं रजतं तद्भूतले नास्तीति रजतरूपप्रतियोगिविशिष्टाभावप्रत्यक्षप्रतियोगिनो द्रव्यत्वेऽपि तदंशे तदिन्द्रियसंयोगादन्यस्यैव हेतुत्वोपगमात् । अभावांशे इन्द्रियसम्बद्धविशेषणतायाः सन्निकर्षत्वात् नेदं रजतं किन्तु शुक्तिरिति बाधरूपापरोक्षज्ञाने रजततत्प्रतियोगिकभेदतदनुयोगिकशुक्त्यादौ इन्द्रियस्य एकजातीयसन्निकर्षासम्भवेन भिन्नभिन्नसन्निकर्षाङ्गीकाराच्च । सुरभि चन्दनमिति चाक्षुषापरोक्षज्ञाने चक्षुरयोग्येन सौरभेण चक्षुषो घ्राणजन्यानुभवजनितसंस्कारस्य तज्जन्यस्मृतेर्वा सन्निकर्षत्वोपगमात् । पाकेन रक्ते श्यामोऽयमिति चाक्षुषप्रत्यक्षस्य श्यामतादशायां श्यामरूपेणेव सन्निकर्षासम्भवेन तदन्येनैवेन्द्रियसन्निकर्षेणोत्पत्तेश्च । घ्राणेन यत्र चन्दनकाष्ठे सौरभमनुभूतं तत्रैव कुतश्चित्कारणविशेषात् सौरभनाशानन्तरं तस्य चक्षुषा पुनः संयोगानन्तरं सुरभि चन्दनमिति प्रत्यक्षस्य सौरभांशेऽन्यसन्निकर्षजन्यत्वस्यैव स्वीकारात् । तथा प्रत्यभिज्ञारूपप्रत्यक्षे तत्तांशे सन्निकर्षान्तरस्यैव स्वीकाराच्च । किं वा अतीतानागतवर्तमानविषयक-सामान्यलक्षणादिजन्यापरोक्षज्ञानेऽतीतघटपटाद्यंशे चक्षुःसंयोगासम्भवेन च तत्र सामान्यादेरेव चक्षुः-प्रत्यासत्तित्वाच्च । न हि योगप्रभावात् सर्वं साक्षात्कुर्वन् योगी अस्मदादिवत् संयोगादिसन्निकर्षेण साक्षात्करोतीत्यस्ति । तथाच भ्रमरूपं वा अपरोक्षज्ञानं सर्वमप्येकजातीयसन्निकर्षेण साक्षात्करोती-त्यस्ति । तथाच भ्रमरूपं वा अपरोक्षज्ञानं सर्वमप्येकजातीयसन्निकर्षजन्यं न । किन्तु सजातीय-विजातीयाननुगतसन्निकर्षजन्यमित्येव वाच्यम् । तथाविधश्च सन्निकर्षो विद्यमानविषयसाधारण इति न साक्षात्कारविषयत्वमात्रेण विषयस्य विद्यमानत्वासिद्धिः । कथञ्चिद्विद्यमानत्वसिद्धावपि कुत्रचित् स्वसामग्र्यां प्रागेवोत्पन्नस्यापि घटादिवदन्यत्र विद्यमानत्वसम्भवेन अध्यस्तरजतादेरधिष्ठाने विद्यमान-त्वमात्रेण नोत्पत्तिसिद्धिः । तदसिद्धौ च तदुत्पादकसामग्रीशरीरप्रविष्टेन त्वदभिमताज्ञानसिद्धिरिति किमधिकमाचरितम् ? न च घटादिवदध्यस्तं रजतं स्वोत्पत्तिदेशाच्छुक्तिदेशे केनानीत विद्यत इति वाच्यम् । घटादिस्थल इव अत्रानेनानीतमिति विशिष्य ज्ञानासम्भवेऽपि प्रामाणिकरजतस्येव येन केनचिद् दृष्टकार्यनिर्वाहाय आनयनापनयनयोः कल्पनासम्भवात् । न हि घटाद्यानयनापनयनकर्ता-साविति विशिष्य निश्चये सामग्री सम्भवति । न हि तदसम्भवे तत्रैव अध्यासस्थले अध्यस्तरजता-द्यानेतृकल्पने प्रत्यवायोऽस्ति । कल्पनागौरवमेव प्रत्यवाय इति चेन्न । एवं तर्हि स्वसामग्र्या देशा-न्तरोत्पन्नघटादेः तदन्यदेशे विशिष्यानेतुरज्ञानसम्भवेन तत्रस्थः स एवायं घटादिरिति प्रत्यभिज्ञाप्रत्यक्षे सति सामान्यतः तदानेतृकल्पनापत्त्या सामग्र्यन्तरेणैव घटादेः विद्यमानत्वसिद्ध्यर्थमुत्पत्तिकल्पनापत्तेः । न ह्येवंविधमुदाहरणमसम्भवि । बहुलमुपलम्भात् । नन्वेवं तर्हि आनेतुर्नियमेनादर्शनं कथमिति चेत् किमिह कथम् ? उदाहृतघटाद्यानयनस्थल इव शुक्त्यादावध्यस्तरजताद्यानेतुरप्यदर्शनोपपत्तेः । तत्रैवा-

त्रापि कल्पनागौरवस्य सह्यत्वात् । एतेनैव सामान्यादीनां प्रत्यासत्तित्वस्य मयाऽभावेऽनुपगमात्, अविद्यमानविद्यमानोभयविषयकोदाहृतप्रत्यक्षस्थलेष्वविद्यमानांशे विद्यमानांश इव क्लृप्तसन्निकर्षाभावेन तत्प्रत्यक्षस्य स्मृतित्वोपगमाच्च न तद्दृष्टान्तेनाध्यासस्थले संस्कारस्य तज्जन्यस्मृतेर्वाध्यासोपपादकत्वेन असंसर्गाग्रहेऽप्युपपादकत्वेन च उभयसम्प्रतिपन्नस्य दोषस्य वा न तत्सन्निकर्षत्वसाधनं युक्तमिति निरस्तम् । इदं रजतमित्याद्यपरोक्षाध्यासेऽपि रजताद्यंशे शुक्ताद्यंश इव क्लृप्तसन्निकर्षाभावेन स्मृतित्वोपगमस्यैव न्याय्यत्वात् । न(किं)च तच्छुक्तिनिष्ठत्वेन रजतस्याननुभवात् तदभिन्नत्वेनानुभावाच्च कथं पूर्वानुभवजन्यस्यापि तस्य तादृशाध्यासहेतुत्वमिति मयाऽप्यङ्गीक्रियत इति साम्यात् ।

एतेन इदं रजतमिति भ्रमाच्छुक्तौ रजतार्थिप्रवृत्तिः सर्वानुभवसिद्धा । सिद्धा च समानविषयकज्ञानसाध्या वा साऽत्र, अन्यथाऽतिप्रसङ्गात् । समानविषयकज्ञानस्य स्मृतित्वे तस्य तादृशानुभवजन्यसंस्कारजन्यता सर्वथैवोपेया । न च प्रकृते संस्कारस्तथाविधानुभवजन्यः । स्मृतेस्तादृशसंस्कारजन्यत्वे च तया पुरोवर्तिशुक्ताविष्टतावच्छेदकवैशिष्ट्यानवगाहनात्तत्र प्रवृत्तिनिर्वाहानुपपत्तिरिति तत्र प्रवर्तकज्ञानस्य सर्वथाऽनुभवरूपत्वमुपेयमिति निरस्तम् ।

किञ्च गोमयाद्वृश्चिकजननमिव दोषघटितविलक्षणसामग्रीतः शुक्त्यादौ रजताद्युत्पत्तेरुपपत्तिः उत्पन्नस्यापरोक्षत्वानुपपत्त्या तत्र विद्यमानता च । तथापि तदुत्पादकसामग्र्यां न त्वदभिमताज्ञानस्य प्रवेशो युक्तः । शुक्तिरङ्गवङ्गादौ शुक्तित्वादिना प्रत्यक्षतः प्रमिते सर्वमिदं रजतमित्याहार्यापरोक्षभ्रमानुरोधेन तत्रोत्पन्नस्य विद्यमानस्यापि रजतस्य त्वदभिमताज्ञानं विनैवोपपत्तेः । न हि विरोधिनि तत्त्वसाक्षात्कारे सति तत्र त्वदभिमताज्ञानं भवितुमर्हति । अन्यथा शुक्तेः तत्त्वतस्तदुपस्थितेः प्रागिव तदापि शुक्तिं न जानामीत्यनुभवप्रसङ्गात् । एवं जपाकुसुमग्रीवादिरहिततया तथानिश्चये च तत्सन्निधिदशायां लोहितत्वेन प्रतिमुखवत्त्वेन यथायथमपरोक्षज्ञानसत्त्वेन तत्र तदन्यथानुपपत्त्योत्पन्नस्य विद्यमानस्य लौहित्यप्रतिमुखादेः त्वदभिताज्ञानं विना क्लृप्तसामग्र्यैवोत्पत्तेश्च । न हि विरोधिन्यपरोक्षज्ञाने जागरूके तत्र त्वदभिमतमज्ञानं सम्भावयितुं शक्यमित्युक्तमेव । (अत्र च) न च आहार्यस्थले त्वया असंसर्गाग्रहादेरिव मयापि तत्र भावरूपाज्ञानस्य हेतुत्वं नोपेयमिति वाच्यम् । तथापि व्यभिचारानुद्धारात् । मम संसर्गाग्रहादिकं विनाप्यपरोक्षभ्रमस्वीकारवत् तव भावरूपाज्ञानं विना अपरोक्षभ्रमस्वीकाराभावात् । मया भ्रमप्रमासाधारणानाहार्याज्ञानमात्रे विलक्षणसामग्र्या एवोपगमात् । विशेषादर्शनादेरनाहार्यज्ञानमात्रसामग्रीत्वोपगमात् ।

एतेन आहार्यापरोक्षभ्रमस्थले सामग्रीबाधात् न रजतादिविषयोत्पत्तिरङ्गीक्रियते । न वा तद्विद्यमानतेति निरस्तम् । तथासति ममेव तव विषयव्यभिचार्यपरोक्षभ्रमप्राप्त्या विवादपर्यवसानात् । एतेनैव

आहार्यज्ञानमेव नोपेयं मानाभावादित्यपास्तम् । जल्पकथायां वादिप्रतिवादिनोः प्रतिवाक्यादिना ज्ञानानुत्पत्त्या तत्कथायाः बधिरकलहत्वापत्तेः ।

किञ्चैवमपि सोपाधिकाध्यासस्थले व्यभिचारप्रसङ्गतादवस्थ्यम् । एतेनैव आहार्यापरोक्षभ्रमस्थले ज्ञानं(लेऽज्ञानं) भावरूपमस्त्येव । तथाच तद्घटितसामग्र्या रजतादिविषयस्योत्पत्त्या विद्यमानताऽप्यविकला । अत एव शुक्तितत्त्वसाक्षात्कारानन्तरमपि कालान्तरे तत्रैव शुक्तौ रजतावगाह्यपरोक्षभ्रमः सर्वानुभवसिद्धः । न च अधिष्ठानतत्त्वसाक्षात्कारेण तदावरणशक्तिनिवृत्त्या तद्विशिष्टस्याज्ञानस्य विरहेऽपि [1]विशेषशक्तिमतः तस्य सत्त्वेनाज्ञानघटितरजताद्युत्पत्तिसामग्र्यवैकल्यात् । एवमुक्तसोपाधिकस्थलेऽपि तादृशसामग्रीसत्त्वात् स्फटिकादौ लौहित्याद्युत्पत्तिर्न दुर्लभा । तथा तद्विद्यमानताऽपि । एवञ्चापरोक्षभ्रममात्रस्य कथं न विषयाविनाभावस्थलम् ? कुतो न । एवञ्च ज्ञानस्याज्ञानगतावरणशक्त्यैव विरोधापत्त्या अनेन अज्ञाननिवृत्त्यापत्तेः । न चैवम्, मोक्षेऽप्यज्ञानानुवृत्तिप्रसङ्गात् । एकवारं शुक्तितत्त्वसाक्षात्कारानन्तरं सर्वतदज्ञानावरणशक्तिनिवृत्तेः । शुक्तेरनावृतापरोक्षसंविदध्यस्ततायाः तच्छुक्तिसत्त्वान्तरादपरोक्षत्वप्रसङ्गात् । एवं सोपाधिकाध्यासस्थलेऽपि यावत् स्फटिकादिसत्त्वं तदापरोक्ष्यापत्तेश्च । वृत्तिं विनाऽसङ्गैकस्वभावचिदुपरागासम्भवात् न तथाऽपरोक्षप्रसङ्ग इति चेन्न । त्वया दृग्दृश्ययोराध्यासिकसम्बन्धस्याभ्युपगमेन तस्य च वृत्त्यभावदशायामप्यनपायेन वृत्तिप्रयोज्यावरणनिवृत्तिसत्त्वेन तथाविधतदापरोक्ष्यस्य वज्रलेपत्वादिति दिक् ।

तथाच त्वदभिमताज्ञानस्य रजताध्यासस्थले सर्वथाऽसम्भवात्, तत एव रजतादेः तद्विलासत्वासम्भवादज्ञानेन तदुत्पत्तेरिव ज्ञानेन तन्निवृत्तेरननुभवाच्च अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा निवृत्तिर्बाध इत्ययुक्तम् ।

ननु पूर्वतन्त्रे यो बाधशब्दार्थः स एवात्र बाधशब्दार्थो भविष्यतीति चेत् तत्र हि बाधशब्दार्थो द्विविधो व्युत्पादितः, अप्राप्तबाधः प्राप्तबाधश्चेति । तल्लक्षणं च तत्रैवोक्तम् । तद्विषयाश्च प्रदर्शिताः ।

तथाहि— तत्र कल्पनीयस्य शास्त्रस्य शीघ्रेण शास्त्रेण तद्विषयापहारात् कल्पनामूलं निराकृत्य निरोधोऽप्राप्तबाधः । क्लृप्तस्यैव शास्त्रस्य सामान्यद्वारेण विशेषानुसारतः (शास्त्रदीपिका २१६ पुटं ) क्वचिद्विषयविशेषे प्राप्त्यपवादः प्राप्तबाधः । (भाट्टदीपिका २१३ शम्भुभट्टीये)

तदुक्तं मिश्रैः—

---

१. विक्षेपशक्तिमतः

क्लृप्तस्य शास्त्रस्य तु कल्पनायां निरुध्यते मूलनिकर्त(कृन्त)नेन ।
क्लृप्तेन शीघ्रेण फलापहारादप्राप्तबाधं तमुदाहरन्ति ॥

साधारणस्य शास्त्रस्य विशेषविषयादिना सङ्कोचः क्लृप्त-
रूप(स्येव)स्य प्राप्तबाधोऽभिधीयते ॥

तत्र आद्यः तार्तीयः । श्रुतिलिङ्गादिविषयः । यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र द्वितीयाश्रुत्या कदाचन स्तरीरसि इत्याद्यधिकारस्थसामर्थ्यरूपलिङ्गस्य बाधः । तत्र हि प्रत्यक्षया शीघ्रप्रवर्तिन्या श्रुत्या मन्त्रविनियोगाकाङ्क्षायां शान्तायां श्रुतिकल्पनापेक्षया विलम्बितप्रवृत्तिकेन लिङ्गेन इन्द्रोपस्थाने विनियोगो न कल्प्यते । एवमुत्तरत्र पूर्वपूर्वप्रमाणेनोत्तरोत्तरप्रमाणप्रवृत्तिप्रतिबन्धोऽनुसन्धेयः । स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि इति विभज्योभयत्र विनियोजिकाभ्यां तच्छब्दापादितायाः एकवाक्य-तायाः अविभज्यविनियोजिकायाः बाधः । (पू.मी. अ.३, पा.३, सू.१४) सूक्तवाकनिगदे 'अग्नी-षोमाविदं हविरजुषेतामवीवृधेताम् महो ज्यायोऽक्राताम्' इत्यत्र इदं हविरजुषेतामित्यादीनां पदानां प्रत्यक्षावगतया बाधः । (अग्नीषोमे) अभिषेचनीये सोमयागसन्निधौ अक्षैर्दीव्यतीत्यादिभिः विहितानां विदेवनादीनां राजसूये विनियोजकेन प्रकरणेन सन्निध्याम्नानरूपस्य स्थानस्य अभिषेचनीयविनियोज-कस्य बाधः (अ.३, पा.३, सू.१४) । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै इति मन्त्रस्य सन्निधिरूपेण स्थानेन सान्नाध्यपात्रशुन्धने विनियोजकेन पौरोडाशिकसमाख्ययया पुरोडाशपात्रेण शुन्धने विनि-योजिकायाः बाधः (अ.३, पा.३, सू.१४) । विस्तरस्तु आकरे बलाबलाधिकरणे पर्यालोचनीयः । तत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् (अ.३, पा.१, सू.१४) इति सूत्रे अर्थविप्रकर्षः मन्थरगामित्वरूपः दौर्बल्यहेतुरुपन्यस्तः तद्धेतुसाधारण्यात् वार्तिके प्रत्यक्षा-दिभिरनुमानादीनां बाधो दर्शितः । तत्र प्रत्यक्षेतरेषां प्रमाणानां प्रमाणैः, प्रमाणभासानां च बाधः तत्रान्तरेषु प्रसिद्धः । औदुम्बरीस्पर्शनादिश्रुत्या सर्ववेष्टनादिस्मृतेर्बाधः । मन्वाद्याप्तप्रणीतया आत्म-हनननिषेधस्मृत्या पाषण्डप्रणीतायाः केदारादिष्वात्महननविधायकस्मृतेर्बाधः । शूद्रदारप्रतिग्रहनिषेध-रूपाविगीतस्मृत्या याज्ञवल्क्यादिविगीतायाः तद्विधानस्मृतेर्बाधः । अदृष्टार्थया ब्राह्मणहनननिषेध-स्मृत्या आत्मरक्षणादिदृष्टार्थायाः जिघांसुब्राह्मणहननस्मृतेर्बाधः । श्रुतिप्रभवया अपूर्वप्रतिग्रहस्मृत्या लिङ्गप्रभवायास्तन्निषेधस्मृतेर्बाधः । विधिप्रभवया अतिथिश्रोत्रियस्य कृते गवाद्युपघातार्थ(द्युपहारा)-वादप्रभवायाः स्मृतेः तद्धननस्मृत्या बाधः (अ.१, पा.३) मातुलसुतापरिणयनादिनिषेधस्मृत्या तादृशा-चारस्य बाधः । अक्ताः शर्करा उपदधाति तेजो वै घृतं (जै.सू. अ.१, पा.४, सू.२७, भाट्टसङ्ग्रहे ३५) इत्यत्र असन्दिग्धेन घृतशब्देन सन्दिग्धस्याक्तशब्दार्थस्य बाधः । क्षुत आचामेदिति (भाट्टसङ्ग्रहे

शिष्टाकोपाधिकरणम् १४ पुटम्) श्रुत्या प्रबलपदार्थाश्रयया वेदं कृत्वा वेदिं करोतीति श्रुतेर्बाधः। उच्चैः ऋचा क्रियते (भाट्टसङ्ग्रहः १०४ पुटम्) इत्यादौ उपक्रमस्थन वेदशब्देनोपसंहारस्थस्य ऋगादिपदस्य बाधः। [1]व्रीह्यादाववदानादेर्नियमादृष्टार्थत्वेन सान्नाय्याज्यादावत्यक्तादृष्टत्वस्य बाधः। पशुपुरोडाशादेः (१०-९-१ भाट्टसङ्ग्रहे ११५ पुटम्) देवतासंस्कारतया सन्निपत्योपकारित्वेनारादुपकारित्वस्य बाधः। दध्ना जुहोतीत्यादौ गुणविधिपक्षे अल्पविधानेन विशिष्टविधिपक्षे विशेषणविशेष्यरूपानेकार्थत्वस्य (अ.१, पा.४, पुट २२ भाट्टसङ्ग्रहः) बाधः। एकस्य सास्नादिमदर्थस्य एकगोशब्दार्थत्वेन गाविगाय्याद्यनेकशब्दत्वस्य बाधः (अ.१, पा.३, अधि.९, पुटम् २० भाट्टसङ्ग्रहः)। एकस्य शब्दस्य एकाकृत्यर्थत्वेन अनेकव्यक्त्याकृत्यर्थत्वस्य बाधः (१-३-१० (२० पु.) भाट्टसङ्ग्रहः) अश्वप्रतिग्रहेष्टिवाक्ये (अ.३, पा.४, १४ भाट्टसङ्ग्रहः १३०) (दोषात् तु) दातुरिष्टिपक्षे प्रतिग्रहीतुरिष्टिपक्षे वरुणाय इति चतुर्थ्याः पञ्चम्यर्थे अनयदिति नयतेश्च प्रतिग्रहे कल्प्यत्वात्।

स्वादंवत्तामिति (३-४-१५, शा.भाष्यम्) वरुणस्याप्राधान्येन निर्दिष्टतया देवतात्वाभावेन देवताशब्दस्याविवक्षितार्थत्वात् बहुबाधस्य बाधः। वारवन्तीयस्य (अ.३, पा.२, पुटम् १०५ भा.सं.) सामवेदोत्पन्नतया यजुर्वेदगुणमुख्ययोः विहिततया च याजुर्वेदिकेन उपांशुत्वेन सामवेदिकस्य उच्चैस्त्वस्य बाधः। स्वशाखाविहितेन (कौस्तुभे अ.२, पा.२, विद्वदधिकरणम्) अग्नीषोमीयपुरोडाशस्य एकादशकपालत्वादिना शाखान्तरविहितस्य द्वादशकपालत्वादेः बाधः। प्रकरणाधीतेन (अ.३, पा. ६ अधि.२, पुटम् १४८) पाञ्चदश्येन अनारभ्याधीतस्य साप्तदश्यस्य बाधः।) श्येनप्राकृताङ्गेषु (अ.७, पा.१) चोदकाश्रयणेन नानाकर्तृकत्वेन (नानतिकर्तृत्वेन) प्रयोगवचनाश्रयस्य उद्गातृकर्तृकत्वस्य बाधः। आग्नेयीयाग्नीषोमीयमन्त्रयोः (अ.५, पा. १) मन्त्रक्रमेण ब्राह्मणक्रमस्य बाधः। ऐन्द्रपुरोडाशादौ (अ.८, पा.१) द्रव्याश्रयेण औषधविध्यन्तरादिना देवताश्रयसान्नाय्यविध्यन्तरस्य बाधः। अध्वरकल्पायां पूर्वाम्नातेन अग्नीषोमीयविकारेण पौर्णमासीतन्त्रप्रवर्तकेनाम्नातवैष्णवेन (अ.५, पा.१) अमावास्यायामुपांशुयाजाङ्गीकारात् तद्विकारस्यात एवामावास्यातन्त्रप्रवर्तकस्य पश्चादाम्नातस्य सारस्वतस्य बाधः। बर्हिर्देवसदनं दामीत्यत्र (अ.३, पा.२) मुख्यकुशेन गौणस्योलपस्य बाधः। स्वर्गकामो यजेत (अ. ६-१-१) इत्यत्र भावनायाः पुरुषार्थभाव्यकत्वबोधिन्याः प्रत्ययश्रुत्या धात्वर्थभाव्यकत्वबोधिन्याः पदश्रुतेर्बाधः इत्येते अप्राप्तबाधाः।

सर्ववेष्टनादिस्मृतेः (अ.१, पा.३) द्वित्राङ्गुलिव्यतिरिक्तसर्ववेष्टनादिविषयत्वसम्भवेन अशेषवेष्टनश्रुतिकल्पनाशक्तत्वात्, अनाप्तस्मृतेश्च श्रुत्यकल्पकत्वस्य स्पष्टत्वात्। विगीतायाश्च स्मृतेरपि आप-

१. व्रीह्यादाववघातादे

द्विषयत्वेऽल्पदोषार्थत्वसम्भवे श्रुत्यननुमापकत्वात् । आततायिवधादिस्मृतेश्चात्मरक्षणप्रयुक्तिमात्रार्थत्वात्, सङ्कचे वधपरश्रुत्यकल्पकत्वात्, लिङ्गार्थवादप्रभवायाश्च स्मृतेः तन्मूलत्वेनैव च श्रुत्यकल्पकत्वात् । मातुलसुतादेः परिणयनादेराचारस्य रागमूलतया श्रुतिकल्पनाऽशक्तत्वात् (अ.३, अ.३, अधि.२) । श्रुत्यादौ च पील्वादि (गजः)शब्दप्रयोगरूपानाचारस्य सादृश्यादिमूलत्वसम्भवे वा अनुपपत्तिक्षयात् वाचकशक्तिकल्पनाऽशक्तेः । सन्दिग्धस्य विध्युद्देश्यस्य सदिग्धवाक्यशेषापेक्षत्वेन (अ.१, पा.४ प्र.पू. अन्तिमं) तद्विरुद्धार्थविध्यशक्तत्वात् दुर्बलक्रमाद्याश्रयबलवत्पदार्थप्राप्त्यपेक्षत्वेन तद्विरुद्धार्थक्रमादिविध्यशक्तत्वात्, उपसंहारस्य चोपक्रमापेक्षत्वेन तद्विरुद्धार्थविध्यशक्तत्वात् (अ.३, पा.३, अ.१) । अवघातादिविधेश्च ओषध्यादिषु नियमादृष्टार्थत्वेन परिहृतानर्थक्यस्य आज्यसान्नाय्ययोः (अ.७, पा.१, अ.३) अत्यन्तादृष्टार्थत्वात्, अवघातादिविध्यशक्तत्वात् । अग्नीषोमीयपशुपुरोडाशयागविधेश्च लिङ्गावगतदेवतासंस्काराख्यसन्निपत्योपकारार्थयागविधानेन परिहृतानर्थक्यस्य (१० अ., ९ पा., अन्तिम) प्रकरणावगतारादुपकारार्थयागविध्यशक्तत्वात् । अल्पार्थविधानेन च कृतार्थस्य विधेः अनेकार्थविध्यशक्तत्वात् । एकस्य शब्दस्य वाचकत्वकल्पनया शक्तिजशक्तिमूललाक्षणिकशब्दान्तरप्रयोगोपपत्तेः शब्दान्तरशक्तिकल्पनस्याशक्यत्वात् । एकस्यार्थस्य वाच्ये शक्तिकल्पनया तदविनाभूतार्थान्तरप्रयोगोपपत्तेरन्यत्र शक्तिकल्पनस्याशक्यत्वात् । प्रतिगृह्णातिमात्रबाधेन चाश्वप्रतिग्रहेष्टिवाक्योपपत्तेर्बहुबाधकल्पनस्याशक्यत्वात् (अ.३, पा.४) । उच्चैः ऋचा क्रियते इति करोतेः विनियोगा वाचित्वेनोत्पत्तिस्वरसविध्यशक्तत्वात् (अ.३, पा.३, अधि.९) । परशाखाविहितस्य च मूलनिश्चयात् प्राक् (अ.३, पा.३) अश्रद्धेयत्वेनानुष्ठेयत्वात् । अनारभ्याधीतस्य च विकृतिप्रकरणावगतविकृत्यन्वयनिराकाङ्क्षीकृतस्य प्रकृत्यन्वयकल्पनाशक्तेः (अ.३, पा.६, अधि.१) । प्रयोगवचनस्य चोदकापेक्षत्वेन तद्विरुद्धार्थविध्यशक्तत्वात् । प्रयोगसमवायिमन्त्रक्रमविकल्पितक्रमविधायिश्रुतिविहितेन क्रमेण प्रयोगवचनक्रमाकाङ्क्षायां (अ.५, पा.१ अधि.२) निवृत्तायां ब्राह्मणक्रमस्य क्रमविधायिश्रुतिकल्पनाशक्तेः । स्वरूपसमवायान्तरङ्गद्रव्यसामान्ययुक्तसुसदृशप्रकृतिलाभसम्भवे शब्दमात्रसमवायिबहिरङ्गदेवतासामान्ययुक्तस्य कर्मणः मन्त्रसदृशत्वेन यदि सुसदृशमन्यल्लभ्यते न तत्र मन्दसदृशं ग्राह्यमिति न्यायेन प्रकृतित्वकल्पनाऽशक्तेः (अ.८, पा.९, अ.६, पा.५) ।

पूर्वाम्नातकर्मतन्त्रप्रवृत्त्या च प्रसङ्गलभ्योपकारस्य पश्चादाम्नातस्य कर्मणः स्वकीयमन्त्रप्रर्वकत्वापत्तेः । मुख्येऽर्थे मन्त्रविनियोजकलैङ्गिकश्रुतिकल्पनेन मन्त्राकाङ्क्षायां निवृत्तायां गौणार्थे विनियोजकश्रुतिकल्पनाशक्तेः (अ.२, पा.१ अ.८) सन्निकृष्टया प्रत्यक्षश्रुत्या भाव्याकाङ्क्षायां निवृत्तायां

पदश्रुतेः तत्समर्पकत्वाशक्तेः सर्वेष्वेतेषु अप्राप्तबाधोऽनुसन्धेयः । श्रुतिलिङ्गादिषूक्तलक्षणोऽप्राप्तबाधः । अनुमानादिषु तु मन्थरगामित्वमूलोऽप्राप्तबाध इति विवेकः ।

प्राप्तबाधो यथा सप्तदशानुब्रूहीति वैश्यस्तोमविहितेन वैश्यनिमित्तकेन (अ.५, पा.३) नित्यस्य सामिधेनीपाञ्चदश्यस्य बाधः । एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्येति विहितेन पुरुषार्थेन एकविंशत्यादिना नित्यनैमित्तिकयोः पाञ्चदश्यसाप्तदश्ययोः बाधः । सर्वदक्षिण्या (अ.६, पा.५, अन्तिमं) दक्षिण्यनिमित्तभूतप्रतिहर्तृजातपाठादपौर्वापर्यात् नैमित्तिकपौर्वापर्येण विरोधपरेण पूर्वस्य बाधः । वैकृतेन शरमयं बर्हिर्भवतीत्यादिना विहितेन शरादिना प्रकृतस्य बर्हिषो बाधः (अ.१०, पा.१, अधि.१) एवं द्वारलोपेन पर्युदासेन च कृष्णलादिषु (अ.१०, पा.१) अवघातादिधर्मस्य, पितृयज्ञादिषु वरुणादेः वैकृतस्य बाधः । उच्चैर्निगदेन इति विहितेन परसम्बोधनार्थतया सप्रयोजनेन उच्चैस्त्वेन उपांशु यजुषेति विहितस्य उपांशुत्वस्य (अ.२, पा.१) निगदेषु बाधः । पञ्चदशरात्रे ऐन्द्रीसुब्रह्मण्यप्रवर्तकेन भूयसा ज्योतिरादिना आग्नेयीसुब्रह्मण्यप्रवर्तकस्याल्पस्य अग्निष्टुत्कर्मणो बाधः (अ.७, पा.१) । विशेषविहितेन पदादिना सामान्यविहितस्याहवनीयस्य बाधः । यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयात् मन्द्रं प्रणीतायां मन्द्रतरमातिथ्यायामित्यादिना विहितेन स्वरेण अन्यत्र निरवकाशेन यत्किञ्चित् प्राचीनमग्नीषोमीयात् उपांशु चरन्ति इति अग्नीषोमीयप्राग्भाविशेषोपदार्थो (?) द्विर्विहितस्योपांशुत्वस्य दीक्षणीयादीनामङ्गेष्वन्येषु सौमिकेषु च (अ.७, पा.१) (७८) सावकाशस्य बाधः । अवमाहेन विष्णुप्रधानेन निर्वापणेन अग्निहोत्रहविषि आहवनीयं निर्वपति इत्यङ्गभूतायाः (अ. १०) अग्निहोत्रहवण्याः (हविषा) बाधः । य इष्ट्यादिवाक्यगतेन (अ.११, पा.१) प्रधानधर्मेण श्रुतायाः पूर्वकालत्वेन अङ्गधर्मस्य दीक्षणीयादिपर्वकालत्वस्य बाधः । इत्येवं दशविधः प्राप्तबाधः । एतेषु प्रागुक्तलक्षणानुसारेण विषयसङ्कोचोऽनुसन्धेयः ।

एवञ्च जगद्विषयत्वेन नाप्राप्तबाधः सम्भवति । प्रत्यक्षादिना जगज्ज्ञानानन्तरमेव त्वया श्रौतनिषेधप्रवृत्त्यङ्गीकारात् । प्राप्तबाधस्तु सम्भवेत् । स च न जगन्मिथ्यात्वापादकः । तेन विधिनिषेधप्रमाणयोर्भिन्नविषयत्वस्य लाभात् । सामान्यशास्त्रेण विशेषेण ब्रह्मेतरसर्वविषयतया प्रवृत्तस्य निषेधशास्त्रस्य यस्मिन् द्यौरित्यादिविशेषशास्त्रप्रतिपन्नवियदादिप्रपञ्चेतरप्रातिभासिकजगद्विषयत्वेन वा यत्र यदवच्छिन्ने यदुपहिते वा ब्रह्मचैतन्ये विशेषशास्त्रेण जगत् प्रतिपन्नं तदवच्छिन्ने तदुपहिते वा तच्चैतन्ये तन्निषेधविषयस्वीकारायोगाच्च । किञ्च व्यवस्थित एव निषेधस्त्वया अभ्युपगन्तव्यः । अविशेषेण सकलनिषेधेऽभावरूपापहतपाप्मत्वादिधर्माणामपि निषेधापत्त्या अभावाभावस्य भावत्वनियमेन ब्रह्मणः पाप्मत्वादिसम्बन्धापातात् । किञ्च श्रुत्यैव स्वाभिप्रेतार्थस्य वर्णने तस्यैवार्थस्य सङ्ग्रहो युक्तः । न तु

पुरुषोत्प्रेक्षितस्य यस्य कस्यचिदर्थस्य । 'न हि जीवतः कवेरभिप्रायो वर्णनीयः' इति न्यायात् । अत एव उग्रं वचः इत्यादिशब्दस्य श्रौतस्य अशनायापिपासे ह वा उग्रंवचः इत्यादिश्रुत्युक्त एवार्थः सर्वैरप्युपास्यते । तथा च नेह नानास्ति किञ्चन एकमेवाद्वितीयम् इत्यादिनिषेधश्रुतिषु किञ्चन अद्वितीयादिपदानामनिर्धारितार्थानां निर्धारितार्थत्वसिद्ध्यर्थं तन्निर्धारकश्रुत्यन्तरगवेषणायां यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः तेनेदं पूर्णं पुरुषेण सर्वम्, तस्माद्धान्यन्न परं(रः) किञ्चनास । यद्वैतं न पश्यति, पश्यन्वै तं न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते । अविनाशी वा, न तु तद् द्वितीयमस्ति । ततोऽन्यद्विभक्तं पश्येत् । न तत्समश्चाभ्यधिकश्च दृश्यते'' इत्यादि श्रुतय एव तन्निर्धारकश्रुतित्वेनाश्रयितुमुचिताः । विशेषश्रुतित्वात् । ''मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय'' इति भगवद्गीतावचनाद्युपबृंहणाच्च । तत्र हि तस्माद्धान्यन्न परः किञ्चनासेति ब्रह्मापेक्षया यत्परमुत्कृष्टं पूर्णं वा तस्यैव निषेधः प्रतीयते । न त्वतथाभूतस्य जगतः । तत्रैवापरमस्ति किञ्चित् किञ्चनासेति तस्य सत्त्ववर्णनात् । अन्यथा ब्रह्मेतरमात्रपरत्वे तत्रोभयत्र परशब्दस्य भिन्नार्थत्वे, यस्मिन् परं नेति वा तस्माद्धान्यन्नेति वेत्युक्तौ, विवक्षितार्थलाभेन इतरपदवैयर्थ्यात् । मत्तः परमित्युपबृंहणानुसारेण परशब्दस्योत्कृष्टपरत्वौचित्यात् । यस्मात्परं नेति नञः पूर्वोत्तरपदाभ्यामपि देहलीदीपन्यायेन सम्बन्धाश्रयणस्य, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चिदित्युत्तरवाक्याननुसारित्वेनायोगात् । परापरोभयब्रह्मेतरसर्वनिषेधपरत्वाश्रयणे तेनेदं पूर्णं पुरुषेण सर्वमिति वाक्यशेषानुपपत्तेः । न हि घटस्यैवाभावे तस्य जलेन पूर्णत्वमुपपद्यते । यद्वैतन्न पश्यतीत्यत्र चानुवादानुरोधेन निषेधगतविशेषार्थकतुशब्दानुरोधेन च द्वितीयविशेषस्यैव निषेधो न तु द्वितीयशब्दार्थमात्रस्येति स्पष्टमेव ।

अयमत्र निर्गलितोऽर्थः । पश्यन्वै तन्न पश्यतीत्यत्र, तच्छब्दो ब्रह्मपर्यायः । तदिति महतो भूतस्य नामेति श्रुतेः । ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः इत्यादिस्मृतयश्च । पश्यन्सदा सर्वद्रष्टा परमात्मेति यावत् । सङ्कोचकाभावात् । तुरीयं तत्सर्वदृक् सदा । यः सर्वज्ञः सर्वविदित्यादिश्रुतेश्च । यद्वै तन्न पश्यति वैनं पश्यति वै, प्रणिधाने, सत्यपि न पश्यति चेत्यर्थः । तत्तात्पर्यातिशयज्ञापनार्था द्विरुक्तिः, न तु द्वितीयं नास्तीत्युत्तरत्र सम्बध्यते । सर्वज्ञेश्वरबुद्ध्यविषयस्याभावादित्यर्थः । न चात्र व्यवहितान्वयो दोषः । सन्निधानापेक्षया आकाङ्क्षायाः प्रबलत्वात् । नाप्यप्रसक्तप्रतिषेधः । तादृशस्य निषेध्यस्य प्रातिभासिकादिप्रपञ्चस्यास्मदादिबुद्ध्या प्रसक्तिसम्भवात् । ततः, ईश्वरादन्यद्विभक्तं परस्परविभक्तञ्च यद्वियदादिरूपं जगत् परब्रह्मभूतसर्वज्ञः पश्येत्, तदस्त्येव । सत्यमेवेति यावत् । सर्वज्ञेश्वरबुद्धिविषयस्य सत्यत्वादिति भावः । नन्वीश्वरबुद्धेर्भ्रमत्वात् तद्विषयत्वेन कथं वियदादेः सत्यत्वमित्यत

आह **न हीत्यादिना**। द्रष्टुः सर्वज्ञस्य दृष्टेर्वियदादिविषयकबुद्धेः विपरिलोपो बाधो न विद्यते, कुतः ? अविनाशित्वात्। नित्यत्वादित्यर्थः। दोषजन्यज्ञानस्यैव भ्रमत्वेन, सर्वथा जन्यत्वाभावे, सुतरामीश्वरज्ञानस्य भ्रमत्वं नाशङ्कनीयमिति भावः। न चात्र द्रष्टुर्दृष्टेरिति सामानाधिकरण्यात् अद्रष्टृरूपा या दृष्टिः तस्या विपरिलोपो न विद्यत इत्यर्थः। न दृष्टेर्द्रष्टारं पश्येरिति वाक्यान्तरे वैयधिकरण्येन निर्देशदर्शनात् परेणापि दृष्टिरित्यादिशब्दार्थेभ्यो दृष्टमन्त्रादिशब्दार्थानां भेदाभ्युपगमाच्च। न च विपरिलोपशब्दस्य नाशार्थकत्वमेव युक्तम्। तथासति, अविनाशित्वादिति हेतोः सादृश्यावैशिष्ट्यप्रसङ्गात्। न च दृष्टेरविनाशित्वे द्रष्टुरविनाशित्वं हेतुरिति न साध्यावैशिष्ट्यमिति युक्तम्। तथात्वे हेतोः वैयधिकरण्यप्रसङ्गात् अप्रयोजकत्वाच्च। तस्मादेतच्छ्रुतेः न पराभिप्रेतार्थः। किन्तूक्तरीत्या अस्मदुक्त एवेति। पराभिप्रेतार्थपरत्वे च न तद् द्वितीयमस्तीत्येतावतैव परिपूर्णत्वेन, यद्वैतं न पश्यतीत्यादिवैयर्थ्यमिति। न तत्समश्चाभ्यधिकश्च दृश्यते, इत्यत्र यो निषेधो विशेषविषय इति परेणाप्यङ्गीकृतमिति न तत्र विवदितव्यम्।

किञ्च सदेव सोम्य इदमग्र आसीदिति श्रुताववधारणेन सृष्टेः पूर्वं सच्छब्दार्थस्य सत्वं तदितरस्याभावः प्रतीयते। सोऽभावः तस्य न स्वरूपेण। तदैक्षत तत्तेजोऽसृजतेत्याद्युत्तरवाक्यप्रतिपन्नतेजोऽबन्नात्मकसृज्यप्रपञ्चकारणत्वेन तदा, सच्छब्दार्थस्येव प्रकृतेः जीवानां तत्कर्मणां च विचित्राणां स्वरूपेण विद्यमानत्वात्। किन्तु आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमिषदिति श्रुत्यन्तरानुसारेण मिषत्त्वविशिष्टस्यैव तस्याभावः। स च तदा प्रकृत्यादीनां स्वरूपेण सत्त्वेऽपि सविशेषणे हीति न्यायेन मिषत्त्वरूपविशेषणविरहेणाप्युपपन्न इति न तस्य स्वरूपेण सत्त्वापादक इत्यकामेनापि स्वीकार्यम्। अन्यथा नान्यत्किञ्चनेत्येतावता, नान्यदित्येतावतैव वा विवक्षितार्थसिद्धेः शेषवैयर्थ्यात्। न हि नान्यदित्युक्त्या वा न किञ्चनेत्युक्त्या वा अभिप्रेतं सच्छब्दार्थादितरस्यासत्त्वं न सिद्ध्यतीत्यस्ति। किञ्चनाग्र आसीत्सोम्येति तच्छ्रुत्युपात्तानां कालविशेषादीनां तदा सत्त्वेन व्याहतभाषित्वापत्त्या तेषां तन्निषेध्यत्वमनुपपन्नम्।

किञ्चैवं सृष्टेः पूर्वं सच्छब्दार्थादितरस्य तद्वत् प्राधान्येन सत्त्वप्रसक्तौ, तन्निरासाय सच्छब्दार्थस्यैव स्वातन्त्र्येण तदावस्थानं नेतरस्येति ज्ञापनाय तत्रैव श्रुतौ सावधारणस्य प्राधान्यवाच्येकशब्दस्योपादानं, अन्यथा तन्न स्यात्। एवञ्च तदितरस्यासत्त्वमप्रधानत्वेन सिद्ध्यतीत्येतच्छ्रुतिबलेन कथं तन्मिथ्यात्वं सिद्ध्यतीति न जानीमः।

एकशब्दस्य प्राधान्यवाचित्वं सुप्रसिद्धमेवेति न तत्र विवदितव्यम्। तथाच तमो वा इदमेकमास। तत्परेणेरितं विषमत्वं प्रयातीति श्रुतिप्रतिपन्नतमःशब्दार्थभूतप्रकृतेः सत्त्वं, परशब्दापरनामकसच्छब्दार्थभूतपरब्रह्मनियम्यत्वं च सङ्गच्छते। इदंशब्दश्च येनाश्रुतमित्यादिपूर्ववाक्यप्रतिपन्नपरब्रह्म-

**परः न तु परीत्या सृज्यतेजोबन्नादिप्रपञ्चपरः । तस्य सच्छब्दार्थभूतब्रह्माभिन्नत्वेनान्वयायोगात् । बाधायाः सामानाधिकरण्यमित्यस्य चान्यत्र निरस्तत्वात् । न चैवमद्वितीयशब्दस्य स्वसमानजातीय-द्वितीयराहित्याद्यर्थकस्य सावधारणैकशब्दोक्तार्थानुवादित्वप्रसङ्ग इति वाच्यम् । एकशब्दप्रवृत्तिनिमित्त-प्राधान्यापेक्षया स्वसमानजातीयद्वितीयराहित्यरूपाद्वितीयशब्दस्य भिन्नत्वेनानुवादित्वप्रसङ्गपरिहारात् ।**

किञ्चाद्वितीयमित्यस्य पर्युदासवृत्त्या द्वितीयशब्दितप्रपञ्चवैलक्षण्यमेवार्थः । नेति नेतीति श्रुत्यनु-सारात् ।

तथाहि— द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमित्यादिना प्रक्रान्तमूर्तामूर्तादिप्रपञ्चप्रकारार्थेन इति-शब्देनानूद्य ब्रह्मणस्तद्वैलक्षण्यं प्रतिपाद्यते । न चात्रेतिशब्दः इदंशब्दसमानार्थक इति वाच्यम् । तस्य प्रकारार्थकत्वमिव इदंशब्दसमानार्थकत्वाभावात् । तस्य प्रपञ्चमात्रपरत्वे नियामकाभावाच्च । सत्पदार्थ-भूतं ब्रह्मापि ब्रह्मभिन्नमित्यर्थपर्यवसाने विरोधप्रसङ्ग इति वाच्यम् ।

एतद्विरोधप्रसङ्गस्यैव नियामकतया द्वितीयशब्दस्य प्रपञ्चमात्रपरत्वाश्रयणात् ।

न विद्यते द्वितीयं यस्मिन्निति बहुव्रीहिमङ्गीकृत्य प्रपञ्चमात्रनिषेधमङ्गीकुर्वता परेणापि द्वितीय-शब्दस्य ब्रह्मेतरद्वितीयपरत्वस्यावश्याभ्युपगन्तव्यत्वाच्च । अन्यथा ब्रह्मणोऽपि स्वस्मिन्निद्ध(स्थित)त्वेन वियदादिप्रपञ्चवत् मिथ्यात्वप्रसङ्गात् । एतेन सदेव सोम्य इदमग्र आसीदित्यत्रेदंशब्दस्य प्राक् वस्तुतः ब्रह्मपरत्वे, आत्मा वा इदमेक एवाग्र आसीदिति कारणवाक्यान्तरानानुगुण्यं स्यात् । इदमिति नपुंसकस्य पुल्लिङ्गात्मशब्दसामानाधिकरण्यायोगेन तत्रेदंशब्दस्य वियदादिजगत्परत्वावश्यम्भावादिति निरस्तम् ।

तत्रापि अयं चासौ एकश्चासाविति ऐकपद्याश्रयणेनानानुगुण्यासिद्धेः । एतेन ब्रह्म वा इदमग्र आसीदित्यादावपि इदंशब्दो व्याख्यातः । इदं वा अग्रे नैव किञ्चनासीत् नैवेह किञ्चनाग्र आसीत्, असद्वा इदमग्र आसीदित्यादौ इदंकिञ्चनशब्दयोः, अव्याकृतनामरूपप्रपञ्चपरत्वेन न तदनुरोधेनापि पराभिमतप्रपञ्चमिथ्यात्वसिद्धिः । न च कारणवाक्यत्वाविशेषेऽपि, एवमर्थवैरूप्यकृतं, जगदासीत् सद् ब्रह्म चासीदित्यर्थाश्रयणेन वाक्यभेदप्रसङ्गेनावधारणानुपपत्त्या चेदं जगत् सदेवासीत् ब्रह्मैवासीदिति सामानाधिकरण्येनान्वयस्य बाधितत्वेन च, इदंशब्दस्य प्रस्तुतब्रह्मपरताया दुर्वारत्वाच्च ।

**एतावांस्तु विशेषः** । कारणवाक्यत्वाविशेषेऽपि, क्वचित्कारणस्य कालनिवेशसम्बन्धो विधी-यते । क्वचित्तु नामरूपात्मककार्यप्रपञ्चप्रागभावस्य कालविशेषसम्बन्धो विधीयते ।

एवं केवलो निर्गुणश्चेति ब्रह्मनिर्विशेषत्वश्रुतिरपि, य आत्मा अपहतपाप्मा विजरो विमृत्युरित्यादि-श्रुत्यनुसारेणास्मदादिवदात्मत्वेन ब्रह्मणोऽपि पाप्मजरादिप्रसक्तौ तन्मात्रनिषेधिका न तु गुणशब्दित-

यावद्विशेषनिषेधिका । अत एवात्रैव श्रुतावुत्तरत्र सत्यकामः सत्यसङ्कल्प इति तस्यैवापहतपाप्मत्व-निर्वाहाय सत्यकामत्वादिरुक्तः । अत एव केवलो निर्गुणश्चेति श्रुतौ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेतेति पूर्वत्र, एकत्वदेवत्वाद्यनेकविशेषान् विधाय पापादिरूपविशेषाभावमपि विधातुं निर्गुणश्चेति समुच्चयार्थकचशब्दोपादानम् । अत एव यः सर्वज्ञः सर्वविदिति यस्य ज्ञानमयं तपः, परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च, एष नित्यो महिमा ब्रह्मणस्य, धर्मावहं पापनुदं भगेशम्, सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये इत्यादिश्रुतिषु ब्रह्मणः सर्वज्ञत्वादिगुणविशेषविधानम् ।

अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मेति श्रुत्यन्तरे तद्धर्माणां नित्यत्वविधानाच्च । न च अनुच्छित्तिः धर्मः यस्यासौ अनुच्छित्तिधर्मा इति ब्रह्मण एव तेन नित्यत्वमुच्यते । न तु तद्धर्माणामपीति वाच्यम् । अविनाशीत्यनेन पौनरुक्त्यात् । धर्मपदानर्थक्याच्च । तथाच न विद्यते उच्छित्तिः येषां ते अनुच्छित्तयः । अनुच्छित्तयः धर्माः यस्मिन् सः अनुच्छित्तिधर्मेति बहुवीहिगर्भबहुव्रीहिरेवाश्रयणीयः । एवञ्च कथं तद्धर्माणामपि न नित्यत्वसिद्धिः । अत एव एष नित्यो महिमा ब्राह्मणस्येत्युदाहृतश्रुतौ तन्महिम्नो नित्यत्ववर्णनम् । न हि सर्वज्ञत्वसर्वशक्तित्वसत्यकामत्वादिव्यतिरेकेण तन्महिमा नाम कश्चिदस्ति । एवञ्च सत्यः सो अस्येत्युदाहृतश्रुतौ तन्महिम्नः सत्यत्ववर्णनं सङ्गच्छते । तथा परास्य शक्तिर्विविधैव श्रूयते इति श्रुतौ तच्छक्तेः तज्ज्ञानक्रियाणां च परेत्युक्तोत्कर्षवर्णनपूर्वकं स्वाभाविकत्ववर्णनं च सङ्गच्छते ।

एतेन निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् इति तन्निष्कलत्वनिष्क्रियत्वश्रुतिरपि व्याख्याता । तेन अस्वाभाविकज्ञानक्रिययोरेव निषेधात् । किञ्च केवलो निर्गुणश्चेति श्रुतेः न गुणसामान्याभावोऽर्थः । किन्तु विशिष्यविहितेतरहेयनिषेध एवार्थः । 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्' इति न्यायात् । अत एव यदाहवनीये जुहोति इति शास्त्रस्य विशेषशास्त्रानुरोधेन पत्नी-संयाजादिहोमविशेषातिरिक्तविषयत्वेन सङ्कोचाश्रयणम् । तादृशहेयगुणः वैषम्यनैर्घृण्यादिरूपः । अत एव पुण्येन पुण्यं लोकं नयति, पापेन पापमिति श्रुत्या 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति सूत्रेण च ब्रह्मणः तद्राहित्यप्रतिपादनम् । एतेन न तस्य कार्यं करणं च विद्यते इति श्रुत्या ब्रह्मणः कार्याभावप्रतिपादनम्, तदनुकूलव्यतिरेकेण प्रतिपादनं च समर्थितम् । तथा प्रयोजनतदनुकूलकृत्योरेव निषेधात् । अत एव देवस्यैष स्वभावोऽयं आप्तकामस्य का स्पृहा इति श्रुतिः, लोकवत्तु लीलाकैवल्यमिति सूत्रं च सङ्गच्छते । तयोरीश्वरप्रवृत्तेः प्रयोजननिरपेक्ष(क)स्वाभाविकधर्मत्ववर्णनात् । एवं विभुं चिदानन्दमरूप-मद्भुतम् इति, तद्रूपराहित्यावेदकश्रुतिरपि 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनमि'ति

विशेषश्रुत्यनुसारेण चाक्षुषज्ञानविषयत्वार्हरूपनिषेधपरा, न तद्रूपमात्रनिषेधपरा । अन्यथा आदित्यवर्णं तमसः परस्तात्, ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् इत्यादितद्रूपविशेषप्रतिपादनपरा श्रुतिः न स्यात् । यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् इति तदव्यक्तत्वतदनन्तरूपत्वतमःपारवृत्तित्वाद्यावेदकश्रुतिश्च न स्यात् । यद्वा तद्रूपनिषेधो यदेकमव्यक्तमनन्तरूपमिति तद्रूपानन्त्यप्रतिपादकविशेषश्रुत्यनुसारेण पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते इति परमेश्वरावताररूपपूर्णत्ववर्णनपरश्रुतिविशेषानुसारेण च अतथाविधरूपनिषेधपराऽवसीयते । अनन्तरूपमित्यस्य अनन्तस्वरूपमित्यर्थत्वे रूपपदानर्थक्येन अनन्तानि नाशरहितानि रूपाणि रामकृष्णाद्यवतारस्वरूपाणि यस्य तत् तथोक्तमिति अर्थविज्ञानात् । एतेन इन्द्रो मायाभिः पुरुरूप ईयते इति तद्रूपाणां मायिकत्ववर्णनात् मिथ्यात्वमिति शङ्का निरस्ता । तत्र मायाशब्दस्य तां यज्ञस्य मायया इत्यादाविव सामर्थ्यविशेषपरत्वेनाविरोधात् । अन्यथा यदेकमव्यक्तमनन्तरूपमिति तद्रूपानन्त्यवर्णनविरोधात् । पूर्णमिदम् इति पूर्णत्ववर्णनविरोधाच्च । एतेन अस्थूलमनणु इत्यादिश्रुतिरपि व्याख्याता । अब्राह्मणमानयेत्यादौ नञिवयुक्तमन्यस्मिन् सदृशार्थे प्रतीतिं जनयतीति न्यायेन पर्युदासगत्या अब्राह्मणादिशब्दानां ब्राह्मणविलक्षणतत्सदृशक्षत्रियाद्यर्थवत् अस्थूलमिति श्रुतौ अस्थूलादिशब्दानां तथैव स्थूलादिविलक्षणतत्सदृशपरिमाणविशेषार्थत्वविज्ञानेन परिमाणमात्राराहित्यस्यातच्छ्रुत्यर्थत्वात् । अन्यथा महान्तं विभुमात्मानं मत्वा धीरो न शोचति, अणोरणीयान् महतो महीयान् आत्मास्य जन्तोर्निहितो गुहायां (आत्मा गुहायां निहितोऽस्य जन्तोः) यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, इत्यादि ब्रह्मपरिमाणविशेषवत्त्वप्रतिपादनपरश्रुतिविरोधः स्यात् । तथाच तदविरोधघटनाय तच्छ्रुतेः उक्तार्थाश्रयणमेवोचितम् ।

एतेन 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्' इत्यादिश्रुतिरपि व्याख्याता । तत्रापि शब्दादिमद्वैलक्षण्यस्य शब्दस्पर्शरूपरसशब्दानां मत्वर्थीयाच्प्रत्ययान्तत्वमाश्रित्य तद्वद्भूतवैलक्षण्योक्तेः । अत एव तत्र अगन्धवच्च यत् इति मतुबन्तनिर्देशः । एवमपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिब्रह्मसाक्षात्कारनिषेधश्रुतीनामपि सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्, सहस्रशीर्षं देवं, सहस्राक्षं, विश्वतश्चक्षुरुत विश्वतोमुखः, सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति इत्यादितदाकारविशेषविधायकश्रुतिस्मृत्यविरोधघटनाय तत्रत्यापाणिपादादिशब्दानामतथाभूतास्मदादिसाधारणनियतप्रदेशवृत्त्याकारपरत्वं लक्षणया अङ्गीकृत्य तन्निषेधपरत्वमुपगन्तव्यमिति न तद्बलेनापि ब्रह्मसाक्षात्कारस्य मिथ्यात्वसिद्धिः । अत एव सपर्यगात् शुक्रमकायमव्रणम् अस्नाविरं शुद्धमपापविद्धम्, अशरीरं शरीरेषु अनवस्थेष्ववस्थितमिति

श्रुत्योः उपचयविशरणरूपधर्मपुरस्कारेणैव तद्विग्रहं निषेद्धुं अकायमशरीरमिति तद्वाचकशब्दविशेषोपादानमिति सर्वमवदातम् ।

एवं स एवेदं सर्वम्, आत्मैवेदं सर्वम्, ब्रह्मैवेदं सर्वम् इत्यादिब्रह्मणः सर्वाभिन्नत्वप्रतिपादकश्रुतीनामपि विश्वमेवेदं पुरुषः तद्विश्वमुपजीवति, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, यदधीना यस्य सत्ता तत्तदित्येव भण्यते, सर्वं समाप्नोषि ततोऽसि सर्वः इत्यादिब्रह्मसर्वोपजीव्यत्वसर्वजनकत्वसर्वध्वंसकत्वसर्वपालकत्वाद्यावेदकश्रुतिस्मृत्यनुरोधेन तदुक्तार्थपरत्वाश्रयणमेवोचितम् । न हि श्रुत्यैव स्वयमेव स्वाभिप्रेतार्थवर्णने कृते तमर्थं परित्यज्य भ्रमप्रमादशालिपुरुषोत्प्रेक्षितार्थपरत्वस्वीकारो युज्यते । एतेन तत्त्वमसि अयमात्मा ब्रह्म इति श्रुतिरपि व्याख्याता । अन्यथा य आत्मनि तिष्ठन् य आत्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरम्, प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, प्राज्ञेन आत्मना अन्वारूढः उत्सर्जद्याति, स तत्र पर्येति जक्षन् क्रीडन् रममाणः इत्यादिषु जाग्रत्सुषुप्त्युत्क्रान्तिमुक्तिषु जीवेश्वरभेदप्रतिपादनं न स्यात् । एतेन 'नान्तःप्रज्ञं न बहिःप्रज्ञं नप्रज्ञं नाप्रज्ञं नप्रज्ञानघनं अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यम् अव्यपदेश्यम् ऐकात्म्यप्रत्ययसारम् प्रपञ्चोपशमम् शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते' इति माण्डूक्यश्रुतिरपि व्याख्याता । अत्रापि हि सोऽयमात्मा चतुष्पात् जागरितस्थानो बहिःप्रज्ञ इत्यादिना परमात्मनो विश्वतैजसप्राज्ञा इति ये रूपविशेषाः प्रतिपादिताः, तद्वैलक्षण्यमेव तुरीयस्य उच्यते । न तु तुरीयस्य ज्ञानानन्दादिधर्मनिषेधः । उत्तरत्र तुरीयं तत् सर्वदृक् सदेति तुरीयस्य सर्वदा सर्वज्ञत्वस्य प्रतिपादनात् । न च त्वन्मते विश्वतैजसप्राज्ञतुरीयाणां चतुर्णां ब्रह्मविशेषरूपतया अभिन्नत्वेन कथं वैलक्षण्यमिति वाच्यम् । तेषामभिन्नत्वेऽपि तत्तन्नियम्यजीवगतवैलक्षण्यमादाय तथा निर्देशोपपत्तेः । अत एव च अन्योऽन्तर आत्मा प्राणमय इत्यादौ अन्नमयादीनां पञ्चानामपि ब्रह्मत्वेन अन्यत्वान्तरत्वादिप्रतिपादनं तत्कोशापेक्षया इत्यभ्युपगम्यते । नप्रज्ञं नाप्रज्ञं नप्रज्ञानघनमितिवाक्यैः साक्षादेव जाग्रदाद्यवस्थास्थितजीववैलक्षण्यमेव प्रतिपाद्यते । अदृष्टाव्यवहार्याबाह्याचिन्त्याव्यपदेश्यत्वादिनिषेधाश्च साकल्येन दृष्टत्वादिनिषेधपराः । पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः इतिवत् । अलक्षणमिति तुरीये लक्षणानिषेधश्च विश्वादिषूक्तलक्षणनिषेधपर एव । अन्यथा नान्तःप्रज्ञमित्यादितुरीयस्य लक्षणकथनानुपपत्तिः । चतुर्णां ब्रह्मत्वेऽपि विशेषबलेन तत्तल्लक्षणानां प्रतिनियतलक्ष्यनिष्ठत्वं च उपपद्यते इति न काचिदनुपपत्तिः ।

प्रपञ्चोपशमम् इति अशेषोपशमशब्दार्थो नात्यन्ताभावः । अव्युत्पत्तेः । किन्तु ध्वंस एव । सर्वविघ्नोपशान्तये इत्यादौ तस्य तदर्थत्वसिद्धेः । प्रपञ्चोपशमत्वं च प्रपञ्चनाशकत्वमेव । प्रपञ्चमुपशमयतीति प्रपञ्चोपशमः । तमिति तदर्थविज्ञानात् । न तु प्रपञ्चनाशत्वरूपत्वम् । अनाद्यनन्तस्य

ब्रह्मणः कदाचित् प्रतियोगिसाध्यनाशरूपत्वायोगात् । प्रपञ्चनाशस्य ब्रह्मरूपत्रैकालिकाभ्युपगमे च ज्ञानसाध्यत्वानुपपत्तेः । इष्यते च त्वया अविद्यातत्कार्यरूपप्रपञ्चनिवृत्तेः ज्ञानसाध्यत्वम् । न च तथापि ब्रह्मणो निष्प्रपञ्चत्वसिद्धिरविकलेति वाच्यम् । प्रपञ्चशब्दस्य ब्रह्मेतरसर्वपरत्वे निवृत्तेरपि ज्ञानान्निवृत्त्यापत्त्या विरोधात् । ब्रह्मप्रपञ्चनिवृत्त्युभयान्यत्वेन सङ्कोचे च निवृत्तेः पारमार्थिकत्वे च तामादायैव ब्रह्मणः सविशेषत्वापत्तेः । मिथ्यात्वे च तस्यापि ज्ञाननिवर्त्यत्वावश्यम्भावेन निवृत्त्यानन्त्यप्रसङ्गात् । तस्मात् प्रपञ्चशब्दस्य ब्रह्मेतरत् सर्वं नार्थः ।

एतेन शिवमद्वैतमित्यत्र अद्वैतपदमपि व्याख्यातम् । अद्वैतपदस्य अद्वितीयपदसमानार्थकत्वेन तद्व्याख्यानस्यैव एतद्व्याख्यानरूपत्वात् । तस्मात् ब्रह्मसप्रपञ्चत्वसगुणत्वसाकारत्वप्रतिपादकश्रुतीनां तन्निष्प्रपञ्चत्वनिर्गुणत्वनिराकारत्वावेदकश्रुतीनां च उक्तरीत्या भिन्नविषयत्वेन विरोधाभावात् । जगतः ब्रह्मगुणानां तदाकाराणां च बाध्यत्वरूपमपि सत्त्वं निष्प्रमाणकमिति सिद्धम् ।

एतेन दृश्यत्वाद्यनुमानेन ब्रह्मेतरसर्वमिथ्यात्वसिद्धिरिति परास्तम् । योग्यप्रपञ्चांशे सत्यत्वग्राहिक्लृप्तदोषरहितपरीक्षितस्वतःप्रमाणभूतप्रत्यक्षेण बाधितविषयतया दृश्यत्वादेः तन्मिथ्यात्वसाधकत्वायोगात् । प्रतिपन्नोपाधौ सर्वत्र प्रतिपत्तिविषयीभूतसकलसम्बन्धेन स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वरूपस्य त्वदभिमतस्य मिथ्यात्वस्य शुक्तिरूप्यादावभावेन साध्याप्रसिद्धेश्च । न हि त्वन्मते शुक्तेस्तदवच्छिन्नचैतन्यात्तदुपहितचैतन्याद्वा रजताद्यध्यासाधिष्ठानत्वेन स्वीकृतात्, अध्यस्तरजतादेस्त्रैकालिको निषेधोऽन्योऽस्ति । अन्यथाऽपसिद्धान्तात् । शुक्तेस्तदवच्छिन्नस्य तदुपहितस्य चैतन्यस्य वा अध्यस्तरजताभावत्वस्वीकारात् । न हि तस्य त्रैकालिकत्वमस्ति ।

किञ्च शुक्तिगतविशेषदर्शनानन्तरं, नेदं रजतमितिबाधोदयानन्तरं शुक्तिरेव रजतात्मना अभात्, इत्यनुव्यवसायेन तस्या एव रजताध्यासाधिष्ठानत्वं युक्तम् । न तु तदवच्छिन्नस्य तदुपहितस्य वा चैतन्यस्य, मानाभावात् । अन्यथा शुक्त्याद्यवच्छिन्नस्य तदुपहितस्य वा चैतन्यस्य, अधिष्ठानत्ववत्, रजतावच्छिन्नस्य तदुपहितस्य वा चैतन्यस्य अध्यस्तत्वं किं नोपेयमिति दिक् ॥

किञ्च तुर्यं तत्सर्वदृक् सदा, तस्य भासा सर्वमिदं विभातीति श्रुतिपर्यालोचनया ब्रह्मेतरसर्वप्रपञ्चस्याप्यनाद्यनन्ततुरीयशब्दितब्रह्मदृग्विषयत्वमवगम्यत इत्यविवादम् । तच्चैतन्यमजन्यत्वादेव दोषजन्यं नेत्यप्यविवादम् । तथाच दोषाजन्यज्ञानविषयत्वेन ब्रह्मेतरसर्वप्रपञ्चस्याप्यबाध्यत्वरूपं सत्यत्वं दुर्वारम् ।

एतेन चिद्विषयत्वं दृश्यत्वमिति प्रत्यूढम् । चिद्विषयत्वस्योक्तरीत्या मिथ्यात्वव्याप्ततया, चरमवृत्तिवद्दोषाजन्यत्वेन, तादृशचैतन्यस्य प्रमात्वावश्यंभावेन चरमवृत्तिविषयस्येव तद्विषयस्य सर्वप्रपञ्चस्याप्यबाध्यत्वरूपं सत्यत्वं दुर्वारम् । विमतं सत्यं दोषाजन्यज्ञानविषयत्वात् चरमवृत्तिविषयवदिति प्रतिरोधाच्च ।

किञ्च चिद्विषयत्वस्य चित्येव व्यभिचारः । चितः चिद्विषयत्वाभावे तद्विषयकाज्ञानतज्ज्ञानानिवृत्तिप्रसङ्गेन तस्याः स्वविषयत्वावश्यम्भावात् । ज्ञानाज्ञानयोरेव विरोधात् । न हि समानविषयत्वं विना ज्ञानज्ञानयोर्वध्यघातकभावरूपो विरोध उपपादयितुं शक्यः । न हि घटविषयकज्ञानेन पटाज्ञानस्य निवृत्तिः दृष्टचरी ।

एतेन दृश्यत्वाद्यनुमानस्य सन् घट इति प्रत्यक्षेण बाधो न वक्तुं शक्यः । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन त्रिकालाबाध्यत्वरूपसत्त्वग्रहणे सामर्थ्याभावादिति निरस्तम् ।

स्वकाले ह्यस्तितां गृह्णन् साक्षात्कारस्त्रिकालगम् ।
प्रतिषेधं निरुन्धानो गृह्णात्येवात्यबाध्यताम् ॥

इत्यस्मद्गुरुचरणोक्त्या वर्तमानकालसम्बन्धित्वेन घटादिग्राहिप्रत्यक्षस्य तत्र सार्वकालिकनिषेधप्रतियोगित्वाभावग्राहित्वोपपत्तेः । जगत्सत्यत्वश्रुतिः प्रत्यक्षसिद्धसत्त्वानुवादिनीति वदता त्वयाऽपि त्रिकालाबाध्यत्वरूपसत्त्वस्य प्रत्यक्षविषयत्वस्वीकारात् । तस्मान्मिथ्यात्वे प्रमाणाभावात् विश्वं सत्यमिति स्थितम् ।

किञ्च "प्रभवः सर्वभावानां सतामिति विनिश्चयः, कथमसतः सज्जायेत, ऐतदात्म्यमिदं सर्वम्, तत्सत्यं, यच्चिकेत सत्यमित्तन्न मोघम्, विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः । असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्, नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवत्" इत्यादिश्रुतिस्मृतिसूत्रैरपि जगत्सत्यत्वं सिद्ध्यति । न च सतामिति विनिश्चय इत्यत्र सतामित्येतत् न भावविशेषणम्, किन्तु सतामदुष्टमनसां सर्वाभावानामिति निश्चयः । तत्कथमित्यत आह प्रभवः सर्वभावानामित्यर्थविज्ञानात् इति वाच्यम् । सामानाधिकरण्येन अन्वयसम्भवे वैयधिकरण्येन तदाश्रयणायोगात् । माण्डूके स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता इति प्रपञ्चस्य स्वप्नमायासरूपतायाः मतान्तरत्वेन उक्तत्वेन तदुपक्रमे प्रभवः सर्वभावानां सतामित्यस्य श्रुतिमतत्वावश्यम्भावेन सतामित्यनेनापि तदर्थप्रतिपादनस्यानतिप्रयोजनत्वाच्च । कथमसतः सज्जायेत इति श्रुतौ कार्यस्य सत्त्वमङ्गीकृत्य तन्निर्वाहाय असतः कारणत्वनिषेधात्

स्पष्टमेव जगत्सत्यत्वं प्रतीयते। न च ऐतदात्म्यमिदं सर्वं तत्सत्यमित्यत्र तच्छब्देन प्रकृतं ब्रह्म परामृश्य तत्सत्यत्वमुच्यत इति वाच्यम्। इदं सर्वमिति सन्निहितेदंशब्दनिर्दिष्टजगत एव तेन परामर्शौचित्यात्। न च ऐतदात्म्यमिदं सर्वं सत्यम् इत्येतावतैव तत्सत्यत्वसिद्धेः पुनस्तत्पदेन तदुपादानं व्यर्थमिति वाच्यम्। ऐतदात्म्यं तदिदं सर्वमिति उद्देश्यसमर्पकत्वेन तच्छब्दस्यावैयर्थ्यात्। यद्वा इदं सर्वं ऐतदात्म्यम् इति सर्वं जगदुद्दिश्य प्रकृते तदात्मनियम्यत्वरूपमैतदात्म्यं विधीयते। पुनस्तच्छब्देन तदेव जगदुद्दिश्य तत्सत्यमिति सत्यत्वं विधीयत इति न तद्वैयर्थ्यशङ्कावकाशः। न च 'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इति लक्षणानुसारेण ऐतदात्म्यमित्यस्यैवोद्देश्यत्वमापतितमिति वाच्यम्। यच्छब्दयोगप्राथम्ययोः औत्सर्गिकत्वेनोद्देश्यत्वनियमाभावात्। तत्त्वमसि इत्यादावेव व्यभिचारात्। न च ऐतदात्म्यमिदं सर्वम्, तत्सत्यम् इति विधेयद्वयाश्रयणे वाक्यभेदप्रसङ्ग इति वाच्यम्। स य एषोऽणिमा स आत्मा तत्वमसि इत्यादाविव वाक्यभेदस्य सह्यत्वात्। अन्यथा तद्वृत्तयद्वृत्तादेर्वैयर्थ्यात्।

यद्वा तत्सत्यमित्यत्र तच्छब्देन ऐतदात्म्यम्, इदं सर्वशब्दितजगतः सत्यत्वे हेतूक्रियते। तत् तस्मात् एतदात्मनियम्यत्वात् इदं सर्वं जगत् सत्यमिति तदर्थः पर्यवस्यतीति।

न च यच्चिकेत सत्यमित् तन्न मोघम् इत्येतत् न जगत्सत्यत्वे मानम्। सत्यशब्दस्य प्रयोजनवत्त्वपरत्वात्, न मोघमिति वैयर्थ्यनिषेधानुरोधेन तथैव तदर्थस्य विज्ञातव्यत्वात्। मोघमन्नं विन्दते इत्यादौ मोघशब्दस्य निष्फले प्रयोगदर्शनात् इति वाच्यम्। तथासति प्रसिद्धार्थपरित्यागापत्तेः। न मोघमित्यनेन पौनरुक्त्यापत्तेश्च। वैयर्थ्यनिषेधस्य साफल्य एव पर्यवसानात्। सत्याः सन्तु यजमानस्य कामाः इत्यत्रापि कामशब्दितेच्छायां सत्यत्वस्य काम्यमानार्थाबाधेनैवोपपादनीयत्वेन तत्रत्यसत्यशब्दस्यापि प्रयोजनार्थत्वासिद्धेश्च।

एतेन यज्जगत्, इदमर्थे इत् आदेशः। सत्यं पञ्चभूतात्मकं जगत् यच्चिकेत सत्यमित् न मोघम्, सफलं, भोगादिसम्भवात् इति तच्छ्रुत्यर्थ इति परास्तम्। प्रसिद्धार्थपरित्यागादेव। सत्त्यदात्मकत्वार्थकत्वस्य .......त्यदादीनामः इत्यादिशास्त्रज्ञानाधीनज्ञानत्वेन विलम्बितोपस्थितिकत्वात्। अन्यथा सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिवाक्यस्थस्यापि सत्यशब्दस्य सत्यच्छब्दार्थकत्वमादाय तेन वाक्येन स एवेदं सर्वमित्यादिवाक्येनेव सत्यं ब्रह्मेति ब्रह्मणः पञ्चभूतात्मकत्वप्रतिपादनपरत्वप्रसङ्गः।

ननु विश्वं सत्यमिति श्रुतिः न विश्वसत्यत्वे प्रमाणम्। तथाहि— हे मघवानौ विश्वं वृत्तं भवदर्थमस्मदनुष्ठितं सर्वं कर्म सत्यम्, सफलम्, युवयोर्व्रतम् आपश्चन चनशब्दः अप्यर्थः। आपः अबभिमानिन्यः देवता अपि प्रमिनन्ति जानन्ति सफलत्वेनेत्यर्थः, आचरन्ति इति वा। यत्ते वयं प्रमिनाम

व्रतानि इतिवदिति चेन्न । सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्य इत्यादिश्रुतिस्मृत्यनुसारेण सर्वस्यापि वेदस्य ब्रह्मपरत्वमुपेयम् । तथाच विश्वं सत्यमित्यस्यायमर्थोऽवसीयते हे मघवानाविति भगद्रूपविशेषद्वयं प्रति सम्बोधनम् । युवयोः इत् इदं विश्वं सर्वं जगत् भगवत्कर्तृकं सर्वं जगदिति यावत् । सत्यम् अबाध्यम् । वां व्रतम् तत्सर्जनाद्यनुकूलव्यापारं अबभिमानिन्यो देवता अपि सत्यं प्रमिनन्ति ।

न च याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः इत्यनेन न जगत्सत्यत्वसिद्धिः । याथातथ्यशब्दस्य सत्ये अप्रसिद्धेरिति वाच्यम् । 'यथार्थं तु यथातथम्' इति कोशकारप्रसिद्धेः यथार्थ-शब्दस्यानारोपितार्थपरतायाः सुप्रसिद्धत्वात् । न च असत्यमप्रतिष्ठं ते इत्यत्र शून्यवादनिराकरणमेव न मायिमतनिराकरणमिति वाच्यम् । असत्यमिति कण्ठत एव तन्निराकरणात् (मायिमतनिराकरणात्) न चोदाहृतश्रुतिस्मृतिसूत्राणि व्यावहारिकसत्यत्वपराण्येव न तु पारमार्थिकसत्त्वपराणीति युक्तम् । व्यावहारिकशब्दस्य त्वन्मते बाध्यविशेषार्थत्वेन बाध्यं अथ च सत्यम् इत्यस्य 'अब्राह्मणो ब्राह्मणः' इतिवद्व्याहतत्वात् ।

एतेन 'नेह नानास्ति किञ्चन' इत्यादिना जगत्सत्यत्वनिषेधाय प्रत्यक्षादिप्रमाणसिद्धसत्यत्वानु-वादीन्युदाहृतप्रमाणानीति निरस्तम् । प्रमाणसिद्धसत्यत्वस्य सर्वात्मना स्वरूपेण निषेधायोगात् । प्रत्यक्षादीनां क्लृप्तदोषाजन्यत्वेन तत्प्रमाणभावस्योत्पत्तिज्ञप्त्योः स्वतस्त्वेन च एतद्विषयमिथ्यात्वा-योगेन तन्निषेधश्रुतीनां तदविरोधेनैव (जगत्सत्यत्वाविरोधेनैव) वर्णनीयत्वात् । बहुधावर्णितत्वाच्च ।

किञ्च किं बहुना सत्यं ज्ञानमनन्तं ब्रह्म, सत्यकामः सत्यसङ्कल्पः, तुरीयं तत् सर्वदृक् सदा, तस्य भासा सर्वमिदं विभाति इत्यादि श्रुत्यर्थपर्यालोचनयापि जगत्सत्यत्वं दुर्वारम् । तत्र हि सत्यं ज्ञान-मनन्तमिति विशेषणविशिष्टं ब्रह्म सत्यज्ञानात्मकमिति पर्यवसितम् । तुरीयं तत् सर्वदृक् सदा इति, तस्य भासा सर्वमिदं विभाति, इति श्रुतिभ्यां तस्य (ज्ञानस्य) सर्वविषयकत्वं चापतितम् । तथाच सर्व-विषयकनित्यज्ञानस्य दोषाजन्यत्वेन त्वदभिमतचरमवृत्तिवत् विषयाबाधेनैव सत्यत्वमुपपादनीयम् । एवं कामसङ्कल्पयोरपीति जगत्सत्यत्वसिद्धिर्निष्प्रत्यूहेति ॥

न च जगत्सत्यत्वावेदकश्रुतीनां प्रत्यक्षादिसिद्धसत्यत्वानुवादित्वेन न तत्र तात्पर्यमिति वाच्यम् । 'अहमस्मि' इति प्रत्यक्षसिद्धप्रत्यग्ब्रह्माभेदानुवादितत्त्वमस्यादिश्रुतिवत् तत्सिद्धसत्त्वानु-वादित्वेऽपि तदुपपत्तेः । अस्ति भाति प्रियं रूपम् इति वदता त्वयैव सदर्थस्य ब्रह्मरूपत्वोपगमात् । अहमर्थचैतन्यप्रवेशाभ्युपगमाच्च । अपूर्वताया इव फलादेरपि तात्पर्यलिङ्गत्वात् । न च ब्रह्मेतरसत्त्व-

प्रतिपादनस्य फलं न श्रूयते इति वाच्यम् । मोक्षस्यैव तत्फलत्वोपगमात् । श्रुत्या जगति सत्यत्वे प्रतिपादिते तादृशजगत्कर्तृत्वेन ब्रह्मज्ञानस्य मोक्षसाधनत्वलाभात् । तमेवं विद्वान् अमृत इह भवतीत्येवंशब्देन तथाविधेन तथाविधब्रह्मज्ञानस्य मोक्षसाधनत्ववर्णनात् । परेणापि ब्रह्मसप्रपञ्चत्वावेदकवाक्यानां तद्गतविशेषप्रतिपादकानां निषेधज्ञानोपयोगितयैव तात्पर्यलिङ्गरूपस्य सफलत्वस्य वर्णनीयत्वाच्च ।

यत्र त्रिसर्गो(ऽ)मृषा इत्यादिस्मृतावुदाहृतजगत्सत्यत्वावेदकप्रत्यक्षं श्रुत्याद्यविरोधाय अमृषेतिपदविभागाश्रयणात्, आगमानुसारेण आनुमानिकमपि जगत्सत्यमिति सर्वमनाकुलम् । एवञ्च सत्यस्य जगतः कर्ता नृकेसरी इति सिद्धम् ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
अकारि मध्वसिद्धान्तसारोद्धारः सतां मुदे ॥

मानानुवृत्तिमहितोत्तरसन्निवेशः
कक्ष्यासभातिगहनः कलिताखिलार्थः ।
विद्योतते विजययियोगिवरप्रबन्धो
वाणीविलासगृहवच्चतुराननेड्यः ॥

*॥ समाप्तोऽयं ग्रन्थः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

